OP.

5·3

# अद्वैततत्त्वसुधा

( प्रथमो भागः )

श्रीमदनन्तकृष्णशास्त्रिकृतिः



# अद्वैततत्त्वसुधा

## द्वैताद्वैतनिबन्धपरीक्षात्मकः प्रथमो भागः


महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी-

वाराणसेयसंस्कृतविश्वविद्यालयसंमानितप्राध्यापक-

श्रीमदनन्तकृष्णशास्त्रिकृतिः



महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी-

श्रीमदनन्तकृष्णशास्त्रिणा

वाराणसीसरस्वतीभवनस्थ-पण्डितप्रवर-श्रीसत्यनारायणशास्त्रिणा च

सम्पादिता—



वाराणसेयताराभुद्रणालयद्वारा मुद्रापिता, प्रकाशिता च

विजयतेतराम्

१९६०

एकमात्र वितरक—



मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

# ADVAITA TATTVA SUDHA

## (FIRST PART)

BY

MAHĀMAHOPĀDHYĀYA ŚĀSTRARATNĀKARA
ŚATABHŪṢAṆĪ

N. S. ANANTAKṚIŚṆA SĀSTRĪ
*Honorary Professor*
Sanskrit University
Varanasi

*Asst. Editor*

Pandit D. SATYA NĀRĀYAṆA ŚĀSTRI, M. A.

SARASWATI BHAVAN,
VARANASI

*Price Rs. 20/-*

1960

सुधीरप्रकृतीनाम् पण्डितकुलसंवर्द्धनैकदीक्षाणाम्, पण्डितप्रवराणाम् वाराणसेय-
संस्कृतविश्वविद्यालयवृद्धिक्रमचिन्तयैव निखिलं समयं निर्हरताम्
सर्वतन्त्रस्वतन्त्र-महामहोपाध्याय-प्राच्य-प्रतीच्यतत्त्वविज्ञानमहारथ-
यशःकाय-डाक्टर श्रीगङ्गानाथझातनुभुवां



वाराणसेय संस्कृतविश्वविद्यालयोपकुलपतिमहोदयानां
श्रीमदादित्यनाथ झा ( एम. ए., एल, एल. बी., आई. सी. एस., )
महोदयानां करकमलयोस्सादरमिदं समर्प्यते

ॐ

# भूमिका

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

अद्वैततत्त्वसुधाया द्वैताद्वैततत्त्वसमीक्षात्मकः प्रथमो भागस्साम्प्रतं सादरं प्रियपाठकानां पुरत उपह्रियते, यस्या द्वैतविशिष्टाद्वैततत्त्वपरीक्षात्मको द्वितीयो भागः, विश्वस्यते, अचिरेणैव बहिरवतरिष्यति। एतन्निबन्धलेखने प्रथमप्रोत्साहका विद्यारसिकाः सततं द्वैताद्वैतविचारविनिमयैकदृष्टय उदारस्वभावाः श्री-भण्डारकेरिपूज्यपादाः, द्वैतसिद्धान्तसमुन्नतिप्रकारनिर्णयैकदृष्टयः द्वैताद्वैतविचारविनिमयेनैव कालं यापयन्तः, भगवन्मध्वाचार्यावतारस्थानोडुपिक्षेत्रभूषणमधिकरण-वादप्रस्थानेषु द्वैतसिद्धान्तप्रतिष्ठास्थानन्यायसुधा-तात्पर्यचन्द्रिका-न्यायामृत-तरङ्गिण्यद्वैतसिद्धि-लघुचन्द्रिकाद्यद्वैतनिबन्धचर्चयैव स्वजीवनयात्रां निर्वहन्तः, श्रीपेजावरमठस्वामिपादाश्च न कदापि विस्मरणमर्हन्ति । अयं हि निबन्धो न जय-पराजयदृष्ट्या, किन्तु केवलं विचारविनिमयदृष्ट्यैव निबद्धः, यस्य परमं लक्ष्यं श्रीस्वामिपादानामाज्ञानुसारं तत्र तत्र न्यायसुधोद्भावितानामद्वैतसिद्धान्तदूषणानां समुद्धरणमात्रम्, येन तदाज्ञापरिपालनमात्रेणात्मानं कृतकृत्यमयं निबन्धा मन्यते ॥

विद्वज्जनैकपक्षपातिनः स्वदेवताराधनसमयेऽपि द्वैताद्वैतविचारविनिमयं स्वीयं परमलक्ष्यमपरित्यजन्तः प्रातःस्मरणीयाः

श्रीमदुत्तरादिमठाधीशाः श्रीसत्यध्यानतीर्था द्वैताद्वैतविचारविनिमयमार्गप्रदर्शकाः स्वीयेन यशःकायेन साम्प्रतमपि निबन्धुरस्यापरोक्षाः, येषां स्मरणमात्रेणापि विचारविनिमयदृष्टिः सोत्साहं प्रचुरं विकसति । ससन्तोषमिदं निवेद्यते—साम्प्रतिका अपि तत्पीठमधितिष्ठन्तस्तदीययैवोत्साहशक्त्या द्वैताद्वैतविचारविनिमयेन कालयापनमेव परमं लक्ष्यं मन्यन्ते—इति ॥

द्वैताद्वैतविचारपरम्परा कञ्चन कालमारभ्य केवलं विषयसमालोचनमात्रदृष्ट्या वर्द्धते, येन सम्प्रदायद्वयतत्त्वविज्ञाने सर्वेषामपि महानेवावसरः । तत्र मतद्वयविप्रतिपन्नास्तत्तादृशा विषयास्तत्तत्सम्प्रदायानुसारेण प्राधान्येनानुसन्धानमर्हन्त एतन्निबन्धोपोद्घाते यथासम्भवं यथावगमश्च संगृहीताः । तत्र तत्वातत्वविनिर्णये प्रियपाठकमहोदया एव प्रमाणम् । सर्वेष्वपरेषु स्वीयेषु निबन्धेष्विव स्वाराध्यदेवतामात्रशरणः निमित्तमात्रमेवास्मिन्नपि निबन्धेऽयं निबन्धेति सविनयं निवेद्यते ॥

न्यायसुधासमालोचिता विषयाः प्रायेण सहस्राधिका अस्मिन्निबन्धे निबद्धाः । मतद्वयविप्रतिपन्ना अपि तत्तत्सिद्धान्तानुसारेण यथासम्भवं केचनात्र संगृहीताः । न्यायसुधानिर्णया यद्यपि संग्रहेण न्यायचन्द्रिकया विद्यासागरोपनामपूर्णानन्दसरस्वतोपादैः परीक्षिताः । अयं तु निबन्धः श्रीभण्डारकेरिस्वामिपादानामाज्ञया यावच्छक्ति प्रतिविषयं तत्परीक्षणेन कथञ्चन न्यायसुधेव तत्तद्विषयाणां प्रकारभेदेनाम्रेडनेनैवात्मानं लभते ॥

एकं वत्सरमारभ्य सर्वमपि क्षणं यावच्छक्ति प्रकृतनिबन्धसंपादनैकदृष्ट्या कालं यापयताऽनेन निबन्ध्रा स्वाराध्यदेवताप्रसादेनायं निबन्धः कथञ्चन सांप्रतं पूर्तिं गमितः । एतन्मुद्रा-

पणकार्ये विनैव चिन्तां समयनिर्हरणार्थं मासाष्टकात् पूर्वं नूतन-वाराणसेयसंस्कृतविश्वविद्यालयेन सम्मानितप्राध्यापकपदेऽयं निबन्धा नियुक्त इति नितरामयं वाराणसेयसंस्कृतविश्वविद्यालयस्याधमर्णः ॥

एतन्मुद्रापणं मासचतुष्टयात् पूर्वं केषाञ्चन सुहृदां प्रोत्साहनेनोपक्रान्तम् । शृङ्गगिरिपीठाधीश-जगद्गुरु-पूज्य-श्रीशङ्करचार्यपादाः, पूज्यश्रीकामकोटिपीठाधीश-जगद्गुरुपूज्यशङ्कराचार्यचरणाश्चोभये भारतवर्षनेत्रस्थानानि स्वीयामूल्योपदेशादिप्रदानेन, असंख्याशीर्वादाद्यनुग्रहेण च स्वाभाविकीं तेषां कृपादृष्टिमितरेष्विवात्रापि निबन्धे वितीर्याऽन्वगृह्णन्निति सत्यमयं निबन्धा तदन्तेवासितामात्मनो धन्यधन्यां मन्यते ॥

तत्र प्रधानत उल्लेखार्हाः विद्यारसिका प्राचीनदर्शनसमुन्नतिमेव परमं लक्ष्यं मन्वाना मत्प्रियसुहृदः श्रीमन्तः पी. एस. सुब्रह्मण्यार्य-महोदयाः 'Gunnen Dunkerley' मद्रास, कर्णपुरभूषणं 'संस्कृतरत्नाकर'पत्रपोषकवराः संस्कृतरत्नं प्रातःस्मरणीय-वाचस्पतिमिश्रकुलाभिजनाः श्रीहरगोविन्दमिश्राश्च प्रथमप्रोत्साहकाः। उत्तरप्रदेश-राज्यपालाः, मद्रप्रान्तराज्यपालाः प्राच्यतत्त्वविज्ञान-संवर्द्धनैकदृष्ट्यो बहुव्ययसाध्येऽप्यत्र साम्प्रतं सहस्ररूप्यवितरण-प्रतिज्ञयेमं जनं समवर्द्धयन्निति प्रदेशद्वयशासकप्रवराणां सादरं स्वीयमाधमर्ण्यं निवेद्यते ॥

सादरमिदं निवेद्यते—वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिमहोदयाः, सर्वतन्त्रस्वतन्त्र-महामहोपाध्याय-प्राच्य-प्रतीच्यविज्ञानमहारथ-सव्यसाचिप्रवर-बहुतरगभीरमीमांसादिदर्शनविमर्शकप्रवर-पण्डितकुलभूषण-यशःकाय-श्रीगङ्गानाथझामहोदयात्मभुवः सुधीर-प्रकृतयः, प्राच्यपण्डितकुलसंवर्द्धनैकदृष्टयः, वङ्गव्याघ्र-लोकमान्य-

श्रीमदाशुतोषसरस्वतीं स्मारयन्त उत्तरप्रदेशप्रधानमन्त्रिप्रवरसंस्कृत-वाङ्मयजीवातु-श्रीसम्पूर्णानन्दमहोदयमेव संस्कृतवाङ्मयप्रचार-दीक्षायामनुकुर्वाणाः श्रीमदादित्यनाथ-झा-महोदयाः ( एम० ए० एल० एल० बी०, आई० सी० एस०, ) प्रकृतनिबन्धप्रकाशनादि-कार्येष्वस्य निबन्धुस्सर्वतस्समुत्साहवर्धका एवास्य निबन्धस्य कर्तारः, इति "त्वदीयं वस्तु गोविन्द तुभ्यमेव सर्मपये" इति नीतिमनुसन्धाय सादरम्, सबहुमानञ्च तेषामेवेदं समर्प्यते । अस्मिन्नवसरे बहुविध-वैदिकादितत्त्वगवेषणैकदीक्षाः वाराणसेयसंस्कृतविश्वविद्यालयस्य प्राच्य-प्रतीच्यतत्त्वगवेषणाविभागाध्यक्षाः, प्रियमित्राणि श्रीक्षेत्रेश-चन्द्रचट्टोपाध्यायाः, येषामपि तत्तादृशा उपदेशाः प्रोत्साहनञ्चास्य निबन्धकस्य प्रधानमवलम्बः, इति तेऽपि न विस्मरणमर्हन्ति ॥

निबन्धोऽयं स्वल्पेनैव समयेन सम्पादितः, साधुरसाधुर्वेति परीक्षायां पण्डितप्रवरा एव प्रमाणम् ॥

एतद्ग्रन्थसंस्करणावसरे मूलादर्शानां लिप्यन्तरकरणादिना संशोधनकार्ये स्वीयस्य बहुतरसमयस्य विनियोगेनात्यन्तमुपकर्ता सहसम्पादकः श्रीसत्यनारायणशास्त्रिमहोदयो ममात्मबन्धुरित्येता-वन्मात्रमत्र पर्याप्तम् ॥

वाराणसेयतारामुद्रणालयेन मासत्रयेन महान्तमिमं निबन्धं मुद्राप्य, प्रबध्य च स्वकुटुम्बकार्यंदृष्ट्या सादरं स्वीयममूल्यं समय-मत्र विनियुज्याचिरेण तत्प्रकाशनार्थं महान् भारो गृहीतः, इति सत्यं सात्मजास्तदध्यक्षाः निबन्धुरस्याजीवमुत्तमर्णाः । तारामुद्रणालयपण्डितप्रवराः पण्डितप्रवर श्रीरामेश्वरपाठकमहोदयाः वार्द्धक्येऽपि बहुतरपरिश्रमस्वीकरणेनाऽत्र संशोधनकार्ये महदुपाकुर्वन्, इति नितरामयं तेषामधमर्णः ।

द्वितीयभागस्त्वस्य साम्प्रतं ग्रीष्मकाले काश्यामवस्थाय-प्रकाशनकार्यमशक्यमिति दुस्सहतापशमनान्तरं प्रारभ्येत। स हि भागः सिंहावलोकनदृष्ट्या शतदूषणीविमर्शनात्मा द्वैतविशिष्टा-द्वैतसिद्धान्तवृद्धिक्रमं यथासम्भवं प्रकरोति। विश्वस्यते सुहृद्वराणाम्, राजकीयानाम् धर्माचार्याणाम्, अन्येषाञ्च संस्कृताभिवृद्धिलक्ष्याणां प्रभुवराणां साहाय्येन यथासमयमयमपि बहिरवतरिष्यति ॥

मुद्रणावसरेऽक्षरत्रुट्यादिनिबन्धनानां केषाञ्चन वर्णलोप-विपर्यासादीनां स्वयं सप्रेमानुबन्धं संशोधनेन प्रियपाठका निबन्धारमिमं-प्रोत्साहयन्त्विनि सानुनयं प्रार्थ्यंते ॥

वाराणसी
फाल्गुनशुक्ल नवमी
विकारि, २०१६

इति विधेयतमः
**अनन्तकृष्ण शास्त्री**



# द्वैताद्वैतसंप्रतिपन्नविप्रतिपन्नविषयसंग्रहः ॥

द्वैताद्वैतसिद्धान्तयोर्वेदनित्यत्वे, तत्त्वतःप्रामाण्ये, तदनुयायिस्मृतिपुराणेतिहासादिमात्रप्रामाण्ये, स्वयंप्रतिभातवेदप्रामाण्ये, लौकिक-वैदिकवर्णपदनित्यत्वे, नियतजन्यक्रमवत्तयाऽनादिपरम्पराप्राप्तत्वेन वेदापौरुषेयत्वे, ब्रह्मणस्तन्मात्रगम्यत्वे, धर्माधर्मयोरपि वेदैकगम्यत्वे, वेदान्तानां कार्यमात्रपरत्वायोगेन सिद्धार्थेऽपि तात्पर्यवसाने, लिङर्थस्येष्टसाधनत्वे, पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रत्वे, शब्दप्रामाण्ये, श्रुतिप्रामाण्ये, बौद्धाद्यागमाप्रामाण्ये, वृद्धव्यवहारस्य शक्तिग्रहोपायत्वे, स्फोटवादनिरासे, अन्यत्र च तत्तत्प्रसक्तानुप्रसक्तेषु न विप्रतिपत्तिः, विप्रतिपन्नास्तु प्रधानतमाः केचन विषया अत्र संगृह्यन्ते । ते यथाः—

| द्वैतप्रक्रिया | अद्वैतप्रक्रिया |
|---|---|
| १ ब्रह्मसूत्राणामोमथशब्दपूर्वकत्व नियमः | १ ब्रह्मसूत्राणामोमथशब्दपूर्वकत्वाभावः |
| २ जीवव्यतिरिक्तेश्वरसाधनम् । | २ जीवत्वेनेश्वरत्वेन च जीवेश्वरभेदेऽपि तदुपलक्षितरूपेण तदैक्यम् । |
| ३ ईश्वरस्यैवोंकारार्थत्वम् । | ३ अद्वितीयसंविन्मात्र-निर्विशेषचैतन्यस्यैवोंकारार्थत्वम् । |
| ४ ब्रह्ममीमांसाया स्वतन्त्रशास्त्रत्वम् , यतः तस्याः सर्वेषां पदानां मुख्यतया ब्रह्मबोधकतयैव परविद्यात्वम् । | ४ ब्रह्ममीमांसा यद्यपि स्वतन्त्रशास्त्रम्, तथापि परविद्यात्वं सर्वेषां वेदानामद्वितीयसंविन्मात्रतात्पर्यवत्त्वेन, नतु सर्वेषां पदानां मुख्यवृत्त्या ब्रह्मबोधकत्वेन । |
| ५ साक्षात् ज्ञानस्य न मोक्षसाधनत्वम् , किन्त्वीश्वरप्रसादद्वारा । | ५ साक्षात् बन्धनिवृत्तिद्वारा ज्ञानस्य मोक्षसाधनत्वम् , न त्वदृष्टविधेयेश्वरप्रसादद्वारा । |

| | |
|---|---|
| ६ अनादीनां प्रकृतिधर्मज्ञानानन्दादीनामीश्वराधीनसत्ताकत्वम् । | ६ अनादिप्रकृत्यादीनां प्रकृत्युपाधीनामीश्वरोपाधीनामौपाधिकधर्मादीनां वा निर्विशेषचैतन्यसमकालिकत्वमात्रम्, नेश्वराधीनत्वम्, ईश्वरवदेव तेषामप्यनादित्वात् । |
| ७ अविद्यासाहाय्येनेश्वरशक्तेरेव स्वप्रकाशचैतन्यरूपजीवस्यावरणम् | ७ स्वाभावत एव ब्रह्माश्रितयाऽविद्यया ब्रह्मणो जीवस्य वाऽऽवरणमीश्वरशक्तिमनपेक्ष्य । |
| ८ बन्धस्येश्वरशक्तिनिबन्धनत्वम्, नाज्ञाननिबन्धनत्वम् । | ८ बन्धस्य ब्रह्म-जीवान्यतराश्रितमायोपाधियोगनिबन्धनत्वम्, न त्वीश्वरशक्तिनिबन्धनत्वम् । |
| ९ अनादेः प्रकृतेर्नित्यत्वम् । | ९ अनादेरपि प्रकृतेः परिणामिन्याः नाश्यत्वम् । |
| १० अज्ञानस्य, बन्धस्य वाऽनिर्वचनीयत्वायोगः | १० अज्ञानस्य तत्प्रयुक्तस्य बन्धस्योभयस्यापि सदसद्विलक्षणत्वेनानिर्वचनीयत्वम् । |
| ११ ईश्वरशक्तिप्रयुक्तस्य जीवावरणस्येश्वरशक्त्यैव निवृत्तिः, न तदतिरिक्तेन ज्ञानेन । | ११ अनादेरज्ञानस्यानिर्वचनीयस्य ज्ञानमात्रबाध्यत्वम् । |
| १२ ज्ञाननिवर्त्यत्वस्य बन्धसत्यत्वस्य चाविरोधः | १२ ज्ञाननिवर्त्यत्वं सत्यत्वविरोधि । |
| १३ अख्यात्यनिर्वचनीयख्यात्याद्ययोगेनासत्ख्यातेरेव साधुत्वम् | १३ अख्यात्यसत्ख्यात्याद्यसंभवेनानिर्वचनीयख्यातेरेव साधुत्वम् । |
| १४ ब्रह्मणो निमित्तकारणत्वमात्रम्, नोपादानत्वमपि | १४ ब्रह्मोपादानकारणमपि, निमित्तकारणमपि । |
| १५ प्रत्यक्षविरुद्धबन्धमिथ्यात्व आगमाप्रामाण्यम् | १५ अनन्यपरागमविरोधे प्रत्यक्षाप्रामाण्यम, अन्यपरत्वे तु प्रत्यक्षप्रामाण्यम । |

| | |
|---|---|
| १६ बुद्धीन्द्रिय-शक्ति-विषय-तद्धर्माणामात्मन्यारोपस्य बन्धत्वेऽपि, तस्येश्वरशक्त्याऽविद्याऽऽवरण निमित्तत्वेऽपि च न स्वरूपेण तेषामारोपः, किन्तु कर्तृत्वादीनां स्वीयानां परायत्तानामपरायत त्त्वारोप एव बन्धो नाम। तेषां शरीरादीनामपि संसर्गमात्राध्यासः, न स्वरूपतोऽध्यासः। | १६ शरीरेन्द्रियादीनां तद्धर्मस्य चोभयस्यापि सम्विन्मात्रेऽधिष्ठान आरोप। |
| १७ अहमर्थस्यैव सुपुप्तावपि भासमानस्यात्मत्वम्। | १७ तुरीयावस्थायां प्रतिभासायोग्यत्वात्, सुपुप्तावप्यहं रूपेणाभानाच्च नाहमर्थस्यात्मर्थत्वम्, चिदचित्संवलितस्वरूपत्वादहमर्थस्य। |
| १८ मिथ्याभूतस्यागमस्याप्रामाण्यापत्त्या तस्य सत्यत्वम्। | १८ स्वरूपतो मिथ्यात्वेऽपि महावाक्यमात्रे विषयतोऽबाध्यत्वान्नागमस्याप्रामाण्यम्, अन्यत्र तु यावद्ब्रह्मसाक्षात्कारं व्यावहारिकं प्रामाण्यम्। |
| १९ मिथ्याभूतस्यार्थक्रियाकारित्वानुपपत्तिः। | १९ ब्रह्मासद्विलक्षणस्य व्यावहारिकस्य प्रातिभासिकस्य चार्थक्रियाकारित्वम्, न त्वत्यन्ताबाध्यस्य। |
| २० भेदनिषेधपराणां वाक्यानां भगवतस्तदीयधर्माणाञ्च स्वरूपाभेद एव तात्पर्यम्, न तु स्वरूपभेदे। | २० "नेह नानास्ति किञ्चन" इत्यादिभेदनिषेधपराणां श्रुतीनां स्वरूपतः सजातीय-विजातीयस्वगत-सर्वनिषेधपरत्वम्। |
| २१ मिथ्याभूतस्य कथाऽनङ्गत्वम्। | २१ मिथ्याभूतस्यापि सत्त्वासत्त्वौदासीन्येनार्थक्रियाकारित्वम्, कथाङ्गत्वं च। |

| | |
|---|---|
| २२ असतः साधकत्वानुपपत्तिः | २२ तत्रासत्पदेन शशशृङ्गादिग्रहण इष्टापत्तिः, मिथ्यार्थस्य ग्रहणे नाद्वैतमतेऽसद्साधकत्वम् । |
| २३ अनिर्वचनीयत्वं भावाभावविलक्षणत्वादिरूपेण दुर्वचमप्रामाणिकञ्च । | २३ भावाभावविलक्षणत्वसदसद्विलक्षणत्वादिना प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिना चानिर्वचनीयत्वं सुवचं प्रामाणिकं च । |
| २४ सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन सदसद्विलक्षणत्वासम्भवः | २४ सत्त्वासत्वयोः परस्परविरहरूपत्वासम्भवेन सदसद्विलक्षणत्वरूपमिथ्यात्वाविरोधः । |
| २५ सदसद्वैलक्षण्ये सत्प्रतीत्यनुपपत्तिः । | २५ सदसद्वैलक्षण्यघटकासत्वस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपत्वात्, सत्त्वस्य चाबाध्यरूपत्वात्, सत्त्वेन प्रतीत्यर्हत्वम्, सदसद्विलक्षणत्वञ्च न व्याहतम् । |
| २६ प्रपञ्चमिथ्यात्वानुमाने निर्दुष्टदृश्यत्वहेतुनिर्वचनासंभवः । | २६ दृक्तादात्म्यरूपं दृश्यत्वं तुच्छब्रह्मव्यावृत्तं निर्दुष्टं दृश्यत्वम् । |
| २७ अन्यथा ज्ञातस्यान्यथा सम्यग् ज्ञानं बाधः, येनासत्ख्यातेर्निर्वाहः, तेन च न बन्धमिथ्यात्वम् । | २७ अधिष्ठानतत्त्वसाक्षात्कारो बाधः, येनानिर्वचनीयख्यातेरेव निर्वाहः, नासत्ख्यातेः, तेन च बन्धमिथ्यात्वमपि । |
| २८ सत्पदं सत्यपरं ब्रह्मपरं वा; द्रव्यपरं वा, सत्त्वं तु न ब्रह्ममात्रस्य, किन्तु सर्वस्य विश्वस्य । | २८ सत्पदार्थस्तु सत्स्वरूपं ब्रह्ममात्रम्, अन्येषां तु सत्तादात्म्येनैव सत्प्रतीतिविषयत्वम्, तेन ब्रह्म सत्यम्, जगद् मिथ्या । |
| २९ ज्ञाननिवर्त्यत्वं सत्यत्वाविरोधिः, | २९ ज्ञाननित्यत्वं सत्यत्वविरोधि । |
| ३० अज्ञानाभावरूपत्वसमर्थनं परमतमनुसृत्य स्वमतेऽपि तद्भाव- | ३० दर्शनान्तरसंमतभाववैलक्षण्यं सिद्धवत्कृत्य भावाभावोभय |

त्वस्वीकारेऽपि, तेन चाद्वैतिनां तदभावत्वनिरासेन भावत्वसमर्थननिरासद्वारा भावाभावविलक्षणत्वरूपानिर्वचनीयत्वस्य तन्मुखेन निरासः, तेन प्रसंगेन प्रत्यक्षादिप्रमाणपरीक्षा च ।

३१ "तत्त्वमसि" इत्यादिवाक्यानां जीवब्रह्मैक्यपरत्वनिरासः ।

३२ प्रत्यक्षस्यागमबाधकत्वम्, तत्र युक्तयश्च । प्रत्यक्षस्यागमबाधकत्वस्य "यजमानः प्रस्तरः" इत्युदाहरणेन, अनुमानादिना च समर्थनम् ।

३३ स्वरूपाभेदस्य "तत्त्वमसि"ति महावाक्यार्थत्वे तस्मिन् नित्यसिद्धे "परेऽव्यये सर्व एकीभवन्ति" इत्यभूततद्भावार्थ "च्वि" प्रत्ययायोगः ।

३४ उपास्यस्यापि ब्रह्मणः तात्पर्यविषयस्य सत्यत्वम् ।

वैलक्षण्यसाधनार्थमज्ञानाभाववैलक्षण्यस्य साधनम्, तेन प्रसंगेन प्रत्यक्षादि प्रमाणपरीक्षा च ।

३१ "तत्त्वमसि" इत्यादिवाक्यानां जीवत्वेश्वरत्वविशिष्टैक्याभावेऽपि तदुपलक्षितस्वरूपैक्यपरतासमर्थनम् ।

३२ "यजमानः प्रस्तरः" इत्यादिवाक्यानामन्यशेषाणामत्रानुदाहरणतया देहात्मप्रत्यक्षस्याप्यागमबाधकत्वापत्त्या च प्रत्यक्षस्याद्वैतागमबाधकत्वायोगः ।

३३ स्वरूपैक्यं ह्यद्वैताभिमतमौपाधिकभेदनिवृत्त्युपलक्षितसंविन्मात्रत्वम्, न तु द्वयोरैक्यम्, तत्र संविन्मात्रस्य नित्यसिद्धत्वेऽपि तदुपलक्षणौपाधिकभेदनिवृत्तेरखण्डाकारसाक्षात्कारात्पूर्वमसिद्धत्वात् तदनन्तरमेव सिद्धत्वाच्च नाभूततद्भावार्थ "च्वि" प्रत्ययायोगः, यथाः—घटाकाश-महाकाशादयो महाकाशीभवन्ति, बद्धो मुक्तीभवतीत्यादौ । एकीभावो ह्यत्र तत्तदुपाध्युपलक्षितस्वरूपमात्रत्वम् ।

३४ सत्यम्, उपास्यमप्यवान्तरतात्पर्यविषयतया सत्यम्, परन्तु तस्य केवलं लौकिकपारमार्थिकत्वम्, न तु त्रिकालाबाध्यत्वम् ।

३५ सर्वस्य वेदस्य विष्णुव्यतिरिक्ताकारपरत्वेनापरविद्यात्वम्, विष्णुपरत्वेन, परविद्यात्वम्। ऋगादीनां शब्दब्रह्मविधयाऽपरविद्यात्वम्, कर्मकाण्डानां कर्मबोधकानामपि वाच्यविधयाऽन्यथा वा विष्णुपरत्वेन परविद्यात्वम्।

३५ सर्वेषां वेदानां ब्रह्म-विष्णु-शिवात्मकतत्तदुपाध्यधिष्ठानतुरीयातीतनिर्विशेषमात्रपरत्वेनैवपरविद्यात्वम्, अन्येषां तु शब्दब्रह्मविधयाऽन्यथा वा कर्मादि-तत्तदर्थबोधकानामपरविद्यात्वमेव, न परविद्यात्वम्।

३६ प्रामाण्यवदप्रामाण्यस्यापि साक्षिभास्यत्वम्, तेन च मिथ्यात्वाभावोऽपि साक्षिभास्यः। अतः प्रपञ्चमिथ्यात्वानुमानस्य साक्षिप्रत्यक्षविरोधः, अप्रामाण्यं च।

३६ साक्षिचैतन्यं वर्तमानमात्रग्राहित्वात् तात्कालिकमेव सत्त्वं गृह्णाति, न तु त्रिकालाबाध्यत्वम्; अतः साक्षिणो भाविबाधाभावाग्राहकत्वाद् न साक्षिणा मिथ्यात्वानुमनस्य बाधः, अप्रामाण्यं वा।

३७ वाक्यसामान्यस्यान्विताभिधानवादेनैवान्वयानुभावकत्वम्, नाभिहितान्वयवादेन, इति वेदान्तानां संसर्गगोचरप्रमाजनकत्वमेव, नाखण्डार्थत्वम्।

३७ अन्विताभिधानवादे, अभिहितान्वयवादे वा नाद्वैतिनां निर्भरः; उभयस्याप्यविरोधात्, तथाप्युभयत्रान्वयपदं न संसर्गपरम्, किन्तु तात्पर्यविषयपरम, अतो न वेदान्तवाक्यानामखण्डार्थत्वहानिः। अन्वयपदं हि "तत्तु समन्वयादि"त्यत्रैवतात्पर्यविषयपरमिति संप्रतिपन्नम्।

३८ वेदाङ्गेषु व्यासप्रणीतस्य ब्रह्मतर्कस्यापि स्वीकारः।

३८ वेदाङ्गेषु शिक्षादीनां षण्णामेवान्तर्भावः न ब्रह्मतर्कस्यन्तापि।

३९ शब्दान्तरावाच्यस्य, अमेयस्य च निर्विशेषब्रह्मणो लक्ष्यविधयापि न वेदान्तबोध्यत्वम्।

३९ इक्षुक्षीरमाधुर्यादीनामिव, आकृत्यधिकरणन्यायेनावाच्यानां व्यक्तीनां लक्षणया बोधनवत्; अन्विताभिधानवादेऽप्यवाच्य-

स्यान्वयविशेषस्य बोधवच्च वेदान्तैर्लक्षणयैव निर्विशेषब्रह्म-बोधाविरोधः ।

४० ईश्वरानुयोगिकभेदस्य प्रमाणान्तरासिद्धस्यापूर्वत्वम्, अन्येषामपि भेदानां ज्ञातानामप्यभ्यासेनात्र तात्पर्यग्राहकलिङ्गेन परमते "तत्त्वमसि" वाक्यार्थस्येव शास्त्रमहातात्पर्यविषयत्वं सम्भवति । अतो भेदस्यैवौपनिषदत्वं नाभेदस्य ।

४० ईश्वरभेदस्य शास्त्रैकगम्यस्याप्युपासनोपयोगितामात्रेण चारितार्थ्यात्, परत्वेन निर्विशेषवाक्यस्य प्रबलप्रामाण्येन निषेधापेक्षितनिषेध्यसमर्पकतयाऽवान्तरतात्पर्याविरोधात्, अन्येषां भेदानामप्यवान्तरतात्पर्योपपादकतयाऽभ्यासोपपत्तेः, सर्वविशेषनिषेधपरतया निर्विशेषवाक्यस्यैव प्राबल्यम्, तथापि भेदवाक्यानामभेदवाक्यानाञ्चाधिकारिभेदेन व्यवस्था ।

४१ प्रत्यक्षानुमान-शब्दाः त्रीण्येव प्रमाणानि ।

४१ प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धयः षट् प्रामाणानि ।

४२ स्वाप्नानां तत्तद्वासनमयत्वं सत्यत्वं च ।

४२ स्वाप्नानामपि प्रमातृचैतन्याश्रितरलाविद्याकार्यत्वेनाऽऽविद्यकत्वम् ।

४३ ईश्वरप्रतिबिम्बो जीवोऽणुपरिमाणः, नित्यपरमात्मस्वरूपोपाधिको भिन्नांशश्च, तस्य सर्वगतत्वं तु बिम्बरूपेण ।

४३ अहमर्थो जीवोऽल्पपरिमाणान्तःकरणोपाधिकत्वात् तत्परिमाणः, व्यापकत्वं तु सर्वोपाधिविरहितसंविन्मात्रत्वेन ।

४४ पाञ्चरत्राविरोधेन वेदप्रामाण्यम्, न तु तद्विरोधेऽपि ।

४४ वेदविरोधे पाञ्चरात्रस्याप्रामाण्यम्

४५ "तत्त्वमसी"त्यत्र तद्‌गुणसारत्वेन गौणं सामानाधिकरण्यम् । अतत्त्वमसीति पदच्छेदो वा

४५ तत्त्वमसीत्यत्राभेदे मुख्यमेव सामानाधिकरण्यमुपाधीनामविवक्षया, अतत्त्वमसीति पदच्छेदे

प्रकरणविरोधः, उपक्रमोपसंहार-विरोधः,प्रतिज्ञादृष्टान्तानुपपत्तिः, उद्भाष्यानुव्याख्यानत्वं चात्र

४६ भेदाभेदवादो धर्म-धर्मिणोः,जीव-ब्रह्मणोः, परमात्म-तदवताराणां च विशेषकृतेन भेदेन भेदाभावे भेदकार्यकारिणा। सोऽपि न सर्वत्र ।

४६ ब्रह्म-तदितरयोः सामानाधिकरण्यं बाधायाम्,अभेदे वा सर्वत्राविद्या-प्रयुक्ताध्यारोपनिबन्धनम्, भेदभावे भेदकार्यकारित्वस्य बाधाद् विशेषेऽविद्यातिरिक्ते न किमपि प्रमाणम्।

४७ मायामात्रस्य वासनामयत्वम्, तेन स्वप्नानामपि सत्यत्वमीश्वर-सृष्टत्वं च ।

४७ वासनाया अर्थाकारेण परिणामो बाधितः, ईश्वरसृष्टत्वे तत्तत्पुरुषमात्रानुभाव्यत्वविरोधश्च ।

४८ जीवन्मुक्त्यनुपपत्तिः, तदुपपादकाज्ञानसंस्कारादीनां दुरुपादत्वात् ।

४८ बाधितानुवृत्त्या विक्षेपशक्तिमात्रेणाज्ञानस्यैवानुवृत्त्या जीवन्मुक्त्युपपत्तिः ।

—:*:—



## ॥ विषयानुक्रमणिका ॥

२

शास्त्रयोनित्वाधिकरणम्

चमसाधिकरणम्



संख्योपसंग्रहाधिकरणम्

अथ न विलक्षणत्वाधिकरणम्

अथ तदनन्यत्वाधिकरणम्

रचनानुपपत्त्यधिकरणम्



पाञ्चरात्राधिकरणम्; शाक्ताधिकरणं वा

तृतीयाध्यायतृतीयपादः ॥



—: ❀ :—



# ॥ अद्वैततत्त्वसुधा ॥

## द्वैताद्वैततत्त्वपरीक्षात्मकः प्रथमो भागः ॥

### ॥ उपोद्घातः ॥

#### द्वैताद्वैताविप्रतिपन्ना विषयाः ।

अत्र द्वैताद्वैतसिद्धान्तयोर्वेदनित्यत्वे, तत्स्वतःप्रामाण्ये, तदनुयायि-स्मृति-पुराणेतिहासादिमात्रप्रामाण्ये, स्वयंप्रतिभातवेदप्रामाण्ये, लौकिक-वैदिकवर्णपदनित्यत्वे, नियतजन्यक्रमवत्तयाऽनादिपरम्पराप्राप्तत्वेना-पौरुषेयत्वे, ब्रह्मणस्तन्मात्रगम्यत्वे, तस्य निर्दोषत्वे, सगुणावान्तर-तात्पर्यविषयतायाम्, धर्माधर्मयोरपि वेदैकगम्यत्वे च न विप्रतिपत्तिः ॥

#### भेदस्य प्रमाणान्तरसिद्धत्वेन मिथ्यात्वम् ।

विप्रतिपत्तिस्तु निर्विशेषस्य वेदमुख्यतात्पर्यविषयत्वे, "एकमेवा-द्वितीयमि"त्यादिश्रुत्या तद्व्यतिरिक्तस्य सर्वस्य सजातीय-विजातीय-स्वगत-भेदस्य तत्र निषेधेन बाधितत्वेन, अविद्याधीनत्वेन चानर्थकारितायां च; निर्विशेषब्रह्मवादेऽपि निर्दोषतायामविवादात्। तत्र सर्वे विशेषा दोषा इत्यद्वैतमिति त्वन्यदेतत् ॥

#### निर्विशेषब्रह्मण एवापूर्वत्वम् ।

तत्र तु "निर्गुणं निरञ्जनमि"त्यादिश्रुत्या तत्र सगुणत्वस्यापि निषेधेनोपास्यतया श्रुत्यवगतानां गुणानामसत्त्वेऽप्युपासनाया निर्वाहेण तत्सत्तायां प्रमाणाभावात्, श्रुतिबोधितानामप्युपासनामात्रार्थत्वेन तत्र तात्पर्याभावात् निर्विशेषं ब्रह्मैवाध्यारोपापवादन्यायेन वेदमुख्यतात्पर्य-विषयः ॥

तत्र जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रं परमार्थः, जीवेश्वरभेदादिकं तु सर्वं न परमार्थः इति जीवेश्वरभेदाविरोध्येव ब्रह्मस्वरूपमद्वितीयं वेदान्तार्थः।

भेदप्रत्यक्षानुमानश्रुतीनामभेदश्रुत्यविरोधः।

तत्र जीवेश्वरभेदः प्रत्यक्षे जीवादौ प्रत्यक्षपरोक्षसाधारणभेदभानाविरोधात् प्रमाणान्तरसिद्धः, इति तत्र वेदस्य न मुख्यं तात्पर्यम्, किन्त्ववान्तरमेव तत्। यद्यपि ईश्वरे जीवादिभेदो न प्रत्यक्षसिद्धः; तथाप्यानुमानिकः स न विरुध्यते। जीवः, ईश्वराद्भिन्नः, विरुद्धधर्मकत्वादित्यनुमानसंभवात्, अन्यथा नित्यपरोक्षाणामन्यतो भेदस्याप्रामाणिकत्वापत्तेः॥

अङ्गीक्रियते हि न्यायामृतादावुक्तानुमानेन जीवेश्वरभेदसिद्धिः। अत एव निरपेक्षवेदैकगम्यधर्माधर्मयोर्भेदः। श्रुतिर्हि धर्माधर्मस्वरूपमात्रं तत्तत्फलविशेषसाधनतया बोधयति, न तु जीवेश्वरयोरिव साक्षात्तद्भेदमपि। तथाच यदि श्रुतिमूलकत्वेन जीवेश्वरभेदानुमानस्य प्रामाण्यम्, तर्हि धर्माधर्मयोर्भेदस्य श्रुतावप्रतिपादनात् तद्भेदोऽप्रामाणिकः स्यात्, कर्मभेदप्रमाणन्याया अप्युपपत्तिरूपत्वादनुमानान्येव। तत्र यदि श्रुतिसिद्धविरुद्धधर्मकत्वमेव भेदानुमापकम्, तर्हि श्रुतिसिद्धत्वविशेषणवैयर्थ्यम्, इति व्याप्यत्वासिद्धिः॥

वस्तुतस्तु—जीवादौ प्रत्यक्षे परोक्षेश्वरभेदस्य प्रत्यक्षाविरोधात्, तुल्यवित्तिवेद्यतया प्रत्यक्षमूलानुमानेनैवेश्वरे जीवभेदोऽपि श्रुतिनिरपेक्षमेव सिद्ध्यति, इति प्रमाणान्तरसिद्धानुवादकत्वमेव जीवेश्वरभेदश्रुतीनाम्, इति न तत्र मुख्यं तात्पर्यं तासाम्, किन्तु तन्निषेधेन जीवेश्वराभेद एव तत्॥

भेदवाक्यानां निर्विशेषवाक्यशेषतया तत्रावान्तरतात्पर्यम्।

जीवेश्वराभेदस्तु तद्भेदप्रयोजकतत्तदुपाधितत्प्रयुक्तभेदोभयबाधेन तदविवक्षया संविन्मात्रतैव, न तु जीवत्वेश्वरत्वविशिष्टयोरभेदः, इति न प्रत्यक्षविरोधः, तन्मूलानुमानविरोधः, आगमविरोधो वा जीवेश्वराभेदश्रुतीनाम्, इति भिन्नविषयत्वात् प्रत्यक्षागमयोर्न बाध्यबाधकभावः, किन्त्वभेदश्रुतिनिषेध्यौपाधिकभेदसमर्पकत्वादभेदश्रुत्युपकारकत्वमेव, यथा नेदं रजतमिति निषेधापेक्षितनिषेध्यसमर्पकमिदं रजतमिति प्रत्यक्षम्, यथा वा—"अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चे"ति निषेधापेक्षितनिषेध्यसमर्पकतया "जर्तिलयवाग्वा वा" "गवीधुकयवाग्वा वा" इति वाक्यं निषेधवाक्योपकारकम्॥

तत्र निषेध्यानामनन्तत्वाद् भेदपराणां वाक्यानां बहुत्वं न तत्प्रामाण्यप्रयोजकम्, अभेदवाक्याप्रामाण्यप्रयोजकं वा। न हि बहुलान्धकारस्यैकदीपप्रभाविरोधित्वम्, एकेनैव दीपेन बहुलान्धकाराबाधो वा; प्रत्यक्षविरोधात्, इति न बहुत्वाल्पत्वप्रयुक्तो बाध्य-बाधकभावः ॥

एतेन—बाधितप्रामाण्याभेदवाक्यबाध्यत्वं न भेदप्रत्यक्षस्य; तत्पराणां वाक्यानां वेति—परास्तम्; अभेदवाक्यबाध्यत्वे नियामकाभावेन निर्दोषत्वेन, निषेधवाक्यत्वेन च तत्प्रतियोगिसमर्पकभेदप्रत्यक्षादीनामेव बाध्यत्वेन चाभेदागमेनैव भेदप्रत्यक्षादिबाधात् तेनाभेदागमाप्रामाण्यवर्णनायोगात्, अभेदागमबाध्यत्वे भेदप्रत्यक्षादिप्रामाण्यम्, तत्प्रामाण्य आगमाप्रामाण्यमित्यन्योन्याश्रयाच्च ॥

यत्तु—आगमानुभवोऽप्यप्रमाणं स्यात्, एवं तत्प्रामाण्यानुभवोऽपि—इत्यादि, तदिदं सर्वस्य तस्य व्यावहारिकप्रामाण्याङ्गीकारादकार्यकारि। व्यावहारिकत्वं हि प्रामाण्यस्य विषयस्याविद्याप्रयुक्तत्व-बाधयोग्यत्व-साधिष्ठानकारोप्यत्वादिप्रयुक्तम्, न तु ज्ञानमात्रस्य बाध्यत्वेन, इति घटादिज्ञानानामिव, कर्मोपासनाकाण्डानामिव च नाखण्डार्थवाक्याप्रामाण्यम्; तद्विषयस्यानारोपितत्वात्, निरधिष्ठानत्वाच्च। वृत्तिमात्रस्याज्ञानप्रयुक्तत्वेनाविद्यानिवृत्तिप्रयुक्तनिवृत्तित्वेऽपि न हानिः, यथा विकल्पाख्यवृत्तेरविद्यावृत्तित्वेऽपि नासतस्तद्विषयस्य आरोपितत्वम्, न वा मिथ्यात्वम्। अत एव साक्षिभास्यानां न वृत्तिभास्यत्वमिति मते शुक्तिरूप्यस्वाप्नादिमिथ्यात्वेऽपि साक्षिचैतन्यस्य तद्भासकस्याबाधात्, वृत्तिस्वीकारपक्षेऽपि रजताकारवृत्त्यवच्छिन्नचैतन्याभिन्नशुक्त्याकारवृत्त्यवच्छिन्नचैतन्यस्यैव रजतप्रत्यक्षत्वाच्च रजतबाधेऽपि न तत्प्रत्यक्षस्य प्रातिभासिकत्वम् ॥

श्रुतिबाधितस्य भेदस्य मिथ्यात्वमेव, नासत्त्वम्।

एतेन—भेदप्रत्यक्षबाधितत्वेनासत्कल्पत्वमागमस्येति—परास्तम्; उक्तन्यायेनानिर्वचनीयार्थकत्वेनैव, भेदप्रत्यक्षस्यासत्कल्पत्वात्। असत्कल्पत्वं हि विषयस्य सदसद्विलक्षणत्वेन ॥

न हि शुक्तिरजतादिविषयः सन्; बाधितत्वात्, नाप्यसन्; प्रत्यक्षत्वेन प्रतीतेः। प्रत्यक्षत्वं हि भातीति व्यवहारयोग्यत्वमभानापादकाज्ञानासत्त्वापादकाज्ञानद्वयनिवृत्त्युपहितचैतन्यतादात्म्यमनिर्वचनीयत्वं विना नोपपद्यते। असत्तु यद्यपि प्रतीयते; तथापि न भाति। न हि तदभानापाद-

काज्ञानविषयतावच्छेदकम् न वा तदज्ञाननिवृत्तौ भातीति प्रतीयते, इति नासत्ख्यातिर्युक्ता ॥

यद्यप्यनिर्वचनीयेऽनिर्वचनीयत्वमप्यनिर्वचनीयम्; तथापि मिथ्यात्व-तन्मिथ्यात्वयोरिव तत्र प्रयोजकैक्याद् न प्रथमानिर्वचनीयत्व-व्याघातः ॥

बाध्यत्वं हि विषयस्य तदधिष्ठानसाक्षात्कारनिवर्त्यत्वम्, बाधकत्वं त्वधिष्ठानसाक्षात्कारविषयत्वेन; अन्यथैकस्यां रज्जौ सर्प-भूरन्ध्र-जल-धारादिभ्रमाणां बहूनामेकरज्जुसाक्षात्कारबाधकत्वं तद्बहुत्वेनापद्येत; एकाधिष्ठानकत्वस्य भेदबहुत्वस्थलेऽप्यविशेषात् ॥

एतेन—एकाधिष्ठानकानेकविषयभ्रमोऽपि—व्याख्यातः; इति बाध्यत्व-प्रयोजकं बाधावसेयदोषजन्यत्वमेव, न तु सङ्ख्याधिक्यम् ॥

दोषजन्यत्वस्यैव भ्रमत्वप्रयोजकत्वम् ।

शुक्तिरजतादिस्थलेऽपि तद्बाध्यत्वं दोषजन्यत्वप्रयुक्तमेव । यथा रज्ज्वधिष्ठानकभूरन्ध्रादिभ्रमाणां बहूनाम्; अन्यथा विरोधात् ॥

न च दोषजन्यत्वनिश्चयो बहुप्रमाणविरोधाधीनः; यावद्बाधं मिथ्या-त्वेनानिश्चीयमानार्थविषयकत्वेन शुक्तिरजतादिज्ञानानामपि प्रमाणत्वावि-शेषेण यावद्बाधं प्रमाणाप्रमाणविभागानुपपत्तेः । तत्र भेदवाक्यानामपि प्रत्यक्षादिप्रमाणप्राप्तभेदानुवादकत्वेऽपि तदनुवादस्यान्यार्थत्वात्—"अग्नि-र्हिमस्य भेषजमि"त्यादीनामिव न स्वार्थ एव पर्यवसानमपौरुषेयवेदवाक्य-त्वेऽपि । अनुवादो हि प्रत्यक्षादिप्राप्तस्यापि, यथा वह्निहिमभेषजत्वे, वेद-वाक्यप्राप्तस्यापि, यथा जर्तिलयवागूस्थले, इति सत्यकामादिबहुतरभेद-परवेदवाक्यगम्यत्वमपि तेषां बाध्यत्वे न विरोधि ॥

एतेन—"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।"

इति ब्रह्मतर्कवचनमपि—व्याख्यातम्; प्राबल्य-दौर्बल्यचर्चा हि सति विरोधे, न त्वविरोधे, इति प्रत्यक्षेणागमविरोधे प्रत्यक्षाप्रामाण्यव्यवस्था-पकमेव तद्वचनम्, इति नास्य धर्मादिमात्रविषयत्वम्; अन्यथा तद्वचन-वैयर्थ्यात् । न हि धर्मः, प्रत्यक्षस्य विषयः, इति न तत्र प्राबल्य-दौर्बल्यकथाऽवसरति । विरुद्धविषयत्वे हि प्रमाणद्वयस्य सा कथा सा च भेदाभेदयोः, प्रपञ्चसत्यात्वासत्यत्वयोरेव; अन्यथाऽल्पपरिमाणसूर्यादि-प्रत्यक्षस्य तद्विरुद्धागमेन बाधो न स्यात् ॥

अयमेव न्यायः प्रपञ्चसत्यत्व-मिथ्यात्वयोरपि ; प्रत्यक्षसिद्धं सत्तादात्म्यमात्रम्, सत्तासामान्यार्थक्रियाकारित्वादि वा, न त्वबाध्यत्वमिति सिद्धान्तात् ॥

औपाधिकयोर्जीवेश्वरयोरेव भेदः, तयोरैक्यं तु संविन्मात्राभिप्रायेणेति सिद्धान्तात्, इति नात्रापि प्रत्यक्षागमयोर्विरोधः। असतः सद् जायतेत्यादिश्रुत्यर्थस्तु पौर्वापर्यपर्यालोचनेनानभिव्यक्तनामरूपावस्थाविद्योपहितब्रह्मकारणतापरत्वात्, युक्तिविरुद्धत्वाच्च नासत्कारणतोपपादकः, इति नागमप्रामाण्यमात्रेणासत्कारणतापत्तिः ॥

संमतं चैतद् नोक्तवाक्यमसत्कारणतापरमिति। न च परमतेऽपि प्रत्यक्षाविरोधार्थं तत्र गत्यन्तरम्; ब्रह्मकारणतायाः, मूलप्रकृतिकारणतायाश्चानपरोक्षत्वाद् अनुमानस्यापि तत्र प्रत्यक्षमूलस्यासंभवादागमैकगम्यत्वमिति हि जन्मादिसूत्रानुसारेण परेऽपि मन्यन्ते ; अन्यथा प्रत्यक्षप्राप्तजीवकारणताऽनुवादपरत्वमेव "यतो वा" इत्यादिवाक्यानामपीत्यापत्त्येश्वरवाद एव लुप्येत। अयमेव न्यायो देहातिरिक्तात्मवादेऽपि ॥

न हि प्रमाणसिद्धत्वमात्रेण वस्तुसिद्धिः; प्रतीतिकालिकाबाधमादाय शुक्तिरजतादीनामपि सत्त्वापातात्, किन्त्वधिष्ठानज्ञानाबाधितार्थप्रतीत्या। भेदप्रत्यक्षादिकं तु बाधितम्। तदनुवादपराणि वाक्यानि त्वधिगतार्थविषयत्वाद् स्मृतिरिव न स्वयं वस्तुत्वसाधकानि; तदुपजीवित्वादनुवादस्य ॥

भेदप्रत्यक्षादेर्व्यावहारिकप्रामाण्येऽपि नाकार्यकारित्वम्।

एतेन—स्मृत्यप्रामाण्यमपि—व्याख्यातम्। न हि भ्रान्तार्थस्मरणमपि प्रमा, इति श्रुतिबाधितभेदप्रत्यक्षाद्यनुसार्यागमानाम्, अन्यपरश्रुतिनिरपेक्षतत्तदर्थपराणां वाऽऽगमानां न स्वार्थसाधकत्वलक्षणं प्रामाण्यम्, न वा तैरभेदागमस्य बाधः ॥

प्रवृत्तिप्रयोजकत्वलक्षणम्, अनुष्ठापकत्वलक्षणं वा प्रामाण्यं तु स्मृतीनामप्यविशिष्टम्। तदपि प्रबलप्रमाणविरोधे बाधितमिति तु विरोधाधिकरणे वार्तिककारा इति त्वन्यदेतत् ॥

एतेन—भेदप्रत्यक्षादीनां तर्कबाध्यत्वमपि—व्याख्यातम् ; तत्प्रामाण्यस्यानिश्चयात्, अन्यथा पूर्वोक्तरीत्याऽन्योन्याश्रयात्, न ह्यन्यथा शुक्तिरजतादीनां तर्कबाध्यत्वं स्यात्। यदि तत्र प्रत्यक्षप्रमाणविरोधात् तर्केण बाधः, तर्हि प्रकृतेऽपि प्रबलागमबाधात् स इति समानम् ॥

अभेद एव श्रुतीनां गीतायाश्च महातात्पर्यम् ।

अत उपक्रमोपसंहाराद्यवगतमुख्यतात्पर्यकाभेदवाक्यसिद्धः प्रत्यक्षादिप्रमाणान्तराविषयोपाधिविरहप्रयुक्तभेदविरहरूपोऽभेद एव सर्वश्रुतिस्मृतिपुराणेतिहासादिसिद्धः। तत्पराणामेव त्वागमानां तत्रैव मुख्यं तात्पर्यम्, तदविरोधेनावान्तरतात्पर्यं तु सर्वेषां भेदप्रत्यक्षादीनाम्। आभासत्वं तु पर्यवसानतो भेदपराणामेवागमानाम्, न त्वभेदागमस्येति सर्वं सुस्थम्। तत्र—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इत्यादिगीतावचनात् क्षराक्षरसर्वोपाधिविनिर्मुक्तसंविन्मात्रतैव पुरुषोत्तमः, न तु प्रकृत्यादिशबलितं विष्ण्वादिस्वरूपम्; अन्यथा

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।"

इति स्वस्य पुरुषोत्तमत्वे तत्र हेतुनिरूपणमसंगतं स्यात्। कार्यकारणोपाधिशबलितं प्रत्यक्षानुमानादिना श्रुत्यनुगृहीतेन लोकसिद्धम्। तदेव लोकसिद्धं वेदेऽप्युपाधिविरहिततया प्रतिपाद्यत इति हि शास्त्रार्थः ॥

"क्षेत्रज्ञं चापि मां विद्धि" इति स्थूल-सूक्ष्म-कारणशरीर-तत्समष्ट्युपहितपरमात्मा ह्यत्र प्रस्तुत उपसंह्रियते। अधिकं तु गीतातरङ्गिण्याम्, यत्र गीताया मुख्यं तात्पर्यमद्वैत एवेति निरधारि ॥

मिथ्यार्थानुवादकत्वेऽपि श्रुतीनां प्रामाण्याविघातः।

यद्यप्यद्वैतवादे द्वैतश्रुतिर्मिथ्यार्थवादिनी; तथापि मिथ्यार्थं मिथ्यात्वेन बोधयन्त्याः श्रुतेर्नाप्रामाण्यम्; बाधितार्थविषयकत्वे ह्यप्रामाण्यम्। न च मिथ्यार्थस्य मिथ्यात्वं बाधितम्; प्रपञ्च-तन्मिथ्यात्वोभयबाध्यत्वेऽपि प्रपञ्चसत्यत्वाभावस्योपपादयिष्यमाणत्वात् ॥

वस्तुतस्तु—मिथ्यार्थस्य सत्यत्वेन बोधने हि तद्बाधितार्थत्वादप्रमा। विद्वन्मात्राधिगम्या हि ब्रह्मसत्यता, जगन्मिथ्यात्वं च, इति तदीयानुभवमादायैव तत्त्वव्यवस्थाऽस्मतत्त्वविषये, तदधिकारस्तु ब्रह्मविद्यानिष्णातानाम्, न तु कर्ममात्रनिष्ठानाम्, उपासनामात्रनिष्ठानां वेति कर्मविचारैकदृष्टिः प्रभाकरगुरुः, स्वीयबृहत्यां लिखति—"यस्तु ब्रह्मविदामेष निश्चयः—यदुपलभ्यते, न तत् तथ्यम्, यन्नोपलभ्यते, तत् तथ्यम्—इति, नमस्तेभ्यः, विदुषां नोत्तरं वाच्यम्"—इति। सर्वथा तु श्रुतिः प्रपञ्चविषय एव मिथ्यात्ववादिनी, ब्रह्मणि तु सत्यत्ववादिन्येव; इति जीवत्वेश्वरत्वोपलक्षितसंविन्मात्राद्वितीयब्रह्मतत्त्वस्यानारोपितस्य, निरधिष्ठानस्य, अधिष्ठानतत्त्वसाक्षात्काराबाध्यस्य च सत्यत्वाद् न श्रुतेर्ब्रह्मांशेऽपि मिथ्यार्थानुवादित्वम्, न वा वेदवादिनोऽवेदवादित्वम्, शून्यवादिसाम्यं वा॥

जीवेश्वराभेदस्वरूपनिष्कर्षः।

अद्वैतं हि जीवत्वेश्वरत्वोपलक्षितौपाधिकभेदशून्याद्वितीयसंविन्मात्रतैव, न तु जीवत्वेश्वरत्वविशिष्टकिंचिज्ज्ञ-सर्वज्ञाभेदः, इति नाहं सर्वज्ञ इत्यनुभवः, अहं सर्वज्ञ इत्यनुभवाभावो वाऽकिञ्चित्करः; अहं सर्वज्ञ इत्यनुभवस्याद्वैताननुभवत्वात्, अहं सर्वज्ञ इत्यनुभवस्यापि मिथ्यार्थविषयत्वाच्च। भिन्नयोरभेदानुभवो भ्रम एव॥

परमार्थतस्तु—घट-पटादीनामपि कार्यात्मना भिन्नानां कारणात्मना ह्यभेदोऽभेदवादो नाम, इति अहं सर्वज्ञ इत्यनुभवोऽप्युपलक्षणतया जीवत्वेश्वरत्वावगाही तत्तदुपाधिशून्यसंविन्मात्रतयाऽभेदविषयकोऽपि प्रमाणमेव। अयं ह्यनुभवः—अहं सर्वज्ञ इत्यभिलप्यमानोऽप्युपाधीनामत्रोपलक्षणतयैव विवक्षणाद्, नामान्तरेण संविन्मात्रानुभव एव॥

अयमेव हि तत्त्वमसिमहावाक्यजन्योऽद्वैतानुभवो नाम। तत्र भेदानुभवो नाभेदानुभवस्य विरोधी; अभेदस्य संविन्मात्रस्वरूपत्वात्, भेदस्य च प्रतियोग्यनुयोगिसापेक्षस्य तदविरोधित्वात्। न ह्यभेदाभावो भेदः, भेदाभावो वाऽभेदः, येनोभयोरपि विरोधः स्यात्॥

भेदस्य धर्मिस्वरूपत्वायोगः।

भेदस्य धर्मिस्वरूपत्वेऽपि तु स्वरूपमात्रयोर्भेदाभेदयोः कथं विरोधः? घट-पटादिस्वरूपाणां सर्वेषां प्रतियोगिनिरपेक्षभेदस्वरूपत्व ऐक्यात् कथं घट-पटादिभेदानुभवः, तत्तदर्थक्रियामात्रकारित्वं वा तस्य? इदं रजत-

मित्यत्र स्वरूपमात्रस्य भेदत्वे इदंज्ञानस्यैव नेदं रजतमिति भेदज्ञानरूपत्वादिदंरजतयोः कथं सामानाधिकरण्यम्? बाधज्ञानरूपस्य तस्य कथं वा भ्रमत्वम्? सदसत्ख्यात्यादिपक्षेषु कुत्रापि कथं वा रजतार्थिनामिदंकाराभिमुखप्रवृत्तेर्निर्वाहः? कथं वा स्थाणुर्वा पुरुषो वेति संशयोऽपि ॥

एतेन—"स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्राकारप्रश्लेषेणाऽतत्त्वमसीति पदच्छेदोऽपि—परास्तः; तथा व्याख्यानेऽपि स्वरूपातिरिक्तस्य भेदस्य तत्राभावात् को वा फलभेदः? स्वरूपद्वयस्य भिन्नस्य प्रतीतौ कथं सामानाधिकरण्यम्? किमर्थं वाऽकारप्रश्लेषः? इति संविन्मात्राद्वैतानुभव एव तत्त्वमस्यादिवाक्यानां महातात्पर्यम् ॥

एतेन—स्वरूपमात्रं न वैलक्षण्यम्; अन्यथा स्वरूपे ज्ञातेऽप्यात्मा घट इत्यादि संशयः स्यादिति—व्याख्यातम्। स्वरूपमात्रं वैलक्षण्यमिति वदतामपि हि—आत्मा घट इति, घट आत्मेति वा कथं न ज्ञानम्? उभयोरपि तदितरविलक्षणयोरेव भानेन प्रामाण्यनिर्वाहात्। नीलो घट इति च न सामानाधिकरण्यं स्यात्; घटस्वरूपातिरिक्तनीलादिस्वरूपाभावेन रक्तादिघटभेदप्रतीत्यभावप्रसङ्गात् ॥

व्यक्तिविशेषमात्रं तु न घटशब्दार्थः; नीलादिपदसमभिव्याहारान्यथानुपपत्त्या लक्षणया घटव्यक्तिविशेषविवक्षायां तु तत्त्वमसीत्यत्रापि लक्षणया संविन्मात्रविवक्षयैव सामानाधिकरण्यं निर्वहणीयम्, इति तत्र न भेदप्रतीतिः, इति जीवब्रह्मभेदे न तात्पर्यं तत्त्वमस्यादिवाक्यानाम् ॥

ततश्च, पदार्थस्वरूपमात्रभेदतायामपि तत्तत्पदैर्वैलक्षण्यप्रतीतावपि "एकमेवाद्वितीयमि"त्याद्युपक्रमोपसंहारपर्यालोचनया तदादिपदावगतवैलक्षण्याविवक्षया वाक्यार्थ एव जहदजहल्लक्षणया, अन्यथा वा तत्तत्संप्रदायभेदेन शास्त्रतात्पर्यम् ॥

भेदाभ्यासेऽनन्यपरपुनःश्रवणरूपतात्पर्यग्राहकाभ्यासलक्षणायोगः।

सर्वेषामागमानां प्रत्यक्षादिप्राप्तभेदपराणामपि, तदभ्यासस्य तद्दार्ढ्यहेतुत्वात्, भेद एव तात्पर्यादतत्त्वमसीत्येव पदच्छेद इति तु न युक्तम्; आगमेषु प्रत्यक्षादिप्रमाणप्राप्तभेदनिर्देशस्यान्यार्थतायाः पूर्वमेवोक्तत्वेनान्यपरपुनःश्रवणत्वेन तात्पर्यग्राहकाभ्यासलक्षणाभावात् ॥

अनन्यपरपुनःश्रवणं खलु तात्पर्यग्राहकप्रमाणमभ्यासो नाम, अन्यथा-"अग्निहोत्रं जुहोति" "दध्ना जुहोति" "पयसा जुहोती"-त्यत्राप्यभ्यासापत्त्या कथं न कर्मभेदस्तत्र ?

इयान् विशेषः—क्रियाया अभ्यासो भेदे प्रमाणम्, सिद्धवस्तुनि तु तस्यैव मुख्यतया तात्पर्यविषयत्वे, इत्यनुवादत्वमेवान्यार्थत्वे पुनर्निर्देशस्य, इति कथमत्राज्ञातार्थोपदेशपुनःश्रवणमभ्यासः स्यात् ॥

न च जीवब्रह्माभेदः प्रमाणान्तरेण, अन्यथा वा प्रसक्तः, इति तद्भेदनिषेधेन भेदसाधनेऽप्रसक्तप्रतिषेधापत्तिः। प्रत्यक्षादिकं हि तद्भेदमेव प्रसञ्जयति, नाभेदमिति हि परेऽपि मन्यन्ते ॥

तत्र "सदेवेदमि"ति कारणात्मना ब्रह्म प्रकृत्य तस्य कारणस्यात्मत्वम्, परमात्मत्वं वा निर्दिश्य तद्भिन्नस्याश्रौतस्याकारणत्वे निर्णीते कुतो वा तद्भेदः प्रसज्यते, निषेद्धुं वा शक्यते ? अतो विरुद्धधर्मकत्वेन प्रसक्तं भेदमौपाधिकं विहाय स्वरूपैक्यबोधनमेव सद्विद्याया लक्ष्यम्, अभेदस्तु तयोर्यथाश्रुतार्थविवक्षायां न संभवति, इति भागत्यागलक्षणयाऽखण्ड-स्वरूपानुभावकत्वमिति तु वस्तुस्थितिः ॥

नवकृत्वस्तत्त्वमसिवाक्याभ्यासस्य सदृष्टान्तस्याद्वैत एव स्वारस्यम्।

अत एव—"तत्त्वमसि" इति नवकृत्वोऽभ्यासस्तत्र सदृष्टान्त उपपद्यते। तत्र विरुद्धधर्मकत्वेन प्रतीयमानभेदाविवक्षयाऽभेदपर्यवसानं कुत इति शङ्कायां नवस्वपि पर्यायेषु नव दृष्टान्ता आम्नाताः ॥

तत्र प्रथमो दृष्टान्तः—स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते" इति ॥

अत्र शकुनिसूत्रयोर्यद्यपि भेदः प्रत्यक्षः; तथापि "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति प्रतिपादयिष्यमाणसंपत्तिस्वरूप-प्रतिपादनार्थत्वात् "तन्निष्ठस्य मोक्षोपदेशात्" "अवस्थितेरिति काशकृत्स्नः" इत्यादिन्यायसिद्धसंपत्तिर्न लोकान्तरप्राप्तिरूपा, सा हि बन्ध एव, लोकान्तरे जन्मान्तरादिग्रहणस्य बन्धरूपत्वादिति ज्ञापनार्थं स्वस्थानस्थितिरेव मुक्तिरित्येतावन्मात्रमनेन प्रतिपाद्यते। स्वस्थानस्थितिस्तु "प्राज्ञेनाऽऽत्मना

संपरिष्वक्तः” इति वचनसिद्धा “सुषुप्तस्थान एकीभूतः” इति वचनसिद्धा वा प्राज्ञात्मनाऽवस्थानमेवेत्येतावन्मात्रमनेन दृष्टान्तेन विवक्ष्यते। तथाच सुषुप्ततुल्यत्वमेव मुक्तस्याज्ञानोपाधिकसर्वदुःखनिवृत्तिमात्रेण, विशेषस्तु तयोरज्ञानसत्त्वासत्त्वमात्रेण॥

अत्र सूत्रस्थानं प्राज्ञः। तथा च जागरितस्वप्नसहशलोकान्तरादिगमनमपि प्राज्ञतादात्म्यापन्नस्यैव जीवस्य, परन्तु बाह्याभ्यन्तरबन्धसत्त्वासत्त्वाभ्यां सुषुप्तजागरितादीनां विशेषः। तत्र सूत्रबद्धत्वं शकुनेरात्यन्तिकभेदेन, जीवात्मनस्तूपहितस्योपाधेरिव प्राज्ञेन तादात्म्याद् भेदाभेदानुभवोऽपि। तथाच तत्र कल्पितं भेदमादाय दृष्टान्तः॥

न हि दृष्टान्त-दार्ष्टान्तिकयोः सर्वात्मना साम्यं कुत्रापि; अन्यथा दृष्टान्तताया विघातात्, इति शकुनिदृष्टान्तो नाद्वैतस्य व्याहन्ता।

अनेन चोत्क्रमणानपेक्षः “अत्र ब्रह्मसमश्नुते” इति श्रुतिसिद्धोऽत्रैव ब्रह्मभाव एव मोक्षः। स च तत्पदार्थस्य सविशेषैकस्वभावतायां नोपपद्यते, इति निर्विशेषं ब्रह्मैव तत्पदार्थः, यदभेदो जीवस्य तत्त्वमसिमहावाक्यतात्पर्यविषय इति सूचनद्वारा तत्त्वमसिवाक्यस्याखण्डब्रह्मपरत्वं ज्ञाप्यते, इति सविशेषब्रह्मवादः, उत्क्रमणापेक्षब्रह्मसाम्यमोक्षतावादश्च निरस्तो भवति॥

द्वितीयस्तु दृष्टान्तः—यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति, नानात्ययानां वृक्षाणां रसानां समाहारमेकतां गमयन्ति, ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यहममुष्य वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदाभवन्ति–इति॥

अत्रापि यद्यपि नानावृक्षरसानां तत्तद्वृक्षरसत्वेनोपाधिना भेदो वर्तते, प्रतीयते च; तथापि मधुभावं प्राप्तानां मधुरूपातिरेकेण न रूपान्तरम्, न वा तत्तद्रसत्वोपाधिप्रयुक्तभेदानुभवस्तेषां तेषाम्, इति तेनैव न्यायेन यावत्तत्तच्छरीरोपाधिसत्त्वमेव जीवानां भेदः, तदनुभवो वा, न तु ब्रह्मभावं प्राप्तानाम्, इति निर्भेदस्वरूपमेव मोक्षस्वरूपम्, सति संपत्तिर्वेत्येवात्र विवक्षणात् नात्रापि दृष्टान्ते भेदकथा। अतोऽत्र “त इह व्याघ्रो वा सिंहो वे”त्यौपाधिकभेदविरह एव सुषुप्त्यादाविव मुक्तौ प्रतिपाद्यते॥

आत्मनः स्वरूपैक्येऽप्युपाधिकृत एव भेदो बन्धावस्थायामपि, उपाधि-

निवृत्तौ तु स्वरूपैक्यमेव। तत्तु क्षेत्र-क्षेत्रज्ञविवेकवतां जीवन्मुक्तानामेवानुभवगम्यम्, इति सुषुप्तितोऽपि वरा जीवन्मुक्तिरिति तु निष्कर्षः॥

विशेषस्तु—शकुनेरिव सूक्ष्मो बन्धो नीडावस्थस्य सुषुप्तस्य वियुक्तस्थूलसूक्ष्मशरीरस्यातिसूक्ष्मकारणशरीराभिमानो निवर्तते, जीवन्मुक्तस्य तु कारणशरीरमपि संस्कारात्मनैवानुवर्तते, न स्वरूपतः, इति सुषुप्तजीवन्मुक्तयोर्विवेकः॥

एतेन—तृतीयोऽपि दृष्टान्तो—व्याख्यातः। स यथा–इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रमेवापियन्ति, समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीति एवमेव खलु सोम्येमाः सर्वा प्रजाः सत आगम्य न विदुः सत आगच्छामहे–इत्यादि॥

अत्रापि यद्यपि नदीसमुद्रयोर्नदीत्वेन समुद्रत्वेन च भेदो वर्तते; तथापि स भेदः कार्यात्मनैव, न तु कारणात्मना। तत्र नदीसमुद्रयोः कार्यकारणभावेऽपि—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना"।

इत्युक्तरीत्या नदीनां समुद्रात्मता, घटादीनां मृदात्मतेव न व्यक्ता, इति नदीत्वेनैव यथा समुद्रे तल्लयपर्यन्तं प्रतीतिः, एवमत्रापि बन्धावस्थायां जीवात्मतयैव प्रतीतिः; यथा च घटादीनामनभिव्यक्तनामरूपात्मना मृदात्मनामपि घटाद्यात्मता नामरूपात्मता च व्यक्तावस्थायाम्, इति सर्वेषां कार्याणां कारणात्मतैव सर्वत्राऽनुवर्तमाना सत्या नदीनामिव समुद्रात्मता। घटाद्यात्मता तु व्यावर्तमाना न परमार्थः, एवमुपाधौ निवृत्तायामुपाधीनामिवोपहितानां जीवानामप्यखण्डब्रह्मभाव एव परमार्थः; यथा च नदीनां तत्तद्दिगुपाधिभेदमात्रेणैव भेदः, स्वरूपतस्तु समुद्रात्मतैव परमार्थः, एवं जीवानां परस्परभेदोऽप्युपाधिमात्रेणैव नदीनामिव प्रागाद्युपाधिभेदेन, तत्तदुपाधिविलये तु, प्रागाद्युपाधिविलये नदीनां समुद्रात्मतेव जीवानां ब्रह्मभाव एव, न तु मुक्तानां ब्रह्मणा साम्यमात्रं मुक्तिरिति प्रकृतदृष्टान्तार्थः। तेन च मुक्तौ नाहमिति प्रतीतिरपीति सर्वेषां जीवानां जीवत्वमपि मुक्तौ निवर्तते इत्यद्वैतसिद्धान्त एवास्यापि दृष्टान्तस्य स्वारस्यम्॥

तेन चाहंकारमात्रस्योपाधेरेव मुक्तौ नाशः। स एव बन्धो नाम, न त्वात्मनोऽपि, इति न–"अहं मुक्तः स्यामितीच्छानुपपत्तिरिति ज्ञाप्यते।

अनेन च मुक्तावपि जीवः—'अहमि'ति स्वरूपेणैवास्ति, भातीति च वादोऽपि परास्तः ॥

तुरीयस्तु दृष्टान्तः—स एष जीवेनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति–इति । अत्रापि यद्यपि जीववृक्षयोर्भेदः प्रतीयते ; तथाप्यत्र वृक्षशब्देन देहस्योपाधेरेव विवक्षणात् क्षेत्र-क्षेत्रज्ञविभागप्रतिपादनद्वारा स्थूल-सूक्ष्म-कारणशरीरविलापनेन तुरीयावस्थैव जीवस्य मुख्यं स्वरूपम्, यदेवातीतसमष्टिस्थूल-सूक्ष्म-कारणशरीरं तत्पदलक्ष्यार्थाभिन्नं मुक्तात्मनः स्वरूपमिति प्रतिपादनद्वाराऽखण्डं ब्रह्मैव मुख्यं तत्त्वमित्यनेन विवक्ष्यते । तेन च तुरीयस्यैवोपाधिभेदमात्रेण जागराद्यवस्था व्यष्टिसमष्टिरूपा आत्मनोंऽशाश्चेति—"अंशो नानाव्यपदेशादि"ति सूत्रार्थो ज्ञाप्यते । अनेन च कारणशरीराज्ञाननिवृत्त्याऽहंभावविगमोऽपि मुक्താविति निरूपणद्वारोपाधिविलयेन तत्तदुपाध्यभिमाननिबन्धनदुःखनिवृत्तिरिति ज्ञाप्यते ॥

अत एव—"अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यतीति दृष्टान्तः ॥

अनेन हि देहाभिमाननिवृत्तिरेवाशरीरत्वम्, न तु कर्मनिमित्तमिति ज्ञाप्यते। तदुक्तमाकरे-"नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम" इति। अनेन—

"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ॥

इति श्रुतिरपि—व्याख्याता, इति न दिव्यशरीरप्राप्तिर्मोक्षः, संपत्तिर्वा, किन्तु सर्वविधशरीरराहित्यमेव, इति तत्तद्वाद्यभिमतसंपत्तिस्वरूपनिरासद्वारा निर्विशेषनिरहंकारसंविन्मात्रभाव एव संपत्तिरित्येव दृष्टान्तानां स्वारस्यम् ॥

प्रथमादितुरीयान्तदृष्टान्तानामद्वैत एव स्वारस्यम् ।

निष्कर्षस्तु—प्रथमेन दृष्टान्तनोत्क्रमणापेक्षा मुक्तिरपि बन्ध एव ; भेदापेक्षस्य तस्य सुखानुपयोगित्वादिति भेदस्य बन्धहेतुता, स्वस्वभावावस्थानस्यैव मुक्तित्वं च ज्ञाप्यते, इति द्वितीयो दृष्टान्तो जीवब्रह्मैक्यं जीवन्मुक्तानुभवगम्यमुपपादयति । तृतीयो दृष्टान्तोऽखण्डाकारसाक्षात्कारावस्थामादाय जीवब्रह्मैक्यं समर्थयति । तुरीयो दृष्टान्तस्त्वखण्डाकार-

वृत्त्याऽज्ञानतत्संस्कारादिसर्वोपाधिविरहितं स्वयंज्योतिःस्वभावमखण्ड-चैतन्यमात्रं तत्त्वमवगमयति ॥

पञ्चमदृष्टान्तस्याद्वैत एव स्वारस्यम् ।

एतेन—पञ्चमोऽपि दृष्टान्तः—व्याख्यातः; स यथा—न्यग्रोध-फलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इवेमा धाना भगव इति किमत्र पश्यसीति न किंचन भगव इति तं होवाच यं वै सोम्येममणिमानं न निभालयस एतस्यैषो-ऽणिम्न एष महान् न्यग्रोधस्तिष्ठति—इति ॥

तत्र प्रथमेन दृष्टान्तेन "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"ति सद्विद्यायाः प्रथमवाक्ये सर्वस्य प्रपञ्चस्य सदात्मना प्रतीयमानत्वं सच्चिदानन्द-रूपब्रह्मणः सदात्मना ज्ञायमानस्यैवोपादानत्वनिबन्धनम् । तच्च सत आत्मस्वरूपत्वात् चिदात्मन आनन्दात्मनाऽज्ञानेनैव विवर्तोपादानत्वमे-वेति, "तदैक्षत बहु स्यां प्रजायेय" इति वाक्यान्ततात्पर्यं विवक्ष्यते । तेन च "सदेव सोम्येदम्" इति सदात्मना बाधायां सामानाधिकरण्यमचेतन-प्रपञ्चस्येति सूचनद्वाराऽचेतनजगदुपादानत्वेन सप्रपञ्चमपि ब्रह्माद्वितीय-मेकमेवेति सजातीय-विजातीयादिव्यावृत्तिर्ब्रह्मण उपक्षिप्यते ॥

तत्र "कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा" इति न्यायोपक्षिप्यमाणो निरवयस्यातिसूक्ष्मस्य च कथमुपादानत्वमिति शङ्काविशेषः "श्रुतेस्तु शब्दमूलत्वादि" ति न्यायेन यत् परिह्रियते, तदुपष्टम्भनार्थं पञ्चमो दृष्टान्तः ॥

अयं हि दृष्टान्तः—"स एषोऽणिमे"ति सर्वप्रपञ्चकारणस्य सतोऽणुत्वं नाणुपरिमाणत्वेन, किन्तु दुर्विज्ञेयत्वेन । तच्च सर्वप्रपञ्चकारणत्वेऽप्युप-पद्यत इत्युपपादयति । तथा चाव्यक्तस्य परमात्मनोऽपि व्यक्तप्रपञ्चोपा-दानत्वमज्ञानोपधानेन, तदाश्रिताज्ञानपरिणामविधया नामरूपात्मना व्यक्तेन रूपेण भानम्, सदात्मना त्वव्यक्तेन रूपेण ब्रह्मणो भानमिति न विरुध्यते । तथाच गीता—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।"

इति । इदमेवाभिप्रेत्योक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

इति। तेन च—"न विलक्षणत्वादस्य तथात्वं च शब्दात्" "दृश्यते तु" इत्यादिसूत्रार्थः प्रमाणितो भवति ॥

तथापि केवलं सदात्मनोऽपि प्रपञ्चस्य नामरूपात्मनैव कथं प्रतीतिः, न तु व्यवहारदशायामपि सच्चिदात्मना ? कथं च शुद्धब्रह्मोपादानमशुद्धात्मना प्रतीयते, नतु स्वीयेन शुद्धेन रूपेण ? कथं च—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।"

इति गीतोपपद्यत इति शङ्कापरिहारार्थं षष्ठो दृष्टान्तः ॥

षष्ठदृष्टान्तस्याद्वैत एव स्वारस्यम् ।

स यथा—लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमिति अन्तादाचामेति कथमिति लवणमिति अभिप्राश्यैनदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते तं होवाचात्र वाव सत्सोम्य न निभालयसेऽत्रैव किलेति ॥

तेन च सृष्टेः पूर्वं सदात्मनोऽपि चेतनाचेतनात्मकस्य सर्वस्य प्रपञ्चस्य सृष्ट्यनन्तरं न सदात्मनैव प्रतीतिः, किन्तु नामरूपात्मना व्यक्तेन, यथाऽलवणावस्थायामुदकात्मतैव, सलवणास्था तु रूपान्तरेण, इति षष्ठेनोदाहरणेन विशदीक्रियते ॥

तथाच यथा लवणोदकयोः परस्पराव्यतिकरावस्थायां तत्तद्रूपमात्रेण भानम्, परस्परव्यतिकरे तु लवणोदकत्वेन, एवमेव परस्परतादात्म्याध्यासाद् मायिकनामरूपात्मकप्रपञ्चात्मना व्यक्तं भानम्, सदात्मना त्वव्यक्तमिति—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना"

इति सुष्ठु लगत्यद्वैतवादे ।

सप्तमदृष्टान्तस्य सप्रयोजनत्वम् ।

एवं तर्हि कथं सदात्मतैव परमार्थः ? तद्व्यतिरेकेण च सर्वाभावः, कथं च जीवेश्वरयोः स्वरूपैक्यज्ञानं न सर्वेषामिति शङ्कावारणार्थम्, तदवधारणोपायः—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति बृहदारण्यकोपनिषत्प्रतिपादितः, साधनचतुष्टयसंपन्नाधिकारिकः श्रवणादिरेवाचार्योपसदनद्वारक इति निरूपणार्थं सप्तमो दृष्टान्तः ॥

स यथा—"यथा सोम्य पुरुषं गान्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्"—इत्यादि ॥

अत्रापि—यद्यपि गान्धारपुरुषयोर्भेदो वर्तते, प्रतीयते च; तथापि साधनावस्थायामद्वैतस्याद्वैतवादेऽनभ्युपगमात्, उपायमात्रप्रदर्शन-तात्पर्यकत्वाच्चोक्तदृष्टान्तस्य नात्र विरोधः; यावद्ब्रह्मसाक्षात्कारं व्यावहारिकभेदस्याद्वैतसिद्धान्ताविरोधात् ॥

न चात्र प्राप्यप्रापकाभेदप्रतिपादनं लक्ष्यम्; तस्य प्राचीनैरुदाहरणैः प्रतिपादितत्वात्, किन्तूपायांश एवायं दृष्टान्तः, इति प्राप्यप्रापकभेद-प्रतीतिरत्र न व्याहन्यते ॥

तथाच भाष्यमानन्दमयाधिकरणे "भेदव्यपदेशाच्चे"ति सूत्रे—"आत्मनोऽप्रच्युतात्मभावस्यैव सततत्त्वानवबोधनिमित्तो मिथ्यैव देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः, तेन देहादिभूतस्यात्मनोऽप्यात्माऽनन्विष्टोऽन्वेष्टव्य इत्यादिभेदव्यपदेशः—यथा वा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिपरिच्छिन्न आकाशोऽन्यः; ईदृशं च विज्ञानात्म-परमात्मनोर्भेदमाश्रित्य—"नेतरोऽनुपपत्तेः" भेदव्यपदेशाच्च "इत्युक्तम्—" इति ॥

तत इयं शङ्का शिष्यस्योत्तिष्ठति—"सत्यं भिदा सत्यं भिदे"त्यन्यत्र प्रतिपाद्यते, अभेदस्तु सत्य इति प्रकृते प्रतिपाद्यते। किमत्र तत्त्वम्—किं जीवात्मनोऽहंकर्त्रादिरूपेणैव मुक्तौ स्थितिः, उत स्वप्राकशसंविन्मात्रात्मनेति; तन्निवारणार्थमष्टमो दृष्टान्तः ॥

अष्टमदृष्टान्तस्याद्वैते स्वारस्यम्।

स यथा—"अथ यदाऽस्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ स न जानाति" इति ॥

अत्रापि यद्यपि जीवप्राणादीनां भेदः प्रतीयते; तथापि स यावत्प्राणादिलयम्, सर्वविलये तु न ज्ञातृ-ज्ञेयादिभेदसत्त्वम्, किन्तु स्वप्रकाशसंविन्मात्रावस्थानमित्येव विवक्ष्यते ॥

अत्र परस्यां देवतायां संपत्तौ ज्ञातृ-ज्ञेयादिविरहप्रतिपादनात् सर्वात्मना ब्रह्मभाव एव तत्त्वमसिवाक्यार्थ इति विशदमवगम्यते ॥

अत्र प्राकृतप्रलय एव ज्ञातृ-ज्ञेयादिभेदभावविरहो यद्यपि निरूप्यते; तथापि तत्रैव तथात्वे कैव कथा मुक्तौ? यत्र सर्वस्य बीजभावेनावस्थे

ति मत्वा प्राकृतप्रलयोदाहरणम्। इदमुपलक्षणम्—"एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"ति दृष्टान्तस्यापि ॥

नवमदृष्टान्तस्याद्वैते स्वारस्यम्।

नवमो दृष्टान्तस्त्वात्मनोऽकर्तृत्वमेव स्वभावः, कर्तृत्वं त्वारोपितम्, इत्यहमात्मना जीवस्य मुक्तौ नानुवृत्तिरिति निरूपयितुम् ॥

स यथा—"पुरुषं सोम्य हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति। स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते। सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते। अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते। स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते" इति। अयं हि दृष्टान्तोऽकर्तृत्वानुसन्धानेन कर्तृत्वाद्यारोपितसर्वबन्धनिवृत्त्या स्वप्रकाशसंविदात्मतैव संपत्तिः, मुक्तिर्वेति शपथेनोपपादयति, इति स्तेनापहार्ययोर्भेदप्रतीतिरत्राकिंचित्करी; कर्तृत्वा-कर्तृत्वयोरकर्तृत्वसत्यतायां तदनुसन्धानेनैव बन्धस्य मुक्तेश्चात्र विवक्षणात् ॥

सद्विद्याप्रकरणस्य सर्वस्याद्वैत एव स्वारस्यम्।

यत्तु—"सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यादिना भेद एव प्रतिपाद्यते– इति, तत्र सन्मूलत्वस्य सदुपादानकत्वरूपत्वात्, तस्य च "सदेवेदमि"त्युपक्रमावगततादात्म्योपपादककल्पितभेदपरत्वस्यैव संभवादभेद एव तात्पर्यम्; अन्यथा "सदेवेद" मिति सामानाधिकरण्यं नोपपद्यते ॥

वस्तुतस्तु—सोऽपि बन्धावस्थायामेव; कार्य-कारणभावस्य तदैव संभवात्, मुक्तात्मनां परस्परम, मुक्तात्मनः परमात्मना चाभेदे नोक्तं वाक्यं प्रमाणम्। सर्वोपाधिशून्यस्यानावृतसंविन्मात्रस्याखण्डस्यानाद्यविद्याकल्पितसदादिभेदसखण्डोपादानत्वाभावेन जगतः "सदेवेदमि"ति प्रकरणगतसत्पदार्थत्वाभावेन, मुक्तात्ममूलत्वाभावेन, प्रजानां सन्मूलत्वस्य मुक्तात्माभेदस्य चाविरोधित्वात्, मुक्तात्मनामकार्यत्वेन सन्मूलत्वाभावाच्च ॥

एतेन—

स्रष्टत्वादाश्रयत्वाच्च मुक्तानां च जगत्प्रति।
स्थापनाच्च विभुर्विष्णुरन्यः संसारिणो मतः ॥

इत्यपि—व्याख्यातम् ; संसारि-ब्रह्मणोर्भेदस्य, नियम्य-नियामकभावस्य चाद्वैतेऽप्यविरोधात् ॥

अत एव "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"त्यपि—व्याख्यातम्। इदं हि जीवस्य परमात्मनाऽभेदम्, जीव-परमात्मनोः स्वरूपैक्यं वा बोधयति—अनेन जीवेनात्मनेति ॥

अत्र जीवशब्देनानिरुद्धाख्यस्यैव परमात्मनो बोधनमिति तु—"अंशो नानाव्यपदेशा" दित्यादौ व्यूहावताराणां सर्वेषां परमात्मस्वरूपांशत्वस्य व्यवस्थापनात्, प्रद्युम्नादिरूपेणापि परमात्मनोऽकारणत्वे प्रमाणाभावात्, अन्यथा स्वरूपैक्यासंभवात्, जीवपदस्य प्रसिद्धसंसारिजीवपरस्यानिरुद्धमात्रपरत्वे प्रमाणाभावाच्च नोपपद्यते ॥

तत्र तत्र विष्णुर्जीव इत्युक्तिस्तु सर्वजीव-ब्रह्माभेदसिद्धान्तमेव स्वरूपात्मना बोधयति, न तु जीवशब्दवाच्यत्वमात्रं परमात्मनः ; सर्वशब्दानां लौकिकनां वैदिकानाम्, किं बहुना ? कर्मकाण्डघटकवसन्तेइत्यादिपदानामपि परमात्मपरत्वमेव मुख्यमिति परविद्यापक्षपातिनां किमत्र जीवशब्दमात्रस्य परमात्मपरत्वव्युत्पादने परिश्रमेण ? अद्वैतमतेऽपि स्वरूपैक्यमादाय सदात्मना सर्वस्य परमात्मत्वम्, तद्वाचकपदवाच्यत्वं वा न विरुध्यते ॥

तत्र "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इत्यादौ "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामि"ति न्यायाद् अविद्याश्रय-विषयसत्पदार्थपरमात्मस्वरूपमात्रं विवक्ष्यते, जीवत्वं तु तस्य शरीरप्रवेशमात्राधीनम्, शरीरान्तर्गतान्तःकरणाभिव्यङ्ग्यत्वमात्रप्रयुक्तं वा, यदुपपादनार्थम् "अनेन जीवेनात्मने"ति वाक्यम्, इति नास्य वाक्यस्य वैयर्थ्यमद्वैतमते ॥

परमते तु सत्पदार्थस्य परमात्मन एव स्रष्टृत्वाम्नानात् परमात्मनोऽनिरुद्धात्मनैव स्रष्टृत्वप्रतिपादनं वितथम्। न च तत् संभवत्यपि; अन्यथा "तत्तेज ऐक्षत" इत्यादावपि तस्यैव स्रष्टृत्वेन विवक्षाया आवश्यकत्वात् किमर्थं वा "अनेन जीवेने"ति वाक्यम् ? अद्वैतमते तु जीवत्वं परमात्मन औपाधिकमिति निरूपणेन तत् सफलम्, इति "जीवेने" तिपदेन साकमात्मनापदमपि प्रयुज्यमानं सत्यपि विशिष्टरूपेण जीवब्रह्मणोर्भेदे स्वरूपेण तदैक्यपरमेव। अत एव "तत्त्वमसी" त्यभेदे सामानाधिकरण्यम्, इति सर्वं सुष्ठु, इति प्रथमादिदार्ष्टान्तिकवाक्यपरीक्षा ॥

एतेन—"एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे" ति द्वितीयदार्ष्टान्तिकवाक्यमपि—व्याख्यातम् । सत्यम्, "सति सपद्ये"ति तत्र भेदाज्ञानमेव प्रतिपाद्यते । अविज्ञानं तु भेदस्य बाधेनापि भवति, सत्त्वेऽपि तद्ग्राहकप्रमाणाप्रवृत्त्या च । वयं तु मन्यामहे बाधात्, तत एव तद्ग्राहकप्रमाणाप्रसराच्च तदिति । "त इह व्याघ्रो वा सिंहो वे"त्यादि तु सति संपन्नानां सुषुप्त्यवस्थायामपि न भेदज्ञानमित्येव बोधयति, न तु भेदाज्ञानेऽनर्थम्; अनाकाङ्क्षितत्वात् तद्वाक्यमात्रे तत्प्रयोजनस्य ॥

"इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते" इति तु नदीनां तत्तत्समुद्रोद्भवानां समुद्रात्मता, समुद्राणां च महासमुद्रात्मता, एवं परम्परया नदीनामपि महासमुद्रात्मता, यथा घटादीनां कपालाद्यात्मता, कपालादीनां मृदाद्यात्मता, मृदादीनामप्यबाद्यात्मताविधया मूलप्रकृत्यात्मता, तथा तस्या इव सर्वेषां ब्रह्मतयैकविज्ञानेन सर्वविज्ञानमुपपादयत्, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति वाक्ये सर्वमूलकारणात्मना सर्वेषामैक्यप्रतिपादनमेव विवक्षत्, समुद्रात्मताद्वारा नदीनां ब्रह्मतापर्यन्तं वाक्यतात्पर्यमिति ज्ञापयत्, समुद्रात् समुद्रमपियन्ति, समुद्र एव भवतीति मूलकारणादभेदं कार्यस्य बोधयच्च सर्वात्मना नदी-समुद्रयोरभेदपरमेव, न भेदपरम्। "समुद्रात् समुद्रमपियन्ति, समुद्र एव भवतीति चानर्थान्तरम् ॥

उपपादनप्रकारस्तु पर्यवसित एवं वर्णन एवोपपद्यते; अन्यथा समुद्रान्तरस्य महासमुद्ररूपताऽनुपपन्ना स्यात्, इति नदीनां समुद्रेणैकीभूतानामपि नदीत्वमेव, न समुद्रत्वमिति विवरणं नोपपद्यते । न हि गङ्गासङ्गमस्थानमपि गङ्गैव; अन्यथा गङ्गास्नानार्थं तावत्पर्यन्तं यात्रा, समुद्रस्नानविधिना तत्स्नानादिकम्, तदुदकेनाचमनादिनिषेधश्चानुपपन्नः स्यात् । समुद्रार्णवादिभेदा दिग्देशविशेषावच्छिन्नप्रवहणशीला नद्य एव महाकाश इव घट-मठाद्यवच्छिन्ना घटाकाश-महाकाशादयः, इत्युपाधिभेदकृत एव भेदो नदी-समुद्रयोः, इत्युपाधिविगमे घटाकाशादीनां महाकाशतेव तत्तदुपाधिभेदविगमे नदीनामेव समुद्रत्वम्, न तु समुद्राणुभ्योऽतिरिक्ता नदीनामणवः ॥

एतेन—न हि भिन्नानां नदीजलपरमाणूनां समुद्राणुभिरैक्यं युज्यते ।

तथा सति हि महाजनसमितौ प्रविष्टानां द्वित्राणां तदैक्यं स्यादिति—परास्तम्; न हि महाजना उपाधिभेदतो भिन्नाः, न वा तत्र प्रविष्टा द्वित्राः ॥

अप्ययो हि समुद्रे नदीनां तदात्मवैव; कारणावस्थाया एवाप्ययपदार्थत्वात्, परमात्मन एव कारणत्वात्, सूर्यरश्मीनामेव कृत्स्नसमुद्रपरमाणुसमूहरूपमेघवृष्ट्युदक-दिग्देशविशेषाद्यवच्छिन्नप्रवहदप्रवहन्नदीकूपतटाकादिरूपत्वेन तेषां तत्तदुपाधिविलये तदात्मताया एव युक्तत्वाच्च ॥

अयं ह्यप्ययो जडप्रपञ्चमभिप्रेत्य, चेतनस्य तु "स्वमपीतो भवती"ति परमात्मनाऽऽत्यन्तिकोऽभेद एव घटाकाश-मठाकाशादीनामिव महाकाशेन । "स्वमपीतो भवती"त्यत्र स्वशब्देन परमात्मविवक्षाऽपि नाद्वैतविरोधिनी; परमात्मभावस्यैवात्र विवक्षणात् ॥

अत एव-"परेऽव्यये सर्व एकीभवन्ती"ति श्रुतिः। तत्रैकीभाव इति च्विप्रत्ययो ह्यौपाधिकत्वावस्थायां ब्रह्मणाऽत्यन्ताभेदस्याभूतस्य उपाधिविलये तद्भावमभिप्रेत्य । अप्ययो हि "प्रभवाप्ययौ" इति प्रयोगात् कारणभावापत्तिरेव, न प्रवेशः ॥

"यत्प्रयन्त्यभिसंविशन्ती"त्यादौ द्वितीयैवाप्ययस्थले दृश्यते, न तृतीया, इति "स्वमपीतो भवती"त्यादावपि कारणभावापत्तिरूप एवाप्ययः, इति नात्र "स्वेनापीतो भवती"ति प्रयोगापत्तिरेकीभावविवक्षायाम् । श्रुतिस्तु न पर्यनुयोज्या, इति द्वितीयाया एव तृतीयार्थताऽपि न विरुध्यते, इति "स्वमपीतो भवती"त्यादौ स्वशब्देन परमात्मविवक्षाऽपि जीवात्म-परमात्मनोरभेदमाश्रित्याद्वैतमते न विरुद्ध्यते । मुख्यं स्वरूपं हि जीवात्मनोऽपि परमात्मैव ॥

"स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यती"ति तु पूर्वमेव परीक्षितम् ॥

अयमेव न्यायोऽत्र प्रकरणेऽणिमादिशब्दैः परमात्मस्वरूपविवक्षायाम् । न हि जीवेश्वरैक्यवादे जीववाचकशब्दैः परमात्मविवक्षा विरुध्यते कुत्रापि । "ऐतदात्म्यमिदं सर्वमि"त्यत्रैतदात्मसंबन्धीति वा, एतदात्मस्वरूपमिति वा विवक्षापि सर्वस्य ब्रह्मविवर्तंतायां न व्याहन्यते ॥

इदमेव विवादास्पदम्—परमात्मनो जीवाभेद उपाध्यविवक्षया भवति, न वेति । "सदेवेदमि"त्युपक्रमानुगुणं विवरणं तु "ऐतदात्म्यमिदं

सर्वमि"त्यत्र स्वार्थे ण्यप्रत्यय एव स्वरसम्, इति बाधायां तादात्म्येन प्रवृत्तं प्रकरणं न भेदपरं भवितुमर्हति, इति नात्रातत्त्वमसी"ति वाक्ययोजनोत्सूत्रभाष्यानुव्याख्याना संभवति, किन्तु तत्त्वमसीत्यभेदे सामानाधिकरण्येनैव ॥

तच्चाद्वैतवादस्यैवानुगुणम्, न तु द्वैतवादस्य। न च जीव-ब्रह्मभेदोऽत्र प्रतिपिपादयिषितः; श्वेतकेतोः स्वस्य ब्रह्माभेदभ्रमाभावेन तन्निषेधेन तद्भेदप्रतिपादनस्यानाकाङ्क्षितत्वात्। यत्तु—परमात्मातिरिक्तानामात्माभासत्वं तत्र तत्रोच्यते, तत् बद्धाभिप्रायम्, न तु मुक्ताभिप्रायम्; तस्य परमात्मस्वरूपस्य, तदभिन्नस्य वा तदाभासत्वायोगात् ॥

मोक्षधर्मवचनानामद्वैताविरोधः, तत्रैव स्वारस्यं च।

यस्तु—अन्तिमे दृष्टान्तवाक्ये स्तेनपदप्रयोगादन्यथा ज्ञायमानं परमात्मानमात्मानं पश्यन्निति विवरणमेव तस्य युक्तम्, तच्च भेदतात्पर्य एव युज्यत इति—वादः, तत्रात्मनः स्वतः, परतो वा कर्तृत्वानुसन्धातुरेव स्तेनसाम्यस्य विवक्षणात् तदकर्तृत्वानुसन्धातुरेव सत्यवादित्वादिव्यवस्थापनाच्च परमात्माभेदायोग्यात्मस्वरूपबोधने तात्पर्यं नोपपद्यते ॥

एतेन—

"ऐकात्म्यं नाम यदिदं केचिदाहुरनैपुणम्।
शास्त्रतत्त्वमविज्ञाय तथावादावलम्बनाः॥
कामक्रोधाभिभूतत्वादहंकारवशं गताः।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः॥
ब्रह्मस्तेना निरानन्दा अपक्वमनसो जनाः॥"

इत्यादिमोक्षधर्मवचनान्यपि—व्याख्यातानि; एतेषां बद्धकिंचिज्ज्ञादिजीवस्याहमर्थस्य सर्वज्ञकारणाभेदविज्ञाननिन्दापरत्वेन विगलितसर्वोपाधिजीवत्वेश्वरत्वोपलक्षितसंविन्मात्रतासिद्धान्ताविरोधित्वात् ॥

परमोपनिषदोऽद्वैतेऽविरोधः।

"तथा जिवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ।
तथापि सूक्ष्मरूपत्वान्न जीवात् परमो हरिः॥
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन्।
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा॥

इति परमोपनिषदपि क्षेत्र-क्षेत्रज्ञविवेकेनाशरीरजीवपरमात्मता-

ज्ञानमोक्षसाधनतापरा। न ह्यन्यथैकविज्ञानेन सर्वविज्ञानोपपत्तिः। न हि प्रधानविज्ञानेन सर्वेऽप्रधाना लोके विदिता दृश्यन्ते ॥

तच्च प्राधान्यं यदि सर्वकारणत्वेन, तर्हि तस्यापरिणामिकारणतया विवर्तोपादानरूपतायामद्वैते पर्यवसानम्। निमित्तकारणतायां तु तद् बाधितम्। न हि निमित्तकारणकुलाल-चक्र-दण्डादिविज्ञानेन तत्कार्याणि विज्ञायन्ते। यदि तु प्राधान्यमन्येन प्रकारेण, तर्हि सद्विद्यायां कार्य-कारण-भावोपदेशस्य वैयर्थ्यम्, ब्रह्मप्राधान्यनियामकान्तरानिरूपणेन तदयोगः, मृत्तिकेत्येव सत्यमिति कारणज्ञानेन सर्वविज्ञानोक्तिविरोधश्च ॥

प्रपञ्चमिथ्यात्वस्यैव श्रौतत्वम्, न तु तत्पारमार्थिकत्वस्य।

एतेन—"वाचारम्भणं विकारो नामधेयमि"त्यस्यार्थान्तरपरतया योजनमपि—निष्प्रयोजनम्, इति "सदेवेदमि"त्यादिवाक्यसन्दर्भस्य ब्रह्मव्यतिरेकेणेतराभावमभिप्रेत्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा जगन्मिथ्यात्व एवोपपद्यते ॥

"कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" इत्यत्रेश्वरस्रष्टृत्ववर्णनेनैव सत्यत्वे सिद्धे याथातथ्यत इति पदं प्रपञ्चस्य सृष्टस्य यथातथाभावं यावद्व्यवहारं सत्त्वमेव बोधयति, न पारमार्थिकं सत्त्वम्; यावत्कारणसत्त्वं कार्यसत्ताबोधन एव तत्तात्पर्यात् ॥

कारणत्वं तु ब्रह्मणो मायोपहितस्य यावन्मायासत्त्वमेव, इति माया-विनाशे तत्प्रयुक्त-तत्कार्यविनाशेन मायाया इव तत्कार्याणामपि मिथ्यात्वसिद्धान्त एव पर्यवसानाद् विश्वसत्यत्वपराणां सर्वेषां वचनानां न कोऽपि विरोधः ॥

"असत्यमप्रतिष्ठं ते" इति गीताया नाद्वैतनिन्दापरत्वम्।

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतं किमन्यत् कामहेतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥"

इति भगवद्गीता तु नाद्वैतवादनिन्दापरा, किन्तु सौगतमतनिन्दा-परेति गीतातात्पर्यचन्द्रिका वदति। तत्राद्वैतमते साधिष्ठानकत्वं जगतः स्वीक्रियते, इति यावत्तत्प्रतीति नाप्रतिष्ठितत्वम्, न वाऽनीश्वरत्वम् ॥

तत्र जगतोऽसत्यत्वं स्वरूपतो बाधेन यद्यपि स्वीक्रियते; तथापीश्वरस्य स्वरूपतोऽसत्यत्वं न स्वीक्रियते। अत एव "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि" ति जगतोऽनीश्वरत्वविशेषणम्। सोपाधिकमसत्यत्वं त्वीश्वरस्य नान्यद् जगदसत्यत्वात्, उपाधिबाध्यत्वप्रयुक्तस्यौपाधिकस्यैव बाध्यत्वस्याद्वैतमत ईश्वरे स्वीकारात्, इति नाद्वैतवादनिन्दा गीतायाम्। अधिकं गीतातरङ्गिण्याम्॥

### श्रुतिव्याख्यानानामद्वैत एव स्वारस्यम्।

श्रुतिव्याख्या तु नाद्वैतसिद्धान्तमुपहन्ति; अद्वैतानुगुणं तद्व्याख्यानस्यैव सर्वत्रौचित्यस्य तत्तत्प्रकरणे वेदान्तेषु भगवत्पादैः, तदनुयायिभिश्च व्यवस्थापनात्। विषयव्यवस्थायां तु सिद्धायां तदनुगुणं विवरणमेव हृदयङ्गमम्। न चाद्वैतवादे दोषलेशोऽपि, प्रत्युत तत्रैव स्वारस्यं वेदान्तवाक्यानाम्, तदविरोधेनोपासनाप्रकरणगतानाम्, जगत्सत्यतापराणाम्, जीवपरस्परभेदबोधकानाम्, जीव-परमात्मभेदबोधकानां च सर्वेषां वचनानामद्वैतनिबन्धेषु विशदीकरणात्॥

### अद्वैतदर्शनमेव रमणीयं दर्शनम्।

अद्वैतदर्शनमेव हि सर्वेषु दर्शनेषु दर्शनीयम्। गौडपादकारिकाया अपि द्वैतसिद्धान्तानुगुणं योजना तु क्लिष्टतमा, पूर्वोत्तरवाक्यसन्दर्भविरुद्धा च। सर्वं चेदं गौडपादकारिकासमीक्षायां व्यक्तम्। व्यक्तीकरिष्यते चेदमुत्तरत्र॥

### एकानेकजीववादेन जीव-ब्रह्मैक्योपपत्तिः।

जीव-ब्रह्मैक्यं तु—एकजीववादे, अनेकजीववादे च। तत्र प्रथमेऽविद्यावच्छिन्नं तत्प्रतिबिम्बचैतन्यं वा मुख्यो जीवः। तत्राविद्यावच्छिन्नस्यैवान्तःकरणावच्छेदमात्रेणानेकजीववादः, अविद्यावस्थाविशेषावच्छिन्नचैतन्यजीववादो वा॥

तत्रान्तःकरणावच्छिन्नचैतन्यस्य मुक्तिर्नाम तन्मूलाविद्यावच्छिन्नचैतन्यभाव एव, न तु बिम्बचैतन्यभावः। शुकादिमुक्तिप्रतिपादकवचनानां मूलजीवभावाभिप्रायत्वादर्थवादत्वम्॥

अन्ततः सर्वाविद्योपरमे ब्रह्मभावो मूलजीवस्यैव मुक्तिः। अन्तः-

करणावच्छिन्नचैतन्यानां जीवानां ब्रह्मसाक्षात्कारेण स्वोपाध्यन्तःकरणमात्रस्य नाशः, अविद्याप्रतिबिम्बचैतन्यस्य तु तद्बिम्बचैतन्यात्मता ब्रह्मसाक्षात्कारेण मुक्तिः। स एव समष्ट्यन्तःकरणाभिमानी प्रथमो जीवो हिरण्यगर्भः। अत्र चैकमुक्तौ न सर्वमुक्त्यापत्तिः, न वेश्वरभावः॥

अविद्योपहितचैतन्यमीश्वरः, अन्तःकरणोपहितचैतन्यं जीव इति पक्षेऽविद्यावस्थाविशेषोपहितचैतन्यजीवतापत्ते चेश्वरभावो मुक्तिः, न तु मूलजीवभावः, ब्रह्मभावस्तु सर्वमुक्तावेव। विशेषस्तु यावत्सर्वमुक्ति ईश्वरभावः, इति न तत्रैकजीववादोऽपि॥

व्यष्टिजीवानामविद्यावस्थाविशेषोपहितानां यावदन्तःकरणसत्त्वं परस्परं गुरु-शिष्यभावादिकं न विरुध्यते, यथा—स्वप्नेऽवस्थाज्ञानोपहितजीवकल्पितजीवानां तदंशानां परस्परं व्यवहारः, एवमत्रापि व्यवस्था। तत्रैकाज्ञानकल्पितो जीवस्तु मूलाविद्यावच्छिन्नो हिरण्यगर्भः समष्टिमनोऽभिमानी। अन्ये तु मूलाविद्यावस्थाविशेषान्तःकरणावच्छिन्ना अनेकाज्ञानकल्पिता अनेक एव। तथाचैकाज्ञानकल्पितस्य समष्टिजीवस्य हिरण्यगर्भस्य स्वकल्पितानेकजीवान् प्रत्युपदेशः स्वप्नगुरुदृष्टान्तेन। तत्तद्व्यष्टिजीवानां तु परस्परं गुरु-शिष्यभावादिकमप्यत एव व्याख्यातम्; तत्तदन्तःकरणोपाधिभेदेन भिन्नानां सर्वव्यवहारनिर्वाहसंभवात्, मूलजीवकल्पितव्यष्टिजीवानां स्वप्ने स्वकल्पितजीवैर्व्यवहारवद् मूलजीवस्य व्यष्टिजीवैर्व्यवहारो न विरुध्यते॥

ईश्वरस्येव लीलामात्रं समष्टिजीवस्य हिरण्यगर्भस्य व्यष्टिजीवसृष्टिः, तैर्व्यवहारश्च, इति मायाविन इव स्वकल्पितत्वेन ज्ञातैरेव मूलजीवस्य व्यवहारो व्यष्टिजीवैर्न विरुध्यते। इयान् विशेषः—मायावी मायेति मत्वा व्यवहरति, समष्टिजीवस्तु स्वसृष्टा जीवा इति व्यवहरति। स्वप्नोऽयमिति ज्ञानं तु न स्वप्नदशायां व्यष्टिजीवानामुपाधिदोषेण दुष्टानाम्, हिरण्यगर्भस्य तु स्वप्न इति व्यष्टिजीवविषये मायाविन इवास्ति विज्ञानम्। तथापि लीलामात्रं तस्य व्यवहारः॥

तत्र यावत्स्वप्नसमाप्ति स्वप्नकल्पिताः सर्वेऽपि जीवा यथा प्रातिभासिकाः सत्याः, तैः सह मुख्यजीवस्य व्यवहारश्च, एवं यावत्सर्वमुक्ति सर्वैः स्वसृष्टैर्व्यवहारो हिरण्यगर्भस्य न विरुध्यते। तत्र व्यष्टिजीवा न व्यष्टिविशेषसृष्टाः, तत्कल्पिता वा, किन्तु मूलजीवसृष्टाः, इति बहूनां दृश्यमा-

नत्वात्, कस्याज्ञानकल्पितमिदमिति शङ्का नोत्तिष्ठति, इति सर्वेषां व्यष्टिजीवानां स्वतन्त्रं परस्परव्यवहारो न विरुध्यते मूलजीवपारतन्त्र्येऽपि। समष्टिजीवाविद्याकल्पितत्वाद् व्यष्टिजीवानामनेकजीववाद इव न गुरु-शिष्य-भावविरोधः। स्वप्नेऽपि स्वप्नवत् व्यष्टिजीवानां तत्तद्व्यक्तिमात्रानुभवस्तु तत्तत्सृष्टत्वात्। तत्तत्स्वाप्निकानां नैकजीवादे जागराद्यवस्थासाङ्कर्यं व्यष्टि-जीवानाम्॥

किञ्चिज्ज्ञत्वम्, असर्वशक्तित्वादिकं च व्यष्टिजीवानामेव तत्तदुपाध्यव-च्छिन्नानाम्, न तु मूलजीवस्य। मूलपुरुषो बिम्बरूपत्वाद् नोपाधिदोषभाजनं भवति; उपाधेः प्रतिबिम्बपक्षपातित्वात्। तत्र च व्यष्टिजीवेष्वेकस्य व्यष्ट्युपाधिविलयमात्रेण मूलजीवभावमात्रेण वोपाधिसंपर्कप्रयुक्तदोषा-भाजनत्वात् प्रत्येकं मुक्तत्वव्यपदेशः॥

स च समष्टिजीवः, मूलजीवो वा वैदिकसंप्रदायप्रवर्तको ब्रह्मा, नारायणः, सदाशिवो वाऽद्वैतवाद्येव, न भेदवादी; अद्वैतवादस्यैवौपनिषद-त्वात्। भेदवादोऽभेदवादो वौपनिषद उपनिषद्द्वारैव मूलजीवेन व्यष्टिजीव-विशेषानुद्दिश्य संप्रदायतः परिपाल्यते, न तु कस्यापि तत्र स्वातन्त्र्यम्। मूलजीवोपाध्यज्ञानकल्पितं सर्वम्, न तु व्यष्टिजीवाज्ञानकल्पितम्, इति सर्वप्रमाण-प्रमेयव्यवहारनिर्वाहोऽनेकजीववाद इवैकजीववादेऽपि। अत एव प्रपञ्चमिथ्यात्ववादः। इदमेवाभिप्रेत्य—

“प्रपञ्चो यदि विद्येत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥
विकल्पो विनिवर्तेत कल्पितो यदि केनचित्।”

इति माण्डूक्यगतमागमप्रकरणम्॥

### प्रपञ्चमिथ्यात्व एव माण्डूक्यागमप्रकरणस्वारस्यम्।

अत्र हि यथाश्रुतम्, प्रपञ्चस्य मायामात्रत्वम्, तया वर्तमानस्य निवृत्तिश्च प्रतिपाद्यते, परं तु प्रपञ्चपदस्य पञ्चभेदपरत्वेन, मायामात्रपदस्य परमेश्वर-कृतत्वपरतया, परमेश्वरज्ञाततापरतया च क्लिष्टकल्पनया माण्डूक्यागम-प्रकरणगतमेतद्वाक्यं द्वैतिनो व्याचक्षते। एवं पञ्चविधो भेदो यद्युत्पद्येत, तर्हि निवर्तेत, न च निवर्तते। ततः सत्यं द्वैतं न भ्रान्तिकल्पितम्, इति भेदस्यानादित्वसत्यत्वपरतया ते प्रकरणमिदं व्याकुर्वते॥

अद्वैतिनस्तु—प्रपञ्चपदम्, मायामात्रपदं च, विनैव क्लिष्टकल्पनां मायामात्रस्य जगतो ज्ञाननिवर्त्यत्वेन मिथ्यात्वपरतया—योजयन्ति। अत्रैव विवरणे—'अद्वैतं परमार्थतः' इति स्वरसं संगच्छते। परमते तु परमार्थतः = अद्वैतमुत्तममिति व्याख्या ॥

"उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते।"

इत्यत्राज्ञाते वाद उपदेशः, ज्ञाते तु नोपदेशापेक्षेत्यपि बहुविधा कल्पना परमते, अद्वैतमते तु नैवम्। सर्वथा तूपनिषत्स्वारस्यम्, विना क्लिष्टकल्पनामद्वैतवाद एव ॥

ऋग्वेदेऽद्वैतवादः।

अद्वैतवाद एव स्वरसाः सशिरस्का वेदाः सर्वेऽपि सेतिहास-पुराणादयः। तत्र ऋग्वेदे सरस्वतीरहस्योपनिषदि श्रूयमाणाः—

"या वेदान्तार्थतत्त्वैकस्वरूपा परमार्थतः।
नामरूपात्मना व्यक्ता सा मां पातु सरस्वती॥ १ ॥
या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते।
अद्वैता ब्रह्मणश्शक्तिः सा मां पातु सरस्वती॥ २ ॥
या वर्णपदवाक्यार्थस्वरूपेण विवर्तते।
अनादिनिधनाऽनन्ता सा मां पातु सरस्वती॥ ३ ॥
अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी।
प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती॥ ४ ॥
अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति।
रुद्रादित्यादिरूपस्था सा मां पातु सरस्वती॥ ५ ॥
या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानाऽनुभूयते।
व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती॥ ६ ॥
नाम-जात्यादिभिर्भेदैरष्टधा या विकल्पिता।
निर्विकल्पात्मनाऽव्यक्ता सा मां पातु सरस्वती॥ ७ ॥
व्यक्ताव्यक्तगिरस्सर्वा वेदाद्या व्याहरन्ति याम्।
सर्वकामदुघा धेनुस्सा मां पातु सरस्वती॥ ८ ॥
यां विदित्वाऽखिलं बन्धं निर्मथ्याखिलवर्त्मना।
योगी याति परं स्थानं सा मां पातु सरस्वती॥ ९ ॥
नाम-रूपात्मकं सर्वं यस्यामावेश्य तां पुनः।
ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती॥" १० ॥

इति। जीवब्रह्माभेदानुभववतो वामदेवस्य—"तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" इति बृहदारण्यकोपनिषत्समानार्थाः स्वीय-तत्त्वज्ञानफलसार्वात्म्यानुभवप्रदर्शिका वामदेवसूक्तगता :—

३-६-१५-१ "अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृंजेहं कविरुशना पश्यतामा।"

३-६-१५-२ "अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय।
अहमपो अनयं वावशानाममेदवासो अनुकेतमायन्।"

३-६-१५-३ "अहं पुरो मन्दसानोव्यैरनवसाकं नवतीः शम्बरस्य।
शततमं वेश्य सर्वताता दिवोदासमातिथिग्वं यदावे।"

३-६-१६-१ "गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम्।"

इति चतस्र ऋचः॥

"तुच्छत्वान्नासदासीद् गगनकुसुमवद्भेदकं नो सदासीत्
किन्त्वाभ्यामन्यदासीद् व्यवहृतिगतिसन्नास लोकस्तदानीम्।
किं त्वर्वागेव शुक्तौ रजतवदपरो नो विराड् व्योमपूर्वः
शर्मण्यात्मन्यथैतत् कुहकसलिलवत् किं भवेदावरीवः॥"

"बन्धो जन्मात्ययात्मा यदि न पुनरभूत्तर्हि मोक्षोऽपि नासीद्-
यद्वद्रात्रिर्दिनं वा न भवति तरणौ किं तु दृग्दोष एषः।
अप्राणं शुद्धमेकं समभवदथ तद् मायया कर्तृसंज्ञं
तस्मादन्यच्च नासीत् परिवृतमजया जीवभूतं तदेव"॥

"प्रागासीद् भावरूपं तम इति तमसा गूढमस्मादतर्क्यं
क्षीरान्तर्यद्वदम्भो जनिरिह जगतो नामरूपात्मकस्य।
कामाद्धातुः सिसृक्षोरनुगतजगतः कर्मभिस्संप्रवृत्ता-
द्रेतोरूपैर्मनोभिः प्रथममनुगतैः संततैः कार्यमाणैः॥"

"चत्वारोऽस्याः कपर्दा युवतिरथ भवेद् नूतना नित्यमेषा
माया वा पेशला स्यादघटितघटनापाटवं याति यस्मात्।
स्यादारम्भे घृतास्याश्रुतिभववयुनान्येवमाच्छादयन्ती
तस्यामेतौ सुपर्णाविव पर-पुरुषौ तिष्ठतोऽर्थप्रतीत्या॥"

"एकस्तत्रास्त्यसङ्गस्तदनु तदपरोऽज्ञानसिन्धुं प्रविष्टो
विस्मृत्यात्मस्वरूपं स विविधजगदाकारमात्मानमैक्षत्।

बुद्ध्यान्तर्यावदैक्षद्विसृजति तमजा सोऽपि तामेवमेकः
तावद्विप्रास्तमेकं कथमपि बहुधा कल्पयन्ति स्ववाग्भिः ॥"

इति भगवत्पादैः स्वानुभवोपबृंहणपूर्वकं शतश्लोक्या व्याख्याताः, सायणाचार्यव्याख्याताः अन्याश्च तत्तत्सूक्तगता अद्वैतवादमेव समाद्रियन्ते, तत्रैव स्वरसाश्च ॥ ता यथा—

८-७-१७-३१ "तम आसीत्तमसा गुढमग्रे प्रकेतं सलिलं सर्वमा इदम् ।
तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम् ।"

८-७-१७-२ "न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥"

८-७-११-४७ "कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ।"

८-७-१७-१ "नासदासीन्नोऽसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ।"

८-६-१६-३ "चतुष्कपर्दा युवतिस्सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् ।"

८-६-१६-४ "एकस्सुपर्णः ससमुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसा पश्यमन्तितस्तं मातारेह्वि स उ रेह्वि मातरम् ।"
सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ।

६-४-२९-२ "एक एवाग्निर्बहुधा समिद्ध एकस्सूर्यो विश्वमनुप्रभूतः ।
एकैवोषास्सर्वमिदं विभात्येकं वा इदं विबभूव सर्वम् ।"

२-३-२२-६ "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।"

८-४-१७-२ "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।"

८-३-१७-७ "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ।"

८-१-२० "यत्ते यमं वैवस्वतं मनो जगाम दूरकम् ।
तत्त आवर्तयामसीह क्षयाय जीवसे ।"

८-१-२०-२ "यत्ते दिवं यत्पृथिवी मनो जगाम दूरकम् ।
तत्त आवर्तयामसीह क्षयाय जीवसे ॥" इति ॥

शुक्लयजुर्वेदेऽद्वैतवादः।

ईशोपनिषत्तु यजुर्वेदान्तर्गताऽद्वैतवादमेव पोषयतीति व्यक्तमाकरादौ ॥

"परिद्यावापृथिवी सद्य इत्वा परिलोकान् परिदिशः परिस्वुवः ॥
ऋतस्य तन्तुं विततं विधूय तदपश्यत् तदभवत् तदासीत् ॥"

"अहं परस्तादहमधस्तात् यदन्तरिक्षं तदुमेति नास ॥
अहं सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत् ॥"

इति मन्त्रावपि सभाष्यौ तयोरद्वैतपरतामेव विशदयतः ॥

तैत्तरीयवेदेऽद्वैतवादः।

एतेन—तैत्तिरीयवेदोऽपि—व्याख्यातः। तत्र तदीयोपनिषदद्वैतवाद एव स्वरसेत्यानन्दमयाधिकरणपरीक्षायां परीक्षिष्यते। तदीयकर्मकाण्डगता अपि मन्त्राः सभाष्या अद्वैतवादमेव समर्थयन्ति। ते यथा

"नासदासीन्नो सदासीत् तदानीम्। नासीद्रजो नो व्योमापरो यत्। किमावरीवः कुहकस्य शर्मन्। अंभः किमासीद्गहनं गभीरम्। न मृत्युरमृतं तर्हि न। रात्रिया अह्न आसीत् प्रकेतः। आनीदवातं स्वधया तदेकम्। तम आसीत्तमसा गूढमग्रे प्रकेतम्। तुच्छेनाभ्वपिहितं यदासीत्।"

"य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादापि ता नः। स आशिषा द्रविणमिच्छमानः परमच्छदो वर आविवेश।"

"यो नः पिता जनिता यो विधाता यो नः सतो अभ्यासज्जजान। यो देवानां नामधा एक एव तं सं प्रश्नं भुवना यन्त्यन्या।"

"न तं विदाथ य इमं जजानान्यद्युष्माकमन्तरं भवति।
नीहारेण प्रावृता जल्प्या चासुतृपाउक्थशासश्चरन्ति।"

"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्। सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः।"

"अतृष्यँस्तृष्यध्यायत्। अस्माज्जाता मेमिथू चरन्। पुत्रो निऋत्या वैदेहः। अचेता यश्च चेतनः। स तं मणिमविन्दत्। सोऽनंगुलिरावयत्।"

"नाम नामैव नाममे। नपुंसकं पुमांस्त्र्यस्मि। स्थावरोऽस्म्यथ जङ्गमः। यजे यक्षि यष्टाहे च"।

"स मानसीन आत्मा जनानाम्"।
"स र्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वा भिवदन् यदास्ते"।
"यो देवानां नामधा एक एव" "ब्रह्म विश्वमिदं जगत्।"

### सामवेदेऽद्वैतवादः।

सामवेदेऽपि छान्दोग्योपनिषदः सद्विद्यायाः, भूमविद्यायाः, अन्यस्य च भागस्याद्वैत एव स्वारस्यं भाष्यादौ व्यक्तम्। कर्मकाण्डोपयुक्ताः—

"पुरुष एवेदँ सर्वँ यद् भूतं यच्च भव्यम्"
"प्रजापतिर्वा इदमेक आसीत् सोऽकामयत।
बहु स्यां प्रजायेयेति स एतमतिरात्रमपश्यत्"।
"प्रजापतिर्वा इदमेक आसीत्तस्य वागेव स्वमासीत्।"
"ब्रह्म ह् वा इदमग्र आसीत् तस्य तेजो रसोऽत्यरिच्यत"
"प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे। प्रत्यश्वेषु प्रतितिष्ठामि गोषु। प्रतिप्राणे प्रतितिष्ठामि पुष्टौ। प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मनि"
"वृष इव पक्वस्तिष्ठसि सर्वान्कामान्भुवस्पते"
"ऋतं सत्ये प्रतिष्ठितं भूतं भविष्यता सह।"

इत्यादयो मन्त्रा अप्यद्वैत एव स्वरसा इति तदीये भाष्ये व्यक्तम्।

### अथर्ववेदेऽद्वैतवादः।

एतेन—अथर्ववेदोऽपि—व्याख्यातः। तस्याप्युपनिषदः प्रश्न-मुण्ड-कमाण्डूक्याभिधाना अद्वैतवादमेव विशदयन्ति। मन्त्रा अपि तदीयाः—

"स एव संभुवनान्याभरत् स एव संभुवनानि पर्यैत्।
पिता सन्नभवत्पुत्र एषां तस्मात् वै नान्यत्परमस्ति तेजः"।

"ब्रह्म होता ब्रह्म यज्या ब्रह्मणा स्वरे वोमिताः।
अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हविः॥"
"ब्रह्म स्रुचो घृतवतीर्ब्रह्मणा वेदिरुद्धिता।
ब्रह्म यज्ञस्य तत्त्वं च ऋत्विजो ये हविष्कृतः॥"
"यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि।
क आसन् जन्याः के वराः क उ ज्येष्ठवरोऽभवत्॥"
"तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे।
त उवासन् जन्यास्ते वरा ब्रह्मज्येष्ठवरोऽभवत्॥"

"यदेजति पतति यच्च तिष्ठति प्राणदप्राणन्निमिषच्च यत् भुवत् ।"
तद्दाधार पृथिवीं विश्वरूपं तत् संभूय भवत्येकमेव ॥
"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥
उतैष पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः ।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः ॥"
"यत्र देवाश्च मनुष्याश्चारा नाभाविव श्रिताः ।
अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हि तम् ॥"
"वेदाहं सूक्तं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्याहं वेदाथो यद् ब्राह्मणं महत् ॥"
"पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् ।
तस्मिन्यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः ॥"
"अकामो धीरो अमृतः स्वयंभूरसेन तृप्तो न कुतश्च नो नः ।
तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥"
"उच्छिष्टे नामरूपं चोच्छिष्टे लोक आहितः ।
उच्छिष्ट इन्द्रश्चाग्निश्च विश्वमन्तः समाहितम् ॥"
"प्रतीहारो निधनं विश्वजिच्चाभिजिच्च यः ।
सहातिरात्रावुच्छिष्टे द्वादशाहोऽपि तन्मयि ॥"
"तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते ।
सर्वा ह्यस्मिन् देवताः गावो गोष्ठ इवासते" ॥

इत्यादयः सभाष्या अद्वैतवादमेव परिपोषयन्ति । पुराणेतिहास-पाञ्चरात्राद्यागमानामप्यद्वैतवाद एव लक्ष्यमित्यद्वैताक्षरमालिकायां पण्डितप्रवरैस्तैस्तैर्विशदीकृतम् ॥

### ऋङ्मन्त्राणां द्वैतपरतया विवरणस्यानौचित्यम् ।

तत्र ऋङ्मन्त्राः केचन विष्णुतत्वनिर्णयोद्धृताः श्रीमदानन्दतीर्थपादैः स्वसिद्धान्तानुगुणतया व्याख्याताः, सायणाचार्यैस्त्वन्यथा व्याख्याताः— पुराणेतिहासादीनाम्, षडङ्गानाम्, मीमांसायाश्चैकवाक्यतया तत्तद्देवतादिनिरूपणपूर्वकम् । आनन्दतीर्थपादानां त्वत्र विना स्मृतिपुराणेतिहासैरुपबृंहणम्, विना च जैमिनीय-बादरायणीयमीमांसानुग्रहं वेदव्याख्यानं न प्रामाणिकम् ॥

विश्वस्याध्यस्तत्वम् ।

विश्वमिथ्यात्वसमर्थनपराणां तत्तत्स्मृति-पुराणेतिहासवाक्यानामन्यार्थपरतया विवरणं यदि प्रमाणम्, तर्हि तदीयविवरणानाम्, तन्मूलब्रह्मतर्कादीनामप्यद्वैतपरतया योजनं कथं न प्रमाणम्? न्यायानुग्रहस्त्वद्वैतसिद्धान्तस्यैव बहुतरप्रमाणानुगृहीतस्य ॥

न च विश्वमिथ्यात्वे काप्यनुपपत्तिः । तथाहि—अद्वैतवादो हि—न नैरात्म्यवादः, किन्त्वात्मव्यतिरेकेणेतराभाववादः, एकात्मवादो वा । अनावृतसंविन्मात्रपरमार्थतावादो ह्यद्वैतवादः, यत्र सर्वेषां दर्शनानां यथासंभवमधिकारिभेदेन पर्यवसानम् । "अध्यात्मविद्या विद्यानामि"ति हि भगवान् गायति ॥

तत्र मिथ्यात्वं संविन्मात्र आवृतेऽज्ञानवशात् सर्वस्यारोपात् सदात्मना भानेन, न तु परमार्थसत्त्वम् । सादृश्यज्ञानं ह्यध्यासे प्रातिभासिक एव नियतम्, न तु प्रपञ्चाध्यासे । वस्तुतस्तु—सादृश्यज्ञानकारणत्वं ह्यौत्सर्गिकमध्यासे, न नियतम् । कथञ्चन सादृश्यमनाद्यध्यासे सत्तात्म्येनारोपितेनापीति हि नविलक्षणत्वाधिकरणम् । वेदप्रामाण्यशङ्कानिराकरणेन तत्प्रामाण्यसमर्थनपरतया विवरणं तु वितथम्; शास्त्रयोनित्वाधिकरणसिद्धत्वात् । स्वमतमात्रमूलवचनानुसारेण सूत्राणामप्यन्यथानयनं हि स्वमात्रप्रमाणब्रह्मतर्कानुसारेण स्वगोष्ठ्यामेव शोभते ॥

अद्वैतवादस्य नैरात्म्यवादत्वाभावः ।

यत्तु—

नैरात्म्यवादस्तु कुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु यत् ॥

इति, नेदमद्वैतनिन्दापरम्, तस्यानैरात्म्यवादित्वात्, एकात्मवादित्वाच्चेति पूर्वमेवोक्तम् ॥

भ्रमे पूर्वानुभवस्य प्रमात्वानियमः ।

यत्तु—भ्रान्तिसिद्धत्वे च जगतः सत्यमपि जगदपेक्षितम्-इति, तद्, यदि भ्रमकारणपूर्वानुभवजनितसंस्कारः पूर्वानुभवस्य प्रमात्व एव स्यात्; अन्यथाऽधिष्ठानतावच्छेदकेनारोप्यस्य सादृश्याभावाद् न भ्रमोपपत्तिः—इति, तर्हि नायं नियमः; अध्यासपूर्वकेऽध्यासे व्यभिचारात् ॥

"स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इत्यध्यासलक्षणमपि पूर्वदृष्टस्याव-

भासं व्यवस्थापयत् भ्रमे भासमानस्यानिर्वचनीयस्य पूर्वदृष्टत्वं न गमयति, इति कथं शुक्तौ भासमानस्यानिर्वचनीयस्य शुक्त्या सादृश्य-संभवः ? अतः पूर्वदृष्टावभास इति पूर्वदृष्टसधर्मपरं व्याख्येयम्; अनिर्वचनी-यस्य व्यावहारिकसत्यरजतस्य च साधर्म्यं तु तत्र तत्तादात्म्यारोपेण, उभय-साधारणरजतत्वादिस्वीकारेण वेत्यन्यत्र व्यक्तम्; अन्यथा कथं परा-भिमतासत्ख्यातिरपि। न हि शुक्त्यसतोरप्यास्ति सादृश्यम् ॥

तत्र यदि शुक्त्या सह सादृश्यं प्रधानस्य रजतस्य, तर्हि केवलाद्वैत-वादेऽपि तथा व्यवस्था न दण्डवारिता। ब्रह्म-प्रपञ्चयोस्तु परस्परतादा-त्म्यारोपः प्रावाहिकनित्यत्वात्, तथाऽनुभवस्य प्रत्यक्षसिद्धत्वाच्च। भ्रमेणापि पूर्वेण, तज्जनितसंस्कारेण वा भ्रमान्तरं न विरुध्यत इत्युपपादनार्थमेव हि भगवत्पादानामध्यासभाष्यम् ॥

पूर्वानुभवमात्रं भ्रमे भासमानसजातीयस्यापेक्ष्यते, न तु तस्य प्रमात्वम्। न च सादृश्यज्ञानम्, अधिष्ठानैन्द्रियिकप्रत्यक्षादिकं वा भ्रमे कारणमिति तु कवितार्किकनृसिंहभट्टाचार्याः ॥

भ्रमे सादृश्यज्ञानकारणत्वानियमः।

न हि स्वाप्नः सदृशानामेव सदृशेऽध्यासः। तत्र यदि वासनामयस्य संस्कारात्मनाऽवस्थितस्य बहिष्ठत्वमात्रमध्यस्यते, तर्हि किं वाऽपराद्धं सौग-तेनात्मधर्मत्वमेव विषयाणामिति वदता? कथं वा न तत्सोदरता परेषाम्? अधिकं सन्ध्याधिकरणे। कथं च परमतेऽपि देहात्मनोरसादृश्येऽपि देहात्मत्वभ्रान्त्युपपादनम् ?

यथाकथञ्चित् सादृश्यं सर्वत्र सत्त्वादिनापीति हि "दृश्यते तु" इति सूत्रार्थः। न ह्येकदेशस्थत्वमात्रेण तथाऽनुभवः कुत्रापि। कथं च देहात्मनो-रेकदेशस्थत्वम्। को वाऽयं देशो देहात्मोभयाधिकरणम्। सत्यम्, देह आत्मा वर्तते, देहस्तु कुत्र? तत्र कथमात्मा? येन-"देहात्मनोरप्येकदेशस्थ-त्वमात्रेण सादृश्यं स्यात्। अधिकमंशाधिकरणपरीक्षायाम् ॥

न चाख्यातिः, अन्यथाख्यातिः, असत्ख्यातिः, आत्मख्यातिर्वेति व्यक्तमाकरे, तट्टीकासु भामत्यादिषु च। न हि सर्वत्र सदृशवस्त्ववभासः, किन्तु निरुपाधिकभ्रमस्थले। तत्रापि प्रातिभासिकस्थल एव सः। सोऽपि न प्रधानारोप्ययोः, किंत्वधिष्ठानारोप्ययोः। अत एव शुक्त्यादौ रजतादेरे-वाध्यासः ॥

पीतः शङ्ख इत्यादिस्तु सोपाधिकाध्यासः, इति सादृश्याभावोऽकिञ्चित्करः ॥

परस्पराध्यास आरोप्येऽधिष्ठानसंसर्गारोपमात्रेण ।

तत्र भ्रमस्थले परस्पराध्यासेऽप्यारोप आत्मन्यनात्मन एव, अनात्मनि त्वात्मतादात्म्यमात्रस्याध्यासः । तत्रोभयाध्यासेऽप्यात्माज्ञानमेव कारणम् । व्यक्तं चैतद् गुरुचन्द्रिकायाम् ॥

'अहं' 'ममे'त्यध्यासः प्रत्यक्ष एव दृश्यते । स चात्मन्यन्तःकरणाध्यासेनैव, न त्वनात्मन्यात्माध्यासेन ; अनात्मनोऽनधिष्ठानत्वात् । अहमिति भ्रमकाले 'अहं न भवामी'ति कथं ज्ञानम्, किन्तु बाधज्ञानदशायाम्, असंप्रज्ञातसमाधिदशायां वाऽहमात्मा न भवामीति? किं बहुना? जागरावस्थामपि स्वप्नवदेव पश्यतां निर्विचिकित्सं क्षेत्र-क्षेत्रज्ञविवेकवतामपि सर्वेषामात्मा न देह इति निश्चयो वर्तत एव । अनात्मन्यात्मकल्पनाऽसंभवस्तूपपादितः, इति नानात्मसत्यत्वम्, आत्मासत्यत्वं चेति विपरीतमापतति ॥

भेदस्यैव कल्पितत्वम्, नाभेदस्य ।

आत्माज्ञानकल्पितत्वं तु प्रपञ्चस्य नानावृतत्वावस्थायाम्; व्याघातात्, आवृतावस्थायां तु तादात्म्यारोपस्यैव विवक्षणाद् अविद्यामहिम्ना भेदस्यैव कल्पितस्य भानम्, नाभेदस्य । इदं रजतमित्यत्रेदमाकाररजताकाराकारद्वयसत्त्वाद् भेदानुभवोऽपि वर्तत एव, परं तु स कार्यात्मना, न कारणात्मना । तेन चाभेद एव । अत एव तत्र तादात्म्यम् । न हीदमिति ज्ञानमात्रं भ्रमो नाम । अहमित्यत्राहंकारः संविच्चोभयं प्रतीयते, इति—"अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः;" इत्यध्यासिद्धान्तभाष्योपसंहारे" 'अहमिद' मितीदंपदप्रयोगात् सूच्यते ॥

न चाहमर्थ आत्मेति—"अथातोऽहंकारादेशः", "अथात आत्मादेशः" इत्याद्यनुसारेणाहमर्थानात्मताव्यवस्थापनमद्वैतसिद्ध्यादौ व्यक्तम् ॥

आत्मन ऐक्यं स्वाभाविकम्, औपाधिको भेदः ।

आत्मभेदस्तूपाधिभेदकृत एव, न स्वरूपभेदकृतः । न चात्मस्वरूपभेदे किमपि प्रमाणम् ॥

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"

इति शरीरभेदमात्रं गीयते, नात्मभेदः । सर्वक्षेत्रेष्वितिपदेन सर्वशब्दघटितेन बहुवचनान्तेन क्षेत्रज्ञमित्येकवचनान्तेन च । क्षेत्रज्ञपदेन

५

तु शरीरविविक्तस्यात्मन एकत्वम्, विविक्तशरीरमात्रभेदश्च विशदीक्रियते ॥

उपाधिभेदनिबन्धन उपहितभेदो घटाकाश-महाकाशादौ दृष्टचरः। तस्य मिथ्यात्व-सत्यत्वनिर्णयस्तु प्रमाणान्तरात्। स तु—"नेह नानास्ति किंचन", "नात्र काचन भिदाऽस्ति", "एकमेवाद्वितीयम्", "तरति शोकमात्मवित्", "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्", "अथात आदेशो नेति नेति" इत्यादिप्रमाणाधीनः। उपाधिकृतोऽपि भेदः स्वरूपाभेदस्य न विरोधीत्येतावन्मात्रमविप्रतिपन्नम् ॥

एकस्या एव रज्ज्वा अनेकभ्रान्तौ भानमनुभूयत एव। यदि तत्र भ्रमभेदः, तर्हि प्रकृतेऽपि समानम्। सर्वेषां भ्रमाणामेकाधिष्ठानकानामेकाधिष्ठानसाक्षात्कारमात्रबाध्यत्वाद् ब्रह्मसाक्षात्कारेण सर्वभेदभ्रमनिवृत्तिर्न व्याहन्यते ॥

अधिष्ठानस्य नासत्यत्वम्।

तत्राधिष्ठानं ज्ञानस्वरूपं सत्यम्, तत्राज्ञानमात्रं कल्पितम्; इति न ज्ञानाज्ञानयोरुभयोरपि कल्पितत्वम्। वृत्तिज्ञानं त्वज्ञानकल्पितान्तःकरणपरिणामत्वादन्तःकरणमिव मिथ्यापि मिथ्याभूताज्ञानस्य, किं बहुना? स्वस्यापि निवर्तकमेव ॥

विषयान्यथात्वेनैव भ्रमत्वव्यवहारो ज्ञानस्य, न तु ज्ञानत्वमात्रेण। तत्र निवर्तकत्वं ज्ञानस्य प्रमाणजन्यत्वेन। तच्चाखण्डाकारब्रह्मसाक्षात्कारस्याप्यविशिष्टम् ॥

विषयबाधस्तु तस्याप्याविद्यकत्वे। ब्रह्मसाक्षात्कारविषयस्तु नाविद्यकः, इति न तस्यापि ज्ञानेन बाधापत्तिः, न वा तत्र विषयान्यथात्वम्, येन तस्यापि भ्रमत्वं स्यात् ॥

ब्रह्मव्यतिरिक्तस्य व्यावहारिकं सत्त्वम्, न पारमार्थिकत्वम्।

ब्रह्मव्यतिरिक्तसत्यत्वे तु पूर्वोदाहृताः श्रुतयः—"यत्र हि द्वैतमिव भवति" इतीवघटितश्रुत्यन्तरम्, "मायामात्रमिदं द्वैतमि" त्यागमप्रकरणं च विरुध्यते। न चैतत् सत्यत्वाङ्गीकार उपपद्यते ॥

यत्तु—सत्यत्वाङ्गीकारे न कश्चिद्दोषः—इति, तदिदं यदि यावन्मुक्ति देहात्मवादसत्यत्वाङ्गीकारेण, तर्हि किमपराद्धं लोकायतिकेन? यदि तु मुक्तौ शरीरान्तरमेवात्मनः, तर्हि कथं जन्मान्तरमपि शरीरान्तरग्रहणेन न मुक्तिः?

यदि कर्मनिमित्तत्वात् बन्धकं जन्मान्तरशरीरम्, तर्हि तिर्यगादि-शरीरेभ्यो मानुषाद्यानन्दभूमिशरीराणां सत्यानां को भेदः? एतज्जातीय-मेव यदि मुक्तावपि शरीरम्, तर्हि कथं सा मुक्तिर्नाम?

यदीश्वरप्रसादात्, तर्हि सुखतारतम्यमात्रेण मुक्तिरिति स्यात्। तत्र च संसारेऽपि सुखतारतम्यात् कथं सोऽपि न मुक्तिः? निरतिशयसुखे तार-तम्यकथा त्वीश्वरप्रसादाधीनाऽपि मम माता वन्ध्येति कथैव। अतोऽशरीरत्वं मुक्तिरित्येव स्वीकर्तव्यम्॥

तच्चाकर्मनिमित्तं जीवतः, अजीवतो वा सशरीरत्वस्य मिथ्यात्व एवोप-पद्यते, इति विश्वसत्यत्वाङ्गीकारे मुक्त्यसिद्धिरेव दोषः॥

आस्तामियं कथा—सर्वप्रपञ्चमिथ्यात्वाङ्गीकारे को वा दोषः? अनावृताखण्डानन्दस्वरूपसविन्मात्रत्वादत्र मते मुक्तौ न दुःखलेशस्यापि संभावना। तावत्पर्यन्तम् पराभिमतमुक्तिपर्यन्तं वा बन्ध-मोक्षव्यवस्था परकीया प्रपञ्चमिथ्यात्वेऽपि न व्याहन्यते; मिथ्याभूतस्यापि तत्समान-जातीयार्थक्रियाकारित्वान्न काऽप्यनुपपत्तिः॥

सृज्यत्वं न सत्यत्वव्याप्तम्।

आत्मन्यनात्मकल्पना ह्यनाद्यविद्याधीना, तथा मिथ्याभूतेनोपाधिना मायामयी सृष्टिः, सर्वस्य नामरूपात्मकस्य प्रपञ्चस्याऽऽत्यन्तिकप्रलयं तत्कारणाविद्यारूपेण विद्यमानत्वात् परमत इव प्रवाहतोऽनादिसृष्टिः, कल्पना वाऽऽब्रह्मसाक्षात्कारं वासनारूपेणादिसृष्टिः, अवान्तरसृष्टिश्च, सदृशस्यान्यस्य तत्समसत्ताकस्य विद्यमानत्वादबाधा, इति साधिष्ठानस्य सदृशवस्तुद्वयस्य वासनारूपेण, व्यक्तरूपेण वा सत्त्वान्न भ्रान्त्यनुपपत्तिः। भ्रान्तित्वं हि प्रपञ्चज्ञानस्य भाविबाधापेक्षया, न तु भ्रान्तिदशापेक्षया। अयमेव न्यायः शुक्तिरजतादिभ्रमस्थलेऽपि, इति न प्रपञ्चसत्यत्व-मीश्वरसृष्ट्यनुपपत्त्या॥

कुत्र वा सत्यस्य सृष्टिर्दृष्टा—किमीश्वरः, प्रकृतिः, जीवाः, अन्यद्वा, सत्यमीश्वरेण सृज्यते? किं वा प्रयोजनं सत्यस्य सृष्ट्या, कथं वा सत एव प्रपञ्चस्यान्यस्य वा सृष्टिरपि? न हि सदभिव्यक्तम्, अनभिव्यक्तमिति द्विधा, येनाभिव्यक्त्यर्थं सृष्टिरिति स्वीकारः। किं वा प्रयोजनमीश्वरस्यापि प्रपञ्चसृष्टेः, यदि लीलामात्रम्, तर्हि बालानामिव कल्पनामात्रमेवेश्वरस्यापि स्यात्, इत्यगत्या सद्विवर्तवाद एव शरणम्॥

न चासत उत्पत्तिः; अविद्यमानत्वात्, न वा सतः; विद्यमानत्वात्, न च साऽभिव्यक्तिमात्रम्; तस्या अपि विद्यमानत्वेऽभिव्यञ्जनवैयर्थ्यम्, असत्त्वेऽभिव्यञ्जनासंभवः ॥

"लोकवत्तु लीलाकैवल्यमि"ति न्यायस्तु व्यावहारिकं सत्त्वमादाय, कर्तुरपीश्वरस्य वस्तुतोऽकर्तृत्वमादाय। तथाच गीता—

"चातुर्वर्ण्यं मया सृष्टं गुण-कर्मविभागशः।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥"

इति। ततश्चैकमेव ब्रह्म तत्तदुपाधिवशात् स्वकल्पितात् संसरति, मुच्यते च। तत्र च संसारिणामप्युपाधिभेदेन भिन्नानां चेतनत्वात् तत्तत्कर्मणा बन्धः, मोक्षो वा, इति न नित्यसंसारित्वम्, नित्यमोक्षो वा॥

इयमेव गतिर्मतान्तरेऽपि; अन्यथा तत्रापि संसारस्य सत्यत्वात् कथं न नित्यो बन्धः, संसारो वा? एवमेव तिर्यग्भावेऽपि। अतः कदाचनोपाधिसम्बन्धः, कदाचित्तु न स इत्येव गतिः सर्वेषु मोक्षवादेषु, इति शुद्धस्य ब्रह्मणोऽनादित्वेऽप्यविद्यासम्बन्धस्य तत्प्रयुक्तावरणस्य वा संसारिणां तत्साक्षात्कारमात्रेण निवृत्तौ मुक्तिरिति समानम्॥

अज्ञानस्यानादेरपि निवृत्तेरुपपत्तिः।

आवरणं चेदमीश्वरेच्छाविशेषो वा भवतु, कर्म वा, अन्यद्वा; सर्वथा तस्य निवृत्तिः सर्वदर्शनसंमता। अनादित्वादविद्यायाः तत्सम्बन्धस्याप्यनादेरज्ञानप्रयुक्तत्वादज्ञानान्तराकल्पनान्नानवस्था, न वा निवृत्त्यनुपपत्तिः॥

तत्राज्ञानस्य ब्रह्माश्रयत्वेऽपि तद्विषयत्वेऽपि वा तस्यैव जीवभावप्रयोजकत्वात्, उपाधेः प्रतिबिम्बपक्षपातित्वात्, उपाधिपरिच्छिन्नपक्षपातित्वाद्वा न जीवस्येव ब्रह्मणोऽप्यज्ञत्वप्रसङ्गः, न वा मुक्तात्मनोऽनावृतसंविन्मात्रस्य। अज्ञानं चेदमनाद्युपाधिमात्रम्, न तु स्वाभाविकं ब्रह्मणः, इति न तन्निवृत्त्यनुपपत्तिः॥

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः।"

इत्यद्वैतसिद्धान्तः। परमतेऽपि जीवः, ईशः, प्रकृतिः, तस्य प्रकृतियोगः, जीवपरस्परजीवेशादिभेदश्चानादिरिति संप्रतिपन्नम्। विप्रतिपत्तिस्त्वनादेः प्रकृतेर्निवृत्तौ॥

न चानादित्वमनिवर्त्यत्वप्रयोजकम्; शुक्तिरजतादिस्थले शुक्त्यज्ञान-तद्योगयोरनाद्योरपि शुक्तिसाक्षात्कारेण निवृत्तिदर्शनात्। किं बहुना? जीवबन्धप्रयोजकतत्तत्कर्मणामनादीनां निवृत्तिः परमतेऽपि स्वीक्रियते, परं त्वीश्वरेच्छामात्रेण॥

इयान् विशेषः—ईश्वरेच्छयैवावरणम्, तयैव तन्निवृत्तिश्च। प्रवाहतोऽनादित्वमप्यनादित्वमेव, इति नाविद्याया अनादेरपि न निवृत्तिः। अतो नाज्ञानसिद्धौ, भ्रमसिद्धौ वाऽन्योन्याश्रयः॥

तत्र मिथ्याज्ञान-तत्संस्कारयोः प्रवाहतोऽनाद्योरिव मूलाविद्याया अपि निवृत्तिरनपोह्या। आत्मनि देहाद्यध्यासो मिथ्याज्ञाननिमित्तः प्रत्यक्षः। स च मूलाज्ञानं विना नोपपद्यत इति च भगवत्पादाः। तत्राविद्याया दुर्घटत्वं भूषणम्, अन्यथेश्वरेच्छया कुत्रचनावरणम्, कुत्रचनानावरणमित्यादि कथम्?

### प्रत्यक्षस्य सत्यत्वानियमः।

न हि प्रत्यक्षमिति सर्वं सत्यम्; मिथ्यार्थस्यापि प्रत्यक्षस्य दर्शनात्। मिथ्यात्वं तु बलवत्प्रमाणावसेयम्, न प्रतीतिमात्रेण। तया तु यद्यपि स्वतः स्वस्य प्रामाण्यमेवावसीयते, परं तु यावद्बलवत्प्रमाणं तत्र मिथ्यात्वानिश्चय एव। न च तावन्मात्रेण परीक्षायां विसंवादेऽपि प्रामाण्यम्॥

यावदविसंवादं प्रामाण्यं प्रत्यक्षानुमानादीनामविप्रतिपन्नम्, इति सर्वस्य यावद्ब्रह्मसाक्षात्कारमावृतसंविन्मात्राणां वैकुण्ठवासिपर्यन्तानामपि दृष्ट्या सत्यत्वमेवाद्वैतमतेऽपि। न हि प्रत्यक्षं प्रमाणम्, इति बाधो भावी श्रौतोऽपि बाधितुं शक्यते। चन्द्र-सूर्यादिपरिमाणं प्रत्यक्षतोऽवगतमागमेन परोक्षेणापि बाध्यते, इति श्रौतमिथ्यात्वसाक्षात्कारः, तदधिष्ठानसाक्षात्कारो वाऽविद्या-तत्प्रयुक्तसर्वबाधकः॥

### आत्ममिथ्यात्वायोगः।

न चात्ममिथ्यात्वे श्रुतिः, अन्यद्वा प्रबलं प्रमाणमस्ति, येन प्रपञ्चमिथ्यात्ववदात्ममिथ्यात्वमपि स्यात्। सत्यमखण्डाकारसाक्षात्कारोऽविद्याकल्पितान्तःकरणवृत्तिरूपत्वाद् स्वतो मिथ्या, न तु तावता तद्विषयो ब्रह्म मिथ्या; व्यभिचारादिति पूर्वमेवोक्तम्॥

अविद्याधिष्ठानस्य ब्रह्मणोऽविद्याकार्यत्वे, अविद्याविषयस्वविवर्तत्वे वा न किमपि प्रमाणम्॥

न च ब्रह्मवदविद्या, तत्प्रयुक्तः संसारो वा स्वाभाविकः। तत एव सत्यश्च। तत्राविद्याया निवृत्तिश्रवणाद् न स्वाभाविकत्वम्। स्वाभाविकत्वं हि—

"न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद् रवेः।"

इति न्यायादनिवृत्तिप्रयुक्तमेव, नानादित्वप्रयुक्तम्॥

अनादि न निवर्तत इति सामान्यानुमाम्, अज्ञानं निवर्तत इति विशेषवचनम्, तदुपजीव्यं विशेषानुमानं वा। न च सामान्येन विशेषस्य बाधः कुत्रापि, इति सर्वप्रमाणाविरोधाद् ब्रह्माद्वैतवाद एव श्रुतिसूत्रादिसंमतः; सामान्यविषयत्वात् प्रत्यक्षादिप्रमाणानाम्, विशेषवचनत्वाच्च ब्रह्मात्मैक्यस्य॥

विश्वमिथ्यात्वं तु तदन्यथानुपपत्तिकल्पितमार्थिकम्, परम्परया तन्मूलानुमानसिद्धं वा, इति श्रुत्यवष्टम्भात् प्रपञ्चमिथ्यात्वमेव शास्त्रार्थः। तच्च मुक्तात्मदृष्ट्या, न तु बद्धात्मदृष्ट्या, इति किं मिथ्यात्ववादे कस्य छिन्नम्? इति निर्विशेषचिन्मात्रमेवानावृतमौपनिषदम्॥

अवाच्यस्यापि लक्ष्यत्वम्, ज्ञेयत्वं च।

अवाच्यस्यापि ज्ञेयत्वम्—सुषुप्त्यसंप्रज्ञातसमाधिसिद्धस्य शब्दावाच्यत्वेऽपि प्रसिद्धिमात्रेण ज्ञेयत्ववत्, विशिष्टशक्तस्यापि पदस्य तात्पर्यानुसारेण विशिष्यांशमात्रपर्यवसानवत्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्॥
वचसाम्, आत्मसंवेद्यं तद् ज्ञानं ब्रह्मसंमितम्॥"

इति संकेतमात्रेण डित्थ-डबित्थादीनामिवावाच्यत्वेऽपि ज्ञेयत्ववत्, पदार्थविधया विशिष्टबोधेऽप्यभिहितान्वयवादेऽन्विताभिधानवाद इव वाऽन्वयस्य वाक्यार्थविधया लक्ष्यत्ववत्, आकृत्यधिकरणन्यायेनाकृतिवाच्यत्वेऽपि व्यक्तिविशेषस्य लक्ष्यत्ववत्, अन्विताभिधानवादेऽन्वयसामान्यस्यैव वाच्यत्वेऽप्यन्वयविशेषस्य लक्ष्यत्ववच्चाखण्डब्रह्मणो बोधोपपत्त्या —न विकल्पासहम्॥

एतेन—अवाच्यस्याज्ञेयत्वपरतया ईक्षत्यधिकरणयोजनमपि—परास्तम्; समन्वयाधिकरणान्तेन सगुणस्यैव ब्रह्मणः शास्त्रगम्यत्वे साधिते तत्रावाच्यत्वशङ्काया एवाभावाद् व्यर्थं तदधिकरणमेवं सति स्यात्। स्वप्रकाशतया स्वतः सिद्धे ब्रह्मणि वेदान्तानामुपहितपराणामज्ञाननिवृत्तिमात्रप्रयोजनत्वात्, शुद्धस्य शब्देन बोधनस्यैवाभावात्, अविद्यानिवृत्तिप्रयोजकोपाधि-

वृत्तिमात्रजननैव ब्रह्मणः स्वप्रकाशस्यौपनिषदत्वोपचारेण वस्तुगत्या शब्दमर्यादया ब्रह्मणोऽधिगमस्यास्वीकाराद् ईक्षत्यधिकरणस्यानन्दतीर्थपाद-योजनं न क्षोदक्षमम् ॥

स्वरूपज्ञानस्यानिवर्तकत्वम् ।

न च स्वरूपज्ञानं वृत्तिज्ञानवदज्ञानाश्रयविषयविषयकम्, येन ब्रह्मणोऽपि चिद्रूपस्य स्वाश्रयविषयकत्वं नियतमिति वाचोयुक्तिरवसरेत्, इति न निर्विशेषवादस्य शून्यवादादविशेषः ॥

ब्रह्मणोऽशून्यत्वम् ।

शून्यं हि सदसत्सदसत्तद्विलक्षणभिन्नं चतुष्कोटिविनिर्मुक्तम्, ब्रह्म तु प्रथमकोटिः, इति तयोर्विशेषो विशद एव। अतः सर्वासामुपनिषदाम्, किं बहुना? सर्वेषां श्रुति-स्मृति-पुराणेतिहासागमानां निर्विशेषं ब्रह्म-तत्त्वमेव परमं लक्ष्यम्, इति ब्रह्मतत्त्वनिर्णयोऽद्वैतसिद्धान्तदृष्ट्यैव निःश्रेय-सपर्यवसायी । अतोऽत्र श्रुति-स्मृत्यादिपर्यालोचनेन ब्रह्मतत्त्वनिर्णयोऽ-वसरप्राप्तः ॥

प्रत्यक्षापेक्षयाऽऽगमप्राबल्यम् ।

निष्कर्षस्तु—यद्यप्यागमस्य प्रत्यक्षापेक्षया प्राबल्यम्; तथाप्यभेदागम-स्येव भेदागमस्यापि प्राबल्यम्; प्रमितार्थबोधकत्वेनाननुवादकत्वम्, इत्यननुवादकभेदवाक्यविरोधेनाभेदागमस्याप्रामाण्यशङ्कोत्तिष्ठति; तथाप्यु-भयोरपि वेदत्वेन प्रामाण्याविशेषेऽप्यभेदवाक्यापेक्षितनिषेध्यसमर्पकतया भेदागमानां प्रामाण्यं यावदात्मसाक्षात्कारमेव, यथा यावद्बाधं भ्रमस्यापि प्रामाण्यम् ॥

इयान् विशेषः—शुक्तिरजतादिस्थले परीक्षासमय एव विसंवादाद-प्रामाण्यनिर्णयः। उपासनापराणां त्वलौकिकप्रयोजनार्थत्वात्, यावदभेद-साक्षात्कारं तत्फलस्यापि शास्त्रप्रामाण्येन वासनादीनामिवाबाधात् सर्वोपपत्तिः ॥

न चैवं सति निश्शङ्कभेदप्रतिपत्तिविरोधः; अलौकिकश्रेयोविशेषार्थ-प्रवृत्तिविरोधो वा । भेदवाक्यैरभेदागमबाधस्तु न संभवति। न हि शुक्तिरजतादिस्थले भ्रमेण बाधो बाधज्ञानस्य ॥

एतेन—प्राथम्येन भेदवाक्यानां बाधकत्वमपि—परास्तम्; भेदा-गमानामपि शुक्तिरजतादिज्ञानस्येव यावद्बाधं मिथ्यात्वेनानिश्चीयमानार्थ-विषयकत्वेन नात्यन्तं विषयापहारः ॥

उपजीव्यस्य प्रत्यक्षस्योपजीवकागमाद्यबाधकत्वम् ।

अयमेव न्यायः—उपजीव्येनोपजीवकबाधस्थलेऽपि । न ह्येकान्तेनोपजीव्यं बाधकम्; अन्यथा "यो होता सोऽध्वर्यु रि"त्यत्रातिदेशमुपजीव्यमपेक्ष्य प्रवृत्तोपदेशेनोपजीव्यातिदेशबाधानुपपत्तिः ॥

यदि तत्रोपदेशत्वमेवानूद्य प्रवृत्तत्वात्, उपजीवकस्यातिदेशस्यान्यत्र सावकाशत्वाच्चोपजीवकस्यापि प्राबल्यम्, तर्हि प्रकृतेऽपि समानम्; "अथात आदेशो नेति"इति भेदवाक्यमनूद्यैव तन्निषेधाद् यावदभेदबोधं तत्फलवत्त्वात् । को वाऽत्र विप्रतिपद्यते—भेदवाक्यमुपजीव्यमिति; उपजीव्यस्यापि व्यावहारिकभेदपरत्वेन सावकाशत्वात्, अभेदागमस्यैव निरवकाशत्वात् सावकाश-निरवकाशन्यायेन, सामान्य-विशेषन्यायेन, अपच्छेदन्यायेन वाऽभेदागमस्यैव प्राबल्यमित्येवात्र विवक्षितम् ॥

तत्र च—"तत्त्वमसी"ति प्रत्यक्षप्राप्तं जीवमुद्दिश्य ब्रह्माभेदः प्रतिपाद्यते, । ब्रह्म चात्र "सदेवे"ति प्रस्तुतं कारणस्वरूपम् । उभयं चात्र प्रत्यक्षेण कारणवाक्येन वा प्राप्तम्, इति तदुपजीव्यैवाभेदागमो यद्यपि प्रवर्तते; तथापि कथं तदभेदस्तत्रेति विमर्शे जीवत्वेश्वरत्वाविवक्षयेत्यद्वैतसिद्धान्तः, यत्र सामानाधिकरण्यं मुख्यं स्वरसम्, अन्यत्र तु येन केनापि वा प्रकारेण भवद् गौणमेव सामानाधिकरण्यम् ॥

तत्र द्वितीयपक्षे तत्त्वमसिवाक्यवैयर्थ्यम्, आद्ये तु विशेषणांशमात्राविवक्षया मुख्यं प्रामाण्यम्, मुक्तिस्वरूप-तत्साधनोपदेशेन साफल्यं च । न चात्राप्युपजीव्यविरोधः; उपजीव्यप्रत्यक्षस्य पुरोवादस्य स्थूलशरीरराहित्यपरत्ववत् सूक्ष्म-कारणशरीरराहित्यपरत्वस्यापि परमार्थतो बोधनेन तत्त्वमसिवाक्यचारितार्थ्यात्, अन्यथा शरीरात्मप्रत्यक्षमुपजीव्य प्रवृत्तानां शरीरातिरिक्तात्मस्वरूपसाधकानुमानागमादीनामप्यप्रामाण्यं स्यात् ॥

भेदवाक्यानामभेदाबाधकत्वम् ।

सति चैवं भेदवाक्यानामनुवादकत्वसिद्ध्यर्थमीश्वरांशेऽनुमानं वोपजीव्यताम्, आगमो वा; उभयथापि भेदनिषेधेनाभेदबोधनं न विरुध्यते ॥

किं बहुना ? आगमस्वरूपावगमेऽपि प्रत्यक्षमुपजीव्यं भवतु, न चैतावता आगमस्वरूपस्यापि तदर्थभेदसाक्षात्कारेण विषयबाधं विना बाधो व्याहन्यते ॥

जीवस्वरूपम्, ईश्वरस्वरूपं वा प्रत्यक्षानुमानाभ्यामिवागमेनाप्यवगम्यते, इत्यागमेनैव भ्रमप्राप्ततत्स्वरूपानुवादेन भेदबाधे का वा बाधा?

तत्तत्प्रत्यक्षानुमानाद्यवगतजीवेश्वरस्वरूपयोः कार्य-कारणभावादिनाऽवगतयोर्विरुद्धस्वभावत्वेन जीवेश्वरौ भिन्नौ, विरुद्धधर्मकत्वादित्यनुमानेन भेदानुमानं तु कार्य-कारणभावप्रयुक्तविरुद्धधर्मकयोर्जीवेश्वरयोरत्राभेदस्याबोधनात्, भिन्नविषयकत्वाच्च न तयोर्बाध्य-बाधकभावं विरुणद्धि॥

साक्षिप्रत्यक्षस्यागमाबाधकत्वम्।

साक्षिचैतन्यं तु प्रामाण्यमिवाप्रामाण्यमपि गृह्णातीति परेऽपि मन्यन्ते; ज्ञानग्राहकस्य तस्यैव तदीयसर्वधर्मग्राहकत्वात्। सर्वं वस्तु ज्ञाततया, अज्ञाततया वा साक्षिभास्यमिति हि संप्रतिपन्नम्, इति साक्ष्यनुभवो भ्रम-प्रमासाधारणो नागमस्य बाधकः॥

प्रामाण्यम्, अप्रामाण्यं वा ज्ञानस्य विषयाबाध्यत्व-बाध्यत्वावसेयम्, स्वतः प्रामाण्यम्, परतश्चाप्रामाण्यमुभयत्रापि, इत्यभेदागमस्य, तज्जन्यज्ञानस्य वा स्वतः प्रामाण्यात् कथं तस्य साक्षिणा बाधो यावत्तद्बाधनिर्णयम्?

प्रमाणबहुत्वं बाधकत्वे न तन्त्रम्।

तत्रागमस्य विषयबाधेनाप्रामाण्यं दुर्निरूपमिति तत्र तत्र विवेचितम्। न हि भेदागमानां बहूनां बाधकत्वेनाभेदागमस्याप्रामाण्यनिर्णयः; प्रमाणबहुत्वस्य प्राबल्याप्रयोजकत्वात्,

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्॥"

इति न्यायेन स्वभावत एव ब्रह्मास्त्रवत् प्रबलस्यागमस्य स्वतोऽबाधितानारोपितस्वप्रकाशसंविन्मात्रविषयकत्वेन तद्विरुद्धसर्वबाधकतयैव सिद्धेः। उक्तं हि—

"अत्यन्तबलवन्तोऽपि पौर-जानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥"

इति। एतेन—सार्थादपि तस्करा बहव इति न्यायोऽप्यत्र निरवकाश इति—सूच्यते। अत एव "शिष्टाकोपे विरुद्धमपी"ति न्यायेन स्मृतेरपि श्रुतिबाधकत्वं पूर्वतन्त्रे निरधारि। एतेन—बहुप्रमाणानुरोधो भेदस्य दार्ढ्यहेतुरिति—परास्तम्॥

वस्तुतस्तु—बहुत्वं प्रमाणानां तत्रैव प्राबल्यप्रयोजकम्, यत्र प्रथम-द्वितीयादिक्रमेण स्वतन्त्रतया सर्वेषां तदर्थबोधकत्वम्, खलेकपोतन्यायेन युगपत् प्रवृत्तौ तु प्रमाणानामेकेनापि प्रबलेन सर्वेषां युगपदेव बाधः; यथा युगपत् पतितानां कपोतानामेकेन पाशेन बन्धनम्, एकेनैव वा बाणेन वधः। न चात्र भेदागमानाम्, भेदप्रत्यक्षानुमानादीनां वा क्रमशो बोधकत्वम्, येन द्वितीयादिप्रवृत्तौ निःशङ्कप्रवृत्तिवादोऽवसरेत् ॥

परोक्षत्वापरोक्षत्वादिविशेषस्तु—न भेदाभेदागमयोः संभवति; अभेदावगमस्याप्यपरोक्षत्वस्याद्वैतसिद्धान्तत्वात्, शाब्दापरोक्षवादस्यैव तत्सिद्धान्तत्वात्, सन्निकृष्टे विषय इन्द्रियजन्यत्वस्य प्रत्यक्षत्वाप्रयोजकत्वाच्च ॥

शुक्तिरजतादिज्ञानस्य बाधोऽपि न बहुभिः प्रमाणैः, इयं शुक्तिरित्येकज्ञानमात्रबाध्यत्वात्। न हि—"इयं शुक्तिरिति" ज्ञानानन्तरमपि कोऽपि तस्य पाटन-दहनादिना रजतं वेति परीक्षार्थं यतते, येन तत्र दहन-पाटनादिलिङ्गकानुमानादिप्रमाणान्तराणि बाधार्थमपेक्ष्येरन् ॥

एतेन—ऐक्यज्ञानम्, अप्रमाणम्, बहुप्रमाणविरुद्धत्वात्; शुक्तिरजतज्ञानवदिति–परास्तम्; दृष्टान्ते हेत्वसिद्धेः, बहुत्वविशेषणवैयर्थ्येन व्याप्यत्वासिद्धेः, एकस्या श्रुत्याः समानार्थमन्वादिबहुतरविरुद्धस्मृतिबाधकत्वस्य, बहुनास्तिकदुराचाराणां तदपेक्षया न्यूनपरिमाणशिष्टाचारबाध्यत्वस्य च दर्शनाच्च ॥

शुक्तिरजतादिज्ञानस्याप्रामाण्यं बाधावसितदोषजन्यत्वेन परतः। तत्र बाधावसेयो दोषः, न तु दोषावसेयो बाधः, इति बलवद्बाधकविरोध एवाप्रामाण्यकारणम्। बलवत्त्वं तु स्वभावतः, अन्यतो वा, न तु प्रमाणबहुत्वेनेति सर्वं सुस्थम् ॥

भेदवाक्यानां व्यावहारिकं प्रामाण्यम्।

सर्वथा तु भेदवाक्यान्यनूद्याभेदवाक्यानि प्रवृत्तानि, इति पुरोवादस्य प्रत्यक्षादेरिवानुवादस्यापि भेदागमस्य व्यावहारिकमेव प्रामाण्यम्, न त्वभेदागमवत् त्रिकालाबाध्यार्थविषयकज्ञानत्वरूपं मुख्यं प्रामाण्यम्; पुरोवादस्य यादृशं प्रामाण्यम्, अप्रामाण्यं वा, तादृशमेवानुवादस्यापि, इति प्रत्यक्षादिसमानयोगक्षेममेव प्रामाण्यम्, अप्रामाण्यं वा भेदवाक्यानाम्, न तु सर्वथा शुक्तिरजतादिज्ञानवदप्रामाण्यमेव। यावद्ब्रह्मसाक्षात्कारमात्रं वस्तुस्थितिरविप्रतिपन्ना ॥

न हि दुर्बलमिति कृत्वा भेदवाक्यानामप्रमाण्यमेव, येन दुर्बलत्वेन भेदप्रमाणस्याभासत्वाद् न भेदवाक्यानामनुवादत्वम्। अतश्चाभेदवाक्यानामेव प्राबल्यं स्यात् ॥

अभेदाऽऽगमस्य सर्वप्रमाणाविरोधः।

न चात्र सर्वप्रमाणविरोधोऽभेदागमस्य ; सर्वप्रमाणपदेन यदि बहुतरभेदप्रमाणानां विवक्षा, तर्हि भेदप्रमाणत्वेन तस्यैकस्यैव बाधः। सोऽप्यभेदसाक्षात्कारानन्तरम्। अभेदप्रमाणस्यापि विवक्षायां तु नाभेदागमेनाभेदागमस्य बाधः। बहुत्वं तु बाधकातायामकिंचित्करमित्यनुपदमेवोपपादितम् ॥

वेदान्तानामसत्कारणतावादे न तात्पर्यम्।

एतेन—"इदं वा अग्रे नैव किञ्चनासीत्" "असतः सदजायते" स्यादिवाक्यान्यपि—व्याख्यातानि। न हि भेदवाक्यानुवादत्वे सर्वप्रमाणविरोधः, किन्त्वसत्कारणवादे। न चेमानि वाक्यान्यसत्कारणपराणि, किन्तु कयाचन विधया यया कयापि सत्कारणवादपराणीति संप्रतिपन्नम्। व्यक्ताव्यक्तप्रपञ्चविषयत्वादुक्तवाक्यानाम्। निरस्तश्चासत्कारणवाद उक्तवाक्यानुसारेण शङ्क्यमानः सूत्रकारैरेव—"असदिति चेन्न प्रतिषेधमात्रत्वात्" इत्यादौ ॥

भेदवादस्याद्वैतमतेऽपि नैकान्तेनापलापः।

युक्तिविरुद्धोऽप्ययं वादः। न हि प्रमाणविरुद्धं किमपि प्रमाणम्। तत्र युक्तिसिद्धत्वेऽनुवादित्वम्, तद्विरुद्धत्वेऽप्रामाण्यमिति हि व्यवस्था; अनधिगताबाधितार्थविषयकत्वस्य, याथार्थ्यस्यैव वा प्रामाण्यप्रयोजकस्य युक्तिविरोधेऽप्रसरात्। सर्वथा तु भाविबाधदृष्ट्यैव ब्रह्मव्यतिरेकेण सर्वाभावः, न तु व्यवहारदशायामपि, इति नाद्वैतमतेऽपि प्रपञ्चभेदस्य जीवेश्वरादिभेदपञ्चकस्य वैकान्तेनापलापः ॥

प्रामाण्यस्वतस्त्वाप्रामाण्यपरतस्त्ववादयोर्नान्योऽन्याश्रयः।

तत्र—'इदं रजतमि'ति ज्ञानस्येयं शुक्तिरिति प्रबलप्रमाणबाधित्वेऽपि नान्योन्याश्रयः—प्रथमज्ञानस्याप्रामाण्यं द्वितीयज्ञानबाधाधीनम्—इति प्रामाण्यस्वतस्त्वाप्रामाण्यपरतस्त्वावाद परस्पराश्रयदोषाप्रसक्तेः; अन्यथा बाध्य-बाधककथैव लुप्येत। व्यक्तं च तन्त्रवार्तिक एतादृशे स्थले नान्योन्याश्रयः—बाधज्ञानाधीनत्वादप्रामाण्यमात्रस्य, प्रामाण्यज्ञानस्य चान्यानपेक्षत्वादित्यादिविधया, इति प्रबलाभेदागमबाधेन भेदाप्रामाण्यमात्रमत्र

विवक्षितम्, न तु भेदवाक्याप्रामाण्यनिर्णयाधीननिर्णयमभेदवाक्यप्रामाण्यम्। सत्यप्येवं भेदवाक्यानामनुवादत्ववादस्तु यावद् ब्रह्मसाक्षात्कारं मिथ्यात्वानिश्चयमभिप्रेत्य, यतस्तदनन्तरमेव भेदवाक्यानामाभासत्वावधारणम्, इति भेदागमानां विषयापहतत्वम्, अभेदागमानां भेदागमानपहतत्वं च वस्तुगत्या न व्याहन्यते; स्वातन्त्र्येण स्वविषये प्रवृत्तापि भेदश्रुतिरभेदश्रुत्यपेक्षितनिषेध्यसमर्पकत्वात्, जर्तिलयवाग्वादिवाक्य इवान्यशेषत्वाद् अनुवादित्वाच्च यावद्बाधं न विषयोपहन्त्री, इति न तद्विरोधेनाभेदश्रुतेरप्रामाण्यम्॥

जीवब्रह्मैक्य एव वेदान्तानां महातात्पर्यम्।

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्॥
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"

इति प्रस्तुतेषु तात्पर्यग्राहकेषु "सदेव सोम्येदमग्र आसीत्" "तत्त्वमसी"ति चोपक्रमोपसंहारौ, तस्य नवकृत्वोऽभ्यासः, अभेदस्य प्रमाणान्तरानवगतत्वेनापूर्वता, "येनाश्रुतं श्रुतं भवत्यमतं मतमि" त्यर्थवादः, मृल्लोहादिदृष्टान्तेनोपपादनं च षडपि तात्पर्यग्राहकाण्यभेदपरत्वे। भेदश्रुतेरनुवादिन्या अपि प्रामाण्यवादे तु संवादोऽपूर्वताविरोधी प्रत्यक्षः। अन्यानि तु न सन्त्येव। सर्वथा तु न भेदानुवादित्वेन श्रुतीनां प्रामाण्यम्; अनधिगताबाधितार्थबोधकत्वस्यैव प्रामाण्यलक्षणत्वात्॥

अनुवादकानामपि प्रमातृदृष्ट्याऽपूर्वार्थत्वम्।

अनुवादकानामपि प्रमतृदृष्ट्या प्रामाण्यम्; वैदिकवाक्यार्थज्ञानस्य प्रत्यक्षादिप्रमाणप्रवृत्त्यनन्तरमेवाप्रवृत्तत्वात्, प्रमेयदृष्ट्या तु वस्तुगत्या नापूर्वत्वम्। व्यक्तं चैतद्वेदान्तपरिभाषाव्याख्यायां प्रकाशिकायाम्—"वेदे तु वाक्यार्थस्यापूर्वतया नानुवादकत्वम्, तत्र लोके वेदे च कार्यपराणामिव सिद्धार्थानामप्यपूर्वतया प्रामाण्यमि"त्यत्र। अधिकं देवताधिकरणभामत्याम्, न्यायवार्तिकतात्पर्यटीकायां च॥

यथाच याथार्थ्यमात्रं न प्रामाण्यम्, किन्त्वनधिगतार्थपरिच्छित्तिरपि, तथा व्यक्तीकृतं न्यायचन्द्रिकायामानन्दपूर्णमुनिना। न चात्र प्रबलप्रमाणान्तरविरोधः, इति प्रमाणान्तराबाधसहकृतमपूर्वत्वमभेदतात्पर्यविषयतायामेवोपपद्यते॥

### वेदान्तानां शून्यवादे न तात्पर्यम् ।

यथाच—"इदं वा अग्रे नैव किञ्चनासीत्" "असतः सदजायत" इत्यादावपूर्वत्वेऽपि तत्रोपक्रमोपसंहारादितात्पर्यग्राहकाभावात् पक्षद्वयेऽपि न तत्र तात्पर्यम्, शून्यवाद एव वा न मुख्यं तात्पर्यम्, तथा संप्रतिपन्नम्। सर्वथा तु तत्त्वमस्यादिवाक्यानां नासद्वादस्येवाविचारसिद्धत्वम्, किन्तु तात्पर्यग्राहकप्रमाण-श्रुत्यन्तरैकवाक्यता-गतिसामान्यादिविचारैकनिर्णीताभेदपरत्वम्। न चासद्वादस्य तद्वद् विचारसिद्धत्वम्॥

न चासत्कारणवाद इवाभेदवादे प्रबलप्रमाणविरोधः। सत्यम्, बहुप्रमाणसिद्धत्वेन भेदवाक्यानामनुवादित्वम्, तथाप्यनुवाद्यत्वेऽपि न पुनःश्रवणमात्रेणाभ्यासः; अन्यार्थत्वादनुवादस्य, अनन्यपरपुनःश्रवणरूपाभ्यासलक्षणाभावात्, अन्यथा—"अग्निहोत्रं जुहोति" "दध्ना जुहोति" "पयसा जुहोति" "यवाग्वा जुहोति" इत्यत्राप्यभ्यासेन कर्मभेदापत्तिः॥

### भेदवाक्यानामनुवादत्वेऽपि नाभ्यासन्यायविषयता ।

अभ्यासो ह्येकविध एव क्रियापराणाम् सिद्धपराणां च वाक्यानां यथाक्रमं कर्मभेदकत्वे, तात्पर्यविषयत्वे च प्रमाणम्; अन्यथा निष्प्रयोजनमभ्यासः। तथाच "समिधो यजति" "तनूनपातं यजती"त्यादाविवापूर्वत्वं विधेरेवोन्नायकम्, तात्पर्यविषयत्वस्य वा। विधित्वं ह्यज्ञातार्थबोधकत्वेनैव, न तु प्रवर्तकत्वेनैव, निवर्तकत्वेनैव वेति समन्वयसूत्रभाष्ये व्यक्तम्॥

वस्तुतस्तु—सजातीयानाम्, एकप्रकरणगतानाम्, एकार्थविषयाणामेव प्रमाणानामभ्यासन्यायविषयता; यथा—"समिधो यजति" "तनूनपातं यजति" इत्यादीनाम्, यथा वा—"तत्त्वमसि" इति नवकृत्वोऽभ्यस्तानां च, न तु प्रत्यक्षानुमानागमानामसहप्रवृत्तानां विजातीयानां प्रमाणानाम्, इति भेदप्रत्यक्षानुमानागमानां नाभ्यासन्यायविषयता। अतः श्रौतत्वेऽपि भेदस्य नाभेदस्येवाभ्यासात् तात्पर्यविषयत्वम्, प्रत्यक्षानुमानाविषया जीवेश्वर-तद्भेदाः शास्त्रगम्याः, इति नाभ्यासकथैवात्रोत्तिष्ठतीति त्वन्यदेतत्॥

—:*:—

## तत्र द्वैताद्वैतसिद्धान्तयोः प्रपञ्चमिथ्यात्वादि-विषयः कश्चन विचारविशेषः ॥

### प्रपञ्चमिथ्यात्वायोगः ।

[द्वैतवादः] "जन्माद्यस्य यतः" इति सूत्रेण जगत्कारणत्वं ब्रह्मणोऽवगतं जगतः सत्यत्वं विना नोपपद्यते । तच्च न परोदीरितजगन्मिथ्यात्वनिरासमन्तरा, इति मिथ्यात्वनिरासः तदनिर्वचनीयत्वनिःरासो वाऽर्थप्राप्तः ॥

### अनिर्वचनीयत्वनिरुक्त्ययोगः ।

तत्रानिर्वचनीयत्वं न मिथ्यात्वम् । तद्धि निर्वचनविरहो वा, निर्वाच्यविरहो वा । नाद्यः; स्वाभ्युपगतव्यवहार-मिथ्यात्वयोर्विरोधात् । न द्वितीयः; स हि सत्त्वविरहो वा,असत्त्वविरहो वा, उभयविरहो वा । नाद्यः; असतोऽनिर्वाच्यतापातात् । द्वितीये ब्रह्मणोऽनिर्वचनीयतापातः । न तृतीयः; जगतः सदसद्रूपतयाऽप्युपपत्तेः । प्रत्येकमुभयवैलक्षण्यं तु ब्रह्मासद्वैलक्षण्यमात्रेण निर्वहति, इति सिद्धसाधनम् । सदसत्त्वानधिकरणं त्वप्रसिद्धम् , इति न दृष्टान्तसिद्धिः । सत्त्वासत्त्वयोः परस्परविरहरूपत्वेनैकाभावेऽपरसत्त्वनैयत्येन प्रपञ्चे तदुभयवत्त्वव्याघातः । सत्त्वाभावासत्त्वाभावोभयवत्त्वमतात्त्विकं यद्यपि न व्याहतम् ; तथापि तत् तत्तत्प्रतियोगिदुर्निरूपं यदि मन्यते, तर्ह्यनिर्वचयनीयतायां तत् पर्यवस्यति, तत्र तु वक्तव्यमुक्तमेव ॥

परस्परविरहव्याप्यत्वे तु सत्त्वासत्त्वयोर्व्याघातः; तदुभयस्यैकत्राभावात्-यत्रात्मनि सत्त्वम् , तत्रासत्त्वाभावः, यत्रासत्त्वं शशशृङ्गादौ, तत्रासत्त्वाभाव इत्यसंभवात् । तत्रात्मत्वरूपसत्त्वातिरक्तस्य सत्त्वप्रयोजकस्य दुर्निरूप्यत्वाद् नात्मत्वप्रयुक्तमात्मनि सत्त्वम् , किं त्वसत्त्वाभावप्रयुक्तमेव सत्त्वम् ॥

एतेन—सदसद्विलक्षणत्वे–विवादपदम् , सदसद्विलक्षणम् , दृश्यत्वादित्यनुमानमपि-निरस्तम् ; सपक्षस्याप्रसिद्धविशेषणत्वात् ॥

सत्त्वासत्त्वे, एकवस्तुनिष्ठात्यन्ताभावप्रतियोगिनी, धर्मत्वात् ; रूप-रसवदित्यनुमाने वस्तुशब्दस्य सच्छब्दपर्यायत्वात् सत्त्वम्, सन्निष्ठात्यन्ताभावाप्रतियोगि, अमिथ्यात्वात् प्रमेयत्ववदिति प्रकरणसमः, अनेकान्तश्च, अविरुद्धत्वं चोपाधिः; घटत्वाघटत्वे, एकधर्मिनिष्ठाभावप्रतियोगिनी, धर्मत्वात् , रूप-रसवदित्याभाससाम्यं च । तदेवं सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं नादुष्टं लक्षणम, न वा तत्रानुमानं प्रमाणम् ॥

सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेतेत्यर्थापत्तिरपि न सदसद्विलक्षणत्वे मानम्। तथाहि—सत्पदार्थोऽत्र किं सत्ताविशिष्टम्, उताबाध्यम्, अथ ब्रह्मस्वरूपम्। नाद्यः; सत्ताविशिष्टस्याद्वैतसिद्धान्तेऽबाध्यत्वाभावाद् न बाध्येतेति प्रसञ्जनायोगात्। नाप्यबाध्यम्; यद्यबाध्यं स्यात्, तर्हि न बाध्येतेति प्रसञ्ज्यप्रसञ्जकयोरभेदात् प्रसञ्जनानुपपत्तेः। नापि तृतीयः; ब्रह्मस्वरूपं स्यादिति विवक्षया प्रपञ्चस्य ब्रह्माभिन्नत्वमात्रसाधनात् तस्य चेष्टत्वात् सिद्धसाधनात्॥

अयमेव न्यायः–असच्चेन्न प्रतीयेतेत्यत्रापि। तत्रापि 'न प्रतीयेते'ति किमसत्त्वेनाप्रतीतिरापाद्यते, उत सत्त्वेन। आद्ये सद्व्यवहारत्वापत्तिः। न च सत्त्वासत्त्वौदासीन्येन प्रतीतिः कुत्रापि। असद् नृशृङ्गमिति व्यवहारः प्रसिद्ध एव। असत्वेनाप्रतीतौ तु भ्रान्तिव्यहारविलोपः; प्रकृतादन्यात्मना प्रतीतेरेव भ्रान्तित्वात्, इदं रजतमित्यत्रेदम्यसत एव रजतात्मना प्रतीतेः। न च तस्य रजतस्यानिर्वचनीयत्वम्। न हि रजतं तत्रानिर्वचनीयत्वेन प्रतीयते। तथा सति ह्यनिर्वचनीयस्यानिर्वचनीयत्वेन प्रतीतौ व्यावहारिकत्वमेव स्यात्। तस्यानिर्वचनीयत्वाकारेण प्रतीतिस्त्वसतः सत्त्वेन प्रतीतिरिव व्याहन्यते। अनिर्वचनीयत्वस्याप्यनिर्वचनीयत्वे त्वनवस्था॥

### जगन्मिथ्यात्वप्रतिज्ञा।

[अद्वैतवादः] अद्वैतसिद्धेर्द्वितीयमिथ्यात्वसिद्धिपूर्वकत्वाद् जगत्कारणत्वस्य विवर्तोपादानताख्यस्य जगन्मिथ्यात्वं विनाऽनुपपत्तेर्जगन्मिथ्यात्वमर्थसिद्धम्, इति न जगत् सत्यम्। तथाचानुमानम्–विमतम्, मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वाद्वेति। विमतम्–सत्यत्व-मिथ्यात्वाभ्यां विवादपदम्। तच्च ब्रह्म-प्रातिभासिकासद्विलक्षणम्॥

वियदादीति नात्र पक्षनिर्देशो भवितुमर्हति; आदिपदेनासंकुचितेनात्मशुक्तिरूप्यादेरपि ग्रहणापत्त्या बाध-सिद्धसाधनप्रसङ्गात्। अयमेव न्यायो विश्वमिति पक्षनिर्देशेऽपि। तत्र समुदायपक्षतायां प्रत्येकमिथ्यात्वासिद्धिः। वियन्मिथ्येति प्रत्येकपक्षतायामन्यत्र घटादौ न्यायाविषयता, तत्सपक्षतायामपि पक्षादन्यत्र हेतुनिश्चये सन्दिग्धव्यभिचारो दूषणमेव। पक्षतावच्छेदकं सप्रकारकज्ञानाबाध्यत्वम्, सदसद्विलक्षणत्वं वा। विमतिश्च तदवच्छेदेनानतिप्रसक्तेत्येवंविवक्षणान्न दोषः। ब्रह्मप्रमारिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वे सति चिद्भिन्नमिति तु सिद्धिकाराणामुक्तार्थनिष्कर्षमभिप्रेत्य॥

अनिर्वचनीयत्वनिरुक्त्युपपत्तिः ।

तत्रानिर्वचनीयत्वम्—सदसद्विलक्षणत्वम्, अविद्या-तत्कार्यान्यतरत्वम्, स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वम्, प्रमाविषयातिरिक्तत्वम्, अप्रमाणविषयत्वं वा ॥

चित्सुख्यां तु—प्रमाणागम्यत्वम् अप्रमाणज्ञानगम्यत्वम्, अयथार्थज्ञानविषयत्वम्, सद्विलक्षणत्वम्, सदसद्विलक्षणत्वम्, अविद्या-तत्कार्यान्यतरत्वम्, ज्ञाननिवर्त्यत्वम्, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्, बाध्यत्वम्, स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं वा मिथ्यात्वमिति दशधा तद् निरुक्तम् । न च मिथ्यात्वरूपसाध्याप्रसिद्धिः; अनिर्वाच्यत्वादेरन्यतमस्य तत्त्वे बाधकाभावात् ॥

सदसद्विलक्षणत्वमिथ्यात्वोपपादनम् ।

तत्रानिर्वचनीयत्वं न दुरुपपादम् । तद्धि सत्त्वासत्त्वाभ्यां दुर्निरूपत्वमेव । तच्च सत्त्वाभावासत्त्वाभावोभयवत्त्वमेव । तदेव सदसद्विलक्षणत्वं नाम, इति न सदसद्रूपत्वेनार्थान्तरम्, असद्विलक्षणत्वेन सिद्धसाधनं वा ॥

सत्त्वासत्त्वयोः परस्परविरहरूपत्वं किं रूपं वा सत्त्वम्, असत्त्वं चाभिप्रेत्य । यद्यबाध्यत्वं सत्त्वम्, तुच्छत्वमसत्त्वम्, तर्हि तयोर्व्याप्तिरात्मनीति वक्तव्यम्—आत्मन्यबाध्यत्वरूपं सत्त्वं वर्तते, असत्त्वं नास्ति, एवं तुच्छेऽसत्त्वं वर्तते, सत्त्वमबाध्यत्वरूपं नास्तीति । न चैतद् युक्तम्; तुच्छेऽसत्त्ववदबाध्यत्वरूपसत्त्वाभावाभावात्, तुच्छस्याप्यबाध्यत्वात् । अत एवात्मत्वस्याबाध्यत्वेऽसति व्यभिचारापादनं परेषामुपपद्यते ॥

अतः सत्त्वासत्त्वयोरेकतरस्य रूपान्तरं वक्तव्यम् । तत्र चासत्त्वं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, तदभावश्च सत्त्वमिति ॥

तद्यथा—क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावस्य सत्त्वरूपत्वे तस्य शशशृङ्गादावभावात्, शुक्तिरूप्यादौ घटादौ चासत्त्वाभावो वर्तते, सत्त्वाभावस्त्वबाध्यत्वाभाव एव । स तु शुक्तिरूप्यादौ वर्तते, इति सत्त्वाभावासत्त्वाभावोभयवत्त्वं शुक्तिरूप्यादौ, घटादौ च वर्तते । ब्रह्मणि तु नाबाध्यत्वरूपसत्त्वाभावः, न वा क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वम्, इति न तत्रातिव्याप्तिः, न वाऽसति । क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वाभावादित्यद्वैतसिद्धिः ॥

न्यायचन्द्रिका तु- यत्र सत्त्वाभावः सत्त्वे, तत्रासत्त्वं नास्ति; यत्रासत्त्वाभावोऽसत्त्वो, तत्र सत्त्वं नास्तीति परस्परविरहव्याप्यत्वाभावात्

सत्त्वाभावासत्त्वाभावयोरेकत्राविरोधाद् न व्याघात इति विवेचयति। तथाच सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यत्वरूपं सत्त्वाभावासत्त्वाभावोभय वत्तारूपमनिर्वाच्यत्वं मिथ्यात्वं सुष्ठु लगति ॥

एतेन—विवादपदम्, सदसद्विलक्षणम्, दृश्यत्वादिति सदसद्विलक्षणत्वेऽनुमानप्रमाणमपि—व्याख्यातम्; उक्तरीत्या सत्त्वाभावासत्त्वाभावोभयरूपस्य परस्पराविरुद्धस्य साध्यत्वविवक्षणात्, तस्य च शुक्तिरूप्यादौ, सत्त्वे, असत्त्वे वा सामानाधिकरण्यसंभवात् साध्याप्रसिद्धिदोषानवसरात् ॥

अयमेव न्यायः—सत्त्वासत्त्वे, एकवस्तुनिष्ठात्यन्ताभावप्रतियोगिनी, धर्मत्वादित्यनुमानेऽपि। तत्र वस्तुपदेन सत्पदार्थो वा विवक्ष्यताम्, धर्मिमात्रं वा; उभयथापि सत्त्वोसात्त्वयोरेकत्र सद्रूपे ब्रह्मण्युक्तरूपयोरभावात्। धर्मिमात्रविवक्षायां तु शुक्तिरूप्यादौ सामानाधिकरण्यमिति न व्याघातः; सत्त्वासत्त्वयोः परस्परविरोधाभावस्योपपादनात्। ब्रह्मणि सद्रूपे निर्धर्मके प्रमेयत्वाभिधेयत्वयोरपि मिथ्यात्वेनाभावात् तत्र साध्यस्यापि सत्त्वाद् नानेकान्तोऽपि ॥

घटत्वाघटत्वे, एकधर्मिनिष्ठात्यान्ताभावप्रतियोगिनी, धर्मत्वात्; रूप-रसवदित्याभाससाम्यं तु धर्मिपदेनोपादानविवक्षायां सदर्थविवक्षायां वा मिथ्यात्वस्यापि मिथ्यात्वपक्षे ब्रह्मण्युभयाभावस्यापीष्टत्वात् पक्षसमत्वेन नावसरति; अन्यथा तु तत्रैव प्रथमानुमाने सिद्धान्त्यापादिताविरुद्धत्वोपाधिदोषेण ग्रासः ॥

वस्तुतस्तु—"दिगेवैषा गुणादिषु" इति चित्सुख्युक्तरीत्या रूपरसयोरपि फलादावत्यन्ताभावप्रतियोगित्वमिष्टमेव, इति सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्य मिथ्यात्वे न कोऽपि लक्षणदोषः, न वा तत्रानुमानप्रमाणविरोधः ॥

एतेन—सच्चेद् न बाध्येत, असच्चेद् न प्रतीयेतेत्यर्थापत्तिरपि शुक्तिरूप्याद्यनिर्वचनीयतायां प्रमाणमिति—व्याख्यातम्। तत्र सच्चेदित्यत्र सत्पदार्थो न सत्ताजातिविशिष्टम्, अबाध्यम्, ब्रह्म वा, किन्तु सद्रूपम्। तच्च तत्तद्विवर्तोपादानमधिष्ठानस्वरूपं सदात्मना भासमानं ब्रह्मैव, यस्याखण्डात्मना साक्षात्कारोऽज्ञानादिनिवर्तकः। न च भ्रान्तिविषयो रजतम्-

सद्रूपं भवितुमर्हति; तस्य तदुपादानाज्ञानाविषयत्वात्, तन्निवर्तकज्ञानाविषयत्वाच्च । तथाच शुक्तिरूप्यादिकं यद्युक्तरूपमसद्रूपं स्यात्, तर्हि न बाध्येत, बाध्यते तु । अतः सद्विलक्षणम् । न चैवमसत्त्वापत्तिः ॥

यद्यप्यसतोऽपि बाध्यत्वाभावाद् बाध्यत्वादेवासद्वैलक्षण्यमप्यर्थसिद्धम्; तथापि सत्त्वाभावाविशेषादनिर्वचनीयस्येवासत एव भ्रमे भानं भवतु, तस्याप्यविद्यावृत्तिविषयत्वेनानिर्वचनीयवदेव भानसंभवात्, असत एव रजतादेः सत्त्वेन भानसंभवाच्चेति शङ्कावारणार्थम्—असच्चेन्न प्रतीयेतेति प्रसङ्गान्तरमत्रानुसन्धीयते ॥

तत्र 'न प्रतीयेते'त्यत्रापाद्यमानाऽप्रतीतिः सदात्मनाऽसत्त्वेन वा, अपरोक्षतया वाऽप्रतीतिरेव । तत्र शुक्तिरजतादि यद्यसत्, तर्हि तस्याविद्यावृत्तिरूपविकल्पाख्यप्रतीतिरेवस्यात्, न त्वपरोक्षविपर्ययविषयता; अन्यथाविपर्ययविकल्पभेदेनवृत्तिगणनायोगः; विपर्ययस्याप्यसत्प्रतीतिविषयत्वाविशेषात् । प्रत्यक्षत्वं हि साक्षिप्रत्यक्षत्वेन वा स्यात्, ऐन्द्रियिकप्रत्यक्षत्वेन वा । न चोभयमपि; तस्यासद्रूपत्वेऽसत् इन्द्रिय-साक्ष्यन्यतरासम्बन्धात् । अनिर्वचनीयत्वे तु तस्य शुक्त्यवच्छिन्नचैतन्याभिन्नप्रमातृचैतन्यरूपे साक्षिण्यप्यभिन्नतयाऽध्यासात् साक्षिसंबन्धो नासुलभः, न वा प्रत्यक्षतया प्रतीतिः, इति तस्य प्रत्यक्षतया प्रतीत्यनुपपत्तिरपि शुक्तिरूप्याद्यनिर्वचनीयत्वे प्रमाणम् ॥

न चैवं सति भ्रान्तिव्यवहारलोपप्रसङ्गः; अज्ञानाधिष्ठानतादात्म्यापन्नतया प्रकारप्रतीतेरेव भ्रान्तित्वात् । इदं रजतमितीदमभिन्नतया सामानाधिकरण्येनैव हि रजतप्रतीतिरनुभूयते, न त्विदमर्थादात्मनस्तदन्यात्मत्वं बाधज्ञानदशायाम्, इति नान्याकारतया भानस्यैव भ्रान्तित्वमाश्रित्यासतोऽपि भानं सूपपादम् ॥

अनिर्वचनीयत्वं तु रजतस्य भाविबाधापेक्षया, न तत्प्रतिभासकालापेक्षया, इति रजतस्यानिर्वचनीयस्यापि किमनिर्वचनीयात्मना प्रतीतिः, उतान्यात्मनेत्यादिविकल्प-तद्दूषणानि नावसरन्ति । असत्ख्यातिरपि असदेव रजतमभादिति यदि ज्ञानमादाय, तर्हि तस्य बाध्यत्वं कुत इति वक्तव्यम् । न च शुक्तिज्ञानेन; तत्रासतोऽभानात् । न च रजतमसत्;

अपरोक्षतया प्रतीत्यनुपपत्तेः, इत्यर्थापत्त्याऽप्यनिर्वचनीयत्वदर्शनं सुशकम् ॥

सत्त्वासत्त्वनिरुक्त्यनुपपत्तिः ।

[ द्वैतवादः ] एतेन—असत्त्वम्, सदतिरिक्तत्वं वा मिथ्यात्वमपि—निरस्तम् । तत्राद्येऽपसिद्धान्तः; अनिर्वचनीयख्यात्या एवाङ्गीकारेणासत्ख्यातेरनङ्गीकारात्, सदसद्वैलक्षण्येनानिर्वचनीयत्वाभ्युपगमाच्च ॥

तत्र सत्त्वम् = अबाध्यत्वम्, असत्त्वं तु बाध्यत्वमित्यसत्त्वपदेन बाध्यत्वस्यैव विवक्षायां तु सिद्धसाधनम् । बाध्यत्वं ह्यन्यथा ज्ञातस्य सम्यग् ज्ञातत्वम् । तच्च यदि सर्वस्यानिर्वचनीयत्वादिरूपवतः प्रपञ्चस्यानिर्वचनीयत्व-क्षणिकत्व-ब्रह्मकार्यत्वादिरूपेण ज्ञातस्य तद्विरुद्धवास्तवरूपेण, पारमार्थिकत्वेन वा ज्ञातत्वम्, तर्हि सिद्धसाधनम्, अर्थान्तरं च । अन्यत्तु बाध्यत्वं दुर्वचम् ॥

सत्त्वासत्त्वनिरुक्त्युपपत्तिः ।

[ अद्वैतवादः ] तच्चासत्त्वं सद्विलक्षणत्वं वा, अबाध्येतरत्वं वा बाध्यत्वमधिष्ठानतत्त्वसाक्षात्कारनिवर्त्याज्ञान-तत्प्रयुक्तान्यतरत्वम्, न त्वन्यथा ज्ञातस्यान्यथा सम्यग् ज्ञातत्वम् । न हि भ्रान्तिदशायां शुक्तिरूप्यादि, प्रपञ्चो वाऽनिर्वचनीयत्व-क्षणिकत्व-ब्रह्मकार्यत्वादिना ज्ञायते । इयं शुक्तिरिति साक्षात्कारानन्तरं त्वनिर्वचनीयत्वासत्त्वादिरूपेण निश्चीयते—"असदेव रजतमभात्" इति । अत एव तत्र प्रवृत्तिविघातोऽपि । असदेव रजतमभादित्यत्राप्येतादृशमेवासत्त्वं विवक्ष्यते ॥

न च बाध्यमानं रजतम्, प्रपञ्चो वाऽबाध्यतयाऽधिष्ठानज्ञानानन्तरमपि भासते, किं वाऽत्र बाधज्ञानमन्यथा ज्ञातस्य सम्यग् ज्ञानरूपं विवक्ष्यते ? कुतो वा शुक्तिरूप्यज्ञानदशायां रूप्यज्ञानं न सम्यग् ज्ञानम् ? शुक्तिज्ञानानन्तरमेव कुतोऽन्यथा सम्यग् ज्ञानम्,? यदि सफलप्रवृत्तिजनकत्वात्, तर्हि घटादिज्ञानं कस्य कथं बाधज्ञानम्? यदि घटाद्यनिर्वचनीयत्वज्ञानस्य, तर्हि कदा वा तस्य बाधः? यदि ब्रह्मसाक्षात्कारानन्तरं बाधमाश्रित्य तस्य तस्य ज्ञानस्य न सम्यग्ज्ञानत्वम्, तर्हि घटादिज्ञानस्य सम्यग्ज्ञानत्वमिति कुतोऽवगतम् ?

तत्र यदि घटादिज्ञानस्य प्रत्यक्षत्वात् तदनिर्वचनीयत्वज्ञानस्य च परो-

क्षत्वात् प्रत्यक्षेण परोक्षबाधमभिप्रेत्य, तर्हीदं विविच्यताम्—किमिदं रजतमिति प्रत्यक्षस्य भ्रान्तस्य वाक्येन परोक्षतया नेदं रजतमिति बाधं भाविनं परोक्षयतो द्वितीयज्ञानं न सम्यग् ज्ञानम्? प्रत्यक्षस्य प्राबल्यात्। तत्र यदि शुक्तितत्त्वसाक्षात्कारसंभावना, तर्हि प्रकृतेऽप्यधिष्ठानब्रह्मतत्त्वसाक्षात्कारसंभावना वस्तुगत्या तत्संभवोऽपि वा श्रुतिप्रामाण्यात् कथं वार्यते? इत्यन्यथा ज्ञातस्य सम्यक् ज्ञानमनिर्वचनीयत्वस्यैव, न तु निर्वचनीयत्वस्य; तस्य बाध्यत्वात्, इत्यन्यथा ज्ञातस्य सम्यग् ज्ञानमपि घटाद्यनिर्वचनीयत्वस्यैव, न तु निर्वचनीयत्वस्य, इति बाध्यत्वरूपमसत्त्वमिथ्यात्वमपि—व्याख्यातम्॥

सद्विविक्तत्वमिथ्यात्वानुपपत्तिः।

[ द्वैतवादः ] एतेन—सद्विविक्तत्वमिथ्यात्वमपि—परास्तम्; असति व्यभिचारात्, विचारासहत्वाच्च। तथाहि—काऽसौ सद्विविक्तता नाम—किं सत्ताजातिरहितत्वम्, उताबाध्येतरत्वं बाध्यत्वम्। नाद्यः; परमतेऽपि प्रपञ्चे सत्ताजातेरनिराकरणेन बाधात्। बाध्यत्वं त्वन्यथा ज्ञातस्य सम्यग्ज्ञातत्वं तत्त्ववादिमते स्वीक्रियते, इति पूर्वोक्तरीत्या सिद्धसाधनम्॥

सद्विविक्तत्वमिथ्यात्वोपपत्तिः।

[ अद्वैतवादः ] वस्तुतस्तु—सद्विविक्तत्वमित्यत्र सत्पदेन प्रमाणसिद्धं विवक्ष्यते। प्रमाणसिद्धत्वं च दोषनिष्ठकारणतानिरूपकान्यधीविषयत्वम्। तत्र स्वाप्नादौ, शुक्तिरूप्यादौ च निद्रा-काचादिदोषजन्यत्वाद् दोषनिष्ठकारणतानिरूपकधीविषयत्वं वर्तते, इति सद्विविक्तत्वरूपमिथ्यात्वलक्षणसमन्वयः। घटादावपि वाचस्पतिमते प्रमातृनिष्ठदोषविधयाऽविद्याया एव निमित्तकारणत्वादविद्यारूपदोषनिष्ठकारणतानिरूपकधीविषयत्वं वर्तते, इति न प्रमाणसिद्धत्वम्॥

दोषत्वं चाविद्यायाः काच-कामलादेरिव ब्रह्मण आवरणेन, इत्यनावृतान्यविषयकतायामेव दोषत्वाद् वृत्त्युपहितस्य ब्रह्मणश्चावरणाविषयत्वादखण्डाकारवृत्तौ न दोषविधयाऽविद्यायाः कारणत्वम्। न हि घटादिज्ञानदशायामिवाखण्डाकारवृत्तिदशायामज्ञानं वर्तते, येन तस्यास्तत्रापि हेतुत्वं स्यात्। विक्षेपशक्त्यंशेन विपरीतकार्यजनकतया, आवरणशक्त्यंशेनासत्त्वाभानाद्यापादकतया चाविद्याया एव दोषविधया कारणत्वात्तु ब्रह्मणो

दोषनिष्ठकारणातानिरूपकधीविषयत्वं नास्तीति प्रमाणसिद्धत्वमेव, न तदन्यत्वमिति न ब्रह्मणो मिथ्यात्वम्। वृत्त्युपहितं ब्रह्म तु नास्य लक्षणस्य लक्ष्यम्, इति न तत्रातिव्याप्तिः। अबाध्यत्वं सद्विविक्तत्वमिति कल्पस्तु नात्रोरीक्रियते, येन मिथ्यात्वस्य बाध्यत्वरूपमिथ्यात्वघटितत्वेनाऽऽत्माश्रयः स्यात्॥

प्रतिपन्नोपाधौ निषेधानुपपत्तिः।

[द्वैतवादः]एतेन—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमपि—परास्तम्। तत् किमेकदेश-कालप्रतिपन्नस्य-देश-कालान्तरयोर्निषेधः? उत त्रिकालाखिलदेशनिषेधः? नाद्यः;? सिद्धसाधनात्, रीत्यन्तरेण नित्यत्वस्यैवोक्तत्वेन मिथ्यात्वानिरुक्तेः। न द्वितीयः; नित्यसर्वगतकाल-देशयोरखिलदेश-कालनिषेधस्य व्याहतत्वात्॥

का चेयं प्रतिपन्नता नाम? प्रमाणप्रतिपन्नता वा, भ्रान्तिप्रतिपन्नता वा। नाद्यः; प्रमाणप्रतिपन्नस्य त्रिकालाखिलदेशनिषेधप्रतियोगितासाधनेऽतिप्रसङ्गात्। भ्रान्तिप्रतिपन्नतायां तु—को वाऽयं निषेधः—अभाववेदनम्? सद्विविक्तत्वबोधनं वा? नाद्यः; अत्यन्तासत्त्वापातात्। न द्वितीयः; अद्याप्यनिरूपणात्॥

प्रतिपन्नोपाधौ निषेधोपपत्तिः।

[अद्वैतवादः]एतेन—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमपि—व्याख्यातम्। अत्र प्रतिपन्नोपाधिपदेन स्वप्रकारकधीविशेष्यं स्वाधिष्ठानं स्वोपादानापरपर्यायं विवक्ष्यते, न तु यत्किंचिद्देश-कालौ, सर्वदेशकालौ वा, इति न यत्किञ्चिद्देश-कालादावभावेन सिद्धसाधनम्, येन सर्वदेश-कालयोर्नित्य-सर्वगतदेश-कालनिषेधव्याघातश्चावसरेत्। देशकालयोरपि ब्रह्मणि कल्पितत्वाद् नित्यत्वाद्यभावाद् न व्याघातोऽपि; सर्वस्य ब्रह्मेतरस्य ब्रह्मण्यध्यासात्॥

अत्र वादावली सदसद्विलक्षणत्वम्, सद्विविक्तत्वं च द्विविधमेव मिथ्यात्वं प्राधान्येन निरस्यति। तत्र सद्विविक्तत्वस्यावान्तरभेदेष्वेव बाध्यत्वस्य, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य चात्र समर्थनम्। तत्र न्यायचन्द्रिका—बाध्यत्वं मिथ्यात्वमुपपादयति, अद्वैतसिद्धिस्तु सदसद्विलक्षणत्वम्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्, ज्ञाननिवर्त्यत्वरूपं

बाध्यत्वम्, स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वम्, सद्विविक्तत्वं च स्वतन्त्रमेव पञ्चविधं मिथ्यात्वं प्रतिपादयति। तेन च चित्सुख्यां विकल्पितं प्रमाणागम्यत्वम्, अप्रमाणज्ञानगम्यत्वम्, अयथार्थज्ञानविषयत्वम्, ज्ञाननिवर्त्यत्वम्, बाध्यत्वं वा मिथ्यात्वमपि समर्थितम्; तथापि बाध्यत्वस्य पृथग् वादावल्यां निरासाद् न्यायचन्द्रिका तं कल्पं पृथक् समर्थयति ॥

स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वरूपमिथ्यात्वं तु न वादावली प्राधान्येन निरस्यति। अतो न न्यायचन्द्रिकायां तस्यापि समर्थनम् ॥

एतेन—प्रतिपन्नताऽपि—व्याख्याता। सा हि "सदेव सोम्येदमि" त्यवान्तरप्रमाणश्रुत्यवगतत्वात् प्रमाणप्रतिपन्ना वा भवतु, "नेह नानास्ति किञ्चने"ति श्रुतिप्रतिपन्नता वा, उक्तश्रुतिबाधितत्वेन वस्तुगत्या बाधितत्वेन सप्रपञ्चताप्रत्यक्षादेर्भ्रमप्रतिपन्नता वा। सर्वथा तु प्रपञ्चप्रकारकधीविशेष्यता न ब्रह्मणो हीयते। दोषनिष्ठकारणतानिरूपकधीविषयान्यता, प्रकारतानिरूपिता विशेष्यता वा प्रतिपन्नता। सा तु सद्रूपब्रह्ममात्रगता, न देश-कालादिसाधारण्यपि, इति न कोऽपि दोषः ॥

एतेन—निषेधोऽपि—व्याख्यातः। अभाववेदनरूपस्य, सद्विविक्तत्ववेदनस्य वा तस्याबाधात्, असत् शशविषाणादि न स्वप्रकारकधीविशेष्यनिष्ठाभावप्रतियोगि, न वा ज्ञाननिवर्त्यादिरूपबाध्यापरपर्यायसद्विविक्तम्, इति नासत्त्वापातः, न वा तत्रातिव्याप्तिः; अद्याप्यनिरूपितस्याप्यनेनैवानुमानेन श्रुत्यनुगृहीतेन साधनं प्रमाणमूर्धन्यत्वात् श्रुतेरप्रतिबद्धम् ॥

प्रमाणाविषयत्वमिथ्यात्वानुपपत्तिः।

[द्वैतवादः]एतेन—प्रमाणाविषयत्वमिथ्यात्वकल्पोऽपि—परास्तः, विचारासहत्वात्। तथाहि—प्रमाणाविषयत्वं नाम यत्किञ्चित्प्रमाणाविषयत्वं वा, प्रमाणमात्राविषयत्वं वा। नाद्यः; गन्धादेः श्रोत्राद्यविषयतया सिद्धसाधनात्। न द्वितीयः; ब्रह्मणोऽपि मिथ्यात्वापातात्। प्रमाणाविषयत्वे प्रपञ्चस्य पक्षीकरणायोगः। प्रत्यक्षादेरतत्त्वावेदकत्वासिद्ध्या तत्त्वावेदकप्रत्यक्षादिसिद्धतया तत्र बाधोऽपि। अतत्त्वावेदकत्वं हि प्रत्यक्षादीनां विषयबाधेन बाधितार्थत्वम्। तच्च प्रमाणत्वमिति च व्याहतम्; अन्यथा शुक्तिरूप्यज्ञानमपि प्रमाणं स्यात्, अतत्त्वावेदकत्वाविशेषात्। तदपि प्रमाणं चेत्, नातत्त्वावेदकमद्वैतवाक्यवत् ॥

[अद्वैतवादः] एतेन—प्रमाणाविषयत्वमिथ्यात्वकल्पोऽपि—व्याख्यातः। स हि सद्विविक्तत्वकल्पसमर्थनावसरोक्तरीत्या प्रमाणमात्रसिद्धभिन्नत्वम्, न तु यत्किंचित्प्रमाणाविषयत्वम्। तच्च प्रमाणसिद्धभिन्नत्वं दोषकारणकधीविषयान्यत्वं न ब्रह्मसाधारणम्, इति न ब्रह्मणोऽपि मिथ्यात्वापातः। अधिकं तु तत एवावगन्तव्यम्। पक्षीकरणमपि प्रपञ्चस्यात एव। पक्षत्वं तु तस्य सत्यत्व-मिथ्यात्वाभ्यां विवादविषयत्वेनेति पूर्वमेव निरूपितम्॥

तत्त्वावेदकत्वावेदकत्वाभ्यां प्रत्यक्षादेर्विप्रतिपन्नत्वेऽपि प्रत्यक्षसिद्धत्वमात्रेण पक्षीकरणं सन्दिग्धत्वात् न प्रपञ्चस्य दुष्यति। पर्वतादेरप्यत एव पक्षता। प्रत्यक्षसिद्धस्य सत्यत्वं वा, मिथ्यात्वं वेति सन्दिहानं प्रत्येवानुमानम्, न तत्रान्यतरकोटिनिश्चयशालिनं प्रति। शुक्तिरूप्यज्ञानस्यातत्त्वावेदकत्वं निर्णीतम्, अद्वैतवाक्यं तु वादिनां दृष्ट्या सन्दिग्धं तत्त्वावेदकमिति नातत्त्वावेदकम्। अतस्तद्भिन्नस्यैव सत्यत्व-मिथ्यात्वाभ्यां सन्दिग्धता॥

अप्रमाणविषयत्वमिथ्यात्वानुपपत्तिः।

[ द्वैतवादः ] एतेन—अप्रमाणविषयत्वमिथ्यात्वकल्पोऽपि—परास्तः। सर्वमनिर्वचनीयम्, क्षणिकम्, ब्रह्मकार्यमित्यप्रमाणविषयताऽभ्युपगमेन सिद्धसाधनात्। भ्रमप्रतीतत्वं तु विषयस्यासत्त्वसाधकत्वात् सिद्धान्तविरुद्धम्॥

अप्रमाणविषयत्वमिथ्यात्वोपपत्तिः।

[ अद्वैतवादः ] अप्रमाणविषयत्वं तु दोषकारणकधीविषयत्वम्। तत्तु पूर्वोक्तविधयाऽविद्यारूपदोषकारणकधीविषयत्वाद् विवादास्पदेषु घटादिषु, काच-कामलादिदोषकारणकधीविषयत्वात् शुक्तिरूप्यादौ संपन्नेऽपि। सर्वथाऽनिर्वचनीयम्, क्षणिकम्, ब्रह्मकार्यमिति ज्ञानं कस्य कदा वा? यदि साक्षात्कृतब्रह्मणो ब्रह्मसाक्षात्कारानन्तरम्, तर्हि तदानीमनिर्वचनीयस्य, अन्यविधस्य वा तेनैव रूपेण ज्ञानात् कथं भ्रमत्वम्? अप्रमाणविषयत्वं वेति कथं सिद्धसाधनम्? कथं च तज्ज्ञानबाध्यत्वेन तत्प्राक्तनघटादिज्ञानस्य प्रमात्वम्? अनिर्वचनीयत्वज्ञानस्य प्रमात्वे निर्वचनीयत्वादिज्ञानस्य भ्रमत्वमिति घटादिसत्यतावादाय तिलाञ्जलिप्रदानमेव। घटादिज्ञानस्य प्रमात्वं त्वौपनिषदानिर्वचनीयत्वज्ञानस्य प्रत्यक्षादिना बाधायोगाद् नोपपद्यते॥

अविद्यातत्कार्यत्व-मिथ्यात्वानुपपत्तिः।

[ द्वैतवादः ] एतेन—अविद्या-तत्कार्यान्यतरत्वमिथ्यात्वकल्पोऽपि—

परास्तः। तथाहि—केयमविद्या नाम—अनाद्यनिर्वाच्या वा, अनादिभावरूपत्वे सति विज्ञानविलाप्या वा, भ्रमोपादानं वा ॥

अज्ञानलक्षणायोगः।

तत्र नाद्यः; अनिर्वाच्यताया असिद्ध्याऽप्रसिद्धविशेषणत्वात्। परमत आकाशादेरनादेरनिर्वाच्यतायाः स्वीकारेणाकाश-काल-देशादावतिव्याप्तेः। आकाशादौ ब्रह्मव्यतिरिक्तेऽनादित्वानभ्युपगमे मिथ्याभूतत्वेनाविद्याया अप्यनादित्वायोगाद् लक्षणस्यासंभवः ॥

न द्वितीयः; अनादित्वस्यासंभावितत्वाद्, अनादिभावरूपस्य ब्रह्मवद् ज्ञाननाश्यत्वासंभवात्। अभावविलक्षणत्वमात्रमविद्यायाः, न भावत्वम्, किन्तु भावाभावविलक्षणतृतीयप्रकारत्वमविद्यायाः, इति त्वभावविलक्षणत्वमात्रेणाप्यनादेरनिवर्त्यत्वस्यानुमानसंभवाद् नोपपद्यते। आत्मत्वं तु नोपाधिः; असति व्यभिचारात् ॥

एतेन—भ्रमोपादानत्वमपि नाविद्यालक्षणमिति—व्याख्यातम्; तत्र भ्रमशब्देनार्थो विवक्ष्यते, ज्ञानं वा। नाद्यः; तत्रार्थस्य भ्रमविषयस्यालीकत्वेन तस्याज्ञानानुपादानकत्वात्। न द्वितीयः; अन्तःकरणेऽतिव्याप्तेः, भ्रमस्याविद्योपादानकत्वाभावेनासम्भावितत्वाच्च। न हि मृद् घट इत्यादिवद् भ्रमेऽविद्यानुवेधो दृश्यते, येन तस्या विषयोपादानत्वं संभाव्येत। भ्रमस्याज्ञानानुपादानकत्वे स सत्यः स्यादिति चेत्, स्याद् नाम। न च भ्रम-प्रमाऽविवेकापत्तिः; विषयसत्त्वासत्त्वाभ्यां विशेषात्। अत एवासत्ख्यातिः ॥

न च विषयसत्त्वे ज्ञानसत्त्वं प्रयोजकम्; विनापि विषयमसद्विषयकविपर्ययवृत्तिदर्शनात्, विषयासत्त्वाविशेषेऽपि विकल्प-विपर्ययोर्विशेषोऽन्यत्र विशदः। भ्रमे त्वसदेव रजतमभादिति, एतावन्तं कालं रजतमभादिति च सर्वजनीनानुभवात् स्वरूपतोऽसदेव प्रतीयते, नानिर्वचनीयम्। तथाच न भ्रमोपादानत्वमज्ञानस्य लक्षणम्; अन्यथाऽखण्डाकारवृत्तेरप्यविद्योपादानकत्वाद् भ्रमत्वापत्त्या तस्याः प्रमात्वाभावात् सर्वभ्रम-तद्विषय-तदुपादानाज्ञान-तत्प्रयुक्तानिवृत्त्यापत्त्याऽनिर्मोक्ष एवाद्वैतमते स्यात् ॥

अज्ञानलक्षणोपपत्तिः।

[अद्वैतवादः] एतेन—भ्रमप्रतीतत्वमपि—व्याख्यातम्। तत्र विषयासत्त्वं विषयबाध्यत्वेनैव, न तु तुच्छत्वेनेति स्वेनैवोपपादितम्। अनिर्वाच्य-

त्वस्य सदसद्वैलक्षण्यरूपस्य पूर्वमेवोपपादनादनाद्यनिर्वचनीयत्वमविद्याल-क्षणं नायुक्तम्। अनादिभावत्वे सति ज्ञाननिवर्त्यत्वमपि तल्लक्षणमेव, तथा भ्रमोपादानत्वमपि। तत्राकाशादीनामज्ञानप्रयुक्तत्वेन ज्ञानजन्याज्ञाननाशप्र-युक्तनाशवत्त्वेनानादित्वाभावाद् नाकाशादौ प्रथमलक्षणस्यातिव्याप्तिः। न हि मिथ्याभूतत्वमनादित्वप्रयोजकम्, किन्तूत्पत्तिशून्यत्वम्॥

न चाज्ञानमज्ञानान्तरकार्यम्, उत्पद्यते वा, इति न तस्याः सादित्वम्; अन्यथा तस्याप्यज्ञानान्तरोपादानकत्वेऽनवस्थापातात्। न चानादित्वं ज्ञान-नाश्यत्वविरोधि; अनादीनामपि ज्ञानप्रागभावादीनां नाश्यत्वदर्शनात्॥

अज्ञानम्, न ज्ञाननिवर्त्यम्, अनादिभावत्वादित्यनुमानं तु भावाभाव-विलक्षणतृतीयप्रकाराविद्यायां भावत्वाभावादप्रयोजकम्। अनादिभावस्या-त्मनो भावत्वमेवानिवृत्तिप्रयोजकम्, नाभाववैलक्षण्यम्; तद्घटकानादि-भावत्वेनैव निर्वाहे गुरुतरप्रयोजककल्पनाया अयोगात्, अन्यथाऽनाद्य-भाववैलक्षण्यस्य निवृत्तिप्रयोजकत्वेऽनादिप्रागभावस्यानिवृत्त्यापत्त्या न कार्योत्पादः कुत्रापि स्यात्। तथाच अज्ञानम्, न ज्ञाननिवर्त्यम्, अनादित्वे सत्यभाववैलक्षण्यात्; आत्मवदिति प्रयोगे व्यतिरेकव्याप्तेर्ज्ञानप्रागभा-वादौ व्यभिचारः, आत्मत्वम्, अभावत्वं वोपाधिश्च। तत्रासति निर्ध-र्मके न ज्ञानानिवर्त्यत्वरूपं साध्यम्, इति तत्रात्मत्वाभावत्वयोरपि सत्त्वाद् न साध्याव्यापकत्वम्॥

कारणं तु ज्ञानानिवर्त्यत्वे विरोध्यसन्निपात एव, नानादित्वम्, तत्स-हकृतमभाववैलक्षण्यं वा; अन्यथाऽनादेरविद्याचित्संबन्धस्याप्यनिवृत्त्या-पत्तेः। विरोधिसन्निपातासन्निपातौ हि तत्कारणसमवधानासमवधाना-वसेयौ, नानादित्वप्रयुक्तौ; अन्यथाऽज्ञानादीनां सर्वदा विरोधिसंनिपाता-पत्त्या स्वात्मलाभ एव न स्यात्, इति सृष्ट्यादावपि कार्यानुत्पत्तिरेव स्यात्, इति विरोधिसंनिपाताभावोऽप्यनादिभावत्वेनानुमेय इति वादो नोत्तिष्ठति॥

अत एवानादिकर्मरूपाविद्याया निवृत्तिरुपपद्यते; अन्यथा तस्या अनादिभावरूपत्वेन, अनाद्यभावविलक्षणत्वेन वाऽनिवृत्तिः स्यात्। अज्ञा-नावरणशक्तिरपीश्वरेच्छारूपा नश्यतीति हि परे मन्यन्ते॥

अज्ञानम्, ज्ञाननिवर्त्यम्, अनादित्वे सति भावत्वात्; अभावविल-क्षणत्वाद्वेत्यनुमानस्याविद्या-चित्संबन्धे, जीवाविद्यारूपे कर्मणि च व्यभिचारः॥

एतेन—भ्रमोपादानत्वमविद्यात्वमित्यपि—व्याख्यातम्। तत्र भ्रमशब्देन यत्र स्थूलावस्थापन्नमृदाद्यात्मकाविद्यापरिणामत्वमर्थमात्रस्य, ज्ञानस्य तु स्थूलावस्थापन्नान्तःकरणकार्यत्वम्, तत्राविद्यायास्तत्स्थूलावस्थात्मना ज्ञान-विषयोभयोपादानत्वम्, यत्र त्वविद्यामात्रं तदीयस्थूलावस्थानपेक्षं विषयात्मना ज्ञानात्मना च परिणमते, तत्र साक्षादविद्योपादानत्वम्, यथाऽवच्छिन्नचैतन्यविषयकतूलाविद्या विषय-तदाकारवृत्त्यात्मकोभयोपादानम्, अन्यत्र तु तत्त्वज्ञानेतरनाश्यस्य घटादेर्निवृत्तिमात्रम्, या कारणात्मनाऽवस्था। तत्र यावत्तन्नाशं घटादेर्नाम-रूपात्मना स्थूलेन रूपेण सदाद्यात्मना च भासमानस्येन्द्रियसन्निकर्षादेर्ज्ञानम्, सफलव्यवहारोपयोगित्वं च। यावत्तन्नाशं सतीन्द्रियसन्निकर्षे, कारणान्तरे च प्रत्यक्ष-परोक्षादिव्यवहारः। तत्र स्थूलावस्थान्तःकरणपरिणाम एव ज्ञानम्, न साक्षादविद्योपादानम्। तत्रापि जडत्वे विषयस्य स्थूलावस्था मृदादिपरिणाम इति विवेकः॥

उभयत्रापि स्थूलावस्थाद्वारा, तदनपेक्षं वा ज्ञान-विषययोरविद्यापरिणामत्वं समानम्, इति भ्रमशब्देन ज्ञानम्, अर्थश्चोभयं विवक्ष्यते। उभयत्रापि हि विषयस्य नासत्त्वम्, किन्तु सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमिति पूर्वमेवोपपादितम्॥

अविद्याकार्यस्यापि घटस्य तत्र स्थूलावस्थमृदात्मना परिणामस्यापि न स्वरूपतोऽविद्याया अनुवेधः, किन्तु यदात्मना परिणामित्वम्, तदात्मनैव प्रतीतिः, यथा घटस्य मृद् घट इति मृदात्मनैव, नाविद्यात्मना, इति व्यावहारिकस्थलेऽपि स्थूल-सूक्ष्मावस्थाभेदेऽपि स्थूलावस्थायां नोभयानुवेधः। एकरूपेण नाम-रूपात्मना सामान्यानुवेधस्तु मूलाविद्याया अपि तत्र वर्तत एव। अत एवोक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥"

इति। अत एव तत्रात्यन्तमसत इव न नाम-रूपोभयाभावः। अयमेव न्यायः—शुक्तिरूप्यादिस्थलेऽपि, यत्राविद्यैव तूलाविद्याख्या स्थूलरूपानपेक्षा ज्ञान-विषयोभयोपादानम्। तत्र हि तद्विषयेदमात्मना नाम-रूपात्मकरजतात्मना च भानम्। अत्र तदुपादानाविद्यारूपं विषये ज्ञाने च न भासते, यतस्तत्राधिष्ठानतावच्छेदकेदंतादात्म्येन रजतस्य तदाकारान्तःकरणवृत्त्यभेदेन रजताकारवृत्तेश्च भानम्॥

इयमेव नीतिः—प्रमातृचैतन्याभेदेन प्रत्यक्षतादशायां घटस्यापि, इति नाम-रूपात्मकरजतात्मना भातस्य, भासमानस्येदंतादात्म्यापन्नस्य वा रजतस्य कथं वाऽसत्त्वम्, येनेदंपदार्थस्य सत्त्वेन रजतस्यासत्वेऽपि तदुपादानता शुक्तिरूप्यस्य, तद्दृष्टान्तेन घटादेर्वा न स्यात्। यत्तु व्यावहारिकस्थले घटादीनां ज्ञानम्, तत्रापि कारणावस्थाभिन्नतत्स्थूलावस्थाऽन्तःकरणपरिणामत्वेऽपि तदात्मना मूलाविद्यैव तत्राप्युपादानम्;

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥"

इति न्यायात्। सर्वत्र जन्य-जनकभावो रूपभेदेनैव—कार्यरूपेण जन्यत्वम्, तस्यैव कारणात्मना नोत्पत्तिः, विनाशो वा विना तत्त्वसाक्षात्कारम्। अमुमेवार्थमभिसन्धाय गौडपादाचार्याणामजातवादः—"सद्भवेन ह्यजं सर्वम्" इति ॥

एतेन—भ्रमस्याविद्याननुवेधादुपादानत्वायोग इति—परास्तम्; साक्षिचैतन्याध्यस्तस्य रजतादेः प्रातिभासिकत्वेन तु नाज्ञानानुवेधः केवलाविद्योपादानत्वेऽपि ॥

अत एव ब्रह्मसाक्षात्कारदशायामविद्यायाः सकार्यायाः स्वरूपतो बाधादविद्यायाः, तत्कार्याणां चासत्यत्वम्; यथा शुक्तिरूप्यादौ; अन्यथा शुक्तिरूप्यादिज्ञानस्यापि विषयापहारलक्षणबाधाभावात्, सत्यविषयकत्वापत्तिः, न चेष्टापत्तिः; अपसिद्धान्तात्॥

एतेन—तत्त्वावेदकस्याप्यन्तःकरणवृत्तिरूपस्य ज्ञानस्याखण्डाकारस्याऽऽविद्यकत्वमपि—व्याख्यातम्; तत्र स्थूलावस्थान्तःकरणपरिणममात्रत्वेऽपि ज्ञानस्य, विषयस्यानाविद्यकत्वेन तत्त्वावेदकत्वोपपत्तेः ॥

न हि तूलाविद्यापरिणामस्थल इव विषय-तदाकारवृत्त्योरेकसत्ताकत्वं नियतम्। विषय-तदाकारवृत्त्योरनात्मस्थल इवैकोपादानकत्वाभावात्। यत्र हि ज्ञानमविद्यापरिणामरूपमेव ब्रह्मविवर्तमपि सन्तं विषयीकरोत्यावरणावस्थायाम्, तत्रैव वृत्तेः परमार्थगत्याऽतत्त्वावेदकत्वम्। न च ब्रह्मज्ञानमन्तःकरणपरिणामोऽपि तथा; अन्तःकरणवृत्तेरज्ञाननिवृत्तिमात्रं ह्यत्र व्यापारः, न तु भासकत्वमपि। अतोऽखण्डाकारवृत्तिः, स्वविषयाज्ञाननिवृत्त्युपलक्षितब्रह्मविषयकापि नाज्ञानपरिणामं विषयमवगाहते। इदमेवाभिप्रेत्योक्तम्—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते ।।"

इति । सति चैवमेतावन्तं कालं रजतमभाद् इति प्रातिभासिकरजतानुसन्धानमपि व्याख्यातम् ।।

तदा हि रजतमनिर्वचनीयतया ज्ञायते; बाधात् पूर्वमिदं रजततादात्म्यापन्नमभात् । वस्तुतस्तु न तत् तादात्म्यार्हम् ; बाधितत्वादिति हि तस्याशयः ।।

अयमेव न्यायो जीवन्मुक्तानाम् , स्थितप्रज्ञानां वा समाधितो व्युत्थानदशायाम् । अत एव जीवन्मुक्ताः—

न भूमिर्न तोयं न तेजो न वायुः
र्न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ।।

इत्यनुभवन्तोऽप्यज्ञानसंस्कारवशाद् मिथ्यात्वनिर्णयेऽपि व्यवहरन्त्यविद्याया विक्षेपशक्तिमात्रेण, येषां केवलं नाममात्रात्मना शशशृङ्गादिवदविद्यापरिणामवृत्तिमात्रेण बाधितानामप्यनुवृत्तिमात्रम्—यावदप्रामाण्यज्ञानानास्कन्दित-पटुतमसंस्कारसहित-भ्रमव्याप्यभुज्यमानादृष्टाभावसहिततत्त्वसाक्षात्कारम् , यावत्प्रारब्धकर्मोपभोगं वाऽनिर्वचनीयमपि रजतादिकमिवाभावविलक्षणतया सदिव प्रतीयत इति वा वस्तुस्थितिः । "असदेवेदं रजतमभाद्" इति तु रजतस्य बाध्यत्वमेव गोचरयति, न त्वत्यन्तासत्त्वम् , तुच्छत्वं वेति पूर्वमेवावेदितम्—यथा तु स्फटिको लोहित आसीदिति । न च लौहित्यं स्फटिकगतमसत् । सर्वथा तु न तत्रासत्त्वप्रतीतिः , किन्तु बाध्यत्वप्रतीतिरेव, इति नाविद्याया लक्षणासंभवः, येनाविद्यातत्कार्यान्यतरत्वमिथ्यात्वपक्षोऽपि नावसरेत् ।।

अविद्यायां प्रमाणाभावः ।

[द्वैतवादः] न केवलं लक्षणासंभवः, किन्तु प्रमाणमपि नाविद्यायाम् । देवदत्तप्रमा, तस्य प्रमाप्रागभावातिरिक्तानादिध्वंसिका ; प्रमात्वात् ,

अविगीतप्रमावदित्यनुमानं तु—घटोऽयम्, तद्घटप्रागभावातिरिक्तानादिनिवर्तकः, घटत्वात्, घटान्तरवदित्याभाससाम्याद्प्रमाणम्॥

विगीतो भ्रमः, एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, संप्रतिपन्नवदित्यनुमानमप्यनादित्व-प्रमानिवर्त्यत्वयोर्विरोधादप्रयोजकम्। देवदत्तप्रमा, न देवदत्तगतैतत्प्रमाप्रागभावातिरिक्तानादिनिवर्तिका, संप्रतिपन्नवदिति सत्प्रतिसाधनता चात्र। इदं सर्वम्—

"देवदत्तप्रमा तत्स्थप्रागभावातिरेकिणः॥
अनादेर्ध्वंसिनी, मात्वादविगीतप्रमा यथा॥"

इति चित्सुख्यनुमानस्यार्थतोऽनुवादेन निरासपरम्॥

विवरणाचार्याणामज्ञानानुमानम्।

प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति विवरणकाराणामविद्यानुमानमप्यत एव परास्तम्॥

विवरणानुमानसाध्यविशेषणकृत्यम्।

अत्र दलप्रयोजनमेवम्—प्रमाणज्ञानं वस्त्वन्तरपूर्वकमित्येतावन्मात्रोक्तौ स्वप्रागभावेन सिद्धसाधनं स्यादिति स्वप्रागभावव्यतिरिक्तेविशेषणम्। तथापि स्वप्रागभावव्यतिरिक्तस्वसामग्रीपूर्वकत्वमादाय सिद्धसाधनवारणार्थम्—स्वविषयावरणेतिपदम्। तथाप्यदृष्टेन सिद्धसाधनवारणार्थं स्वनिवर्त्येतिपदम्, अर्थान्तरनिवृत्तये, आत्माश्रिताज्ञानसिद्धये च स्वदेशगतेतिपदमिति विवेकः। वस्त्वन्तरं तु ज्ञानविषयविषयमज्ञानम्। अज्ञाततया अज्ञानसिद्ध्यधीनत्वाद् न तया सिद्धसाधनम्॥

अत्र स्वविषयावरणत्वं स्वसत्तादशायां कार्यानुत्पत्तिप्रतिबन्धकत्वम्। तत्तु स्वप्रागभावे, अदृष्टे, सामग्र्याम्, अज्ञाने च वर्तते, इति स्वप्रागभावम्, स्वोत्पादकादृष्टम्, स्वप्रतिबन्धकादृष्टम्, विषयगतमज्ञातत्वं च व्युदसितुं साध्ये विशेषणानीति केचन॥

प्रागभावनिवृत्तेः प्रमातोऽन्यत्वमते प्रमाणज्ञाननिवर्त्यत्वं तस्यापि। तत्रादृष्टस्य फलनाश्यत्वेन, प्रमाणज्ञानप्रतिबन्धकादृष्टस्य प्रमाणज्ञाननाश्यत्वात् प्रागभावव्यतिरिक्तत्वाच्चादृष्टेन, सिद्धसाधनता मा भूत्, इति स्वविषयावरणेति। अदृष्टं त्वात्मगतत्वेन विषयदेशगतत्वाभावात्,

तस्योत्पादानुकूलत्वेन स्वसत्तायां कार्यानुत्पादप्रयोजकत्वाभावाच्च न स्वविषयावरणम्। प्रमाणज्ञानप्रतिबन्धकादृष्टं तु यद्यपि स्वविषयावरणम्, स्वदेशगतम्, स्वप्रागभावव्यतिरिक्तं च; तथापि न स्वनिवर्त्यम्; प्रतिबन्धकनिवृत्त्यधीनत्वात् कार्योत्पत्तेः, कार्यनाश्यत्वाभावाच्चेति स्वनिवर्त्यपदमिति तु निष्कर्षः॥

### विवरणानुमाननिरासः।

न चाप्यनेनानुमानेनाज्ञानसिद्धिः; अज्ञानविषयाज्ञानानभ्युपगमेनान्तःकरणवृत्तिज्ञानलक्षणप्रमाणानां तथाविधवस्तुपूर्वकत्वाभावेऽपि हेतोस्तत्र सद्भावादनैकान्तिकत्वात्। सुखादिप्रमायामपि तस्य व्यभिचारः; तस्या अपि प्रमाणज्ञानत्वात् स्वनिवर्त्यपदेनैव तद्व्यावृत्तेर्व्यर्थं प्रागभावव्यतिरिक्तेतिविशेषणम्। न हि भावः स्वप्रागभावनिवर्तकः, किन्तु तदुत्पत्तिरेव तन्निवर्तिका॥

अत्र वस्त्वन्तरपूर्वकत्वे किं वस्त्वन्तरं सत्यं विवक्षितम्? उतानिर्वचनीयम्? आद्ये सिद्धसाधनम्। द्वितीये साध्यविकलो दृष्टान्तः। अविशेषितवस्त्वन्तरपूर्वकत्वमात्रे साध्ये त्वप्रसिद्धविशेषणता, प्रामाणिकाप्रामाणिकसाधारणस्याप्रामाणिकत्वात्, अनिर्वचनीयस्य केनापि प्रमाणेनाप्रमितत्वात्। न हि शशविषाण-गोविषाणयोर्विषाणत्वं समानम्। ज्ञानप्रतिबन्धकस्य पापस्य सिद्धतया सिद्धसाधनं च; ज्ञाननिवर्त्यत्वात्। तस्यापि—

"अग्निचित् कपिला सत्रं राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः॥"

"सेतुं दृष्ट्वा ब्रह्महत्यां व्यपोहति॥" इत्यादिस्मृतौ सेत्वादिदर्शनस्य तन्निवर्तकत्वाम्नानात्॥

एतेन—सेतुदर्शनेन युगपदज्ञान-ब्रह्महत्ययोर्निवृत्तिरिति—परास्तम्; अत्राज्ञानपदेन ब्रह्माज्ञानं विवक्षितम्, उत सेत्वज्ञानम्। आद्ये न समानविषयकत्वम्, न वा ब्रह्महत्यामात्रस्य तन्निवृत्त्या सह निवृत्तिर्युक्ता; अज्ञाननाशेन तत्प्रयुक्तानां सर्वेषां पुण्य-पापादीनां निवृत्त्यावश्यकतया सेतुदर्शनेन ब्रह्महत्यामात्रनिवृत्त्ययोगात्, तेनैव मुक्तत्वापत्तेश्च। द्वितीये तु सेतुदर्शनस्य ब्रह्महत्यापापमात्रनिवर्तकस्य सेतुदर्शनप्रागभावनिवर्त-

क्त्वेऽपि तद्देशगतत्वाभावात्। न हि सेतुदर्शननिवर्त्या ब्रह्महत्या सेतौ वर्तते, सेतोरावरिका वा। सर्वथा नोक्तानुमानेन ज्ञानप्रतिबन्धकपापसाधनम्, तेन सिद्धसाधनम्, अर्थान्तरं वा ॥

अज्ञातार्थप्रकाशकत्वमप्रकाशितार्थगोचराप्रकाशविरोधित्वे सति प्रकाशकपदवाच्यत्वम्, अप्रकाशविरोधिप्रकाशत्वं वा पक्षदृष्टान्तसाधारणम्। न च चक्षुःसन्निकर्षादौ तदुभयमपि। तत्र प्रथमे हेतौ प्रकाशकपदवाच्यत्वमात्रस्य विवक्षायां प्रकाशकपदवाच्ये कस्मिंश्चन पुरुषे व्यभिचारवारणार्थं विशेषणम्। अधिकमन्यत्र।

एतेन—पूर्वोपक्षिप्तविवरणानुमाने हेत्वसिद्धिरपि—व्याख्याता। अप्रकाशितार्थप्रकाशकत्वं हि तत्र हेतुः। तद्धि किमज्ञातार्थज्ञापकत्वम्, उताज्ञातार्थज्ञापकाप्यायकत्वम्, आहो ज्ञानत्वम् ॥

नाद्यः; चक्षुरादिसन्निकर्षे व्यभिचारात्, दृष्टान्तस्य साधनविकलत्वात्, प्रमाणज्ञाने पक्षेऽज्ञातार्थज्ञापकत्वायोगाच्च ॥

न द्वितीयः; तद्धि ज्ञानहेतुसहकारित्वम्। न च ज्ञाने ज्ञानहेतुसहकारित्वमस्ति। तृतीये तु साधनविकलो दृष्टान्तः ॥

विरोधिसन्निपातासन्निपातौ हि तत्सामग्रीसमवधानाधीनौ, नानादिभावत्वादिप्रयुक्तौ; अन्यथा सादीनां सादित्वेन सर्वदा विरोधिसन्निपातापन्नतयाऽऽत्मलाभ एव न कार्यसामान्यस्य स्यात् ॥

अविद्यायां लक्षण-प्रमाणोपपत्तिः।

[अद्वैतवादः] अविद्यायां प्रमाणमप्यत एव व्याख्यातम्। विगीतं देवदत्तनिष्ठं प्रमाणम्, स्वप्रागभावातिरिक्तानादिनिवर्तकम्, प्रमाणत्वात्; यज्ञदत्तगतप्रमाणज्ञानवदित्यनुमानस्य तत्र प्रमाणत्वात्। न च विवादपदम्, अनादेर्भावस्य न निवर्तकम्; पदार्थत्वात्; घटवदित्यनेन सत्प्रतिसाधनम्; यद्यत्रानादिभावस्य यस्य कस्यचिदनिवर्तकत्वं बोध्यते, नर्हि सत्ताजात्यादिभावानिवर्तकत्वेन सिद्धसाधनम्। यदि तूभयसंप्रतिपन्नानादिभावव्यतिरिक्तानादिभावस्य, अभावविलक्षणस्य वाऽनिवर्तकत्वं साध्यम्, तर्हि परस्याप्रसिद्धविशेषणता, संप्रतिपन्नजात्यादिपदार्थातिरिक्तानादेर्भावस्याभावविलक्षणस्याप्रसिद्धत्वात् इत्यादिना चित्सुखाचार्यैरेव सत्प्रतिपक्षो निरस्तः ॥

विगीतो भ्रमः, एतज्जनकाबाध्यातिरिक्तोपादनकः, विभ्रमत्वादित्यनुमानमपि भ्रमोपादानाज्ञानसाधकम्। न चात्र चैत्रेच्छा, एतज्जनकाबाध्यातिरिक्तोपादानिका, इच्छात्वात्; मैत्रेच्छावदित्याभाससाम्यम्, तत्रोक्तविधान्तःकरणोपादानकत्वमादाय सिद्धसाधनात्। न च भ्रमेऽप्यतिप्रसङ्गः; भ्रमस्याविद्यावृत्तित्वेनान्तःकरणवृत्तित्वाभावात्॥

एतेन—अयं घटः, एतद्घटप्रागभावातिरिक्तानादिनिवर्तकः, घटत्वात्; घटान्तरवदित्याभाससाम्यमपि—प्रत्युक्तम्; दृष्टान्तासम्प्रतिपत्तेः। न हि घटान्तरं तत्प्रागभावातिरक्तानादिनिवर्तकं दृष्टम्। यथा चानादिभावत्वं नानिवर्त्यत्वप्रयोजकं चेदपि नाज्ञाननिवृत्तिः, तस्य भावाभावविलक्षणत्वात्, तथा पूर्वमेवोक्तम्। तत्त्वप्रदीपिकोक्तप्रतिसाधननिरासोऽप्यत्रानुसन्धेयः॥

### अविद्यायां विवरणानुमानसमर्थनम्।

विवादपदं प्रमाणज्ञानम्, स्वप्रागभावव्यरिक्त-स्वविषयावरण-स्वदेशगत-स्वनिवर्त्य-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वादिति विवरणानुमानमप्यज्ञाने प्रमाणम्॥

तत्राद्वैतसिद्ध्यभिमतानि दलप्रयोजनानि तु—विवादपदं प्रमाणज्ञानमिति पक्षेप्रमाणपदकृत्यं सुखादिप्रमायाः, साक्षिचैतन्यस्य च पक्षत्वव्यावृत्तिः, धर्म्यंशे प्रमाया इदमाकारात्तेर्वारणाय विवादपदम्। तस्याप्यज्ञाननिवर्तकत्वे तु विवादपदवैयर्थ्यम्। प्रागभावव्यतिरिक्तेतिपदे प्राक्पदप्रयोजनं वितथमेव; ध्वंसमादायार्थान्तरस्याप्रसक्तेः॥

यद्यपि ज्ञाननिवर्त्यत्वेनैव प्रागभावस्य वारणम्; तथापि प्रमात्वेनैव निवर्तकत्वमिति सूचनार्थं प्रागभावव्यतिरिक्तेति। आवरणत्वं च तत्र व्यवहारविरोधित्वरूपं प्रागभावे, प्रतिबन्धकादृष्टे, सामग्र्यां सर्वत्राविशिष्टम्। जडेऽप्यस्ति प्रकाशत इति व्यवहारविरोधित्वमज्ञानस्य वर्तते; आव्रियमाणचैतन्यावच्छेदकत्वेन तु तस्यावरणम्, वृत्तिरूपज्ञानस्यान्तःकरणाश्रितस्यापि चिदाश्रितत्वनियमादन्तःकरणस्यतद्द्वारावृत्तेरप्यात्माश्रयत्वमिति स्वदेशगतत्वम्। अभावानावरकत्वे तु स्वविषयावरण-स्वदेशगतस्वनिवर्त्यवस्त्वन्तरपूर्वकमित्येव साध्यम्॥

अत्र प्रमाणपदप्रयोगेण साक्षिज्ञानस्य सुखादिज्ञानस्य च वारणमद्वैत-

तिनो मन्यन्ते। न हि सुखादिप्रमा प्रमाणजन्यप्रमा नाम। ज्ञानत्वमात्रं तु तस्य। विवादपदमिति विवरणे प्रयोगात् सर्वदोषनिरासः। एवमन्तःकरणवृत्तिरूपस्यापि ज्ञानस्य चैतन्येऽन्तःकरणतादात्म्याध्यासेन तद्धर्मस्याप्यध्यासादात्मगतत्वमनपोहम्। जडस्य यद्यपि नाज्ञानाश्रयत्वम्, अज्ञानविषयत्वं वा;

"आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला।"

इति संक्षेपशारीरकोक्तेः; तथापि चैतन्यावच्छेदकतया 'अस्ति भाती'ति व्यवहारप्रतिबन्धकत्वरूपमावरणमस्तीति न दोषः, इति घटाद्यन्तःकरणवृत्तीनामपि चैतन्यावच्छेदकत्वेन जडव्यवहारप्रतिबन्धकावरणनिवर्तकत्वाद् न तत्रानैकान्त्यम्। स्वनिवर्त्यत्वमित्यत्र स्वपदेन जन्यप्रमाया एव विवक्षणात् जायमानं ज्ञानमेव निवर्तकत्वेन विवक्ष्यते, इत्युत्पद्यमानावस्थज्ञानस्याज्ञाननिवर्तकत्वं न विरुद्धम्। एतन्मानगम्यत्वम्, मानागम्यत्वं च न व्याहतम्। फलव्याप्यत्वाभावेन वृत्तिव्याप्यतामात्रेण तत्रानुमानप्रवृत्तिरिति न युक्तम्; अज्ञानस्य वृत्तिव्याप्यतानङ्गीकारात्। न च प्रमाणनिवर्त्यत्वस्य प्रमाणगम्यत्वेन व्याहतिः; प्रत्यभिज्ञाप्रमाणनिवर्त्यस्य संस्कारस्य प्रमाणगम्यत्वात्, उत्तरज्ञाननिवर्त्यस्य पूर्वज्ञानस्य, विषयदोषदर्शननिवर्त्यस्य रागादेः, सेतुदर्शनादिनिवर्त्यस्य पाप-विषादेश्च मानगम्यत्वेन व्यभिचाराच्च॥

एतेन—त्वदुक्तमर्थं न जानामीत्यनुभवोऽपि भावरूपेऽज्ञानेऽर्थापत्तिविधया प्रमाणमिति—व्याख्यातम्। तथाहि—किमत्र सर्वानुवादेन व्यवहारः, किं वा सामान्यतः। नाद्यः; तादृशव्यवहारस्यैवाभावात्, भावे वा त्वदुक्तं न प्रमाणं जानामीत्येवम्परतयोपपत्तेः, प्रतिवादिवाक्यादधिगतार्थस्यानुवादपुरस्सरं प्रमाणाभावेन निरसनदर्शनात्। न च त्वदुक्ते प्रमाणज्ञानं मम नास्तीत्यस्य विशिष्टविषयकज्ञानस्य प्रमाणत्वात् तद्विशेषणतयाऽर्थस्यापि प्रमाणेनाधिगमात् स्ववचनव्याघातः; एतत्प्रमाणज्ञानस्य प्रमाणाभावविषयत्वेऽपि तदर्थस्यानेन प्रमाणेनार्थाधिगमेऽपि विशेषानवगमात्, विशेषस्याप्यधिगमानधिगमयोः पूर्वोक्तदोषानिवृत्तेः॥

न च त्वदुक्तमर्थं न जानामीति सामान्यतो व्यवहारः; सामान्या-

नुवादेन विशेषानधिगमेऽपि 'अस्ति कश्चिद्विशेषः' इति सामान्यतो ज्ञातत्वात्। अतो न भावरूपाविद्यायां किमपि प्रमाणम्। यथा सामान्याकारस्य ज्ञातत्वादेव न तदवच्छिन्नज्ञानाभावविषयकत्वम्; विशेषाकारस्य त्वज्ञातत्वात् तद्विषयकज्ञानरूपप्रतियोगिनोऽज्ञानेन विशेषविषयकज्ञानाभावोपपत्तेः, भावरूपाज्ञानवादेऽपि तद्विशेषावच्छिन्नाज्ञानं प्रति तत्सामान्यस्यैव हेतुत्वात्; अन्यथा—भावरूपाविद्यावादेऽपि किं पूर्वमर्थो ज्ञातो न वेति प्रश्नायोगः। सामान्यतः, विशेषतो वा विषयज्ञानाभावेऽपि साक्षिणापि तद्भानायोगात्। ज्ञातेऽर्थे तदवच्छिन्नचैतन्याज्ञानायोगात् अवच्छेदकाज्ञाने तदवच्छिन्नज्ञानायोगेन त्वदुक्तमर्थं न जानामीति व्यवहारानुपपत्तिर्भावरूपाविद्यावादेऽपि समाना, इति समदोषवत्त्वाद् न पर्युयनुयोगावकाशः॥

अस्तु कथञ्चन साक्षिणा भानमवच्छेदकस्यावच्छिन्नस्योभयस्य वा; तथापि साक्षिसिद्धस्य न व्यवहारार्हत्वम्; अन्यथा–परमतेऽपि नित्यातीन्द्रियवृत्तौ सत्यामपि चैतन्यविषयकत्वेनाज्ञानानिवृत्तेः, सुखादौ वृत्त्यभावेऽपि चैतन्यविषयत्वेनाज्ञानादर्शनाच्चान्वय-व्यतिरेकाभ्यां साक्षिचेतन्यस्यैवाज्ञानविरोधित्वेन साक्षिभास्यत्वेऽज्ञानविषयकसंशयाभावाद् न प्रश्नोपपत्तिः॥

न च साक्षिभास्येऽपि जिज्ञासा संभवति; प्रमाणजन्यवृत्त्यभावदशायां साक्षिणोऽपि प्रमाणत्वात् ततो भाने जिज्ञासाया असंभवात्॥

अत एव साक्षिभास्ये सुखादौ न 'सुखं न जानामीति' व्यवहारः; अन्यथा साक्षिणोऽज्ञानाविरोधित्वे सुखप्रतीतिदशायामपि सुखं न जानामीति प्रतीत्यापत्तिः, इति साक्षिसिद्धे प्रमाणजिज्ञासा निष्फला। अयं च परमते सामान्यतः सिद्धे विशेषज्ञानायानुवादः एव। सामान्यतः साक्षिसिद्धस्य विशेषप्रमाणजिज्ञासाऽस्य तत्त्ववादिमतेऽपि। तस्मान्नाविद्या निरूपणगोचरतामर्हति, इति कुतस्तत्कार्यम्? कुतस्तरां चाविद्या तत्कार्यान्यतरस्वरूपं मिथ्यात्वमपि॥

अभावस्यावरकत्वायोगाद् जीवस्वरूपभूतानन्दाद्यावरकत्वान्यथानुपपत्त्या भावरूपमेवाज्ञानम्। भावरूपाज्ञानस्यावरकत्वे तु—

कर्माणि सूक्ष्मदेहं च जायमाना हरेर्दृशिः॥
प्रकृतिं स्वात्मसन्निष्ठां गुणान् सत्त्वादिकानपि।

"दहेदि"त्यादिप्रमाणान्यनुसन्धेयानि। अनेन हि यद्यपि प्रकृतिगत-गुण-कर्म-सूक्ष्मदेहानामज्ञानत्वं सिद्धान्ते प्रतिवाद्यते; तथापि स्वमतसिद्धैः स्थापनम्, परसिद्धैर्दूषणमिति भगवत्पपादोक्तत्वात् परमतसिद्धैरद्वैतप्रक्रिया-मात्रनिरसने साम्यमेव प्रायेण, विशेषस्त्वावृततया न तत्र विवर्तोपादान-त्वम्; अनादित्वात्तस्या न निवृत्तिश्च। ईश्वरेच्छया तु तदावरणशक्ति-मात्रविनाशः, सोऽपीश्वरेच्छया, न तु तत्स्वरूपसाक्षात्कारेणेति। अधिकमन्यत्र॥

अज्ञानाभावत्वनिरासः।

[अद्वैतवादः]—प्रमाणज्ञानस्य तत्प्रागभावातिरिक्तानादिनिवर्तकत्वं पूर्व-मुक्तम्, वस्त्वन्तरं चात्र ज्ञाननिवर्त्यतया विवक्ष्यमाणं न प्रातिभासिकं भवितुमर्हति; तथात्वे तस्य विषयावच्छिन्नचैतन्याश्रिताज्ञानकार्यत्वापत्त्या आत्मविषयत्वात्मगतत्वात्मावरणत्वाद्यसंभवात्, अन्यथाऽवच्छिन्नचैतन्या-श्रितत्वे घटादिप्रातिभासिकत्वाद्यापत्तिः। सत्यत्वं तु व्यावहारिकत्वेनेष्टम्, पारमार्थिकत्वं ज्ञाननिवर्त्यत्वेनैव परास्तम्। ज्ञाननिवर्त्यत्वं ह्यधिष्ठानतत्त्वसा-क्षात्कारनिवर्त्यत्वरूपं नासत्यत्वं विनोपपद्यते, इत्यन्यार्थैरपि स्वनिवर्त्य-स्व-विषयावरणादिपदैरेव सत्त्वासत्त्वौदासीन्येन सदसद्विलक्षणमेव वस्त्वन्त-रमत्र सिद्धं भवति॥

अविद्यानुमानदृष्टान्तसमर्थनम्।

एतेन—दृष्टान्तोऽपि—व्याख्यातः। सत्त्वासत्त्वौदासीन्येनोक्तविशेषण-विशिष्टवस्तुमात्रसाधने तात्पर्यात्, तस्य च दृष्टान्तेऽपि सत्त्वात्। अथवा-इयं शुक्तिरिति प्रमायां स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वदेशगत-स्वनिवर्त्य-तूलाज्ञानपूर्वकत्वं दृष्टम्, इति सैवात्र दृष्टान्तो भवतु॥

असत्ख्यातिस्तु निरस्तैव। इदं रजतमित्यत्र प्रातिभासिक-व्यावहारिक-साधारणमेव रजतशब्दवाच्यं प्रतीयते; अन्यथा रजतार्थिनस्तदपेक्षया प्रवृत्तिर्न स्यात्। सादृश्यात् प्रवृत्तिस्तु रजतत्वरूपसमानधर्म-त्वादेव। शशविषाणत्वमपि प्रातिभासिक-व्यावहारिकसाधारणमेकमेव। अत्यन्तासति तु शशविषाणे न विषाणत्वं वर्तते, येन तस्य गोविषाणसा-धारण्यं स्यात्॥

ज्ञानप्रतिबन्धकं पापं तु तन्निवृत्त्यनन्तरमेव ज्ञानस्योत्पादकम्, न

ज्ञाननिवर्त्यम्, न तरां चाधिष्ठानतत्त्वसाक्षात्कारनिवर्त्यम्; समानविषयकत्वेन ह्यधिष्ठानज्ञानस्याज्ञाननिवर्तकत्वम्। तच्चोपहितान्याविषयकत्वे सत्युपहितविषयकत्वम्। न च पापमज्ञानवद् ब्रह्मविषयकम्, ब्रह्मोपाधितया वा बन्धकारणम्, इति न पापेनार्थान्तरता ॥

यद्यपि सुखादिप्रतिबन्धकं पापं नरकोत्पादकादिशक्तिविशिष्टं ब्रह्महत्यादिकं सेतिकर्तव्यताकसेतुदर्शनादिप्रायश्चित्तम् तत्प्रयुक्तनरकोत्पादादिशक्तिमात्रं तत्प्रयुक्तव्यवहारप्रतिबन्धकाशुद्धिं वा निवर्तयति, न तु पापम्; ब्रह्महत्यादिपापस्य सेतुदर्शनकालेऽभावात् तत्प्रयुक्तादृष्टस्यैव च सत्त्वात् इत्यदृष्टविशेषगतशक्तिविशेषनिवर्तकत्वं न दृष्टविधया संभवति, इति सेतुदर्शनादिकमपि न केवलदर्शनत्वेनैव पापनिवर्तकम्, किन्तु पूर्वोक्ताङ्गसहितसंख्याविशेषपरिमितस्नान-प्रायश्चित्तसामान्योपयोग्युपवास-मुण्डन-होमविशेषादिविशिष्टेनैव रूपेण, इति सेतुदर्शनमात्रेण दृष्टविधया न पापनिवृत्तिः, इति ज्ञानत्वेन सेतुदर्शनस्य न पापनिवर्तकत्वम्; अन्यथा तदङ्गविध्यादिवैयर्थ्यापातात्। न चाधिष्ठानज्ञानत्वेन, प्रमाणाजन्यज्ञानत्वेन वा; ब्रह्महत्यादेः सेतुदर्शनसमानविषयत्वाभावात्, प्रायश्चितनिवर्त्यपापस्य सेत्वावरकत्वाभावात्, सेतुदेशगतत्वाभावाच्च ज्ञानप्रतिबन्धकपापेन, सेतुदर्शननिवर्त्यपापेन च सिद्धसाधनवारणम् ॥

अज्ञानस्य ज्ञानाभावरूपत्वे न्यायरत्नदीपावल्याशयपरीक्षा।

वेदान्तिनां त्ववस्थाविशेषसंभिन्नभावरूपाज्ञानसंवेदनादेव सुषुप्त्यवस्थायां तद्विरुद्धस्य ज्ञानस्य तत्सामग्र्याश्चाभावानुमानं न विरुध्यते। यद्यपि न्यायरत्नदीपावलीकारमतं चित्सुख्याऽप्येवमेव निरस्यते, इति तद्व्याख्यानमेवात्रानुवादः; तथापि ज्ञानाभावो नाज्ञानमिति सिद्धान्ते चित्सुख्यापि न विप्रतिपद्यते ॥

न्यायरत्नदीपावल्याशयस्तु—अज्ञानसाधकमनुमानमभाववैलक्षण्यं साधयितुमेव, न त्वज्ञानस्वरूपं साधयितुम्। साक्षिसिद्धे तत्र प्रमाणानपेक्षणात्। एतेन—तन्मानगम्यत्वम्, प्रमाणागम्यत्वं च न व्याहतमिति—व्याख्यातम्; साक्षिभास्यमपि प्रमाणाजन्यवृत्तिव्याप्यमेव। अज्ञानस्य फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वादप्यनुमानप्रमाणोपन्यासः। अज्ञानस्य वृत्तिव्याप्यतानङ्गीकारस्तु केवलसाक्षिवेद्यत्वम्; न प्रमाण-

जन्यवृत्तिमपेक्ष्य, किन्तु वृत्तिमात्रमनपेक्ष्येति मताभिप्रायेण । न्यायरत्नदीपावली तु साक्षिभास्यानामपि वृत्तिगम्यत्वमभिप्रेत्य, तत्तदाकारवृत्त्युपहितं चैतन्यमेव साक्षीति मतमाश्रित्य वा, यत्प्रमाणनिवर्त्यं यत्, तस्य तत्प्रमाणविषयत्वमित्यभिप्रेत्यैव वा । न चाखण्डाकारवृत्तिनिवर्त्यमज्ञानमखण्डाकारवृत्तेर्विषयः, इति न्यायरत्नदीपावल्यपि मन्यते, अखण्डाकारवृत्त्युपहितमज्ञाननिवर्तकम्, अविद्योपहितं त्वधिष्ठानमिति तदीयं प्रस्थानम् । अतोऽज्ञानं साक्षिभास्यमपि प्रमाणेन साध्यमानं प्रमाणनिवर्त्यं च न ज्ञानाभाव इति सुष्ठूक्तम् । चित्सुखी त्वत्र विवरणप्रस्थानमवलम्बते, न्यायरत्नदीपावली तु भामतीप्रस्थानमिति विवेकः ॥

त्वदुक्तमर्थं न जानामीत्यनुभवेन नाज्ञानस्याभावत्वम् ।

एतेन—त्वदुक्तमर्थं न जानीमात्यनुभवोऽपि भावरूपेऽज्ञाने प्रमाणमिति—व्याख्यातम् । तथाहि–चित्सुखी–न्यायरत्नावल्योः–त्वदुक्तमर्थं न जानामीत्यनुभवान्यथानुपपत्तिरपि भावरूपेऽज्ञाने प्रमाणमिति संमतम् । अयं हि व्यवहारोऽत्यन्तसुषुप्ते ज्ञायमानेऽज्ञायमाने चासंभाव्यमानोऽज्ञानं गमयति । न च त्वदुक्तमर्थं प्रमाणतो न जानामीत्येवंपरताऽस्य; त्वदुक्तेऽर्थे मम ज्ञानं नास्तीत्यस्य विशिष्टार्थाज्ञानस्य प्रमात्वात् तद्विशेषणतयाऽर्थस्यापि प्रमाणेन ज्ञातत्वाद् न व्याघातापत्तिः ॥

एतदतिरिक्तप्रमाणज्ञानं त्वदुक्तेऽर्थे नास्तीति वदतो वचनव्याघातानुषङ्ग एव, अस्यापि ज्ञानस्य पूर्ववदेव प्रमाणजन्यत्वात् । न च सामान्यतः; विशेषाणां बहुत्वात्, इति त्वदुक्तमर्थं न जानामीति व्यवहारानुपपत्तिर्भावरूपेऽज्ञाने प्रमाणमेव ॥

वादावली ह्यत्र चित्सुखीवाक्यान्येव—अस्ति कश्चिद्विशेष इति सामान्यतो ज्ञानमित्येतत्पर्यन्तं पूर्वपक्षावसरे, सिद्धान्तावसरे च शब्दतोऽर्थतश्चानुवदति । न हि विशेषाकारस्यापि सामान्यतो ज्ञानेऽपि तद्विषयकज्ञान रूपप्रतियोगिनोऽज्ञाने विशेषविषयकज्ञानाभावविषयकत्वं व्यवहारस्य; सामान्यज्ञानेन तद्विशेषज्ञानाभावानुपपत्तेर्विशेषरूपेण विशेषज्ञानस्य प्रतियोगिनोऽज्ञाने तदवच्छिन्नज्ञानाभावविषयकत्वस्याप्ययोगात् । अद्वैतसिद्धान्ते तु विशेषस्य, सामान्यस्य वा साक्षिभास्याज्ञानेन सह भानाद् अज्ञाने भावरूपे प्रतियोगिज्ञानानपेक्षणात्, अर्थस्य, तद्विषयकाज्ञानस्य

चोभस्यापि साक्षिणा भानमुपपद्यते, इति त्वदुक्तमर्थं न जानामीति व्यवहारानुपपत्तिरपि भावरूपेऽज्ञाने प्रमाणम् ॥

सर्वं वस्तु ज्ञाततया, अज्ञाततया वा साक्षिभास्यमिति सिद्धान्तान्मात्रावच्छेदकज्ञानापेक्षाऽवच्छिन्नज्ञानस्य; विशिष्टरूपेणोभयस्यापि साक्षिभास्यत्वात्, इति साक्षिसिद्धेन तेन व्यवहारोपपत्तिः ॥

स्वप्रकाशस्य साक्षिणोऽज्ञानानिवर्तकत्वम् ।

साक्षिसिद्धेऽप्यर्थेऽज्ञानविरोधिवृत्त्यभावेऽपि साक्षिणा भानमुपपद्यते । साक्षी तु न प्रमाणम्; प्रमाणाजन्यत्वात्, प्रमाणजन्यप्रमाया एवाज्ञानविरोधित्वस्वीकारेण साक्षिणः स्वप्रकाशतया शुद्धचैतन्यस्येवाज्ञानाविरोधित्वात् ॥

साक्षिभास्यानां सुखादीनां भानदशायां नाज्ञानानुभवः ।

सुखादौ तु सुखाकारवृत्त्यङ्गीकारपक्षे तदाकारवृत्तिदशायां न तज्ज्ञानम्; अन्यथा त्वज्ञानमेव । बिन्दुटीका नु सुखमेवान्तःकरणपरिणाम उत्पद्यमानमेवाज्ञानविरोधीति प्रतिपादयति, इति न सुखज्ञानदशायां सुखं न जानामीति प्रतीत्यापत्तिः, अज्ञातेऽपि साक्षिसिद्धेऽर्थे न वा जिज्ञासानुपपत्तिः । इयं साक्षिसिद्धेऽपि प्रमाणजिज्ञासा न निष्फला ॥

सर्वथा तु साक्षिसिद्धस्यापि व्यवहारार्थं प्रमाणापेक्षा न विरुध्यते; साक्षिणोऽप्रमाणत्वात्, प्रमाणजन्यज्ञानस्यैव व्यवहारप्रयोजकत्वाच्च, इत्यविद्याया भावरूपाया लक्षण-प्रमाणसिद्धत्वात् तस्याः सुनिरूपत्वाच्चाविद्यातत्कार्यान्यतरत्वमपि मिथ्यात्वं निर्व्यूढम्, इति तत्साध्यतायां न कोऽपि दोषः ॥

अज्ञानभावरूपत्वमेव परमतेऽपि ।

वस्तुतस्तु—द्वैतसिद्धान्तेऽपि भावरूपाज्ञानवाद एव संमतः, इति वितथमिदमज्ञानभावत्वनिराकरणं परद्वेषमात्रप्रयोजनम् ॥

यदि परसिद्धैरपि दूषणम्, तर्हि अज्ञानाभावतापक्षस्यैव द्वैतिभिरप्यङ्गीकारापत्त्या स्वसिद्धान्तोऽपि दूषितः स्यात्, इति यश्चोभयोरिति न्यायेन परीत्यापि निरासो न युक्तः ॥

भावरूपत्वेऽप्यज्ञानस्य परमतादद्वैतमतस्य विशेषः ।

तत्राद्वैतसिद्धान्ते प्रकृतेर्विक्षेपशक्तिः स्वीक्रियते, आवरणशक्तिश्च, तस्याः परमात्मसंश्लेषेण तदाश्रयत्वमपि स्वीक्रियते, तद्द्वाराऽवरणं तु जीवानां स्वरूपस्येव परमात्मनोऽप्यज्ञानेन, तस्य विवर्तमानतोपपादकतया च। जीवाश्रयत्वपक्षेऽप्यज्ञानेनावरणमविद्योपहितस्य सविन्मात्रस्यैव। जीवस्तु अहमितिप्रत्यक्षसिद्ध एव सर्वदा। तस्यानन्दादिरूपत्वं ब्रह्मभावेन, न तु जीवभावेन। अयमेन न्याय ईश्वरेऽपि, इति नाविद्याया दुर्निरूपताऽद्वैतसिद्धान्ते ॥

स्वात्यन्ताभावसामानाधिकरण्यमिथ्यात्वानुपपत्तिः ।

[द्वैतवादः] एतेन—स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमिथ्यात्वकल्पोऽपि—व्याख्यातः; तत्रात्यन्ताभावपदेनासत्त्वविवक्षयामपसिद्धान्तः। तदतिरिक्तस्याप्रसिद्धत्वादभाववैलक्षण्यमिति चेत्, तर्हि तत एवासत्त्वापत्त्या नोक्तदोषनिवृत्तिः। तस्मान्मिथ्यात्वं दुर्वचम् ॥

अथमत्र निष्कर्षः—अत्यन्ताभावस्यासत्त्वरूपत्वेऽसद्वैलक्षण्यानङ्गीकारात् सदसद्वैलक्षण्यसिद्धान्तविरोधः, सदसद्वैलक्षण्यं तु पूर्वोक्तप्रकारेणासिद्धम्, इत्यनुमानस्याप्रसिद्धविशेषणत्वम्, भाववैलक्षण्यं सद्वैलक्षण्यरूपं पूर्वोक्तमेवात्र विवक्षितमिति तु न युक्तम्; सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन सत्त्वाभावेऽसत्त्वापत्त्या सिद्धान्तविरोधः, इति नरशृङ्गादावपि सद्वैलक्षण्येनान्यस्यासत्त्वस्याभावेनात्यान्तसत्त्वं सद्वैलक्षण्यमिति स्यात् ॥

स्वात्यन्ताभावसामानाधिकरण्यमिथ्यात्वोपपत्तिः ।

[अद्वैतवादः]एतेन—स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वमिथ्यात्वकल्पोऽपि—व्याख्यातः। इदं हि मिथ्यात्वं "नेह नानास्ति किंचनेति" श्रुत्यर्थस्य तुल्यवित्तिवेद्यतया त्रैकालिकस्वनिषेधाधिष्ठानस्वरूपत्वम्। स्वात्यन्ताभावोऽत्र स्वप्रतियोगिकत्रैकालिकनिषेध एव, नात्यन्तासत्त्वम्; सप्रतियोगिकत्रैकालिकनिषेधस्यैवात्र विवक्षणात्, असतोऽप्रतियोगिकत्वात्। अभावत्वं ह्यधिरणाभावतापक्षेऽधिकरणगतौ धर्मविशेषः प्रतियोग्यनुयोगिसापेक्षः, नासत्त्वम्, इति भाविबाधदृष्ट्या मिथ्यात्वमवसीयते ॥

सांप्रतं सदात्मनाभानेऽपि परमार्थतः स्वरूपेण तदभावोऽत्र विवक्ष्यते। स च "नेह नानास्ति" "विद्वान्नाम-रूपाद्विमुक्तः" इति श्रुत्यवसितो नाप्रमाणीभवितुमर्हति। अधिकरणपदेनात्राधिष्ठानं विवक्ष्यते, नाधिकरणमात्रम्। तेन च स्वप्रतियोगिकाभावत्वोपलक्षिताभावस्वरूपब्रह्मतादात्म्येन प्रतीयमानत्वं मिथ्यात्वं पर्यवसन्नम्॥

न चैवं सत्यसद्वैलक्षण्यानुपपत्तिः; सत्तादात्म्येन प्रतीयमानत्वेनैव तत्सिद्धेः। अत एव सद्वैलक्षण्यमपि; सत्तादात्म्येन भेदघटितेन भेदस्यापि सिद्धेः। यथाच सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वम्; व्यामिश्रत्वात्, रूपान्तरेणासत्त्वस्य तदभावरूपेण सत्त्वस्य च विवक्षणाच्च, तथा पूर्वमेवोपपादितम्—क्वचिदुपाधौ त्रैकालिकनिषेधप्रतियोगित्वमसत्त्वम्, तदभावः सत्त्वम्, सत्त्वं तु मिथ्यात्वघटकमबाध्यत्वमेवेत्यादिना—इति।

मिथ्यात्वानुमाने वृत्तिविषयत्वहेत्वनुपपत्तिः।

[द्वैतवादः] दृश्यत्वहेतुरपि प्रकृतानुमाने दुष्टः। तथाहि—किमिदं दृश्यत्वम्? दृग्विषयत्वम् अस्वप्रकाशत्वं वा। आद्येऽपि दृक् वृत्तिरूपा, चिद्रूपा वा। तत्र न वृत्तिविषयत्वं दृश्यत्वम्; आत्मन्यनैकान्त्यात्, तस्यापि वेदान्तजन्यवृत्तिविषयत्वात्। न च वृत्तिप्रतिफलितत्वाभावाद् नानैकान्त्यम्; फलं हि ज्ञातता, व्यवहारो वा। नाद्यः; अतीतानागतादिषु तदभावादसिद्धेः, सिद्धान्ते घटादावपि तदभावादसिद्धिश्च। व्यवहारविषयत्वं तु वृत्तिजनितव्यवहारविषय आत्मन्यनैकान्तिकम्। केवलवृत्तिविषयत्वं तु घटादौ सिद्धान्तेऽनङ्गीकारादसिद्धम्॥

मिथ्यात्वानुमानेऽस्वप्रकाशत्वहेत्वनुपपत्तिः।

एतेन—अस्वप्रकाशत्वरूपं दृश्यत्वमपि—व्याख्यातम्। तत्रावेद्यत्वस्य स्वप्रकाशत्वरूपत्वे दृश्यत्वमप्रकाशत्वमिति फलति। तत्र च पूर्वोक्त एव दोषः। स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वप्रकाशत्वम्, तदभावोऽस्वप्रकाशत्वमिति त्वात्मनोऽप्यद्वितीयत्वादिव्यवहारे संविदन्तरापेक्षासद्भावाद् व्यभिचारि; तस्यापि वेदान्तवाक्यजन्यवृत्तिमपेक्ष्यैव व्यवहारात्। निर्विकल्पकव्यवहारे संविदन्तरानपेक्षा तु घटादावपि समाना; तस्यापि तदीयनिर्विकल्पकव्यवहारे संविदन्तरानपेक्षणात्॥

यदि घटादौ न निर्विकल्पकव्यवहारः, तर्ह्यात्मन्यपि स समानः; सुषुप्तेऽप्यात्मनिर्विकल्पव्यवहारे विवादात् ॥

अस्वप्रकाशत्वहेत्वयोगः ।

[द्वैतवादः] अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वम्; तदभावोऽस्वप्रकाशत्वमिति तु व्याहतम्; अवेद्यत्वपदेन ज्ञानसामान्याविषयत्वविवक्षायां तेनापरोक्षव्यावहारयोग्यत्वस्य व्याघातः । चित एव चिदपरोक्षव्यवहारहेतुत्वेन तस्य तदविषयत्वे तद्गोचरव्यवहारहेतुत्वाभ्युपगमे व्याघातः । किंच वेद्यत्वं चिद्विषयत्वम्, वृत्तिप्रतिफलितचैतन्यविषयत्वम्, न तु वृत्तिविषयत्वम्, इति कथञ्चन व्याघाताभावे घटादावस्वप्रकाशत्वं विशेषणाभावेन; विशेष्याभावेन, उभयाभावेन वा निर्वक्तव्यम् । तत्राद्ये विशेष्यभागस्य ब्रह्मण्यपि सत्त्वेनावेद्यत्वाभावरूपवेद्यत्वस्य व्यभिचारावारकत्वाद् व्यर्थविशेषणता, वेद्यत्वमात्रहेतुत्वे तु दूषणान्युक्तानि ॥

द्वितीये घटादीनां वेद्यत्वाभावात् स्वरूपासिद्धिः । तृतीयेऽवेद्यत्वसमानाधिकरणापरोक्षव्यवहारयोग्यत्वस्याप्रसिद्ध्या व्यर्थं विशेष्यम्, विशिष्टस्यासिद्धिश्च । न चात्रावेद्यत्वपदेन ज्ञानाविषयत्वमात्रं विवक्षितम्; असिद्धेः ॥

प्रमाविषयत्वादिहेत्वयोगः ।

तत्र दृश्यत्वं प्रमाविषयत्वं वा, उत भ्रमाविषयत्वं वा । नोभयमपि; अन्यतरासिद्धेः । दृश्यत्वस्य सामान्यतो हेतुत्वं तु न संभवति; भ्रम-प्रमाविषयत्वस्यैकरूपस्याभावात् ॥

पर्वतो वह्निमानित्यत्र तु धूमत्वेनैवैकरूपेण वह्निना व्याप्तिः । तच्च वैशेषिकरूपेणेति युक्तम् । न चात्र तथा; भ्रम-प्रमाविषयत्वयोर्दृश्यत्वसामान्याभावात् । प्रमाविषयत्वस्य भ्रमविषयत्वस्य चैकत्रासत्त्वेनोभयोरुभयसामान्यत्वाभावात् ॥

वस्तुतस्तु—दृश्यत्वं मिथ्यात्वरहिते सत्पदार्थ एव वर्तते, तस्य च मिथ्यात्वेन सामानाधिकरण्याभावात् विरुद्धता ॥

शुक्तिरजते शुक्तिदृश्यत्वेनैव रजतस्यापि दृश्यत्वव्यपदेशः । यत्सन्निकृष्टकरणेन यद् ज्ञानमुत्पद्यते, स तस्य विषय इत्यनित्यज्ञाने व्यव-

स्थितम्, इति रजतज्ञानस्य शुक्तिसन्निकृष्टकरणजन्यत्वात् शुक्तिकाया एव तत्र दृश्यत्वम्। तत्र शुक्तिसंवित्, रजतसंविच्च भिन्ना। रजतसंविदिति हि रजतत्वोल्लेखिनी संवित्, न तु रजतविषया संवित्; शुक्तिविषयतातिरिक्तरजतविषयताया अभावात्॥

इदं रजतमिति हि स्वविषयशुक्तिकामेवान्यात्मना गृह्णाति। अत एव तस्य भ्रमत्वम्। शुक्तित्वेन ग्रहणमेव बाधो नाम। इदं रजतमिति प्रतीतिकाले रजतमस्तु नाम, तस्याकारस्त्वसन् वा, अन्यो वेति त्वन्यदेतत्॥ तस्य दृश्यत्वं त्वाभासमात्रतया॥

वस्तुतस्तु रजतस्य नात्र वृत्तिव्याप्यता; तस्या वृत्तिव्याप्यताया अनभ्युपगमात्। अत एव न फलव्याप्यताऽपि। न चान्यद् विषयत्वं प्रसिद्धम्। दृश्यध्यस्तत्वं तु न दृश्यत्वम्, विषयताविशेषो वा; तथाऽप्रसिद्धेः॥

रजतस्य दृग्विषयत्वं न तत्र ज्ञानोत्पत्त्या संभवति; तदुपायान्तराभावात्, सन्निकर्षाभावात्, अन्यथाऽऽत्मनोऽपि दृश्यत्वादनैकान्तिकता॥

न चात्मा न दृश्यते; अन्यथा तत्र दृश्यत्वनिषेधानुपपत्तेः। न ह्यज्ञाते धर्मिणि धर्मविधानम्, तन्निषेधो वा युज्यते। अयं घटः, एतद्घटात्मान्यदृश्यान्यः, प्रमेयत्वात्, घटवदिति तस्य दृश्यत्वसिद्धेः॥

किञ्च दृश्यत्वाभावे तदविद्यानिवृत्त्यभावेन मोक्षानुपपत्तिः। न चाद्वैतमते ब्रह्मज्ञानं नाम न किमपि। ब्रह्मणो ज्ञानं हि ब्रह्मज्ञानम्। तत्र षष्ठ्या विषयत्वमेवार्थः, इति कथं ब्रह्मणो न दृश्यत्वम्? श्रवण-मनन-निदिध्यासनवतोऽन्तःकरणपरिणामात्मकवृत्त्युदयेन खल्वविद्यानिवृत्तिः॥

न च सा ब्रह्मणो दृश्यत्वं विनोपपद्यते। फलव्याप्यत्वनिषेध एव तात्पर्यमिति, चेत्, न; न च शशशृङ्गादाविव बिनैव विषयतां ब्रह्माकारज्ञानमविद्यानिवर्तकम्; विचारासहत्वात्॥

तथाहि—आत्माकारमिति किमात्माकारसदृशाकारमिति विवक्षितम्, उतात्माकाराभिन्नाकारम्। आद्येऽत्यन्तसादृश्यायोगः, यत्किंचित्सादृश्येऽतिप्रसङ्गश्च। द्वितीये तु ज्ञान-ज्ञेययोरेकाकारताया अनुपलम्भः, सत्त्रैक्येनाकारैक्येऽनुगतसत्ताभावश्च। आत्म-विषययोराधाराधेयभावा-

नुपपत्त्या नात्मैव विषयस्याकारः । अतः परिशेषाद् व्यावर्तकत्वेन विषयत्वेन चात्मैव ज्ञानस्याकारः, इति विषयत्वमेवाकारत्वम् ॥

स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरपि न दृश्यत्वम् । तत्र स्वातिरिक्तत्वं न पारमार्थिकभेदवत्त्वम्; परमतेऽसिद्धेः । न चाविद्यकभेदवत्त्वम्, सिद्धान्तेऽनङ्गीकारात्, संविदपेक्षानियतत्वमात्रेणोपपत्तेर्व्यर्थविशेषणत्वं च । रजतव्यवहारस्तु रजतस्याध्यस्ततया न ज्ञानमपेक्षते ॥

संविदपेक्षानियतत्वं हि दृग्व्यावर्तकत्वरूपदृश्यत्वे पर्यवसितमत्यन्तासति मिथ्यात्वशून्ये वर्तते, इति तत्रानैकान्त्यम् ॥

सदसद्वैलक्षण्यं नासत्साधारणमिति हि परेषां राद्धान्तः, इति न तत्र साध्यमपि, येन नानैकान्त्यं स्यात्, असद्धि न प्रतीयते, न वा बाध्यत इति हि परे ॥

मिथ्यात्वानुमाने दृक्तादात्म्यरूपदृश्यत्वहेतूपपत्तिः ।

[अद्वैतवादः] एतेन—प्रकृतानुमानहेतुर्दृश्यत्वमपि—व्याख्यातम् । तद्धि न वृत्तिविषत्वमात्रम्; व्यभिचारात्, साक्षिभास्ये सुखादौ वृत्त्यनङ्गीकारमते भागासिद्धिश्च स्यात् । विषयत्वस्य येन केनापि चित्सुखयुक्तरीत्या दुर्वचत्वेऽपि दृगध्यस्तत्वरूपस्य चैतन्याधिष्ठानकत्वरूपस्य कुत्राप्यव्यभिचारात्, दोषान्तराभावात्, "सदेव सोम्येदम्" इत्यादिसामानाधिकरण्यस्वारस्यात्, अन्यथा विषयत्वस्य घटादौ दुर्वचत्वाच्च । चित्तादात्म्यरूपं दृश्यत्वं दुरपह्नवम् । न हि चैतन्यं चैतन्येऽध्यस्तम्, इति न तत्र व्यभिचारः । शुक्तिरूप्यान्तःकरण-सुखादिकमपि चैतन्येऽध्यस्तत्वात् चित्तादात्म्यवत्त्वाच्च न नोक्तलक्षणं दृश्यम्, इति न तत्र भागासिद्धिः ॥

दृश्यत्वस्य दृग्-वृत्त्यन्यतरविषयत्वरूपत्वोपपत्तिः ।

एतेन—वृत्तिव्याप्यत्वफल-व्याप्यत्वसाधारणं वृत्तिजनितव्यवहारयोग्यत्वमपि दृश्यत्वम्—व्याख्यातम् । व्यवहारप्रयोजकत्वं च वृत्तेः क्वचित्

फलाव्याप्येषु साक्षात्, फलव्याप्येषु तु तत्प्रतिफलितचैतन्यद्वारेति त्वन्यदेतत् ॥

व्यवहारायोग्यं शुद्धचैतन्यमज्ञानाद्यनुपहितं न दृश्यम्, न वा मिथ्येति न दोषः । यद्यपि घटादौ चित्तादात्म्यं न परेषामिष्टम्; तथापि— "सदेवेदमि"ति सामानाधिकरण्यान्यथानुपपत्त्या इदं रजतमित्यादाविव बाधायां सामानाधिकरण्यमेव, इति श्रुत्यर्थोपपादकताऽनुमानस्य विवक्ष्यते, न तु केवलं युक्तिमात्रमभिप्रेत्य । असत्ख्यातिस्तु पूर्वमेव निरस्ता ॥

वेद्यत्वमत्र दृश्यत्वं दृक्तादात्म्यरूपं न दुष्टमित्यनुपदमेव निरूपितम् । स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिः, स्वव्यवहारव्यापक-स्वातिरिक्त-संवित्सापेक्षकत्वरूपं वा दृश्यत्वम्, स्वविषयस्फुरणाद्यन्यतमत्वव्यापकं यत् स्वातिरिक्तचिदधीनत्वम्, तत्संबन्धित्वमिति तु पर्यवसितो हेतुः ॥

दृश्यत्वस्यास्वप्रकाशत्वरूपत्वोपपत्तिः ।

स्वातिरिक्तचिदधीनस्फुरणकत्वं दृश्यत्वमिति वाऽत्र मन्तव्यम् । संवित्पदेन च व्यवहारे स्वातिरिक्तसंविदनपेक्षत्वमभिप्रेत्य विद्ययाऽभिव्यक्तम्, वृत्त्य-भिव्यक्तं वा चैतन्यमेव विवक्षितम् । तेन चाद्वितीयत्वादिव्यवहारे ब्रह्मणः, स्वातिरिक्तवृत्त्यपेक्षायामपि न स्वप्रकाशत्वविरहः ॥

स्वातिरिक्तचिदधीनस्फुरणकत्वं स्वप्रकाशत्वमिति विवक्षायां न कोऽपि दोषः । आत्मनस्तु शुद्धस्य निर्विकल्पकस्फुरणं तदाकारवृत्तिमात्रमपेक्षते, न चितम् । न चैवं घटादिनिर्विकल्पकव्यवहारेऽपि; तस्य वृत्तिप्रतिफलित-चिदभेदं विनाऽसंभवात् । जडस्य घटादेरज्ञानाविषयत्वेन वृत्त्या ब्रह्मण इवावरणनिवृत्तिमात्रेऽपर्यवसानेन स्वत एव प्रकाशस्यासंभवात् ॥

अविद्या स्वतो न स्फुरति । सौषुप्तानन्देऽपि तदतिरिक्तचिदपेक्षा नास्त्येव । एतेन—अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वम्, तदभावोऽस्वप्रकाशत्वरूपं दृश्यत्वमित्यपि—व्याख्यातम्; तत्रापरोक्ष-व्यवहारयोग्यत्वं ह्यज्ञाननिवर्तकवृत्तिविषयत्वरूपम्, अभानापादकाज्ञान-विषयत्व-तदवच्छेदकत्वान्यतरत्वम् ॥

वेद्यत्वं तु स्वावच्छिन्नचिद्विषयकाभानापादकाज्ञाननिवर्तकवृत्ति-व्याप्यत्वरूपं फलव्याप्यत्वम्, तदभावोऽवेद्यत्वमिति फलव्याप्यत्वाभाव-

समानाधिकरणं यदपरोक्षव्यवहारयोग्यत्वम्, तदभावरूपम्। तत्रोक्तरूपमपरोक्षव्यवहारयोग्यत्वं नाविद्यान्तःकरण-शुक्तिरूप्यादौ, इति तत्र विशेषणसत्त्वेऽपि विशेष्याभावाद् न स्वप्रकाशत्वलक्षणस्यातिव्याप्तिः। घटादौ तु विशेष्यवति विशेषणाभावादस्वप्रकाशत्वमिति व्यवस्था॥

अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमिति विवक्षायां शुक्तिरूप्यादौ, अविद्यान्तःकरणादौ च भागासिद्धिः। अतोऽवेद्यत्वसमानाधिकरणापरोक्षव्यवहारयोग्यत्वाभावो नञ्द्वयघटित एव हेतुर्विवक्षणीयः॥

एवं प्रथमनञर्थयोरुत्तरनञर्थप्रयोतिगिना साकमेव सामानाधिकरण्यम्, नाभावद्वयस्य समुदितस्य, इति न विशेषणवैयर्थ्यम्, व्यर्थविशेषणत्वम्, विशिष्टासिद्धिर्वेति दृश्यत्वविकल्पनिरासः॥

तत्र दृश्यत्वस्य हेतुत्वं भ्रम-प्रमासाधारणानिर्वचनीयत्वेनोभयसाधारणेन। तद्धि न सन्मात्रस्याधिष्ठानस्य; दृक्तादात्म्यरूपस्य दृश्यध्यस्तत्वरूपस्य वा दृश्यत्वस्य सद्रूपे ब्रह्मण्यसंभवात्। यथाच ब्रह्मणि न दृश्यत्वम्, तथा पूर्वमेवोक्तम्, उपपादयिष्यते च॥

### दृश्यत्वस्य प्रमाविषयत्वरूपत्वम्॥

प्रमाविषयत्वस्य दृश्यत्वस्य पक्षकोटिनिक्षिप्तत्वात् तस्यापि दृक्तादात्म्याद् मिथ्यात्वमेव॥

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ॥
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥

इत्युक्तरीत्या सत्त्वासत्त्वौदासीन्येनैव दृश्यत्वस्य हेतुत्वात् शुक्तिकाया इव रजतस्यापि दृक्तादात्म्याद् न शुक्तिकाया एव दृश्यत्वम्, न रजतस्य; शुक्तौ रजताकारवृत्तिम्, रजतं वा प्रति न शुक्तीन्द्रियसन्निकर्षमात्रं कारणम्; तेन हि शुक्तिज्ञानमेव भवति। रजतज्ञानं तु सादृश्यज्ञानादिसध्रीचीनाविद्यापरिणामः; अन्यथा शुक्तिज्ञानकाले सर्वदा रजतज्ञानापत्तिः। अतः शुक्तेरिव रजतस्यापि दृश्यत्वं पृथगस्त्येव॥

बाधज्ञानपर्यन्तं तस्यापि प्रामाण्यमिति पूर्वमेवोक्तम्। बाधानन्तरं तु न

दृक्तादात्म्यम्, न वा तधिष्ठानतादात्म्यम्; तस्याभावात्। चिद्रूपं च न भ्रमः, न वा जन्यप्रमा; नित्यप्रमात्वात् तस्य, इति प्रमाविषयत्वमात्रविवक्षायामपि न दोषः। न हि चिद्रूपं कदापि भ्रम इति तु परमार्थः। वृत्तिविषयत्वं न हेतुरिति पूर्वमेवोक्तम्॥

रजतसंवित् रजताकाराविद्यावृत्तिः, या रजतोल्लेखिनी। तत्र शुक्तिविषयता शुक्त्याकारान्तःकरणवृत्तिविषयता, नाविद्यकवृत्तिविषयता, इति न शुक्तिविषयतातिरिक्तरजतविषयताया अयोगः॥

तत्रेदं रजतमिति प्रतीतिः शुक्तित्वाज्ञानवशाद् तदाश्रयशुक्त्यवच्छिन्नचैतन्यात्मना रजतमवगाहते। तेनैव तस्य भ्रमत्वम्। भ्रमत्वं हि तस्य नेदं रजतमिति रजतात्मताया इदमो रजतस्य च बाधेन। बाध्यत्वं हि शुक्तित्वसाक्षात्कारेण रजतकारणाविद्यायाः स्वरूपतः, समूलस्य रजतस्य वा स्वरूपतोऽभावेन। रजतं हि प्रतीतिदशायां सदित्यपरोक्षतया प्रतीयमानं नासत्, व्यवहारदशायामेव शुक्तितत्त्वज्ञानबाध्यत्वाद् न स्वरूपतः सत्, इति सदसद्विलक्षणम्; तस्य दृश्यत्वं तु तदाकाराविद्यावृत्तिविषयत्वमात्रमादाय, प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्याध्यस्ततया वा। तत्रापि वृत्तिं विना साक्षिभास्यत्वमिति मते दृगध्यस्तत्वेनैव दृश्यत्वम्, कल्पान्तरे तु तस्याऽऽविद्यकवृत्तिविषयत्वादेकदेशत्वेनाविभक्तशुक्त्याकारवृत्तिविषयत्वेन दृश्यत्वम्॥

न च रजताकाराऽऽविद्यकवृत्त्यभावे शुक्त्याकारवृत्तिविषयत्वेन रजतस्य दृश्यत्वम्; अन्याकारवृत्तेरेकदेशत्वं विनाऽन्यविषयकत्वायोगात्। दृश्यध्यस्तत्वेन दृग्विषयत्वं दृशि रजतस्याविद्यावशादुत्पादेन। तदाकारज्ञानस्यापि तत एवोत्पत्तिर्वृत्त्यङ्गीकारपक्षे। सन्निकर्षाभावेनाप्रत्यक्षत्वं त्वन्तःकरणवृत्तिविषयत्वमात्रे॥

न च रजताकारा वृत्तिरन्तःकरणवृत्तिः, चैतन्यं वा। प्रमातृचैतन्याध्यस्तत्वं तु शुक्त्याकारवृत्तिद्वारा शुक्त्यवच्छिन्नचैतन्य-प्रमातृचैतन्ययोरभेदेन न विरुध्यते। आत्मनस्तु दृग्रूपस्य तत्रानध्यासाद् न दृक्तादात्म्यरूपं दृश्यत्वम्। अखण्डाकारवृत्तिविषयत्वमपि तदुपहितस्यैव, न शुद्धस्येति मते न तस्यापि दृश्यत्वम्। उपहितवृत्त्यैवाविद्योपाधिनिवृत्त्या न कोऽपि दोषः॥

इदमेवाविद्यानिवर्तकं ब्रह्मज्ञानं नाम। श्रवणादिकमपि तस्यैव साधनम्। शुद्धब्रह्माकारवृत्तिरेवाज्ञाननिवर्तिकेति मते तु ब्रह्मणोऽपि वृत्तिव्याप्यत्वं कल्पितं यावद्वृत्ति भवत्येव, परं तु नात्र पूर्वोक्तरीत्या वृत्तिव्याप्यत्वं दृश्यत्वम्, किंतु दृगध्यस्तत्वमेव. इति न तत्र व्यभिचारः। वृत्त्यङ्गीकारपक्षे वृत्तेरात्माकारत्वं तदुपाधित्वमात्रम्, न तादात्म्यापरपर्यायम्॥

घटादीनामपि विषयत्वं चिदध्यस्तत्वरूपं चित्तादात्म्यमेव। इदमेव प्रमात्रभिन्नत्वमिति प्रमातृसत्तातिरिक्तसत्ताकत्वाभाव इति च व्यपदिश्यते। विषयसत्ता-प्रमातृसत्तयोश्चाभेदो हि विषयावच्छिन्नचैतन्य-प्रमातृचैतन्ययोरभेदेन विषयचैतन्यसत्तायाः प्रमातृचैतन्यसत्ताश्चैक्येनैकसत्तावादेऽधिष्ठानतादात्म्यमात्रेऽध्यस्तेऽधिष्ठानसत्तातिरिक्तारोपितसत्ताया अनङ्गीकारेण। सत्तादात्म्यमेव हि सर्वेषां सद्रूपे ब्रह्मण्यध्यस्तानामेतन्मतेऽनुगतम्, न तु सत्ता नाम काचन परा सर्वत्रानुगच्छति, इत्यनुगतसत्तानङ्गीकारो न दोषाय॥

चित्तादात्म्यातिरिक्तं विषयत्वम्। तच्च ज्ञानजन्यफलाधारत्वम्। विषयनिष्ठफलजनकत्वं विषयित्वं फलस्य, ज्ञाततायाः, व्यवहारस्य च दुर्वचमिति विशदीकृतं चित्सुख्यादौ। सर्वथा तु दृकूतादात्म्यरूपं दृश्यत्वं मिथ्यात्वानुमानहेतुर्न दुष्टम्॥

स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरूपमपि दृश्यत्वं न दुष्टम्। अत्र वक्तव्यं सर्वं पूर्वमेवोक्तम्॥

तच्च स्वातिरिक्तस्वसंवित्तादात्म्यघटकोपलक्षणीभूतभेदानुयोगित्वम्। तच्च पूर्वोक्तरीत्या सत्त्वासत्त्वौदासीन्येन भेदत्वेनैवात्र विवक्ष्यते, न पारमार्थिकत्वेन, व्यावहारिकत्वेन वा। तादात्म्यं तु जगतो ब्रह्मणश्च "सर्वं खल्विदं ब्रह्म" "सदेव सोम्येदम्" इत्यादौ श्रूयमाणं नापलापमर्हति॥

संविदपेक्षानियतत्वमात्रेण निर्वाहो यदि व्यवहारपदमप्यपरित्यज्य; तर्हि स्वातिरिक्तचिदधीनस्फुरणत्वमात्रेणालम्। नियतिपदं तु वस्तुस्थितिकथनार्थम्॥

व्यवहारपदपरित्यागेन यदि संविदपेक्षानियतत्वमात्रमुच्यते, तर्हि नियमेन संविदपेक्षा—किं स्वरूपलाभार्थम्, उत व्यवहारार्थम्। आद्येऽ-

धिष्ठानतया यद्यपेक्षा, तर्हि दृगध्यस्तत्वे पर्यवसानम्। तत्र चेष्टापत्तिरेव; तस्य समर्थनात् ॥

संवित्पदेन ज्ञानमात्रविवक्षायामपेक्ष्यमाणस्य व्यवहारत्वे तावतैव निर्वाहः; व्यवहारे व्यवहर्तव्यज्ञानमपेक्षितमिति सर्वसंमतत्वात्। असद्व्यवहारे विकल्पाख्यवृत्तेः, चैतन्यव्यवहारे "एकमेवाद्वितीयमि" त्यादिवाक्यजन्यवृत्तेरपेक्षणाच्च न सदसतोरनैकान्तिकत्वम् ॥

संवित्पदेन चैतन्यविवक्षायां शशशृङ्गादिव्यवहारस्य चिदनपेक्षत्वान्नानैकान्त्यम्। चितो व्यवहारे चिदपेक्षा नियता, इति तत्रानैकान्त्यवारणार्थं स्वातिरिक्तपदम्। अपेक्ष्यापेक्षकभावस्य भेदसापेक्षत्वेऽपि व्यावहारिकपदवैयर्थ्यमिष्टमेव, तत्सूचनार्थमेव स्वव्यतिरिक्तपदम् ॥

अत एव स्वव्यतिरिक्तत्वमात्रं नात्र हेतुः; असति व्यभिचारात्, संवित्पदेन चैतन्यविवक्षायां संविदपेक्षानियतत्वेनैव तत्रापि व्यभिचारपरिहारः, इति शुक्तिरजतादेः, प्रपञ्चस्य च सदसद्वैलक्षण्यमनिर्वचनीयत्वं कथमपि न विहन्यते ॥

### जडत्वहेतुनिरासः।

[द्वैतवादः] एतेन—जडत्वहेतुरपि—व्याख्यातः। तत्र जडत्वं ज्ञानानाधारत्वम्, अनात्मत्वम्, अज्ञानत्वं वा, अस्वप्रकाशत्वं वा, अचेतनत्वं वा। नाद्यः; विशिष्टात्मनि पक्षेऽसिद्धत्वात्। न द्वितीयः; अनात्मत्वपदेनात्मातिरिक्तत्वं वा, आत्मत्वानाधारत्वं वा विवक्षितम्, अज्ञानत्वं वा। नाद्यः; परमतेऽसिद्धेः। न हि परमते परमात्मनो जगदतिरिक्तत्वमस्ति। परमार्थतस्तदभावेऽप्यनाद्यविद्याविलसितो भेदस्तु नास्मन्मते सम्मतः। तात्त्विकातात्त्विकभेदाविवक्षया भेदमात्रं त्वसति व्यभिचारि ॥

न द्वितीयः; आत्मत्वस्य प्रागुक्तप्रकारान्तर्भावे साध्याविशिष्टताऽसिद्ध्यनैकान्त्यान्यतमापातात् ॥

न तृतीयः; आत्मनो ज्ञानस्वरूपतामात्रत्वायोगाद् भागेऽसिद्धेः। तथाहि—तद् ज्ञानं सविषयम्, निर्विषयं वा। आद्ये स्वविषयम्, परविषयं वा। नाद्यः; स्ववृत्तिविरोधात्। न द्वितीय; मोक्षे ज्ञानाभाव-

प्रसङ्गात्। निर्विषयज्ञानस्वरूपत्वे चास्तु प्रपञ्चोऽपि तादृशज्ञानरूपः, इत्यसिद्धिप्रसङ्गः ॥

न चतुर्थः; स्वकर्मसंविद्रूपतामन्तरेण स्वप्रकाशतान्तरस्यासंभवात्, स्वकर्मप्रकाशत्वस्यात्मन्यपि परमतेऽभावात् ॥

अचेतनत्वमपि न जडत्वम्; उक्तपक्षावहिर्भावात्, अस्माभिर्ज्ञातृत्वानाधारत्वस्य जडत्वेनाभिलापात् नास्मत्प्रतिनन्दी ॥

जडत्वहेतुसमर्थनम्।

[अद्वैतवादः] एतेन—जडत्वहेतुरपि—व्याख्यातः। स हि ज्ञानानाधारत्वम्, अनात्मत्वम्, अज्ञानत्वं वा, अस्वप्रकाशत्वं वा ॥

तत्रास्वप्रकाशत्वस्य दृश्यत्वरूपत्वस्य पूर्वमुपपादनेन जडत्वस्यापि तद्रूपत्वेऽपि न हानिः। अथवा दृश्यत्वं तदतिरिक्तमेव भवतु, जडत्वमेवास्वप्रकाशत्वम्। सर्वथा त्वत्र वक्तव्यं सर्वं पूर्वमेवोक्तम्। अवसरप्राप्तमपरमपि वक्तव्यमत्र यथावसरं वर्णयिष्यते तुरीयकल्पविचारावसरे ॥

तत्र क्रमेणापरे पक्षा आलोच्यन्ते। ज्ञानानाधारत्वं जडत्वं नोरीक्रियते। तत्रानात्मत्वमात्माधिष्ठानकतादात्म्यघटकभेदप्रतियोगित्वम्। तच्चात्मन एवाधिष्ठानत्वात् तदध्यस्ते प्रपञ्चे वर्तते, असति नास्ति; असत आत्मन्यनध्यासात्। न च ब्रह्मणि; तस्यापि तत्रानध्यासात् ॥

आत्मपदार्थस्तु अज्ञानाश्रयत्व-विषयत्वभागि शुद्धस्वरूपम्, अज्ञानोपहितं वाऽधिष्ठानतार्हम्, न त्वात्मत्वरूपजातिमान्, सत्त्वाधारः, अबाध्यत्वाधारः, ज्ञानत्वाधारः, ज्ञानाधारत्वाधारः, स्वप्रकाशत्वाधारः, आत्मपदवाच्यत्वाधारः, तल्लक्ष्यत्वाधारो वा, येन तद्भिन्नत्वरूपस्यानात्मत्वस्य हेतुत्व आत्मन्यात्मत्वजातेरनङ्गीकारेण तत्र व्यभिचारः, साध्याविशिष्टता, वृत्तिज्ञान-विशिष्टात्मनोर्भागासिद्धिः, शुद्धात्मनि निर्धर्मके ज्ञानत्वाभावेनानैकान्त्यम्, आत्मपदवाच्ये देहादौ तत्पदलक्ष्येन्द्रियादौ च भागासिद्धिश्च क्रमेण, यथासंभवं वा स्यात्, इत्युक्तरूपस्यानात्मत्वस्य हेतुत्वे न कोऽपि दोषः। पराभिमतमात्मस्वरूपं तूक्तप्रकारान्यमतस्वरूपं नात्रात्मपदार्थः ॥

एतेन—अज्ञानत्वमपि—व्याख्यातम्; अत्र ज्ञानपदार्थोऽज्ञानाश्रय-

विषयसंविन्मात्रमनात्मत्वपक्षोक्तं स्वरूपमेव । व्यवहारदशायामज्ञान-कल्पितसदादिभेदमादायात्मादिपदभेदेन व्यपदेशमात्रकल्पनमत्र, वस्तु-गत्या तु न भेदः ॥

तथाचात्रापि संविदधिष्ठनकतादात्म्यघटकभेदप्रतियोगित्वमेव विव-क्षितम्, इति न ब्रह्मणि, अत्यन्तासति वाऽनैकान्त्यम्, न वा वृत्तिज्ञाने भागासिद्धिः; तस्योक्तसंविद्रूपत्वाभावात्, आत्मनोऽपि स्वरूपज्ञानस्य ज्ञानरूपताया उभयसम्मतत्वात्, तस्याज्ञानाश्रयत्वाधिष्ठानत्वादौ विप्रति-पत्तिरस्तीति त्वन्यदेतत् ॥

श्रुतिसिद्धत्वाच्च ब्रह्माधिष्ठानकतावादस्य, तदुपपादकतयैवोक्तानुमानस्य प्रयोगाच्च परमतेऽनङ्गीकारोऽकिञ्चित्करः । प्रपञ्चमिथ्यात्वानुमानप्रयोगा अपि पराभिमतप्रक्रिययैव निरस्यन्ते, अद्वैतिनां तु प्रपञ्चसत्यत्ववादिनः सर्व एव परे, इति परमतेन निराकरणम्, स्वमतेन समर्थनमपि परमतस्यैव तत्त्ववादिनामपि मतत्वान्नामान्तरेण स्वमतेनैव परमतनिरसनम् ॥

श्रुत्यर्थोपपादनार्थतयाऽनुमानानां प्रयोगाद् यथा श्रुत्यर्थ उपपादितो भवति, तथैवानुमानप्रयोगः, तत्समर्थनं च कर्तव्यम्; श्रुत्यर्थोपबृंहणार्थ-त्वाद् मननादेः, इति प्रत्यर्थ 'स्वमतेऽनङ्गीकारात् परमतस्याप्रामाणिक-त्वादि'ति कथाऽकिञ्चित्कारी । ततश्च "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिश्रुति-सिद्धमात्मज्ञानस्वरूपत्वं न कथमप्यपह्नवमर्हति, इति न ज्ञानस्वरूपताऽऽ-त्मनो नानिर्वाह्यतामारोहति ॥

यत्तु—ज्ञानं सविषयं वा, निर्विषयं वा । नाद्यः; स्ववृत्तिविरोधात्, न द्वितीयः; मोक्षे ज्ञानाभावप्रसङ्गात् । निर्विषयज्ञानस्वरूपत्वे चास्तु प्रपञ्चेऽपि ज्ञानस्वरूपत्वम्, इत्यसिद्धिप्रसङ्गः—इति । तदिदं परमतेऽप्या-त्मचिद्रूपतायाः, तदविषयकत्वस्य च स्वीकारात्, आत्मनः स्वप्रकाशत्वेन स्वप्रकाशार्थमितरज्ञानानपेक्षणात्, मोक्षेऽपि वृत्तिज्ञानासत्त्वेऽप्यात्मनो निर्विषयत्वानपायात्, निर्विषयत्वेन ज्ञानस्वरूपत्वे प्रपञ्चस्याप्यात्मवदेव ज्ञानस्वरूपत्वापत्त्या च "यश्चोभयोरि"ति न्यायेनैव परिहारमर्हति ॥

सविषयं तु वृत्तिज्ञानम्, साक्षिज्ञानं वा । न च मतद्वयेऽपि वृत्ति-ज्ञानं साक्षिस्वरूपमेव । तत्र चाद्वैतमतेऽन्तःकरणोपहितं साक्षि, नात्मस्वरूपम् । न चात्मा साक्षिभास्यः; स्वप्रकाशत्वात् । सविषयः साक्षी-

त्वात्मभिन्न एव; परमते तु साक्षिणोऽपि सप्तमेन्द्रियत्वस्वीकारात्। न च स एवात्मा; अन्यथेन्द्रियात्मत्वप्रसङ्गात्, इति जीवस्वरूपस्य, परमात्मस्वरूपस्य वा ज्ञानस्य सविषयत्वं बाधितम्। वृत्तिज्ञानस्य साक्षिणो वा सविषयत्वे न विवादः, इति निर्विषयात्मनो ज्ञानपदार्थत्वे तद्भिन्नत्वहेतुत्वविवक्षायां न कोऽपि दोषः॥

भेदस्तु क्वचिदौपाधिकः, क्वचिदनौपाधिक इति सत्यपि भेदे भेदत्वेनैवात्र हेतुत्वविवक्षणाद् न कोऽपि विरोधः॥

ब्रह्मणः, आत्मनो वा चिद्रूपत्वे हि न निर्विषयत्वं तन्त्रम्, किन्त्वज्ञानभिन्नत्वम्, "सत्यं ज्ञान" मिति श्रुत्या तथाऽधिगतत्वं वा, इति प्रपञ्चस्यापि ज्ञानरूपत्वापादनं न क्षोदक्षमम्॥

एतेन—मोक्षस्वरूपमपि—व्याख्यातम्; निरस्तभेदाखण्डानावृतनिर्विषयसंविन्मात्रस्यैव मोक्षत्वेन, सविषयत्वस्य बन्धप्रयोजकत्वेन च तत्र निर्विषयताया भूषणत्वात्। अस्वप्रकाशत्वविषये वक्तव्यं सर्वं दृश्यत्वनिरुक्तिप्रकरण एव विशदीकृतम्। स्वकर्मकसंविद्रूपतामन्तरेण स्वप्रकाशत्वान्तरं दुर्वचमिति तु तस्यान्यप्रकारस्य निरुक्तत्वात्, उत्तरत्र स्वकर्मकसंविद्रूपताया निराकरिष्यमाणत्वाच्च न विकल्पसहम्॥

अवेद्यत्वसमानाधिकरणमपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति हि चित्सुख्यामन्यत्र स्वप्रकाशताविचारप्रकरणेऽप्युक्तम्। स्वस्यैव स्वकर्मत्वविरोधात् स्वकर्मकसंविद्रूपत्वं व्याहतम्॥

तत्र संवित्पदार्थों यदि जन्यज्ञानम्, तर्हि तस्य मुक्तावभावाद् न स्वप्रकाशताहानिः। तत्रापि वृत्तिस्वीकारस्तु निर्विशेषे तस्य बाधात् श्रुतिविरुद्धः। चिद्रूपस्य संवित्पदार्थत्वे तु तस्य निर्विषयस्य कर्माप्रसिद्धम्। अधिकं यथावसरं विवेचयिष्यते॥

## परिच्छिन्नत्वहेतुनिरासः।

[ द्वैतवादः ]—एतेन—परिच्छिन्नत्वहेतुरपि—निरस्तः। तत्र परिच्छिन्नत्वम्—देशतः परिच्छिन्नत्वम्, कालतः परिच्छिन्नत्वम्, देशविशेषगतात्यन्ताभावप्रतियोगित्वं वा॥

तच्चाधिष्ठानविशेषापेक्षम्, अधिकरणविशेषापेक्षं वा। तत्र च क्वचि-

त्सत्त्वे तत्र तदभावो व्याहतः। तदनधिकरणे तदभावस्तु न मिथ्यात्वप्रयोजकः। ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वं तु तस्याधिष्ठानतयां बाध्यत्वमेव, इति साध्याविशिष्टता। कालपरिच्छेदश्चानित्यता॥

न च काले, कालपरिच्छेदः इति न तदसत्यता, इति कालस्यैतत्कालपरिच्छेदायोगेन व्याघातः। कुतश्चाकाशादेः कालपरिच्छेदाध्यवसायः ?

जडत्वहेतुनेति चेत्, न; तस्यापाकृतत्वात्, घटादौ कार्यताप्रयुक्तत्वाच्च परिच्छिन्नत्वस्य। न च सर्वं जडं कार्यम्; अविद्याया अकार्यत्वात्, तस्याश्च कार्यत्वेऽनादित्वपरिभाषा लुप्येत, तस्य कारणाभावश्च। पञ्चमप्रकाराविद्यानिवृत्तौ जडत्वस्य व्यभिचारः। न च तस्य परिच्छिन्नत्वम्; पुनरावृत्तिप्रसङ्गात्॥

न तृतीयो वस्तुपरिच्छेदोऽपि हेतुः; "नेति नेती"ति ब्रह्मण्यपि प्रपञ्चनिषेधेन ब्रह्मणि व्यभिचारात्, सोऽप्यविद्याविलसित इति चेत्, तत्किं पारमार्थिकभेदवत्त्वं हेतुः, यद्योम्, तर्हि नाद्वैतसिद्धिः, न वा प्रपञ्चे हेतुसिद्धिः॥

परिच्छिन्नत्वसमर्थनम्।

[अद्वैतवादः] एतेन—परिच्छिन्नत्वहेतुरपि—व्याख्यातः। तत्र परिच्छिन्नत्वं स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वम्, बाध्यत्वं वेत्यनर्थान्तरम्॥

न च साध्याविशिष्टता; साध्यान्तर एव हेतुत्वात्। तत्र साध्यं सद्विविक्तत्वम्, प्रमाणासिद्धत्वापरपर्यायम्। इदमेवाभिप्रेत्योक्तम्—प्रमाणसिद्धत्वं चाबाध्यत्वव्याप्यमित्यन्यदेतदिति॥

तत्र सत्त्वं। न कालस्यांशिनः कालनिष्ठात्यन्ताभावप्रतियोगित्वम्, आकाशस्य चाव्याकृतस्य नाव्याकृताकाशनिष्ठात्यन्ताभावप्रतियोगित्वम्, इति न हेत्वसिद्धिः। ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वं तु दुर्वारम्; अव्याकृताकाश-कालादेरपि कार्यत्वात्। तत्कार्यत्वं हि—"तस्मादाकाशः संभूतः" इत्यादिश्रुतिसिद्धम्, न तु जडत्वहेतुप्रयुक्तम्। वस्तुतस्तु ततोऽपि तत्परिच्छेदो नायुक्तः। समर्थितश्च जडत्वहेतुः स्वप्रकरणे॥

न च कालपरिच्छिन्नत्वं कार्यताप्रयुक्तम्; अनादीनामविद्यादीनामपि "विद्वान्नाम-रूपाद्विमुक्तः" इत्यादिश्रुतिमहिम्ना नाश्यत्वावगमात् "नेह ना-

नास्ती"ति ब्रह्मणि निषेधाच्च न कार्यत्वप्रयुक्तं परिच्छिन्नत्वम्, न चानादि नाशं नार्हतीति व्यक्तमन्यत्र। अनादित्वं ह्युत्पत्तिमात्रविरोधि, न ध्वंसविरुद्धम्; प्रागभावे व्यभिचारात्, प्रकृत्या अविद्याया अप्यनादेर्नाशाच्च। उक्तं च—

प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्त्वादिकानपि।
कर्माणि सूक्ष्मदेहं च जायमाना हरेर्दृशिः॥

दहेदि"त्यादिनाऽनादेरपि नाश्यत्वावगमात्। अतो भावत्वविशेषणेऽपि न निस्तारः॥

पञ्चमप्रकाराविद्यानिवृत्तौ सदसद्विलक्षणत्व-ज्ञाननिवर्त्यत्वे इव सत्य-मिथ्याविलक्षणायामपि न प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमपि नास्ति; ब्रह्मणस्तदनधिकरणत्वात्,॥

"प्रतिपन्नोपाधौ" इति लक्षण उपाधिपदेनाधिकरणविवक्षा हि पञ्चम-प्रकाराविद्यानिवृत्तिसाधारण्यमपेक्ष्यैव। अन्यत्र तु तेनाधिष्ठानस्यैव ग्रहणम्। अधिकं न्यायरत्नदीपावल्यादौ, इति न तत्रापि व्यभिचारः। "नेति नेती-" ति निषेधो हि ब्रह्मणि प्रपञ्चमिव तद्भेदमपि तत्र निषेधति, इति न ब्रह्मणि-व्यभिचारः॥

### सत्त्वप्रत्यक्षेण मिथ्यात्वानुमानबाधः।

[द्वैतवादः] सन् घट इत्यध्यक्षबाधितं प्रपञ्चमिथ्यात्वानुमानम्। तत्र सत्त्वं प्रत्यक्षग्राह्यमबाध्यत्वम्। तत्र प्रामाण्यं स्वतो ग्राह्यम्, अप्रामाण्यं परतो ग्राह्यम्। सति चैवं प्रकृते बाधकप्रमाणादर्शनात् त्रिकालाबाध्यतैव निरपवादा सिध्यति॥

यद्यपि प्रत्यक्षं वर्तमानसत्त्वग्राहि स्वकालीनं सत्त्वमेव गृह्णाति; तथापि त्रिकालासत्त्वं प्रतिबध्नाति; त्रिकालासत्त्वाभावो हि सत्त्वं कदाचित् सत्त्वेन, कालत्रयेऽपि सत्त्वेन वा। तत्र कालत्रयग्रहणे सामर्थ्याभावेऽपि कदाचित् सत्त्वग्राहिणाऽऽक्षेपेण कथं कालत्रयासत्त्वं न प्रतिबध्यम्? गन्धर्वनगर-शुक्तिरूप्यादि तु नाक्षग्राह्यम्; विप्रतिपन्नत्वात्। तत्राधिष्ठानं प्रधानमेव हि प्रत्यक्षग्राह्यम्। तत्प्रत्यक्षत्वेन हि शुक्तिरूप्यादिप्रत्यक्षत्वम्॥

न च घटादिसत्त्वग्राहिप्रत्यक्षस्याप्रामाण्यं परतः तद्ग्राहकप्रमाणान्तर-संवादि, येन तदभावात् प्रत्यक्षस्याप्रामाण्यं स्यात्, न वा मिथ्यात्व-

ग्राहकप्रमाणबाधकात्, कालान्तरे किंचिद् बाधकं भविष्यतीति शङ्कामात्रेण वा भवेत् ॥

शुक्तिरूप्यादिप्रत्यक्षेणापि सत्त्वग्रहणेऽपि घटादिवन्नात्यन्ताबाध्यता; प्रामाण्यस्य स्वतस्त्वेन, संवादस्य बाधकैकापोद्यतया तद्बाधकेन तत्सत्त्वग्राहिणा प्रामाण्यत्यागेन तद्विषयकासत्त्वेऽपि घटादौ तथा बाधकाभावान्न तत्सत्त्वग्राहिप्रामाण्यत्यागः; बाधकाभावात् ॥

न चात्राधिष्ठानानुवेधमात्रं सत्त्वम्; 'नीलो घटः' इत्यादिप्रतीत्या नैल्यादेरप्यधिष्ठानानुवेधमात्रम्, न घटादिगतत्वमित्यापत्तेः ॥

वस्तुतस्तु—नात्राधिष्ठानस्य ब्रह्मणो भानम्; तस्य रूपादिहीनस्याचाक्षुषत्वात्, राहोश्चन्द्रावच्छेदेनेव घटाद्यवच्छेदेन प्रत्यक्षत्वे शब्दावच्छेदेनाकाशस्यापि श्रौत्रत्वापत्तिः। राहोस्तु दूरदोषेणाज्ञातस्य चाक्षुषत्वं भ्रममात्रम्॥

परमार्थतस्तु—वर्तमानसत्ताग्राहि प्रत्यक्षं त्रैकालिकसत्ताप्रतिषेधाभावं गृह्णातीति स्वीकर्तव्यम्; अन्यथा वर्तमानकालिकौष्ण्यग्राहिप्रत्यक्षस्य साक्षाद् ग्राह्याभावावगाहित्वेन बाधकत्वं न स्यात्, तत्रापि त्रैकालिकानौष्ण्याभावाव्याप्यैककालीनौष्ण्यग्राहकत्वेनैव रूपेण प्रत्यक्षस्य विरोधित्वम्, न साक्षादिति वक्तुं शक्यत्वात् ॥

वस्तुतस्तु—साक्षाद् ग्राह्याभावविषयकत्वेनैव बाधकत्वम्। न च—प्रत्यक्षगृहीतैककालीनसत्तायास्त्रैकालिकसत्तानिषेधाभावरूपत्वाभावात् कथमेतदिति—वाच्यम्; स्यादिदम्—यदि सार्वकालिकी सत्ता सार्वदेशिकी च या सत्ता तत्प्रतिषेधो बाध इति देश-कालयोरपि निषेध्यकोटौ प्रवेशः, किन्तु सर्वस्मिन् देशे, काले च या सत्ता, इत्येवमधिकरणकोटावेव। तथाच सत्ताप्रतिषेधमात्रस्य बाध्यत्वेन, प्रत्यक्षेण च सत्तामात्रस्यैव गृहीतत्वेन साक्षाद् ग्राह्याभावावगाहित्वेनैव विरोधित्वम्। तदुक्तम्—

"स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम् ॥
प्रतिषेधं निरुन्धानो गृह्णात्येव ह्यबाध्यताम् ॥"

इति। सत्यम्, परोक्षदेश-कालघटितस्याबाध्यत्वस्य न प्रत्यक्षत्वम्, यदि तदत्यन्ताभावरूपं स्यात्, त्रैकालिकनिषेधप्रतियोगिभिन्नत्वस्यैवाबाध्यत्वे तु भेदप्रत्यक्षे प्रतियोगिप्रत्यक्षस्यानपेक्षत्वाद् न बाधविरोधः।

त्रैकालिकसत्त्वे त्रैकालिकं न विशेषणम्, किन्तूपलक्षणमिति कृत्वाऽपि कालत्रयाप्रत्यक्षत्वेऽपि त्रैकालिकसत्ताग्रहणं न विरुद्धम्॥

अत एव कादाचित्कस्यापि घटादेस्त्रैकालिकनिषेधरूपात्यन्ताभावविरह-रूपत्वम्, इति "सन् घटः" इत्यादिप्रत्यक्षेण मिथ्यात्वानुमानबाधो युज्यते॥

सत्त्वप्रत्यक्षेण मिथ्यात्वानुमानाबाधः।

[अद्वैतवादः] "सन् घटः" इत्यादिप्रत्यक्षबाधितं न घटादिप्रपञ्च-मिथ्यात्वानुमानम्। तत्र घटादिगतं सत्त्वम्—विधिगम्यत्वम्, अर्थक्रिया-कारित्वम्, प्रातिभासिकेतरत्त्वम्, असत्त्वातिरिक्तत्वम्, सत्ताजात्यादिमत्त्वं वा गृहीत्वा परेषां बाधापादनमकिञ्चित्करम्; स्वीकारात्, अन्यत्तु सत्त्व-मबाध्यत्वं कुत्र वा केन वा प्रमाणेनाधिगतम्?

यदि ब्रह्मणः "सत्यं ज्ञानमि" त्यादिश्रुत्या, तर्हि तावता प्रपञ्चस्य ब्रह्मे-तरस्य किमायातम्? "अतोऽन्यदार्तम्", "विद्वान्नाम-रूपाद्विमुक्तः" इत्या-दिश्रुत्या तदतिरिक्तस्यासत्त्वावगमात् तदसत्यत्वमेव श्रुत्याऽवसीयते॥

अबाध्यत्वं च ब्रह्मणः सर्वाधिष्ठानत्वात्, तदधिष्ठानस्यान्यस्याभावात् तदविवर्तत्वात्, तद्बाधकज्ञानाभावाच्च, तत्तु न तद्विपरीतस्य ब्रह्मेतरस्या-ध्यस्तैकस्वभावस्य, तदधिष्ठानसाक्षात्कारनिवर्त्यैकस्वभावस्य च॥

सति चैवमबाध्यत्वं यदि स्वाधिष्ठानसाक्षात्कारानिवर्त्यत्वरूपं विवक्ष्यते, तर्हि घटादेरपि तदधिष्ठानसाक्षात्कारानिवर्त्यत्वं प्रत्यक्षेण गृह्यत इति वक्त-व्यम्। तथाच स्वाधिष्ठानसाक्षात्काराबाध्यत्वं ब्रह्मण इव घटादेरप्यधिष्ठाना-भावे शशशृङ्गादिभ्यो विशेषे कारणाभावात् सत्त्वेनोक्तविधेन जगतः प्रतीतिरनुपपन्ना, इति शशशृङ्गादीनामिव सत्त्वप्रत्यक्षमेवात्र बाधितम्। सत्तासामान्यादिरूपं पारिभाषिकं तु सत्त्वं न मिथ्यात्वविरोधीति परैः स्वयमेवोक्तम्, इति न "सन् घट" इदिप्रत्यक्षेण घटादिमिथ्यात्वानुमानस्य बाधः, इति किं वा मिथ्यात्वमभिप्रेत्यायं प्रत्यक्षबाध इति वक्तव्यम्॥

यदि सदसद्विलक्षणत्वं मिथ्यात्वम्, तर्हि सद्रूपब्रह्मतादात्म्येनापि सत्प्रतीत्युपपत्त्या कथं सत्त्वासत्त्वोभयाभावलक्षणमिथ्यात्वानुमानबा-धोऽनेन प्रत्यक्षेण? शुक्तिरूप्यादीनां मिथ्याभूतानामपि सत्प्रतीतिविष-यत्वेन मिथ्यात्वेन तस्याविरोधात्॥

तत्र सत्त्वं घटप्रतीतौ भासमानं पटादौ भासमानं चैकरूपतयानुवर्तमानं सद्रूपब्रह्मणोऽनुगमेनैवेति स्वीकर्तव्यम्, इति ब्रह्मासाधारणं सद्रूपमेव घटादिकमपीति न युक्तम्, इति सत्तादात्म्यमेवात्र भासते, इति न सद्रूपता, अबाध्यत्वं वा घटादिगतं ब्रह्मणश्चैकम् ।।

अत्र सत्त्वमसत्त्वाभाव इति यदुच्यते, तत्रासत्त्वं यदि सत्त्वाभावः सत्त्वासत्त्वयोः परस्परविरहत्वेन, तर्हि तु बाधितम्; तदसंभवस्य पूर्वमेवोपपादनात्, किन्तु क्वचिदुपाधौ सत्त्वेन प्रतीत्यनधिकरणत्वरूपासत्त्वाभावः सत्त्वम्, असत्त्वं तु बाध्यत्वरूपमिति पूर्वमेवोक्तम् ।।

सति चैवमुक्तविधसत्त्वाभावासत्त्वाभावरूपमिथ्यात्वस्य केवलबाध्यत्वरूपत्वाभावात्, उक्तविधासत्त्वाभावस्य क्वचिदुपाधौ सत्त्वेन प्रतीत्यधिकरणत्वस्य शुक्तिरूप्यादिसाधारणस्य मिथ्यात्वाविरोधित्वाच्च न प्रत्यक्षानुमानयोरत्र विरोधगन्धोऽपि । विरोधित्वे सति प्राबल्यं हि बाधकत्वे तन्त्रम्, न चात्र विरोधः, न वा प्राबल्यम्, इति स्वप्रकरणे व्यक्तीभविष्यति ।।

सर्वथा तु कालत्रयादीनामुपलक्षणतयैव भानम्, न विशेषणतयेति परेषां सिद्धान्ते सत्त्वासत्त्वयोः केवलयोः परस्परविरहत्वाभावेनाविरोधाद् न कालात्ययापदेशकथाऽत्र ।।

सत्त्वासत्त्वयोः परस्परविरहरूपत्वेऽपि सन् घट इति प्रत्यक्षं वर्तमानकालिकमेवाबाधं विषयीकरोति, न तु भाविबाधाभावम्; "अन्यथेदं रजतम्" इत्यादावपि सत्त्वावगाहिना प्रत्यक्षेण भावितद्बाधावगाहनासंभवात् रजतमिथ्यात्वमपि न सिध्येत्; स्वतः प्रामाण्यस्योभयत्र प्रतिभानदशायामविशेषात् । प्रामाण्यस्य स्वतस्त्वेन संवादानपेक्षणेऽपि बाधकैकापोद्यतया शुक्तिरूप्यादौ बाधकेन तत्सत्त्वग्राहिणः प्रामाण्यत्यागेन विषयस्यासत्त्वं तु प्रकृतेऽपि समानम्; स्वाधिष्ठानशुक्तितत्त्वसाक्षात्कारेण रजतस्येव स्वाधिष्ठानरूपाखण्डाकारवृत्त्या घटादेरपि बाधाविशेषात्, स्वोत्तरकालीनबाधकज्ञानेन पूर्वावगतप्रामाण्यपरित्यागस्यावश्यकत्वेन विषयमिथ्यात्वनिर्णयस्यैव युक्तत्वाच्च ।।

वस्तुतस्तु—"सन् घटः" इत्यधिष्ठानानुवेधमात्रम् । अत एव "सदेव सोम्येदमि" तिवद् बाधायामेव सामानाधिकरण्यम्, न तु नीलो घट इतिवद् विशेष्य-विशेषणभावे ।।

न हि घटसामान्यस्य नीलद्रव्यमधिष्ठानम्; परिणामित्वाद् नीलद्रव्यस्य। तत्र तु कार्य-कारणयोः समसत्ताकत्वात् कारणधर्मः कार्येऽपि वर्तत इति युक्तम्, अध्यारोपे तु कारणस्य कार्ये तादात्म्यमात्राध्यासः, कार्यविषमसत्ताकत्वं चेति व्यक्तमन्यत्र। घटाद्यध्यासस्तु मूलाविद्यावशात् सृष्टिकालीनः पूर्व-पूर्वसृष्टिक्रममनुसृत्यैव, इति प्रवाहतोऽनादित्वाद् नात्रान्योऽन्याश्रयः॥

"सन् घटः" इति प्रत्यक्षं तु नीरूपस्यापि सद्रूपस्य—ब्रह्मणो रूपादीनामिव नियतेन्द्रियग्राह्यत्वाभावात्, कालादेरिव, राहोः शिर इत्यादौ चन्द्रावच्छेदेन राहोरिव च घटाद्यवच्छेदेन निरूह्यते। सर्वथा तु नैमित्तिके सति निमित्तानुसरणम्, न तु निमित्तमस्तीति नैमित्तिकारोप इति न्यायात् शब्दावच्छेदेनाकाशप्रत्यक्षापात्तिर्नावसरति॥

परमार्थतस्तु—सत्यत्व-मिथ्यात्वावगाहिप्रत्यक्षानुमानयोर्बाध्य-बाधकभावो न तद्वत्ताज्ञानं प्रति तदभाववत्ताज्ञानं बाधकमिति विधया प्रतिबध्य-प्रतिबन्धकभावेन; मिथ्यात्व-सत्यत्वयोः प्रपञ्चाभाव-तदभावरूपयोरपि प्रपञ्चबाधकज्ञानबाध्यत्वेन विरोधाभावात्। प्रपञ्चासत्यत्वं यदि प्रपञ्चाभावः, तन्मिथ्यात्वं च प्रपञ्चरूपः तर्हि तयोर्विरोधो यदि रजत-तदभावयोरिव, तर्ह्येकबाधकाबाध्यत्वेन तयोर्विरोध इति वक्तव्यम्। न चैवं प्रकृते; उभयोरप्येकबाधकबाध्यत्वात्। न हि प्रपञ्चसत्त्वं प्रपञ्चाभाव इत्यनयोरुभयोरेकं प्रपञ्चमिथ्यात्वं गृह्णाति, अपरं तन्मिथ्यात्वम्; तयोरुभयोरविरोधात्, इति कथं प्रत्यक्षेणानुमानबाधः? इति प्रपञ्चाभावमिथ्यात्वमपि प्रपञ्चत्वेनैव, न तु प्रपञ्चाभावाभावत्वेन, यथा स्वप्ने गजतदभावयोरिति व्यक्तमन्यत्र॥

न चैवं वह्न्यौष्ण्यप्रत्यक्ष-तदभावानुमानयोः; तत्र प्रतियोगितावच्छेदकस्यौष्ण्य-तदभावत्वयोर्भेदात्, इति तदीयन्यायेन बाध्य-बाधकभावव्यवस्था नात्र युक्ता॥

निष्कर्षस्तु—सत्त्वमबाध्यत्वमिति कल्पमादायैवात्र प्रत्यक्षेणानुमानबाध उपक्षिप्यते। अबाध्यत्वं च सत्त्वमात्रं सदिति प्रतीतिगोचरं त्रिकालाबाध्यत्वमेवेति वक्तव्यम्। तच्चाधिष्ठानव्यतिरेकेणाभाव एव। न चात्राधिष्ठानम्, तद्व्यतिरेकेणाभावो वा भावी, अतीतादिकालो वा प्रत्यक्षगोचरः, किन्तु सत्तादात्म्यमात्रं वर्तमानमत्र भासते। तच्च प्रत्यक्षमेव॥

न च कालप्रत्यक्षतामात्रचर्चाऽत्र, किंत्वतीतभाविकालयोरपि, इत्यती-

तादिकालानां बहूनामत्र प्रत्यक्षायोग्यानामप्रत्यक्षाणां च प्रत्यक्षत्वमाश्रित्य प्रत्यक्षेण बाधकथा कथामात्रमेव ॥

परमार्थतस्तु—वर्तमानमात्रग्राहिप्रत्यक्षं न मिथ्यात्वबाधकम्; वर्तमानत्व-त्रिकालाबाध्यत्वयोरव्याघातात् , इति वर्तमानकालिकसत्त्व-त्रैकालिकसत्त्वयोर्विरोधचर्चा मम मातावन्ध्याचैव ॥

यत्तु—"स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम् ॥
प्रतिषेधं निरुन्धानो गृह्णात्येव ह्यबाध्यताम् ॥"

इति, तदिदं यदि त्रैकालिकाबाध्यत्वमभिप्रेत्य, तर्हि व्याहतम्। घटस्य वर्तमानाबाधावगाहिप्रत्यक्षं तस्य त्रिकालाबाधविषयकानुमान-बाधकमित्यभिप्राये तु तत् कथमपि नावसरति। न चात्र "सन् घटः" इत्यत्र सत्पदार्थोऽबाध्य इति पक्षे तस्य सङ्गतिरपि। सत्ताजात्यादिकं तु नात्र सत्त्वम् , किं त्वबाध्यत्वमेवेति कृत्वा खलु प्रत्यक्षेणानुमानबाधशङ्का। सा च नात्रावसरति ॥

तत्र—इदं रजतमित्यत्रेदंतादात्म्येन भासमानं रजतं प्रतिभासमात्रका-लिकबाधाविषयरजतविषयकं 'नेदं रजतमि'ति त्रैकालिकरजतबाधज्ञानस्या-बाधकम्, किन्तु रजतनिषेधेनोत्तरेण तत्र पूर्वस्यैव। एवमत्रापि प्रत्यक्षेण नानुमानबाधः, किं त्वनुमानेनैव प्रत्यक्षबाधः; परत्वात् ॥

अयमत्र निष्कर्षः—"सन् घटः" इति प्रत्यक्षं ब्रह्मसाक्षात्कारोऽपि शुक्ति-ज्ञानवत्। तत्र चोभयोरपि प्रत्यक्षत्वाविशेषे बाधज्ञानं पाश्चात्यमेव; पूर्व प्रत्यक्षहेतुदोषविनाशपूर्वकत्वात् , अबाधितत्वाच्च। अनुमानमपि तु बाधक-ज्ञानोपबृंहकं तन्मूलं च तद्वदेव बाधकम्, इति प्रत्यक्षस्यैवात्रानुमानेन बाधः, न तु विपरीतम्। संभाव्यमानदोषत्वादनुमाननिरपेक्षप्रत्यक्षस्य, निर्दुष्टत्वाच्चासंभाव्यमानपुरुषदोषवेदमूलकानुमानस्य ॥

अनुमानेन प्रत्यक्षबाधायोगः।

[ द्वैतवादः ] एतेन—अनुमानेनैव प्रत्यक्षस्य बाध इति प्रतिबन्दी—प्रत्युक्ता; प्रत्यक्षविरोधेन प्राप्तमरणावस्थस्य प्रत्यक्षविरोधाक्षमत्वादनुमा-नस्य; अन्यथा वह्निशैत्यानुमानमपि तदुष्णताग्राहिप्रत्यक्षबाधकम् , प्रमाणं

च स्यात् । "नेह नानास्ती"त्यादिश्रुतिविरोधस्तु श्रुतेः प्रत्यक्षप्राप्त-तात्त्विकार्थबोधकत्वेनानुवादकत्वेनाप्युपपत्त्या न संभवति ॥

अतः सगुणवाक्यानामपि प्रामाण्योपपत्त्या तद्विरोधेन निर्गुणवाक्या-नामप्रामाण्यमापद्येत; श्रुतेरतात्त्विकार्थबोधकत्वस्य श्रुतिविरोधेनान्यत्र स्वीकारात् तेनैव न्यायेन प्रत्यक्षविरोधेन निर्गुणवाक्यानामेव सगुण-वाक्यानुगृहीतप्रत्यक्षविरोधेन, कथञ्चनान्यथानयनेन वा तत्त्वावेदकत्वम्, अनुवादकत्वं वा युक्तम् ॥

इयमेव नीतिः स्थायित्वप्रत्यभिज्ञानेन क्षणिकत्वसाधकतर्काणाभास-सत्वे । शुक्तिरूप्यादिस्थले तु नेदं रजतमिति रजतबाधोऽपि प्रत्यक्षः, इति तत्र प्रत्यक्षान्तरानुग्रहेणानुमानेन प्रत्यक्षबाधो युक्तः; तत्र बाधप्रत्यक्षस्य विशेषदर्शनजन्यत्वेन प्राबल्यात्, नैवमत्र ॥

एतेन—नभोनैल्यप्रत्यक्षस्य तदमूर्ततालिङ्गकानुमानेन बाधोऽपि—व्याख्यातः । तत्राप्याप्तवाक्येनैव बाधः, नानुमानेन । अत्राप्तवाक्यप्राबल्यं तु नभोनैल्यप्रत्यक्षानुगृहीतत्वेन । न चैवं मिथ्यात्वश्रुतेः, तन्मूलानुमानस्य वा प्राबल्यम्; श्रुतेः प्रत्यक्षमूलकत्वेऽपौरुषेयत्वभङ्गापत्तेः ॥

तत्र नभोनैल्यप्रत्यक्षं दूरदोषजन्यं दुर्बलम्, तदरूपप्रत्यक्षं दोषा-जन्यं प्रबलमिति तु निष्कर्षः । सर्वथा तु प्रबलप्रत्यक्षानुग्रहेणैवानुमानस्य प्रत्यक्षबाधकत्वम् । न चैवं प्रकृते ॥

यद्यप्यद्वैतमते नभोनैल्यं न बाधितम्, नभो नीलमेव, इति न तदनीलत्वानुमानम्, तेन बाधो वा; तथापि तार्किकनयेनेदमुदाहरणम् । अद्वैतासाधारणमुदाहरणं शुक्तिरूप्याभावप्रत्यक्षानुगृहीतानुमानेन रजत-धीबाधः ॥

एतेन—प्रत्यक्षत्वेन रजतप्रत्यक्षवद् घटादिसत्त्वप्रत्यक्षबाधोऽपि—परास्तः; वह्न्यौष्ण्यप्रत्यक्षे व्यभिचारात्, जरद्गवादिवाक्यवत् वाक्य-त्वेन श्रुतिवाक्यानामप्यप्रामाण्यापत्तेश्च ।

मिथ्यात्वानुमानेन सत्त्वप्रत्यक्षबाधः ।

[अद्वैतवादः] अत एव—अनुमानेनैव प्रत्यक्षबाधः, न प्रत्यक्षेणानु-मानबाध इति प्रतिबन्द्यपि—व्याख्याता । तत्र किं मरणावस्थाऽनुमानप्राबल्ये

प्रत्यक्षस्य, उत प्रत्यक्षप्राबल्येऽनुमानस्येति विशये, यावत्प्रपञ्चसत्त्वप्रत्यक्षप्राबल्यनिर्णयमनुमानेनैव पाश्चात्येन प्रत्यक्षबाध्यत्वकथा युक्ता; अन्यथा "इदं रजतं सत्" इति रजतस्यापि सत्त्वप्रत्यक्षत्वाविशेषणात् तन्मिथ्यात्वानुमानमप्यप्रमाणं स्यात्, नभोनैल्यप्रत्यक्षेण वा तदनैल्यानुमानम्। एवं चन्द्रप्रादेशिकत्वादिप्रत्यक्षेण तदधिकपरिमाणानुमानमपि बाधितं स्यात्,॥

यदि तत्राप्तवाक्यानुगृहीतत्वेन 'नेदं रजतमि'ति प्रत्यक्षमूलाप्तवाक्यानुगृहीतानुमानेन निर्दोषेण सदोषत्वेन संभाव्यमानप्रत्यक्षस्य बाधः, तर्हि प्रकृतेऽपि "नेह नानास्ती"ति श्रुत्यनुगृहीतानुमानेन प्रत्यक्षबाधः समानः॥

आप्तवाक्यत्वनिर्णये लौकिके विषये प्रत्यक्षमूलत्वमुपकारकम्, न तु प्रत्यक्षमूलत्वं बाधकतावच्छेदककोटिप्रविष्टम्॥

न ह्याप्तवाक्यत्वं प्रामाण्यप्रयोजकम्; अपौरुषेयवाक्याप्रामाण्यापत्तेः, किं त्वनाप्ताप्रणीतत्वमेव वाक्यप्रामाण्ये प्रयोजकम्। तत्तु प्रत्यक्षमूल आप्तवाक्य इवापौरुषेये वेदेऽपि समानम्, इत्यनुमानस्य श्रुत्यनुगृहीतस्यैव प्राबल्याद् मरणावस्थमत्र सत्त्वप्रत्यक्षमेव, न मिथ्यात्वानुमानम्, इति प्रत्यक्षबाधितार्थबोधकतया श्रुतेस्तत्त्वावेदकत्वेनानुवादकत्वमपि परास्तम्; अन्यथा चन्द्रप्रादेशिकत्वप्रत्यक्षबाधितातात्त्विकार्थबोधकत्वेन तदधिकपरिमाणानुमानस्याप्यतात्त्विकार्थबोधकस्याप्रमाणिकत्वापत्तिः॥

तत्र च श्रुतेः प्रत्यक्षप्राप्तार्थबोधकत्वेनानुवादकत्वेऽवश्यवक्तव्ये निर्गुणवाक्यानानुवादकत्वम्, तत्प्रामाण्यं च स्वीकृत्य प्रत्यक्षानवगतनिर्गुणवाक्यबाधितसत्त्वानुवादकत्वेन सगुणवाक्यानुवादकत्वमेव युक्तम्; अन्यथा मिथ्यात्वानुवादकत्वं निर्गुणवाक्यानां निष्प्रयोजनम्, निर्गुणवाक्यानां सर्वथाऽप्रामाण्यप्रयोजकं च स्यात्। अद्वैतमते तु यावद्विषयसत्त्वं सर्वेषां प्रमाणानां व्यावहारिकतत्त्वावेदकत्वेन प्रामाण्यम्, उपासनापेक्षितगुणसमर्पकत्वेन सप्रयोजनत्वं चेति न किमप्यप्रमाणम्, न वाऽप्रयोजनम् च, इति न जरद्गवादिवाक्यसामान्यं निर्गुणवाक्यानाम्॥

एतेन—स्थायित्वप्रत्यभिज्ञानेन क्षणिकत्वानुमानमपि—व्याख्यातम्; उभयोरपि लौकिकत्वेनाबाधितप्रत्यक्षप्राबल्यव्यवस्थितेः॥

वस्तुतस्तु—शुक्तिरूप्यस्थले नेदं रूप्यमिति प्रत्यक्षेणेव प्रकृते निर्दोषापौरुषेयशब्दमूलमिथ्यात्वप्रत्यक्षेण, तन्मूलानुमानेन वा संभाव्य-

मानदोषप्रत्यक्षस्य बाधो युक्तः, इति मिथ्यात्वानुमानस्य न प्रत्यक्षेण बाधः, प्रत्युतानुमानेन श्रुत्यनुगृहीतेन प्रपञ्चसत्त्वप्रत्यक्षस्यैव सः ॥

श्रुत्या मिथ्यात्वानुमानबाधः ।

[द्वैतवादः] एतेन—मिथ्यात्वानुमानस्य श्रुतिविरोधोऽपि—व्याख्यातः । तथाहि "विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतमि"ति श्रुतिविरोधोऽपि मिथ्यात्वानुमानस्य ॥

अयमस्याः श्रुतेरर्थः—हे मघवानौ युवयोः संबन्धीदं विश्वम्= संकोचकाभावात् प्रत्यक्षसिद्धं सर्वं सत्यम्=ब्रह्मवदबाध्यम् । अत एव विश्वान्तर्गतत्वादेव वा व्रतम्=तदर्थं कर्मविशेषम्ः, आपश्चन= अवभिमानिन्यो देवता अपि प्रमिनन्ति=प्रीत्या विषयीकुर्वते—इति ॥

अत्रादिपदेन "यच्चिकेत सत्यमित्तन्न मोघं वसुस्पार्हमुत जेतोत दाता" "याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः" "सत्यः सो अस्य महिमा" "अथैनमाहुः सत्यकर्मेति" 'सत्यं ह्येवेदं विश्वमसौ सृजते" "कथमसतः सज्जायेते" त्यादिश्रुतयो गृह्यन्ते ॥

न चात्र व्यावहारिकं सत्त्वमुच्यते ; निर्बीजत्वात् , व्यावहारिकसत्त्वकल्पनाया मिथ्यात्वसिद्ध्यधीनत्वेनाद्यापि तदसिद्ध्या कल्पकाभावात् ; अन्यथा "तत् सत्यमि" त्यादिब्रह्मसत्ताश्रुतिरपि प्रातिभासिकसत्त्वपरा स्यात् ॥

न च मिथ्यात्वबोधकश्रुतिविरोधात् सत्त्वश्रुतिर्व्यावहारिकसत्त्वपरतया योजनमर्हति ; अद्वैतमते तस्या लक्षणयाऽखण्डार्थपरत्वेन विश्वसत्ताविरोधात् । "असद्वा इदमग्र आसीदि"ति श्रुतिविरोधेन "तत् सत्यमि"त्यादिश्रुतेः प्रातिभासिकसत्तापरतासंभवाच्च ॥

यदि ब्रह्मसत्यत्वश्रुतिविरोधात् , "असद्वेति"श्रुतिरन्यथा नेया, तर्हि प्रपञ्चसत्यत्वश्रुतिविरोधात् तन्मिथ्याश्रुतिरप्रमाणम् , अन्यथा वा स्यात् । तात्पर्यलिङ्गं विश्वसत्यश्रुतावपि समानम् ; "आपश्चन प्रमिनन्ति" इति प्रामाणिकत्वस्य सत्यत्वेऽवगमात् । अतो व्यावहारिकसत्तापरतया विश्वसत्यत्वश्रुतेर्नयनं निर्बीजम् ॥

व्यर्थं च व्यावहारिकसत्यत्वप्रतिपादनम् । न हि कश्चित् लौकिको

वैदिको वा व्यावहारिकसत्यतां प्रपञ्चस्य नाभ्युपैति । तस्माद्वादिसिद्धमिथ्यात्वानुवादेन पारमार्थिकसत्यत्वमेवात्र बोध्यते; अप्राप्ते शास्त्रमर्थवदिति न्यायात्, "नेह नानास्ती"त्यादिश्रुतिनिषेध्यसमर्पकतयाऽनुवादो वा सगुणश्रुतिः, "विश्वं सत्यमि"ति श्रुत्यपेक्षितमिथ्यात्वसमर्पकतया निर्गुणश्रुतिर्वाऽनुवाद इति शङ्कायां विनिगमकाभावात् । तत्र च "नेह नास्ती"ति श्रुतिरेवानुवाद इति युक्तम्; अन्यथा विश्वसत्यत्वश्रुतीनां बहूनामानर्थक्यापत्तेः, सार्थादपि तस्करा बहव इति न्यायात् ॥

तत्र "विश्वं सत्यमि"ति श्रुतिर्यद्यपि साक्षाद् न मिथ्यात्वाभावपरा; तथापि न्यायमते तमश्शब्दवत् तदभावपरत्वं मत्वेदमुक्तम् ॥

वस्तुतस्तु—शाङ्करमतेऽपि सत्यत्वं मिथ्यात्वाभावरूपमेव; ब्रह्मणि निर्धर्मके सत्यत्वाभावात् ॥

वस्तुतस्तु—"नेह नानास्ति किञ्चने" त्यत्र नानेति निषेध्यसमर्पकं पदं वर्तत एवेति का वाऽपेक्षा कर्मकाण्डोपासनादिकाण्डानां तदर्थनिर्णयार्थम् ?

यदि विश्वसत्यत्वस्य प्रत्यक्षादिसिद्धत्वादनुवादः, तर्हि विश्वमिथ्यात्वस्यापि विज्ञानवादादिसिद्धस्यानुवाद इति समानम् ॥

प्रत्यक्षसिद्धविश्वसत्यत्वनिषेधपरविश्वमिथ्यात्वश्रुतेः प्रतिप्रसवरूपा वा "विश्वं सत्यमि" त्यादिश्रुतिरिति तु परे ॥

"असदेवेदमि"ति श्रुत्यपेक्षितनिषेध्यसमर्पकत्वं सत्यादिवाक्यानामित्यापत्त्याऽपि श्रुतिप्राप्तस्य श्रुत्या निषेधो न युक्तः ॥

सत्यम्, विश्वमिथ्यात्वं न श्रुतिमात्रेण; दृश्यत्वादिहेतुनाऽपि मिथ्यात्वसाधनात्, तस्य तु प्रत्यक्षविरोधेनाप्रामाण्यात् तदकिञ्चित्करम् । न च श्रुतिबाधोऽत्र प्रत्यक्षेण, प्रत्युत श्रुतिः सत्यत्वप्रत्यक्षस्यानुग्राहिका ॥

### मिथ्यात्वानुमानस्य श्रुत्याऽबाधः ॥

[अद्वैतवादः] एतेन—मिथ्यात्वानुमानस्य श्रुतिविरोधपरिहारोऽपि—व्याख्यातः । तथाहि—"विश्वं सत्यं मघवाना" इति वाक्यं हि मघवस्तुतिपरं न प्रपञ्चमिथ्यात्वनिषेधे समर्थम्; स्वार्थेऽतात्पर्यात् ॥

अत एव—"आपश्चन प्रमिनन्तीं"त्यत्र देवतादृष्ट्यैव प्रामाणिकत्वम्,

न वस्तुगत्या, इति व्यावहारिकप्रामाण्यमेव सा समर्थयति। आनन्दमीमांसायां कर्मदेवादीनां प्रजापत्यन्तानां देवतानामकामहतश्रोत्रियदृष्टान्ततयोपादानात्, परिमितानन्दानां देवतानामपि न व्यवहारदशातीतत्वम्, इति देवताभिरिन्द्रस्य स्तुतिरपि व्यावहारिकसत्यतामभिप्रेत्यैव। अद्वैतसिद्धान्ते हि निर्विशेषावस्थामाश्रित्यैव प्रपञ्चमिथ्यात्वं श्रुतिसिद्धम्, न तु सविशेषावस्थामाश्रित्य, इति न केवलमश्विन्यादिदेवतादृष्ट्या, किन्तु त्रिमुर्तिदृष्ट्या, किं बहुना ? सृष्ट्यादित्रितयकारणतुरीयसदाशिवदृष्ट्या, तुरीयनारायणदृष्ट्यापि व्यावहारिकसत्यतैव, इति कथं "विश्वं सत्यमि"ति श्रुतिर्ब्रह्मणोऽद्वितीयतां प्रतिबन्धुमलम्, इति नेमाः श्रुतयः पारमार्थिकसत्यत्वे प्रमाणम्। वस्तुतस्तु केवलं स्तावकत्वादुक्तश्रुतीनां न स्वार्थे तात्पर्यम्। स्तुतिर्हि विद्यमानेनाप्यर्थेन भवति, अविद्यमानेनापीति हि भगवान् शबरस्वामी भाषते ॥

सृष्टिश्रुतिरपि व्यावहारिकसत्त्वमभिप्रेत्यैव प्रवर्तते ; विवर्तोपादानतोपपादकतापरत्वात् सृष्ट्यादिश्रुतीनाम्, इति लोकसिद्धाध्यारोपनिबन्धनसत्तादात्म्यमभिप्रेत्यैव "विश्वं सत्यमि"त्यादिश्रुतयः, प्रत्यक्षसिद्धभेदसत्यत्वानुवादरूपा वा न विश्वमिथ्यात्वबाधने क्षमाः ॥

तत्र "सन् घटः" इत्यादिवदेव रूप्यं सदिति सत्ताया अपि प्रत्यक्षसिद्धत्वेऽपि शुक्तिरूप्यसत्त्वं प्रातिभासिकम् ; व्यवहारकाल एव बाध्यमानत्वात्, घटादिसत्त्वं तु व्यावहारिकम् ; व्यवहारकालाबाधितत्वात्, इति प्रातिभासिक-व्यावहारिकसत्त्वव्यवस्था, इति विश्वसत्यत्वश्रुतिसिद्धस्य प्रत्यक्षसिद्धस्य च सत्त्वस्य व्यावहारिकत्वेन विषयैक्यात्, अविरोधाद्वा न लौकिकप्रत्यक्षतो विशेषः, इति प्रत्यक्षेणागमाबाधनय एवात्र नामान्तरेणाद्रियते ॥

एतेन—विश्वसत्यत्वश्रुतेः प्रातिभासिकपरतया नयनम्—परास्तम् ; प्रत्यक्षविरोधात्। अद्वैतसिद्धान्ते त्वखण्डार्थत्वमेव ब्रह्ममात्रसत्यतापराणां वाक्यानाम्, तथापि तज्जन्यसाक्षात्कारानन्तरभाविबाधमाश्रित्यैव मिथ्यात्वं प्रपञ्चस्य, नैतावता व्यावहारिकसत्ताया हानिः ॥

तत्र दृष्टान्ते स्तुत्यर्थमनुवादः, अत्र निषेधार्थमिति परं विशेषः ; अन्यथा यदि मुख्यप्रयोजनाभावेऽनुवादवैयर्थ्यम्, तर्हि "अग्निर्हिमस्य भेषजम्" इत्यनुवादस्य स्वतन्त्रं किं वा प्रयोजनम् ?

तथाचानुवादत्वेऽपि प्रमातृदृष्टया पूर्वनयेन प्रामाण्याद् द्वैतसत्यतायाः; प्रमाणान्तरविषयत्वयोग्यत्वेऽपि मिथ्यात्वश्रुत्योभयव्यावहारिक प्रमाण्यव्यवस्थापनाद् विश्वसत्यत्वानुवादेऽपि न पुरोवादप्रमाणविरोधः; निषेध्यसमर्पकताया उभयत्राविशेषात्। निषेधश्रुत्या बाधेन तदनन्तरं प्रामाण्याभावेऽपि श्रौतं एवानुवादोऽपि, इति सर्वप्रमाणनिर्वाहादद्वैतसिद्धान्त एव मुख्यतात्पर्यं श्रुतीनाम्॥

परमते तु तदुक्तरीत्यनुसरणे निर्गुणवाक्यानां प्रातिभासिकसत्तापरतया, 'असदेवेदमि'तिवाक्यापेक्षितनिषेध्यसमर्पकतया वा ब्रह्मवाक्यानां सगुणपराणाम्, निर्गुणवाक्यानां चान्यथा नयनेन निर्गुणवाक्यानामबोधकत्वलणयमप्रामाण्यमापद्येत, सौगतसिद्धान्तस्यैव प्रामाणिकत्वं च स्यात्।

नचैवमद्वैतसिद्धान्ते कस्यापि वैयर्थ्यमप्रामाण्यं वा; यत्राविद्यावस्थामाश्रित्यनिर्विशेषेतरवाक्यानां प्रामाण्यम्। इदमेवाभिप्रेत्य—इमेवाध्यासं पुरस्कृत्य सर्वाणि लौकिकानि, वैदिकानि च वाक्यानि विधि-प्रतिषेधमोक्षपराणि प्रवर्तन्ते; अविद्याविषयत्वात् प्रमातृ-प्रमाण-प्रमेयभेदनिबन्धनानां प्रमाणानामित्याकरः॥

निषेधापेक्षितप्रतिषेध्यसमर्पकत्वमेव द्वैतपराणां वाक्यानामिति तु निष्कर्षः? अनुवादो ह्यनूद्यस्य सत्त्वासत्त्वौदासीन्येन भवन् तस्य प्रामाणिकत्वम्, अप्रामाणिकत्वं वा नापेक्षते, इति तस्य प्रामाणिकत्वविकल्प-तद्दूषणानि निरालम्बानि॥

"न सन्नासीन्न सदसत्" इति सुबालोपनिषत्तु "तम आसीदि"ति वाक्यशेषात्, प्रलयकाले स्थूलकार्याणां व्यक्तरूपम्, तत्कारणमृदादि वा नासीत्, किन्तु मूलकारणं तम एवासीसिति प्रतिपादनपरा नासद्वादम्, ब्रह्मणोऽप्यभावं वा गोचरयतिः; अन्यथा कारणस्य सगुणब्रह्मणोऽप्यभावंप्रसङ्गात्, इति प्रपञ्चमिथ्यात्व-ब्रह्ममात्रसत्यत्वयोरेव श्रुतीनां तात्पर्यम्॥

"असद्वा" इति श्रुतिविरोधोऽपि भाविनं बाधं संभाव्यमानमाश्रित्यैव, न तु व्यवहारदशामभिह्य, इति न शुक्तिरूप्यादीनामिव ब्रह्मणः प्रातिभासिकसत्यतापरता श्रुतीनाम्॥

तत्र श्रुतेरसद्वादे यदि न तात्पर्यम्, तर्हि कथं ब्रह्मसत्यत्वमपि

व्यावहारिकं स्यात् घटादिसत्त्वमिव ? न चैतत् संभवति; अद्वितीयश्रुतिविरोधात्, "तत् सत्यमि"ति तदुपपादनविरोधाच्च। सर्वथा तु ब्रह्मेतरव्यावहारिकसत्त्वपरत्वमेव विश्वसत्यत्वश्रुतीनाम्—"असद्वे"ति वाक्यविरोधेऽपि वक्तव्यम्॥

न च "असद्वा" इति वाक्यप्रामाण्येनासद्वादोऽसद्वादिनाम्; तदागममात्रप्रामाण्यवादित्वात्, वेदाप्रामाण्यपरत्त्वाच्च तेषाम्। न वा द्वैतिनामपि तद्वाक्यमसद्वादपरम्, किन्त्वर्थान्तरपरमेव, इति नाद्वैतसिद्धान्तमात्रे तदबाधेनार्थकल्पनाप्रसङ्गः। सर्वथा तु न प्रातिभासिकसत्तापरत्वं ब्रह्मसत्यत्वश्रुतेरापतति॥

अद्वैतसिद्धान्ते हि ब्रह्मसत्यत्वश्रुतिः, प्रपञ्चसत्यत्वश्रुतिः, तत्प्रत्यक्षादिकम्, किं बहुना ? "इदं रजतमि"त्यादिज्ञानमपि यावद्बाधं प्रामाणिकम्, मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वेन स्वतः प्रामाण्यस्य सर्वत्राविशेषात्। तत्र ब्रह्म सगुणं यदि "असद्वे" ति वाक्येन न बाध्यते, तर्हि कथं सर्वाधिष्ठानं निर्विशेषमात्रं तद्बलाद् बाधितं स्यात् ? असदधिष्ठानकत्वं हि न प्रपञ्चस्य, सगुणस्य ब्रह्मणः, न वा तदुपाधेः, निर्विशेषब्रह्मणो वा, इति कथं तद्वाक्यप्रामाण्येन ब्रह्मसत्यत्वश्रुतेरसद्वादिदृष्ट्यापि प्रातिभासिकब्रह्मसत्यतापरत्वमापद्यते, इत्यद्वैतश्रुतिविरोधाद् व्यावहारिकसत्त्वपरत्वमेव "विश्वं सत्यमि"त्यादिश्रुतीनां युक्तम्॥

न केवलं विश्वसत्यत्वश्रुतिः, "असद्वे"ति श्रुतिरपि विश्वव्यावहारिकसत्त्वाविरोधेनान्यथा नेया। संप्रतिपन्नं ह्यसद्वेति वाक्यस्यान्यथा नयनं विश्वपारमार्थिकतावादिनां द्वैतिनामपि। "सत्यस्य सत्यम्" "सत्यं चानृतं च सत्यमभवत्" इत्यादयस्त्रिविधं सत्त्वं प्रतिपादयन्त्योऽपि ब्रह्ममात्रपारमार्थिकतायां तदितरप्रातिभासिक-व्यावहारिकसत्यतायां च यथासंभवमत्र प्रमाणम्, इति ब्रह्मप्रातिभासिकसत्यतापरतापत्तिर्नोत्तिष्ठति॥

व्यावहारिकसत्त्वानुवादप्रयोजनं तु व्यावहारिकार्थक्रियाकारितानिर्वाहो लौकिकेषु; अलौकिकेष्वपि स्वर्गादिप्रयोजनेषु, तत्साधनेषु, कर्मकाण्डोपासनाकाण्डप्रतिपाद्येषु च॥

तत्रोपासना हि नोपास्यस्य त्रैकालिकसत्तामपेक्षते; तावन्मात्रोपयोगिन्नासुपास्यस्वरूप-तद्गुणादीनां यावद्बाधं सत्त्वाङ्गीकारेणापीष्टनिर्वाहात्॥

तत्र विनैवोपस्यसत्त्वमुपासनम्, साधनम्, तत्फलं च न हीयते, इति-तु मीमांसकाः। अद्वैतसिद्धान्तस्तु यावत्तत्फलानुभवम्, यावत्तत्त्वसाक्षात्कारं वा तद्व्यावहारिकसत्त्वनैयत्येनोपासनासिद्धिः, इति तत्र परेषां दृष्ट्याऽस्यैव पुरुषार्थत्वम्, सत्यत्वं च, यत्र तदतिरिक्तं साधनं फलं वा नोरीक्रियते। अद्वैतसिद्धान्ते तु—तदतिरिक्ताखण्डाकारवृत्त्यधीनाविद्यानिवृत्तिः, तन्निबन्धनाविद्यानिवृत्त्युपलक्षितब्रह्मभावो वा मोक्षः॥

तत्र कर्मयोग-भक्तियोगादिसाधनकलापसार्थक्यं सर्वत्र समानम्, परं तु तत्र प्रकारभेदमात्रं समाद्रियते॥

तत्र निर्विशेषवाक्यानां हेयगुणनिषेधपरतया प्रामाण्यं परमते, अद्वैतवादे तु निषेधापेक्षितप्रतियोगिसमर्पणार्थतया द्वैतवाक्यानामुपयोगः। "असदेवेदमि"ति श्रुत्यपेक्षितसत्समर्पकं न सत्यज्ञानादिवाक्यमिति तु संप्रतिपन्नम्॥

"नेह नानास्ती"त्यादिश्रुतेः प्रतिप्रसवार्थत्वे तु निषेधवाक्यवैयर्थ्यम्; तस्य कुत्रापि निरवकाशत्वात्। विधि-निषेध-प्रतिप्रसवानां विविक्तविषयकत्वे हि स न्यायः। न चात्र निषेधवाक्यस्यान्यत्रावकाशः, इति प्रतिप्रसवपरतया नयनं न क्षोदक्षमम्॥

"असदेवेदमि"ति वाक्यं प्रपञ्चस्याव्यक्तावस्थापरम्, न तु सत्पदार्थनिषेधपरम्। "सदेव सोम्येदमग्र आसीदि"ति सद्विद्यायां सत एव सृष्टेः पूर्वमवस्थानस्य, सृष्टिकारणत्वस्य, ब्रह्मस्वरूपतायाः, तत्सत्यत्वस्य च बोधनेन सृष्टेः पूर्वमसदात्मताया बाधितत्वात्॥

अत एवात्रैव—"कथमसतः सज्जायते" त्यसत्कारणवादस्य निरासः, इति न 'असदेवे'ति सद्रूपब्रह्मनिषेधपरम्। "सदेवेदमि"ति श्रुतिर्हि "सन् घट" इत्यादिप्रतीतिमेवाभिलपति, इति प्रत्यक्षसिद्धं प्रपञ्चसत्त्वमनूद्य निषेध एव—"एकमेवाद्वितीयम्," इतिश्रुत्यर्थः, इति विश्वसत्यत्वश्रुतयः सर्वा अपि प्रत्यक्षादिप्राप्तानुवादपरा एव॥

तथापि विश्वसत्यत्वश्रुतयोऽपि नाप्रमाणम्, प्रत्यक्षादयोऽपि वा, किन्तु तेषां समबलत्वाद् व्यावहारिकसत्त्वपरत्वमेव, यथा प्रत्यक्षप्राप्तस्याग्निहिमभेषजत्वस्य श्रुतेः। न चानुवादत्वेऽपि प्रामाण्यहानिः; प्रत्यक्षप्राप्तियोग्यत्वेनैवानुवादत्वं दृष्टान्ते, न तु प्रत्यक्षात् पूर्वं श्रुतेरेव बोधकत्वेन, इति प्रमातृदृष्ट्यैवानुवादकत्वम्, न प्रमाणदृष्ट्येति व्यक्त-

मन्यत्र देवताधिकरणादौ भामत्यादौ, इति मुख्यतात्पर्याभावविवक्षाया-मेवानुवादताप्रतिपादनस्य निर्भरः ॥

मिथ्यात्वानुमानस्य स्मृत्या बाधः ।

अद्वैतसिद्धान्तस्यासुरभावत्वम् ।

[ द्वैतवादः ] एतेन—स्मृतिविरोधोऽपि मिथ्यात्वानुमानस्य—व्याख्यातः । तथाच भगवद्गीता—

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत् कामहेतुकम् ॥"

इति । अत्र ह्युपरि तेऽसुराः स्वयं नष्टाः जगतः क्षयकारिण इति हि निन्द्यन्ते । इयं हि निरवकाशा निषेध्यमर्पकत्वेन व्यावहारिकसत्त्वपरत्वेन सगुणवाक्यानां नयनमासुरं प्रतिपादयति । न चात्रासत्यपदमत्यन्तासत्त्व-परम्, येन सौगतवादनिन्दापरत्वमस्याः स्यात् । अत्यन्तासत्त्ववादिनोऽप्रसिद्धत्वात् , शून्यवादिमतेऽर्थक्रियाकारित्वादिना शशशृङ्गादिवैलक्षण्य-स्वीकारात् , व्यावहारिकसत्त्वस्य सौगतमतेऽपि भावात् । न च शून्यवादिनः सकाशाद्वैलक्षण्यं मायावादिनः । असत्यवादिनोऽत्र मिथ्यावादिन एव; अत्यन्तासद्वादिनः कस्याप्यभावादित्यद्वैतवादनिन्दापरत्वमेवास्याः स्मृतेः ॥

मिथ्यात्वानुमानस्य स्मृत्याऽबाधः ।

अद्वैतसिद्धान्तस्यासुरत्वाभावः ।

[अद्वैतवादः] एतेन—स्मृत्यविरोधोऽपि मिथ्यात्वानुमानस्य--व्याख्यात। तथाहि—भगवद्गीता हि जीवसर्वगतत्व-जीवब्रह्माभेदाद्यद्वैतसिद्धान्तमुपक्रम-परामर्शोपसंहारेषु व्यवस्थापयन्ती—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥"

इत्यादिना जगतो ब्रह्माधिष्ठानकत्वेन सदनुवेधादिना ब्रह्मप्रतिष्ठत्वं विवेचयन्ती, "मत्स्थानि" "न च मत्स्थानी"ति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं "विशदयन्ती, "ईश्वरः सर्वभूतानाम्" "इतीश्वरवादमाद्रियमाणा"—"असत्यमप्रतिष्ठं ते" इति निर्दिष्टकामहेतुकत्वादिना प्रतिपादयन्ती च जगदसत्त्ववादांशमात्रमादायाद्वैतपरेति विवरणं न सांप्रतम् ॥

अद्वैतसिद्धान्तस्य सौगतसिद्धान्ताद् विशेषाः ।

तत्र जगदसत्यत्वांशमात्रं यद्यपि सौगतैः समानम्; अर्थतः, स्वरूपतो वा सौगतमतादस्य विशेषस्तु महान् । सौगतमतेऽप्यद्वैतमत इव सांवृतसत्यत्वेन व्यावहारिकशब्दो व्यवहार्यत्वमात्रेण च यद्यपि साम्यमिवास्ति, परं त्वद्वैतमतेऽसत्यत्वं ब्रह्माधिष्ठानकत्वात् ब्रह्मप्रतिष्ठत्वसध्रीचीनं जगतः, न तु सौगतमत इवाप्रतिष्ठत्वम्; अनीश्वरत्वं वाऽद्वैतमते सौगतमत इवा; अद्वैतवादे मायोपहितेश्वरकारणतायाः स्वीकारात्, ईश्वरोऽप्यद्वैतमतेऽसत्य इति तु मिथ्याभूतमायोपाधिकत्वमात्रेण, न तु स्वरूपतो ब्रह्माधिष्ठानकत्वेन वा ॥

अपरोऽयं विशेषः—असत्यत्वं जगतो बौद्धमते सांवृतसत्यत्वेन निरधिष्ठानकत्ववादेन, अत्र तु साधिष्ठानत्ववादेन, अधिष्ठानगतसत्तादात्म्येन वा । तत्रासत्यत्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वेनाद्वैतसिद्धान्त एव, यत्र जगतः साधिष्ठानत्वम् । न चैवं सौगतनये ॥

अन्यस्तु विशेषः—सदसद्वैलक्षण्यरूपं मिथ्यात्वं जगतोऽद्वैतनये, सौगतमते त्वत्यन्तासत्त्वरूपम् । अत एवाप्रतिष्ठानीश्वरादिपदसमभिव्याहारः । अपरस्परसंभूतत्वम्, कामहेतुकत्वं च सौगतमतस्यैव । अत एव "आहुरि"ति निर्देशः न चायमद्वैतवादस्य, यस्य गीतोपदिश्यमानकर्मयोग-भक्तियोगसाधनादिविषये न सौगतनयेनास्ति सालक्षण्यं मोक्षोपयोगे साक्षाद्वा, परम्परया वा, इति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वप्रयुक्तं व्यावहारिकत्वं सप्रतिष्ठत्वप्रयुक्तं वा न बौद्धाभिमतं सांवृतसत्यत्वम्, इति न सौगताभिमातस्याप्रतिष्ठत्वस्याद्वैताभिमतत्वम् ॥

अर्थक्रियाकारित्वं सत्त्वासत्त्वौदासीन्येन निरधिष्ठानसांवृतसत्यत्वप्रयुक्तं तु सदसद्वैलक्षण्यप्रयुक्तमेव । न च सांवृतसत्त्वमसतोऽप्येवं व्यावहारिकं नाम । अतोऽत्र सौगतमात्राभिमतासत्यत्वस्यैवानुवादः । व्यक्तं चैतद् भगवद्रामानुजगीताभाष्यटीकायां तात्पर्यचन्द्रिकायामपि । अत्र बहुधा हि क्लिष्टकल्पना—अपरस्परसंभूतम् किमन्यत् कामहेतुकम्" इत्युत्तरार्धे गीताविवृतिकाराणाम्, वादिराजादीनां च । अद्वैतमते तु मायोपहितं सदादिरूपं वा तुरीयं ब्रह्मस्वरूपमेवाधिष्ठानम्, यद् विष्णुर्वा सदाशिवो वा—इति ॥

गारुडे ब्रह्मज्ञानप्रकरणे गीतासारादिगतानि वाक्यानि गीताया इदमेव तात्पर्यं गमयन्ति ॥

श्रीभागवत-विष्णुपुराण-पाद्म-कौर्म-नारदीय-वाराहादिपुराणानि, श्रीमद्रामायण-महाभारतादीतिहासादयोऽप्यद्वैतवादमेव समर्थयन्ति । व्यक्तीकरिष्यते चेदमुपरिष्टात् ॥

मिथ्यात्वानुमानस्य सत्यत्वानुमानेन विरोधः ।

[ द्वैतवादः ] एतेन—मिथ्यात्वानुमानस्यानुमानतो बाधोऽपि—व्याख्यातः । तथाहि—मिथ्यात्वानुमानम्—विप्रतिपन्नम्, सत्यम्, प्रमाणदृष्टत्वात्; शुद्धब्रह्मवदित्यनुमानविरुद्धम् ॥

तत्रासत्प्रातिभासिक-ब्रह्मान्यत् पक्षः, अबाध्यत्वं साध्यम्, प्रमाणजन्यज्ञानं प्रति साक्षादनिषेध्यत्वेन विषयत्वादिति हेतुः ॥

शुक्तिरूप्यादेः साक्षान्निषेध्यत्वेन प्रमाणजन्यज्ञानं प्रति विषयत्वाद् न तत्र व्यभिचारः । ब्रह्मणि हेतु-साध्ययोः सिद्धत्वान्न साध्यहेत्वसिद्धी । तत्र प्रमाणदृष्टत्वं तात्त्विकप्रमाणदृष्टत्वमेव; प्रत्यक्षादेरपि तात्त्विकप्रमाणत्वस्यैवास्मदभिमतत्वात्, सर्वविपक्षिसंमतत्वाच्च । अनुमानं चात्र—प्रत्यक्षादिकम्, तात्त्विकप्रमाणम्, प्रमाणत्वात्; सत्यादिवाक्यवत् । अन्यथा हि प्रामाण्यकथैव न स्यात् ॥

प्रपञ्चसत्यत्वानुमानम् ।

प्रयोगान्तरमपि—प्रपञ्चः, तत्त्वावेदकप्रमाणदृष्टः, संप्रतिपन्नभ्रान्तेतरत्वात्; ब्रह्मवत् । न चात्मत्वमुपाधिः; अबाध्यत्वादेरात्मत्वस्य पक्षेऽसत्त्वात्, अन्यथाऽऽत्मत्वस्याप्यभावो ब्रह्मणि स्यात् ॥

वस्तुतस्तु—प्रमाणत्वेन प्रमाणदृष्टत्वमेव हेतुः; तत्त्वावेदकत्वादिविवक्षायाः प्रयोजनाभावात् । न ह्यस्य विपक्षे वृत्तिः; वृत्तिव्याप्यताया आत्मन्यभ्युपगमान्न तत्र साधनस्यावृत्तिः ॥

सत्यत्वं साध्यम्, प्रामाणिकत्वं च नैकमिति संप्रतिपन्नम् । अद्वैतसिद्धान्ते हि प्रमाणाविषयस्यापि ब्रह्मणः सत्यतायाः स्वीकारात्; द्वैतसिद्धान्ते तु नासत्यत्वम्, अप्रामाणिकत्वं वा प्रपञ्चस्य, ब्रह्मणो वा । अतो ब्रह्मवदिति दृष्टान्तः, स्वमतदृष्ट्या, अद्वैतदृष्ट्या तु शुक्तिरूप्यमेव व्यतिरेकदृष्टान्तः ॥

अर्थक्रियाकारित्वादपि प्रपञ्चस्य सत्यत्वमनुमानेन साध्यते—प्रपञ्चः, सत्यः, अर्थक्रियाकारित्वात्; आत्मवत्—इति ॥

मिथ्यात्वानुमानस्य सत्यत्वानुमानेनाविरोधः ।

[अद्वैतवादः]एतेन—मिथ्यात्वानुमानस्यानुमानतोऽविरोधोऽपि—व्याख्यातः । तत्र मिथ्यात्वानुमानम्–विप्रतिपन्नम्, सत्यम्, प्रमाणदृष्टत्वादित्यनुमानाविरुद्धम् ॥

तत्र प्रमाणदृष्टत्वं प्रमाणजन्यवृत्तिव्याप्यत्वं वा, तादृशफलव्याप्यत्वं वा, उभयम्, तदन्यद्वा, किं वा विवक्षितम् ?

तत्र सर्वत्र वृत्तिपदेन, प्रमाणजन्यज्ञानपदेन वाऽन्तःकरणवृत्तिर्विवक्ष्यते, उताविद्यावृत्तिः । अविद्यावृत्तिस्तु न प्रमाणजन्या । अन्तःकरणवृत्तिस्तु नाप्रमाणजन्या, इति ज्ञानपदेनान्तःकरणवृत्तिमात्रविवक्षायां प्रमाणपदं वितथमिति व्यर्थविशेषणत्वाद् व्याप्यत्वासिद्धिः; शुक्तिरूप्यव्यभिचारस्यापि तत एव वारणात् । व्यर्थबहुविशेषणघटितहेतुरपि व्याप्यत्वासिद्धः ॥

अन्तःकरणवृत्तिव्याप्यत्वमात्रविवक्षायामुपहितस्यैव वृत्तिविषयत्वम् । उपहितमात्रविषयाविद्यानिवृत्तौ शुद्धं स्वयंप्रकाशमात्रमेव, न वृत्तिविषय इति सिद्धान्ते दृष्टान्ते हेत्वसिद्धिः ॥

तत्र तत्र वृत्तिव्याप्यत्वं फलव्याप्यव्यावृत्तं विवक्ष्यते, उत तत्साधारणम् । आद्ये स्वनिवर्त्याज्ञानसमानविषयत्वस्यैव वृत्तिव्याप्यत्वात् घटादीनां चाविद्याविषयत्वाभावेनोक्तवृत्तिव्याप्यत्वाभावाद् भागासिद्धिः ॥

फलव्याप्यत्वं गुरुत्वादौ, अविद्यान्तःकरणादौ, ब्रह्मणि च बाधितम्, इति भागासिद्धि-हेत्वसिद्धी ॥

वृत्तिव्याप्यत्वमात्रं तु न सत्यत्वप्रयोजकम्; अनध्यस्ततत्त्वस्यैवाबाध्यताप्रयोजकत्वात्, इति सर्वत्र कल्पेष्वप्रयोजकता । साक्षिभास्यानामविद्यान्तःकरणादीनाम्, साक्षिणो वा प्रमाणजन्यज्ञानाविषयत्वाद् भागासिद्धिः । तत्र वृत्तिस्वीकारपक्षेऽपि सा न प्रमाणाधीनेति खलु वेदान्तमर्यादा ॥

तत्र प्रमाणदृष्टत्वं यदि तात्त्विकप्रमाणदृष्टत्वम्, तर्हि हेत्वसिद्धिः; अस्माकमनिष्टेः । परप्रक्रिययैव परमतनिराकरणम्, न स्वप्रक्रिययेति खलु परेषां डिण्डिमः । अतात्त्विकप्रमाणदृष्टत्वं तु दृष्टान्तेऽसिद्धम् । उभयमपि शशशृङ्गादौ नास्तीति व्यभिचारः । प्रत्यक्षादीनां तत्त्वावेदकत्वं पूर्वमेव निरस्तम्; श्रुतिविरुद्धत्वात् ॥

न च श्रुतिविरोधेऽनुमानमप्यवसरति; प्रमाणत्वेन तात्त्विकप्रमाणत्व-

साधनं स्वतःप्रामाण्यं बाधाभावकालीनमादाय। तत्र शुक्तिरूप्यादिज्ञानस्यापि प्रवृत्तिप्रयोजकत्वमात्रेण मिथ्यात्वेनानिश्चीयमानविषयकज्ञानत्वं स्वतो ग्राह्यं प्रामाण्यमस्ति, इति तस्यापि तत्त्वावेदकत्वापत्तिः ॥

भाविबाधमपेक्ष्याप्रामाण्यं तु घटादिप्रत्यक्षस्यापि, इति प्रमाणत्वरूपहेत्वसिद्धिः प्रत्यक्षादिप्रमाणतत्त्वावेदकत्वानुमाने प्रमाणत्वहेतुके। न हि घटादिप्रत्यक्षस्य तत्त्वावेदकत्वाभावमात्रेण प्रामाण्यस्यैव विलोपः; ब्रह्मज्ञाने प्रामाण्याविघातात् ॥

एतेन—प्रपञ्चः, तत्त्वावेदकप्रमाणदृष्टः, भ्रान्तेतरत्वादिति प्रयोगोऽपि—परास्तः ॥

तत्र भ्रान्तेतरत्वं यदि बाधितेतरत्वम्, तर्हि तत् प्रतीतिदशायां शुक्तिरूप्यादीनामपि, इति तत्र व्यभिचारः। यदि कालत्रयेऽपि बाधितेतरत्वं ब्रह्मवत्, तर्हि हेत्वसिद्धिः; अधिष्ठानतत्त्वसाक्षात्कारेण त्रैकालिकबाधावगमात् ॥

आत्मत्वोपाधिना सोपाधिकञ्च—यत्र यत्र तात्त्विकप्रमाणदृष्टत्वम्, तत्र तत्रात्मत्वम्, पक्षे च सन्दिग्धोपाधिकत्वम्; प्रपञ्चाबाध्यताया अद्याप्यसिद्धत्वात्। ब्रह्म तु न प्रमाणान्तरदृष्टम्, इति हेत्वसिद्धिस्तु पूर्वमेव प्रसाधिता; चिद्रूपत्वोपाधितायां तात्पर्यात्। न च तदप्यबाध्यत्वम्, तदा हि हेतुरेवोपाधिरिति फलति। भ्रान्तेतरत्वमात्मत्वं चानर्थान्तरम्, इति हेत्वसिद्धिरेव दूषणम्; 'नेह नानास्ती'ति श्रुतिबाध्यत्वेनाबाध्यत्वस्य पक्षेऽसंभवात्। आत्मत्वं ह्यत्रोपाधितया विवक्षितमात्मस्वरूपमात्रत्वम्, अबाधितत्वोपलक्षितस्वरूपत्वम्; तस्यैवात्मत्वात्। न च तादृशमात्मत्वं पक्षे वर्तते, इति नोपाधेः कथमपि चिकित्साऽत्र। निर्धर्मकत्वाद् ब्रह्मण आत्मत्वरूपधर्माभावो न दोषाय; अबाधितत्वोपलक्षितचिन्मात्रस्यैव निर्विशेषब्रह्मस्वरूपत्वात् ॥

तत्त्वावेदकत्वादिविशेषानवधूय प्रमाणदृष्टत्वमात्रमपि न हेतुरित्युपक्रमे बहु पराक्रान्तम्। प्रमाणदृष्टत्वं चेदं फलव्याप्यादिरूपं किमपि शुद्धे ब्रह्मणि नास्तीति तत्र साधितम्। न केवलमिदम्, किन्तु विश्वमात्रावृत्तीति भागासिद्धिः, शुक्तिरूप्यादिविपक्षेऽपि वर्तते, इति व्यभिचारश्च ॥

प्रमाणदृष्टत्वं प्रामाणिकत्वम्, प्रमेयत्वं वा घटादिवत् स्वप्रकाशस्य ब्रह्मणोऽप्यस्त्येव, किन्तु प्रमाणजन्यं ज्ञानमौपचारिकं वृत्तिमात्रमादाय प्रामाणिकत्वव्यपदेश, प्रमेयत्वव्यपदेशो वाऽप्यौपचारिक एव शुद्धस्य ब्रह्मणः।

उक्तं चाकरे—अविद्यानिवृत्तिपरत्वात् शास्त्रस्य = शास्त्रजन्याखण्डाकारवृत्तेः—इति ॥

"गौण-मुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति न्यायेन मुख्यप्रमेयताया हेतुत्वे दृष्टान्ते हेत्वसिद्धिः, गौणप्रमेयताया विवक्षायां पक्षे हेत्वसिद्धिः। न हि गौण-मुख्यसाधारणमेकं प्रमेयत्वं हेतूकर्तुमलम्। अन्यतरत्वेनानुगमेऽपि न तत् सत्यत्वप्रयोजकम्। प्रामाणिकत्वमेव हि सत्यत्वम्, इति हेतुसाध्ययोरैक्यापत्तिः ॥

ब्रह्मणोऽप्रामाणिकत्वे तु प्रमाणतो दृष्टत्वहेतुर्ब्रह्मणि स्वयमेव परित्यक्तः, इति कथमनुमानम्?

न चात्र शुक्तिरूप्यं दृष्टान्तः; स ह्यन्वयव्याप्त्या प्रपञ्चमिथ्यात्वानुमानस्य दृष्टान्तः, व्यतिरेकव्याप्त्या सत्यत्वानुमानस्य। तत्र व्यतिरेकदृष्टान्तादपरमन्वयदृष्ट्याऽनेन प्रपञ्चमिथ्यात्वसाधनम्। संभवति हि दृश्यत्वादिहेतुना शुक्तिरूप्यदृष्टान्ते प्रपञ्चमिथ्यात्वसाधनमिति पूर्वमेवोपपादितम् ॥

न च ब्रह्मणोऽप्रामाणिकत्वेऽत्र पक्षे शशविषाणवदसत्त्वप्रसङ्गः; अप्रामाणिकत्वस्य शुक्तिरूप्यसाधारणस्य शशशृङ्गादिवत् तुच्छत्वाभावात्। असत्ख्यातिनिरासस्त्वन्यत्र विशदः ॥

स्वतः सिद्धं हि ब्रह्म न प्रामाणिकम्। स्वतः सिद्धत्वं स्वप्रकाशत्वं चेत्यनर्थान्तरम्। स्वप्रकाशत्वं तु दृश्यत्वहेतुसमर्थनावसरे सम्यगेव निरुक्तम्, इति प्रामाणिकत्वेन ब्रह्मवत् प्रपञ्चसत्यत्वानुमानं न क्षोदक्षमम्, इति प्रपञ्चमिथ्यात्वानुमानस्य नानुमानेनापि बाधः ॥

वस्तुतस्तु—प्रमाणतो दृष्टत्वं भ्रमस्यापि स्वतो ग्राह्यं प्रामाण्यं मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं वाऽद्वैतसिद्धान्ते वर्तते। दोषनिष्ठकारणतानिरूपकान्यधीविषयत्वं तु प्रपञ्चेऽपि; प्रपञ्चस्याविद्यारूपदोषनिष्ठकारणतानिरूपकधीविषयत्वेन तदन्यत्वाभावात्। व्यक्तं चैतत् सद्विविक्तत्वमिथ्यात्वप्रकारणे, इति प्रपञ्चसत्यत्वं प्रकृतानुमानविषयः प्रमाणतो दृष्टत्वं चैकमिति हेतु-साध्ययोरैक्यम् ॥

अविद्याया दोषत्वानङ्गीकारस्तु द्वैतवादिदृष्ट्या, न त्वद्वैतसिद्धान्ते, इति स्वमतेन परमतनिराकरणायोगाद् ब्रह्मरूपमात्मानमेव निहन्ति सद्विवि-

क्त्वरूपमिथ्यात्वानुमानमिति हेत्वसिद्धिः। प्रपञ्चः, मिथ्या, प्रमाणादृष्टत्वादिति सत्प्रतिपक्षोऽप्यत्रानुसन्धेयः ॥

एतेन–अर्थक्रियाकारित्वेन प्रपञ्चसत्यत्वानुमानमपि–परास्तम् ; दृष्टान्तासंप्रतिपत्तेः। न च संप्रतिपन्नं किमपि। प्रपञ्चः, सत्यः, अर्थक्रियाकारित्वात्, आत्मवदित्यत्रात्मा हि दृष्टान्तीकृतः। स च यदि शुद्धं ब्रह्म, तर्हि न तस्यार्थक्रियाकारित्वम्। श्रुतिशतसिद्धं जगत्कारणं तु न शुद्धम्, किन्तु मायोपहितमेव। तस्य तु पक्षकोटिनिक्षिप्तत्वान्न दृष्टान्तत्वम्, दृष्टान्तस्तु शुद्धं ब्रह्म नार्थक्रियाकारि ॥

तच्चार्थक्रियाकारित्वं यदि व्यावहारिकम्, तर्हि तद् व्यवहारातीते तत्र बाधितम्, इति तत्र दुष्परिहरा हेत्वसिद्धिः। शुक्तिरूप्यादीनामप्यर्थक्रियाकारित्वात् तत्र व्यभिचारः। पूर्वसंबन्धनियमेनैवोपपत्तेर्न सत्त्वं कारणतावच्छेदकम्, इति प्रपञ्चः, मिथ्या, अर्थक्रियाकारित्वात्; शुक्तिरूप्यवदिति विरोधोऽपि ॥

अत्र सुखाववोधार्थं ज्ञानयाथार्थ्यविषये द्वैताद्वैतग्रन्थाशयः सङ्गृह्य प्रकाश्यते। स यथा—

प्रमाणलक्षणं स्मृतिसाधारणम्।

[द्वैतवादः] यथार्थं प्रमाणम्। तच्च ज्ञेयमनतिक्रम्य वर्तमानम्। अन्यथा ज्ञानं तु भ्रमः। तच्च साक्षात्, परम्परया वाऽन्यथाज्ञेयविषयाकारित्वम्। प्रमावान् प्रमाता, प्रमाविषयः प्रमेयम्। तत्र संशयोऽप्येकस्यां कोटावन्यथा ज्ञेयविषयाकारत्वाद् न प्रमाणम् ॥

अख्यात्यादिनिरासेनासत्ख्यातिसमर्थनम्।

तत्रायथार्थज्ञानमेव नास्तीति प्रभाकरः। तन्मते यथार्थपदवैयर्थ्यम्। ज्ञानपदस्थले निश्चयस्य निर्देशात् संशयव्युदासः। तस्याख्यातिनाम्ना व्यपदेशः ॥

नेदं मतं युक्तम्; अनुभवसिद्धत्वाद् विपर्ययस्य। तत्र देशान्तरस्थस्य रजतस्य संसर्गमात्राध्यासेनान्यथाख्यातिरिति वैशेषिकाः ॥

तत्र तत्कालिकमुत्पन्नं सदेवेति तु भास्करः, यस्य सत्ख्यातिरिति नाम। श्रीभाष्यसिद्धान्ताभिमतसत्ख्यातिस्तु विलक्षणा भास्करीयसत्ख्यातिवादतः ॥

ज्ञानस्यैव तदाकारे बाह्यत्वमात्राभ्यासाद् आत्मख्यातिवादिनः सौगताः। सदसत्ख्यातिवादिनस्त्वार्हताः, साङ्ख्याः, भाट्टाश्च ॥

सदसद्विलक्षणानिर्वचनीयख्यातिवादिनोऽद्वैतिनः। असत्ख्यातिवादिनस्त्वानन्दतीर्थीयाः।

तत्र शुक्तिकायां रजतमसदेव भातीत्यनुभवान्यथानुपपत्तिः प्रमाणम्। तत्र प्रधानस्याबाध्यस्य विशेष्यस्येन्द्रियसन्निकृष्टत्वेऽसतो भानानियमाद् न शशशृङ्गादीनामपि भ्रमे भानम् ॥

अनारोपितार्थज्ञानस्य प्रमात्वम्।

तत्र तत्त्वज्ञानं प्रमा। तत्त्वं त्वनारोपितम्। तच्च प्रतीयमानत्वविशेषितम्। तेन च कूर्मरोमादि न तत्त्वम्। शुक्तिरजतादिकं त्वारोपितत्वाद् न तत्त्वम्। कूर्मरोमादिकं तु प्रधानाभावेनानारोपितम्। परं तु शुक्तिरूप्यादिकमिव सत्त्वेन न प्रतीयते। तथाचासतोऽपि प्रतीतिविषयत्वेऽपि सत्त्वेन न प्रतीतिरिति न दोषः ॥

तच्च प्रमाणं प्रत्यक्षानुमानागमभेदेन त्रिविधमेव। उपमानार्थापत्त्यभावज्ञानानां यथायथमनुमान-प्रत्यक्षयोरेवान्तर्भावः। तत् केवलप्रमाणम्, अनुप्रमाणं च। अनुमानं त्वनुप्रमाणम्, आगमप्रमाणं च। स्मृतिरपि मानसप्रत्यक्षत्वात् केवलप्रमाणम्। द्विविधं ज्ञानं मनो जनयति—तत्तदिन्द्रियाधिष्ठितत्त्वेन तत्तदिन्द्रियविषयम्, स्वातन्त्र्येण स्मरणं च। संस्कारस्तु सहकारिमात्रम्। स च प्रत्यभिज्ञायां बाह्येन्द्रियसहकारी, स्मृतौ तु मनःसहकारीति विशेषः। संस्कारद्वाराऽतीतादिविषयेऽपि मनस्सन्निकर्षो योगिप्रत्यक्षादाविवाबाधितः। मनसोऽपीन्द्रियत्वाद् नात्रातिरिक्तप्रमाणकल्पनादोषः। स्मृतेरपि प्रमाणकोटौ निर्देशः। तस्या अपि प्रमाणत्वात्; तस्या मानसप्रत्यक्षत्वेन कथञ्चन प्रत्यक्षादावन्तर्भावः, अथवाऽतिरिक्तप्रमाणान्तरनिरासमात्रे तु प्रमाणत्रैविध्यविभागस्य तात्पर्यम् ॥

इन्द्रियार्थसन्निकर्षः प्रत्यक्षप्रमाणम्। अत्रार्थशब्देन तत्तत्प्रत्यक्षयोग्यार्थस्य ग्रहणाद् नाकाशस्य प्रत्यक्षत्वम्; तस्य केनापीन्द्रियेणासन्निकर्षात् ॥

अर्थपरिच्छित्तिर्न प्रमा, स्मृतिरपि प्रमा।

तत्र प्रमालक्षणमज्ञातार्थज्ञानत्वम्, न त्वज्ञातार्थपरिच्छित्तिः,

येन स्मृतेः प्रमात्वव्युदासः स्यात्। स्मृतिरपि प्रमैव; तस्या अप्रमात्वे प्रमाणाभावात्, प्रत्युत "स्मृतिः प्रत्यक्षमैतिह्यम्" इति स्मृतेरपि प्रमात्वं ज्ञापयति। सप्तेन्द्रियाणि प्रत्यक्षाणि ॥

तत्रेन्द्रियाणि षट् प्रसिद्धानि। स्वरूपज्ञानम् = आत्मा = साक्षी च सप्तमम्। आत्मस्वरूपमपीन्द्रियम्; अन्यथा साक्षिवेद्यानां सुखादीनां न प्रत्यक्षत्वं स्यात्; इन्द्रियार्थसन्निकर्षजन्यत्वप्रयुक्तत्वात् प्रत्यक्षत्वस्य ॥

तत्र भ्रमप्रत्यक्षे प्रधानेन्द्रियसन्निकर्षमात्रेणासतोऽपि रजतस्य प्रत्यक्षत्वम्; प्रधानेऽसद्रजततादात्म्यारोपात्। तत्र स्वरूपज्ञानस्य प्रमातृसाक्षिणो विषयाः—आत्मस्वरूपम्, तद्धर्माः, अविद्या, मनः, तद्वृत्तयः, बाह्येन्द्रियज्ञान-सुखाद्याः, कालः, अव्याकृताकाशश्च ॥

हेत्वाभासनिरूपणमत्राद्वैताभिमतमिथ्यात्वानुमाननिरासार्थम्।

तत्रानुमाननिरूपणप्रसङ्गेन हेत्वाभासानाम्, निग्रहस्थानानां च निरूपणमद्वैताभिमतप्रपञ्चमिथ्यात्वानुमानदुष्टत्वव्यवस्थापनेन सप्रयोजनम्। तद्यथा विवादपदम्, मिथ्या, दृश्यत्वादिति मिथ्यात्वानुमानम्। तत्र प्रत्यक्षागमादिभिर्जगतः सत्यत्वावगमात् विवादपदम्, सत्यम्, अर्थक्रियाकारित्वात्, इत्यनुमानेन प्रथमानुमानस्य बाधः, साध्यसमो वा। एवं स्वरूपासिद्धिरपि दृश्यत्वस्य, मिथ्यात्वस्य च पक्षत्वे; तत्र हेतूक्तदृश्यत्वस्यापि मिथ्यात्वात् पक्षेऽसम्भवात्। मिथ्यात्वस्याप्यनिर्वचनीयत्वेऽद्वैतमतेऽसत्ख्यातेरनङ्गीकारादप्रसिद्धिरेव। आत्मनोऽपि दृश्यत्वात् तत्रानेकान्तोऽपि। जगत्, सत्यम्, प्रमाणसिद्धत्वात्; ब्रह्मवदिति सत्प्रतिपक्षश्च। अमानसिद्धत्वेन सोपाधिकत्वं च। न हि प्रत्यक्षस्य वर्तमानमात्रग्राहित्वम्; अनुमानस्यापि तत्प्रामाण्यग्राहिसाक्षिणः प्रत्यक्षवद् वर्तमानार्थग्राहित्वापत्तेः। साक्षिवेद्यत्वेन प्रामाण्ये जगत्सत्यत्वमपि साक्षिवेद्यमेव, इति तन्मिथ्यात्वस्य साक्षिणा बाधः ॥

प्रमालक्षणं स्मृतिव्यावृत्तम्।

[अद्वैतवादः] यथार्थज्ञानं प्रमा। तच्चाबाधितार्थविषयकं ज्ञानम्। भ्रान्तिदशायामप्यबाधितार्थविषयकत्वं समानम्। तस्य भ्रमत्वं तु भाविबाधमभिप्रेत्य। तथाच ब्रह्मसाक्षात्कारपूर्वक्षणावच्छिन्नबाधविषयविषयकत्वेन भ्रमत्वम्, ब्रह्मसाक्षात्कारनिबन्धनबाधविषयत्वेन तु घटादिज्ञानस्य भ्रमत्वम्, तत्पूर्वक्षणावच्छिन्नबाधाविषयविषयकत्वेन प्रमात्वमिति विभागः।

वस्तुसिद्धिस्तु यथार्थज्ञानेनैव । स्मृतिस्तु सिद्धार्थविषयकज्ञानत्वाद् न वस्तुसाधकत्वेन प्रमा, किन्त्वबाधितार्थविषयकत्वेनैव । यत्र बाधितार्थविषयकमपि स्मरणं भवति, तत्र त्वनुवादमात्रम् । न तस्या यथार्थत्वनियमः । स्वकारणसंस्कारकारणानुभवानुसारित्वेन तु यथार्थत्वम्, अयथार्थत्वं च ॥

अख्यात्यसत्ख्यात्यादिनिरासेनानिर्वचनीयख्यातिसमर्थनम् ।

तत्र प्रभाकर-नैयायिक-सौगत-भास्करादिमतवैलक्षण्यमुभयत्र समानम् । विशेषस्त्वनिर्वचनीयख्यातिरद्वैतमते । द्वैतमते त्वसत्ख्यातिः । तत्रासद् यदि बाध्यम्, तर्हि तद् भ्रमस्थले तदोत्पन्नम्, उत सर्वदा वर्तते । आद्ये तदुत्पादकसामग्र्यभावः । द्वितीये तु सर्वदा भ्रमप्रसङ्गः । काच-कामलादिदोषा अधिष्ठानस्याऽऽवरका एव, न तु विषयोत्पादकाः ॥

भासमानस्य रजतस्यासतः शशशृङ्गादिभ्यो विशेषो वर्तते वा, न वा । आद्ये कीदृशं तदसत्त्वरूपम्? यदि प्रधानेऽधिष्ठाने वा बाध्यमानत्वमात्रम्, तर्हि शशशृङ्गादेरिव सत्त्वेन प्रतीतिविषयत्वं कुतः? तत्र शुक्तिरूप्यादीनां सत्त्वं यद्यधिष्ठानतादात्म्येन, तर्हि न सत्त्वम्, न चासत्त्वम्, इत्यनिर्वचनीयत्वे पर्यवसानम्; अनारोपितज्ञानत्वं न प्रमात्वम्; अन्यथा सदसत्ख्यात्यापत्त्याऽऽर्हतमतप्रवेशः ॥

अत एव सत्त्वेन प्रतीतिविषयत्वे सत्यनारोपितत्वमिति व्याख्यातम् । तत्र विशेषणं न शुक्तिरूप्यादिव्यावर्तनार्थम्; तस्यारोपितत्वेनैव तत्त्वताया वारणात् । कूर्मरूपादिकं त्वनारोपितमिति कृत्वा खलु तद्विशेषणम् । तत्र च शुक्तिरूप्यादीनां सत्त्वेन प्रतीत्यस्वीकारे विशेषणवैयर्थ्यम्, तत्स्वीकारे च सदसदात्मकत्वम् । अथान्यत्र सत एव रजतस्यात्रासत्त्वमात्रं विवक्ष्यते, तर्हि नैयायिकानामिवान्यथाख्यातित्वेन नासत्ख्यातिः । यद्यभिनवान्यथाख्यातिरेवासत्ख्यातिः, तर्हि नाममात्रविवादः ॥

अर्थपरिच्छित्तेः प्रमात्वम्, स्मृतेरप्रमात्वं च ।

अतो नियतो रजतादेः स्वरूपस्याप्यध्यासः । स्वरूपस्याप्यारोपे त्वनिर्वचनीयख्यातिरेव । सर्वमिदं न्यायचन्द्रिका—अर्थपरिच्छित्तिः प्रमा, असत्ख्यातिश्च न युक्तेति विवेचनेन विशदयति । वेदान्तपरिभाषा तु स्मृत्यप्रमात्वपक्षे, तत्प्रमात्वपक्षे चानास्थां दर्शयति । "स्मृतिः प्रत्यक्षमैति-

ह्यम्" इति तु स्मृतिशब्देन, ऐतिह्यशब्देनैव वाऽऽगमभेदमेवाभिप्रैति ; मन्वादिस्मृतिप्रामाण्यपरत्वात् तस्य । मन्वादिवाक्यानि स्मृतवेदवाक्यमूलकानि, न तु तदर्थस्मरणमूललौकिकानुभवमूलकानि । न च प्रयोजनं स्मृतिप्रामाण्यस्वीकारस्य; तन्मूलप्रामाण्येनैवेष्टसिद्धेः ॥

स्मृतिलक्षणं तु मानसप्रत्यक्षं ज्ञानमिति परे मन्यन्ते, परं त्वनुमितार्थस्मरणेऽव्याप्तमिदं लक्षणम् ; बाह्येन्द्रियानपेक्षं मनसोऽव्यापारात् । संस्कारसहकृतमनस इन्द्रियस्यैव तत्र करणत्वमित्यपि दुर्वचम् ॥

तत्रात्मनः साक्षित्वे न विप्रतिपत्तिः, परं तु न स्वरूपज्ञानं साक्षि, किन्त्वन्तःकरणोपहितमेव । न चैतस्येन्द्रियत्वे किमपि प्रमाणम्; सर्वदर्शनविरुद्धत्वात् तदिन्द्रियतावादस्य । तत्रेन्द्रियसन्निकर्षजन्यत्वस्य प्रत्यक्षत्वप्रयोजकत्वे कथं भ्रमस्थले रजतस्य प्रत्यक्षतानिर्वाहः? न हि रजतस्यासतोऽपीन्द्रियेणास्ति कोऽपि सन्निकर्षः । अद्वैतमते तु शुक्त्यवच्छिन्नचैतन्याभिन्नसाक्षिचैतन्यतादात्म्यात् साक्षिभास्यत्वं सुखादिवदविरुद्धम् । असतस्तु नेन्द्रियेण, न वाऽऽत्मना सन्निकर्षः, इति न प्रत्यक्षत्वनिर्वाहः । प्रधानेन्द्रियसन्निकर्षेणैव तदाश्रितस्यापि प्रत्यक्षत्वे घटेन्द्रियासन्निकर्षेऽपि भूतलमात्रसन्निकर्षे घटप्रत्यक्षत्वमापद्येत । अतोऽपि हेतोरसत्ख्यातिरनुपपन्ना । इदं च सर्वं न्यायचन्द्रिका विशदयत्यन्यथाख्यातिनिराकरणाद्यवसरे ॥

तत्र स्वरूपज्ञानस्य प्रमातुः साक्षिपदवाच्यस्य—आत्मस्वरूपम्, तद्धर्माः, अविद्या, मनः, तद्वृत्तयः, बाह्येन्द्रिय-ज्ञानसुखादयः, कालः, अव्याकृताकाशश्च विषया इति परसिद्धान्तः । तत्रात्मस्वरूपं स्वप्रकाशम्, न साक्षिणो विषयः, वृत्तिज्ञानस्य तु विषयः । परं तु तदप्यखण्डाकारवृत्तिज्ञानमेवेति तु विवेकः । अन्यत्र तु प्रायेण न विप्रतिपत्तिः । कालस्यापि वृत्तिज्ञानविषयत्वमेव, इति तु न्यायचन्द्रिका धारावाहिकप्रमात्वोपपादनव्याजेन विवेचयति । तत्र वृत्तिरन्तःकरणपरिणाम एव ज्ञानम्, न त्वविद्यावृत्तिः, इति भ्रमस्याविद्यावृत्त्यात्मकस्य, तादृश्याः स्मृतेश्च न ज्ञानत्वमपीति न्यायचन्द्रिका वदति ॥

### मिथ्यात्वानुमानस्य निर्दुष्टत्वसमर्थनम् ।

तत्रानुमानप्रमाणनिरूपणस्यासाधारणं प्रयोजनं प्रपञ्चमिथ्यात्वानुमानम् । न चात्र कोऽपि हेत्वाभासः । तत्रानुमानप्रयोगस्तु-विवादपदम्, मिथ्या, दृश्यत्वात्; यदेवम्, तदेवम्; यथा शुक्तिरूप्यमिति । तत्रा-

नवधारितानिर्वचनीयत्वादिविशेषणं दृश्यत्वमात्रं हेतुः, न त्वनिर्वचनीयत्वविशेषितम्, इति न हेत्वसिद्धिः। तन्मिथ्यात्वस्याप्यनेनैव साधनम्; तस्यापि घटादिसाधारणदृश्यत्वात्। ब्रह्मभिन्नत्वेन तु मिथ्यात्वम्, इति न तन्मिथ्यात्वासिद्धिरनेनानुमानेन॥

दृश्यत्वं ह्यत्र दृक्तादात्म्यवत्त्वमेव विवक्षितम्, न तु वृत्तिव्याप्यत्वम्, साक्षिवेद्यत्वं वा, इति नात्मस्वरूपे दृग्रूपे दृश्यत्वं वर्तते, इति न व्यभिचारः। असत्ख्यातेरयुक्तत्वस्थापनादगत्याऽनिर्वचनीयख्यातेरेव स्वीकरणीयत्वाच्च शुक्तिरूप्यदृष्टान्तोऽप्यव्याहतः। जगत्—न मिथ्या, अर्थक्रियाकारित्वादिति कालात्ययापदेशस्त्वर्थक्रियाकारित्वस्यावाध्यत्वाप्रयोजकत्वाद्, व्यावहारिक-प्रतिभासिकान्यतरसत्त्वस्यार्थक्रियाकारित्वाविरोधाच्च नावसरति। प्रमाणसिद्धत्वं व्यावहारिकसत्त्वेनापि निर्वहति, इति न तदपि त्रिकालावध्यत्वरूपसत्यत्वप्रयोजकम्। अत एव नामानसिद्धत्वेन सोपाधिकत्वम्। 'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यम्, एवं प्रामाण्यमपि। साक्षिभास्यं च वाधितमपि, नावाधितमेव, इति साक्षिभास्यत्वं प्रपञ्चस्य न मिथ्यात्वविरोधि। प्रत्यक्षस्य हि वर्तमानमात्रग्राहिणो न भाविबाधविरोधित्वम्, इति श्रुतिवाधितं प्रत्यक्षं न प्रपञ्चसत्यत्वग्राहि, इति जगत्सत्यत्वानुमानेन न प्रत्यक्षस्य बाधः। अयमेव न्यायोऽनुमानेऽपि। सर्वं चेदं न्यायचन्द्रिका ज्ञापयति॥

तदयं संग्रहः—भेदपञ्चकमपि प्रमाणान्तरसिद्धम्। तत्रेश्वरो यद्यपि श्रुत्येकगम्यः; तथापि तस्य जीवेन भेद आनुमानिकोऽपि; तत्तत्प्रमाणावगतविरुद्धधर्मकत्वात्। अत एव न्यायामृतादौ विरुद्धधर्मकत्वेन जीवेश्वरभेदानुमानम्। अयमेव न्यायो जीवानाम्, जडानां च परस्परभेदेऽपि। तत्रापरो जीवो यद्यपीश्वर इव नापरस्य जीवस्य देहातिरेकेण; प्रत्यक्षदेहातिरेकस्त्वस्यानुमानगम्यः। जडानामतीन्द्रियाणामनुमानैकगम्यानां भेदोऽप्यत एव व्याख्यातः॥

अस्तु वा जीवेश्वरादिभेदः सर्वोऽपि श्रुत्येकसमधिगम्यः, तथापि शास्त्रप्राप्तस्यापि शास्त्रेण निषेधो जर्तिलयवाग्वादिस्थल इवानूद्य निषेधः शास्त्रेषु दृश्यते, इति भेदपञ्चकस्य, तत्रैकतमस्य, कस्यापि वा न श्रुतितात्पर्यविषयत्वम्, इति तत्तत्प्रमाणप्रवृत्तिमपेक्ष्य सर्वस्यापूर्वत्वेऽपि तात्पर्यग्राहकमपूर्वत्वमनूद्य निषिद्ध्यमाने न संभवति। तत्र ब्रह्मणि शास्त्रतोऽन्य-

तो वा प्रसक्तिः, तत्र निषेधश्चाध्यारोपापवादविषयैव। अत एव—"नेह नानास्ति किञ्चन" "एकमेवाद्वितीयमि"त्यादिवाक्यानि। अपच्छेदन्यायोऽप्यत्रानुसन्धानमर्हति ॥

न चापच्छेदन्यायानुसन्धाने 'नैवेह किञ्चनाग्र आसीत्' इत्यनेन ब्रह्मणोऽपि निषेधापत्त्या शून्यवादप्रसङ्गः। अत्र प्रतिपाद्यमानः सर्वाभावो न शून्यम्; तस्य भावाभावविलक्षणत्वात्। सर्वाभावो नात्र ब्रह्माभावमप्यभिप्रेत्य; इहपदेन तदतिरिक्तस्यैव तत्रैव निषेधेन तस्यैकस्य परिशेषणात्। "नेह नानास्ति" "एकमेवाद्वितीयम्" इत्यादाविहेति सदिति च प्रकृतं ब्रह्मैव सर्वाभावाधिष्ठानत्वेन, अद्वितीयत्वेन च बोध्यते, न तु निरधिष्ठानकसर्वाभावस्तत्र बोध्यते ॥

न चात्र "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि"ति न्यायोऽध्यारोपापवादन्यायविवक्षायां प्रसरति। स हि यत्र पङ्कस्पर्शः, निषेध्यारोपो वा नान्यशेषः, तत्रैव प्रवर्तते। पङ्कस्पर्शस्य, आरोपस्य वाऽन्यशेषत्वे तु न स न्यायः प्रवर्तते। यत्र कूपखननप्रसङ्गे पङ्कस्पर्शः, स्थूलारुन्धतीन्यायेन वा मुख्यतत्त्वोपदेशार्थमध्यारोपः, तत्र पङ्कस्पर्शः, अध्यारोपो वा मुख्यप्रयोजनैकशेषत्वादन्यशेषः। तत एव सप्रयोजनत्वादध्यारोप इवानिवारणीयः; अन्यथा तु न कूपनिष्पत्तिः, न वा सूक्ष्मतत्त्वस्यासंकीर्णस्य निर्णयः। प्रकृतैतावत्त्वाधिकरणेऽमुं न्यायं पूर्वपक्षोपपादकतयैव भगवत्पादा अप्यनुसन्दधते ॥

सर्वथा तु शास्त्रसिद्धानामप्युपाधीनाम्, तत्सम्बन्धस्य, तत्प्रयुक्तस्य भेदस्य च प्रमातृदृष्ट्याऽपूर्वत्वेऽपि देवताधिकरणभामत्यादावुक्तरीत्या प्रमेयदृष्ट्याऽपूर्वत्वाभावात्, शास्त्रदृष्ट्या, प्रमेयदृष्ट्या वा निर्विशेषब्रह्मण एवापूर्वत्वम् ॥

अभावकारणता हि "असदिति चेन्न प्रतिषेधमात्रत्वादि"त्यत्र द्वैतभाष्येऽपि निरस्तः, इति सद्रूपब्रह्मकारणतानिषेधेनाभावकारणताऽऽपादनं न संभवति। निर्विशेषवाक्यमुख्यप्रामाण्ये सविशेषवाक्यानि भेदपराणि वाक्यानि च सर्वाणि यथासंभवं प्रमाणानि। तत्र द्वैतपरत्वम्, अद्वैतपरत्वं च तत्तत्संप्रदायानुसारिणां तत्तन्निबन्धमूलकविचारपरम्परया तत्तत्प्रकरणेषु तत्तद्भाष्य-वादप्रस्थानगत-तत्तत्संप्रदायानुसारिणां विचारधारातोऽवगन्तव्यम् ॥

तत्राद्वैतिनां भाष्यप्रस्थाननिबन्धाः, तदीयचित्सुख्यादिवादप्रस्थानो-

पयोगिनां विषयाणां मूलम् । जयतीर्थीयटीका-न्यायसुधादयः, तात्पर्य-चन्द्रिका, तन्मण्डनादयस्तु तत्तद्भाष्यानुव्याख्यानमुखेन प्रवृत्ता द्वैतिनां तदीयसूत्रभाष्याणुभाष्यानुव्याख्यानमूलाश्चित्सुख्यादिपरीक्षारूपा द्वैतिनां वादप्रस्थाननिबन्धाः ॥

तत्राद्वैतिनाम्—भामतीपञ्चपादिकादयः, व्याख्यानुव्याख्यानविधया प्रसरन्तः शङ्करपादभूषणचन्द्रिकाखण्डनाद्वैतदीपिकादयोऽधिकरणप्रस्थान-प्रधानाः । वादप्रस्थानमुखेन द्वैतिनां क्रमेण वर्धमानाः—वादावली-न्यायामृत-न्यायामृततरङ्गिणी-न्यायामृतकण्टकोद्धार-न्यायामृतसौगन्ध्य-सटिप्पण-न्यायामृतार्णवाः । अद्वैतिनां तु वादप्रस्थानदिशा सुदूरं वृद्धिं गतास्तु—चित्सुखी-न्यायचन्द्रिकाऽद्वैतसिद्धि- सिद्धिव्याख्या-लघु-गुरुचन्द्रिकाद्वय - न्यायामृतसौगन्ध्यविमर्श-सटिप्पणन्यायामृतार्णवपरीक्षादयो बहवः । न्यायभास्करस्तु द्वैत-विशिष्टाद्वैतसाधारणानां विषयाणामद्वैतसिद्ध्यादिगतानां लघुचन्द्रिकाखण्डनात्मको वैष्णवाग्रेसरपण्डितप्रवरानन्ताल्वार्महाशयेन ग्रथितो न्यायेन्दुशेखर-न्यायभास्करखण्डनादिनाम्ना पूज्यश्रीत्यागराजमखीन्द्र-श्रद्धास्पद-श्रीरामसुब्रह्मण्यशास्त्रिचरण-पूज्यश्रीगुरुचरणश्रीपञ्चपकेशशास्त्रिपादादिद्वारा साम्प्रतं प्रकाशिताः, अप्रकाशिताः, प्रकाश्यमानाश्च प्रसिद्धाः । साम्प्रतं तु द्वैतसिद्धान्तधुरन्धरपूज्यश्रीविद्यामान्यतीर्थ-श्रीभाण्डरकरिस्वामिनामाज्ञानुसारम्, तैरेव सप्रेमानुबन्धमनुगृहीतन्यायसुधानिबन्धसमालोचनार्थं विचारविनिमयेन द्वैताद्वैतसिद्धान्तविकासः सर्वतो वर्धतामित्ययं निबन्धो निबध्यते ॥

न केवलं भण्डारकरिश्रीचरणाः, किन्तु पेजावरमठाध्यक्षविद्यारसिक श्रीचरणा अपि सुहृद्भावेन तत्तत्सिद्धान्तसिद्धप्रक्रियाविशेषाणां विना शाखाचङ्क्रमणम्, परिहासबुद्धिं वा विचारधारामिमां सप्रेमानुबन्धमनुसर्तुम्, पूज्यश्रीभाण्डारकरिश्रीचरणा इव मामाज्ञापयन्, इति तदाज्ञामपि शिरसि कृत्यैवायं प्रबन्धो निबध्यते । द्वैताद्वैतविचारधारा हि न्यायचन्द्रिकादिसमयमारभ्य समयबन्धापरित्यागेन विषयैकदृष्ट्यैव वर्धते, इति तदाज्ञयाऽत्र प्रवर्तमानोऽयं विधेयः सर्वथा स्वबुद्धिविकासमेवानेन निबन्धेनापेक्षते, अविहायैव श्रीमदानन्दतीर्थेषु पूज्यपादभावम्, सर्वात्मना सर्वैपूज्यभावं च तत्संप्रदायैकजीवातुतत्तन्मठाधीशानामुपरि ॥

तत्त्वातत्त्वनिर्णयस्तु तत्तदभिमाननिबन्धनस्तस्य तस्य यथा तथा वा

भवतु, न सांप्रतिका वयं मतविशेषस्य प्रवर्तने, निवर्तने वा पूर्वाचार्या इव प्रभवः। वह्वोः समयात् प्रवृत्ता विचारधारेयं पुनरपि वर्धमाना नियतं बुद्धिविकासमातनिष्यतीति विश्वस्य विचारोऽयं पुरुषोत्तमाराधनबुद्ध्या प्रस्तूयते। यदि सविशेष एव वेदान्तानां पर्यवसानम्, तदापि—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्॥"
"ईश्वरानुग्रहादेव पुंसामद्वैतवासना॥"

इत्यनुसारेणात्रैव ब्रह्मभावं येन केनापि क्रमेणादधातु॥

"येनापि केनापि हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि॥"

इति नीतिशरणोऽयं निबन्धा—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥

इति वचनानुसारं भगवदेकवशस्तदाज्ञानुसारमत्रावतीर्णो "वैषम्य-नैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शनमि"ति न्यायेन स एव स्वकर्मानुसारं सर्वं प्रवर्तयतीति तदेकनिर्भरः सुधीजनविधेयः, तुल्यनिन्दा-स्तुतिः, श्रीभाण्डेरकरिस्वामिपादादीनामाज्ञामात्रमत्र पालयति, फले त्वत्रोदासीन एव। सांप्रतं त्वेतावदेव।

---



# न्यायसुधापरीक्षा

परापरविद्यानिर्णयः ।

हरेरवतारो बादरायणो लोकहितार्थं परविद्येतिकर्तव्यतारूपां ब्रह्ममीमासां प्रणिनाय । सा चोपनिषच्च न केवलं परविद्योत्तमं शास्त्रम्, किन्तूपनिषद् ब्रह्ममीमांसोपकृतत्वेन, ब्रह्ममीमांसा तु तदुपकारकत्वेन । अत एव ब्रह्ममीमांसाऽऽप्तमूला, श्रुतिमूला, युक्तिमूला च ; श्रुति-युक्ति-संवाद्यर्थावबोधकत्वात् । श्रुतिस्तु स्वतः प्रमाणमपि तदर्थनिर्णयप्रतिबन्धकसंशयनिरासार्थमितिकर्तव्यतात्वेन ब्रह्ममीमांसामपेक्षते ॥

तत्र च सर्वेषां वेदानां वेदत्वेनापरविद्यात्वं विनाऽर्थविवक्षां शब्दब्रह्मविधया, अर्थविवक्षया तु कर्मकाण्डानां कर्मण्यवान्तरतात्पर्यादपरविद्यात्वम्, उपनिषदां त्वक्षरपरमात्मस्वरूपपरतया परविद्यात्वमित्यद्वैतराद्धान्तः । न्यायसुधादयस्तु कर्मकाण्डानामपि परविद्यात्वं विष्णुपरत्वेन । तदुक्तम्—

"ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥"

इति प्रतिपादयन्ति ॥

कर्मणि मुख्यं न तात्पर्यमिति तु समानम् । अवान्तरतात्पर्यविषयाणां कर्मणां परविद्यासाधनत्वे न विप्रतिपत्तिः । कर्मपराणामपि साक्षादक्षरबोधकत्वव्यवस्था ब्रह्ममीमांसयाः, इति ब्रह्ममीमांसाया उत्तमशास्त्रत्वं तदभिमतम् ॥

तत्र—"अथातो धर्मजिज्ञासे"ति धर्ममीमांसातः पृथग् ब्रह्ममीमांसायाः सूत्रणात् कर्म-ब्रह्मकाण्डयोर्भिन्नविषयत्वावगमात् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति कर्मणां ब्रह्मज्ञानोपकारत्वमात्रबोधनाच्च कर्मकाण्डानामपि विष्णुपरत्वेन ब्रह्मपरता न विकल्पसहा; परतत्त्वाक्षरस्वरूपपरोपनिषदर्थनिर्णायकतामात्रेणोत्तमशास्त्रत्वे त्वद्वैतिनोऽपि न विसंवदन्ते । परस्परोपकार्योपकारकभावेनोभयप्रामाण्येऽपि ब्रह्ममीमांसाया एवानुग्राहिकाया उत्तमशास्त्रत्वे तु विप्रतिपद्यन्ते ॥

न्यायसुधाया औपक्रमिकविषयसंग्रहः ।

न्यायसुधा हि श्रीमदानन्दतीर्थभगवत्पादकृतब्रह्मसूत्रभाष्याणुभाष्यस्यानुव्याख्यानव्याख्याया ब्रह्मसूत्रभाष्यमङ्गलश्लोकस्यैव तदीयाणुभाष्येऽप्यनुसंहितस्य—

"नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ॥
ज्ञेयं गम्यं गुरूँश्चापि नत्वा सूत्रार्थ उच्यते ॥"

इत्यस्य विवरणात्मकस्यानुव्याख्यानगतस्य, अन्यस्य चौपक्रमिकस्य मङ्गलश्लोकस्य—

नारायणं निखिलपूर्णगुणैकदेहम्
निर्दोषमाप्यतममप्यखिलैस्सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ॥
तमेव शास्त्रप्रभवं प्रणम्य
जगद्गुरूणां गुरुमञ्जसैव ।
विशेषतो मे परमाख्यविद्या-
व्याख्यां करोम्यन्वपि चाहमेव ॥
प्रादुर्भूतो हरेर्व्यासो विरिञ्चि-भवपूर्वकः ।
अर्थितः परविद्याख्यां चक्रे शास्त्रमनुत्तमम् ॥
गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः ।
यतस्तदुदितं मानमजादिभ्यस्तदर्थितः ॥
वक्तृ-श्रोतृप्रसक्तीनां यदाप्तिरनुकूलता ।
आप्तवाक्यतया तेन श्रुतिमूलतया तथा ॥

युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् ॥
दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः ।
अतो नैतादृशं किञ्चित् प्रमाणतममिष्यते ॥

इत्येवंरूपेण प्रवृत्तस्य विवरणरूपेण प्रवृत्ता नारायणशब्देन प्रथमाध्यायार्थम्, निर्दोषपदेन द्वितीयाध्यायार्थम्, आप्ततमपदेन मुख्यपुरुषार्थतया नारायणस्वरूपप्रतिपादनद्वारा तृतीय-तुरीयाध्यायार्थं च भगवान् भाष्यकारः संगृह्णातीति निरूपणप्रसङ्गे गुरूणां गुरुत्वेनानुसन्धीयमानस्य बादरायणस्य भगवदवतारस्यापि नारायणत्वेन रूपभेदेन शिष्टाचारप्राप्तेष्टदेवतानमस्कारस्यावश्यकर्तव्यताम्, नारायणस्यानन्दादिगुणदेहस्य निखिलगुणपूर्णस्य = नाराणाम् = गुणानामयनत्वेन, आराणाम् = दोषाणामनयनत्वेन, नरोपकारिणां नाराणाम् = वेदानां गतित्वेन, नाराणां मुख्याधिपतिमुख्यप्राणायतनत्वेन, नाराणामुद्भवादिदातृत्वेन, नरसमूहवेद्यत्वेन च षोढा नारायणपदबोध्यत्वम्, तत एव सर्वोत्कृष्टत्वम्, तदतिरिक्तदेवतानां वेदाप्रतिपाद्यत्वम्, ब्रह्ममीमांसाशास्त्रस्य वेदसमानयोगक्षेमम्, ततोऽधिकं वा "अनुक्तं पञ्चभिर्वेदैरुत्सन्नान् भगवानि" त्यादिनाऽशेषविशेषार्थप्रतिपादकत्वेन परविद्यात्वेन च प्रामाण्यं व्यवस्थापयन्ती "सूत्रार्थ उच्यते" इति भाष्यगतसूत्रपदस्य रूढ्या, प्रसिद्ध्या च ब्रह्मसूत्रमात्रपरत्वेऽपि ब्रह्मसूत्रमिति ब्रह्मपदप्रयोगेण ब्रह्ममीमांसायां सकलवेदार्थभूतस्य विष्णोरेव विषयत्वं विशदीकुर्वाणोपसंहरति—

एतेन—एतच्छास्त्रवाचिनः शारीरकशब्दस्य शरीरमेव शारीरम्, तत्र भवः शारीरकः = जीवः, तमधिकृत्य कृतोऽयं ग्रन्थः इति व्याख्यानं निरस्तम्—इति ॥

एवं लिखन्त्यपीयम्—

शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वर एव च ।

इति ब्रह्मसूत्रमिति शारीरकसूत्रमित्यपि संज्ञां ब्रह्ममीमांसाया अनुमन्यते, इति शरीरे भवः शारीरः, तत्सूत्रमिति व्याख्या ब्रह्मसूत्रपदे न विरुद्धमिति मन्तव्यम् ॥

शारीरिकमीमांसाख्याया अद्वैतमतेऽनुपपत्तिशङ्का, तत्परिहारश्च ।

तथाहि—किमत्र जीवस्य शारीरकपदार्थत्वं निषिद्ध्यते, उत शारीरकस्यापि

तस्य ब्रह्मत्वम् । आद्ये नाद्वैतमतेऽपि जीवस्य जीवरूपेण जिज्ञास्यता, किन्तु ब्रह्मरूपेणैव, इति ततो जीवपरतया प्रतीयमानस्याप्यात्मनो वाक्यान्वयाधिकरणे जीवत्वोपलक्षितब्रह्मपरत्वव्यवस्थापनात् तत्त्वमसीत्यादौ व्यक्तं जीवब्रह्माभेदबोधनाच्च जीवस्वरूपजिज्ञासापि ब्रह्मजिज्ञासैव ।।

ईश्वरोऽपि शारीरपदार्थो नात्र विशिष्टः, किन्त्वीश्वरत्वोपलक्षितसंविन्मात्रम्, इति हि ब्रह्ममीमांसा मीमांसते, इत्युत्तरत्र विशदीभविष्यति । ब्रह्मसूत्रपदेन वेदः, तदर्थो वा विवक्ष्यत इति वदन्ती न्यायसुधाऽपि वेदार्थविचारमेवात्र प्रस्तौति । वेदार्थश्च जीवः प्रत्यक्षादिप्रमाणानवगतः प्रत्यगात्मा, इत्यविद्योपहितस्वरूपो ब्रह्मपदार्थोऽत्र जिज्ञास्यत इति सिद्धान्ताद् वेदान्तमात्रावगम्यजीवस्वरूपमपि ब्रह्मैव, इति ब्रह्मसूत्रपदमव्याहतं शारीरकजिज्ञासायां प्रस्तुतायामपि ।।

जीवब्रह्मैक्यकल्प एव स्वारस्यं
ब्रह्मजिज्ञासासूत्रे ब्रह्मपदस्य ।

तत्र ब्रह्मपदेन सकलगुणपूर्णो विष्णुः, ब्रह्म-विष्णु-शिवात्मको विवक्ष्यत इति न विप्रतिपन्नम्; तथापि विष्णुस्वरूपस्यैव तत्र प्राधान्यात् स एव विवक्षितो वा, उताविशेषेण ब्रह्मस्वरूपमात्रम्; विष्णुपुराणे परमात्मनो ब्रह्म-विष्णु-शिवात्मकत्वस्याम्नानादित्यत्रैव विप्रतिपत्तिः ।।

अत एव भगवत्पादीयं भाष्यम्—"द्विरूपं हि ब्रह्मावगम्यते वेदान्तशास्त्रेष्विति । तत्र सगुणं संकर्षकाण्डप्रस्तुतं तदुपासनद्वारा निर्विशेषब्रह्मसाक्षात्कारस्याङ्गम् इत्यभिप्रेत्याप्राधान्येन सगुणस्य, प्राधान्येन निर्विशेषस्य च ब्रह्मणो जिज्ञासेति भगवत्पादीयो राद्धान्तः; अन्यथा "स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इत्युपसंहरता संकर्षकाण्डेनैव विष्णुरूपब्रह्मजिज्ञासाया गतत्वात्—"अथातो ब्रह्मजिज्ञासा" इति विष्णुपदं विहाय ब्रह्मपदेन सामान्येन ब्रह्मजिज्ञासायाः—पृथक् प्रतिज्ञा नोपपद्येत, न वा जिज्ञासाधिकरणे जीवपूर्वपक्षताया उत्थितिः ।।

"अथातो ब्रह्मजिज्ञासे"त्यत्र पूर्वपक्षो जीवजिज्ञासाया एवोपपत्तिमाश्रित्य । तत्र यदि ब्रह्मशब्दस्य जीवो नार्थः, कथं तत्र पूर्वपक्षो नोत्पन्नेव हन्यते ? न हि प्रत्यक्षं जीवस्वरूपं वेदान्तगम्यतया पूर्वपक्षविषयः; अन्यथा वेदान्तानामनुवादकत्वेन, असन्दिग्धत्वेन चाविचारणीयत्वात्, इति अद्वैत्यभिमतं प्रत्यग्ब्रह्मैक्यमभिप्रेत्य हि तत्र पूर्वपक्षः । व्यक्तीकरिष्यते चेदमुपरिष्टात् ।।

तथाच जीवस्वरूपमप्यात्मत्वाद् यदि ब्रह्मशब्दार्थः; आत्मन एव ब्रह्मत्वात्, तर्हि ब्रह्मसूत्रपदे ब्रह्मपदं शारीरकपदार्थजीवात्मस्वरूपाभिप्रायमिति वक्तव्यम्। जिज्ञास्यत्वं तु जीवस्याज्ञातेन रूपेणैव भगवत्पादाभिमतम्, इति न ब्रह्मसूत्रपदविरोधाज्जीवो नात्र शारीरकपदार्थः ॥

अयमेव ब्रह्ममीमांसासिद्धान्तः, न तु सगुणब्रह्मस्वरूपमात्रजिज्ञासा। परमते तु जीवपूर्वपक्षः, सविशेषब्रह्मसिद्धान्त इति पूर्वोत्तरपक्षयोर्वैरूप्यम्। अधिकं मध्वमुखविध्वंसनादौ। ततश्च सिद्धान्तदृष्ट्या शारीरकपदं ब्रह्मपदं चैकार्थं मत्वैव ब्रह्ममीमांसायाः शारीरकमीमांसापदेन व्यपदेशः। इदमेवाभिप्रेत्य—"अथ यदसन्दिग्धम्, अप्रयोजनं च, न तत् प्रेक्षावत्प्रतिपित्सागोचरः—यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकवर्ती घटः, करटदन्ता वा। तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिरित्यारभ्यासन्दिग्धस्याजिज्ञास्यत्वेन पूर्वपक्षम्, सन्दिग्धत्वेन जिज्ञास्यत्वं च भामती वर्णयति। इदं चैकविषयत्वं सन्दिग्धत्वासन्दिग्धत्वाभ्यामद्वैतमत एवोपपद्यते ॥

शारीरकपदमेव तु पूर्वपक्षस्य, सिद्धान्तस्य चान्यतरकोटिसाधारणत्वात् सन्देहबीजमप्यत एव संगच्छते। परमते जीवस्याजिज्ञास्यत्वम्, ब्रह्मणो जिज्ञास्यत्वमिति किं केन संगतम्? कुतो वा आम्रान् पृष्टस्य न कोविदारोत्तरसाम्यम्?

परेतु—शरीरे भवः शारीरः, अज्ञातः शारीरः शारीरक इत्यज्ञातार्थे कन्प्रत्ययमाश्रित्य सन्दिग्धस्य शारीरकस्य मीमांसा शारीरकमीमांसेति द्विविधे शारीरे सन्दिग्धे कस्य ज्ञेयतेति निर्धारणार्थं शास्त्रं शारीरकशास्त्रमिति मत्वा विशिष्टस्यापि ब्रह्माभेदमादायाजिज्ञास्यत्वपूर्वपक्षम्, प्रत्यगभिन्नब्रह्मस्वरूपजिज्ञास्यत्वसिद्धान्तं चात्र व्यवस्थाप्यमभिप्रयन्ति ॥

वस्तुतस्तु—

"शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वर एव च ॥"

इति वचनमपि—नियम्यम्, नियामकमुभयं च शारीरपदार्थं गमयत् तत्तदुपाधिद्वाराऽधिष्ठेयं विशिष्टजीवम्, सर्वाधिष्ठानं संविन्मात्रं च शारीरकपदेन पूर्वोत्तरपक्षविधया समादाय शारीरकस्यैव विषयतामत्र गमयति। ईश्वरपदमपि—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्यवगत-स्वयंप्रकाश-सर्वावभासक-सर्वाधिष्ठानस्य,

तत एव सर्वनियामकस्य चोपस्थापकं नाद्वैतसिद्धान्तविरोधि। ईश्वरोऽपि हि विशिष्टरूपेण वेदान्तेन प्रत्यक्षेण जीव इव ज्ञात एव, परंतु न संविन्मात्र-निर्विशेषरूपेण निर्णीतः, इति शारीरकमीमांसात्वमीश्वरजिज्ञासाया अप्य-द्वैतसिद्धान्त एव स्वरसम्। ईश्वरस्यापि ब्रह्मरूपत्वं तेनैव रूपेण, न तु विशि-ष्टेन रूपेण, इति ब्रह्मपदस्वारस्यमद्वैतसिद्धान्त एव। सर्वथा तु ब्रह्मसूत्रनाम-मात्रेणाद्वैतसिद्धान्तविरोधोपस्थापनं न्यायसुधाया निरालम्बम्॥

तदयं निष्कर्षः—तत्तद्गुणविशिष्टजीवेश्वरयोरविवक्षितोपाधिसंविन्मा-त्ररूपेण जिज्ञासैवात्र शारीरकमीमांसा, ब्रह्ममीमांसा वा, न तु सकल-गुणपूर्णत्वादिविशिष्टेश्वरजिज्ञासा। यदि चैकान्ततः सर्वगुणपूर्णमेव ब्रह्म, तर्हि तत्स्वरूपजिज्ञासयैव पर्याप्तम्, न तु तदीयसकलगुणपूर्णत्वमीमांसा किञ्चित्करी॥

प्रतिज्ञाया ब्रह्ममीमांसानिर्विशेष-

संविन्मात्रविषयत्व एव सार्थक्यम्।

न चात्र सूत्रम्—अथातो गुणपूर्णब्रह्मजिज्ञासेति, इति केवलमत्र ब्रह्मपदप्रयोगाद् निर्विशेषं ब्रह्मैव जिज्ञास्यमिति प्रतीयते, अथवा सविशेष-निर्विशेषोभयजिज्ञासा॥

सर्वदोषविहीनत्वोक्तिरप्यत एव व्याख्याता। तेन हि सर्वजगत्कारण-त्वादेरविद्योपाधिप्रयुक्तत्वेप्युपाधेः प्रतिबिम्बपक्षपातित्वाद् उपाध्यवच्छि-न्नपक्षपातित्वाद्वा नैकान्ततो ब्रह्मणः सविशेषत्वमित्येवावसीयते॥

निर्दोषत्वं हि ब्रह्मणः कं वा दोषं तत्र प्रसक्तमपेक्ष्य? यदि न कोऽपि तत्र प्रसज्यते, तर्हि कथं तत्र नाप्रसक्तप्रतिषेधः? उपाधिसम्बन्धप्रयुक्ता गुणा एव दोषा इत्यभिप्रेत्य यदि निरस्यन्ते, तर्ह्यध्यारोपापवादन्यायेन तत्र प्रसक्तानां गुणानामेव निषेधः, इति निर्गुणपरतायामेव सर्वदोषविहीनत्वादि-वचनानां तात्पर्यम्॥

दोषत्वं हि गुणानामपि जीवगतानां बन्धकत्वप्रयुक्तमेव, न तु स्वरूपप्रयुक्तम्। न हि कोऽपि सर्वदृष्ट्या गुण एव, दोष एव वा। अनियत-स्वभावत्वं हि गुणानाम्, दोषाणां च जीवेषु। ब्रह्मणि तु सर्वे आरोपिता अपि यावत्तत्सत्त्वं विचित्रकार्यकारित्वाद् ब्रह्मणोः गुणा एव। तथाच जीव इव बन्धका अपि वस्तुगत्या दोषा एव सर्वे धर्माः क्वचिद् निर्गुण-पदेन ब्रह्मणि निषेध्यत्वेन बोध्यन्त इति वक्तव्यम्॥

ब्रह्मनिर्विशेषत्वं तन्निर्दोषत्वं चेत्यनर्थान्तरम् ।

अयमत्र निष्कर्षः—निर्दोषत्वं ब्रह्मणः सर्वसंप्रतिपन्नम् । तत्राद्वैतमते ब्रह्मगताः सर्वे धर्मा वस्तुगत्या दोषाः, इति निर्दोषपदेन, निर्गुणपदेन वा सर्वधर्मनिषेधः । अत एव निर्गुणमिति तत्राम्नायते । तस्य सत्त्वादिगुणनिषेधपरत्वं तु सगुणे ब्रह्मणि सत्त्वादिगुणानामप्यप्रसक्तत्वाद् नोपपद्यते, इत्यारोपप्रयुक्तगुणदोषनिषेधपरतयैव निर्दोष-निर्गुणादिपदानां गतिर्वक्तव्या, येन नाप्रसक्तप्रतिषेधः । का वा विनिगमना गुणपदस्य सत्त्वादिगुणपरत्वे, हेयगुणपरत्वे वा ? के वा हेया गुणा दोषातिरिक्ताः ? कथं वा सत्त्व-रजस्तमांसि गुणा नाम ? बन्धकत्वं च तत्र कथम् ? तथाच निर्दोषत्व-निर्गुणत्वपदे पर्याये एव । अधिकमन्यत्र । सर्वथा तु ब्रह्ममीमांसाया उत्तमशास्त्रत्वे न विसंवादः ॥

ब्रह्ममीमांसाया अनुत्तमत्वे निमित्तम् ।

ब्रह्ममीमांसायाः सर्वोत्तमत्वं वेदान्तमहातात्पर्यविषयब्रह्मस्वरूपप्रतिपादकत्वेन ब्रह्ममीमांसात्वेनैव, न तु मीमांसात्वमात्रेण । तत्र यद्यपि त्रिविधमस्ति प्रामाण्यम्—यथा लौकिके पित्रादिवाक्य आप्तिमूलतया, श्रुतिसंवादेन, आप्तोक्तित्वेन च धर्माधर्मादिपरे मन्वादिवाक्ये । तस्य हि न युक्तिमूलकत्वेन प्रामाण्यम् । हेतुदर्शनं हि धर्माधर्मयोरप्रामाण्य एव कारणमिति हि जैमिनीयाः । युक्तिमूलतया तु लौकिकेऽनुमाने प्रामाण्यम् । तन्मूल ईश्वरः सर्वज्ञ इति वाक्ये तु न श्रुतिमूलकत्वम्, न वाऽप्तिमूलकत्वम् । ब्रह्ममीमांसायां तु त्रिविधमपि प्रामाण्यमस्ति ॥

इदं च जैमिन्यादिसूत्रेष्वप्यविशिष्टम् । न च निरवधिक-सावधिकाप्तिभेदे किमपि प्रमाणमस्ति, इति पौरुषेयत्वे समाने तत्कर्तुर्बादरायणस्य विष्ण्ववतारत्वमकिञ्चित्करं प्रामाण्याप्रमाण्यव्यवस्थायाम् ॥

तत्र यद्यपि भारतमपि सर्वशास्त्रेषूत्तमम्; तथापि परीक्षाशास्त्रत्वेन मीमांसाशास्त्रं परीक्षाशास्त्रेषूत्तमम्, उपदेशशास्त्रत्वात्तु भारतमुपदेशशास्त्रेषूत्तममिति विभागः ॥

आनन्दतीर्थपादानां भाष्याणुभाष्यानु—
व्याख्यानरूपेण त्रिविधविवरणोपयोगः ।

यद्यपि शास्त्रस्यारम्भणीयत्वं सूत्रकारः प्रथमं समर्थयति, इति तद्व्याख्यानेनैकेनैवालम्, किमनेनानुव्याख्यानादिना ? तथापि प्रथमं

सूत्रोपक्षिप्तविषयव्युत्पादनम्, तस्य स्पष्टीकरणेनानुव्याख्यानं च सप्रयोजनम् ॥

तच्च स्पष्टीकरणमनेकविधम्–अनुक्तार्थविवरणम्, संक्षिप्तस्य विवरणम्, अतिविस्तृतस्य बुद्ध्यनारूढस्य संक्षेपः, विक्षिप्तस्यैकीकरणम्, उक्तस्योपपादनम्, अपव्याख्यानस्य निरासेन सिद्धान्तस्य दृढीकरणं च ॥

तत्र यद्यपि भाष्ये, अणुभाष्ये वा सर्वमिदं भाष्यकारैरेव कर्तव्यम्; किमणुभाष्यानुव्याख्यानाभ्यां प्रस्थानभेदेन ? तथापि संक्षेप-विस्तराभ्यां क्रमशो विषयविकासेनोक्तार्थस्य दृढीकरणेन सप्रयोजनं भाष्यकारस्यैव त्रेधा विवरणं सूत्राणाम् ॥

श्रीमदानन्दतीर्थ-भगवत्पादभाष्ययो–
रंशतो विचारसाम्यादिनिरूपणम् ।

तत्र च ब्रह्मसूत्रभाष्योक्तस्यैव मङ्गलश्लोकस्य ततोऽपि संक्षेपो न भवतीत्यणुभाष्येऽनुकरणम्, अनुव्याख्यानेन तु तस्य "नारायणं गुणैः पूर्णमि"त्यंशस्य–"नारायणं निखिलपूर्णगुणैकदेहम्"इत्यनेन, "दोषवर्जितमि"त्यस्य "निर्दोषमि"त्यनेन, ज्ञेयत्व-गम्यत्वयोरितरसाधारण्यात्"आप्यतममि"त्यसाधारणरूपेण "आप्यतममप्यखिलैः सुवाक्यैः"इत्यनेन, "गुरूंश्चापी"त्यपिशब्दस्य "अस्योद्भवादिदमशेषविशेषतोऽपि वन्द्यं सदा प्रियतमम्"इत्यनेन,"नत्वे"त्यस्य "संनौमी"त्यनेन, "गुरूंश्चापी"त्यस्य "शास्त्रप्रभवं जगद्गुरूणां गुरुम्" इतिपदैः, गुरोर्नारायणाभेदं वक्तुं गुरुपदस्यैव विवरणम्, "तमेवे"त्यनेन, "सूत्रार्थ उच्यते" इत्यस्य "परविद्याख्यां करोम्यनु चाहमेवे"त्यनेन, निरुपपदसूत्रपदस्य ब्रह्मसूत्रमात्रपरत्वव्युत्पादनपरेण विवरणादनुव्याख्यानं सूत्रभाष्यमङ्गलश्लोकतात्पर्यस्य संक्षेप-विस्तराभ्यामुपपादनेन सफलमिति न्यायसुधा ॥

अयमेव न्यायः सूत्रार्थवर्णनप्रसङ्गेनैव सूत्रार्थस्य विवरणप्रसङ्गे शङ्करभगवत्पादैरप्यवलम्ब्यते तत्र तत्र–स्वभाष्यस्य स्वयं विवरणेन, परमतनिरसनपूर्वकौपनिषदसिद्धान्तव्युत्पादनेन ॥

"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"

"आक्षिप्य भाषणाद्भाष्यमि"ति काव्यमीमांसादिलक्षितभाष्यलक्षणमनुसृत्य प्रथममेव संक्षेप-विस्तराभ्यां च । तत्रानुक्तचिन्ता, दुरुक्तचिन्ता च

वार्तिककृत्यम्, न तु भाष्यस्येति षड्विधपूर्वोक्तविवरणानामेव भाष्यलक्षणत्वाद् न स्वयमेव स्वीयभाष्यस्य संक्षेप-विस्तराभ्यां निरूपणार्थं भाष्यान्तरापेक्षा भगवत्पादभाष्यस्य। पञ्चपादिका-विवरण-भामती-कल्पतर्वादिव्याख्योपव्याख्यादिस्तु तत्त्वप्रकाशिका-न्यायसुधा-तात्पर्यचन्द्रिकादिस्थाने भगवत्पादीयभाष्यप्रस्थानभेद इति विभागः॥

सूत्रपदस्य न ब्रह्मसूत्रमात्रपरत्वम्।

तत्र सूत्रशब्दस्य ब्रह्मसूत्रमेवार्थ इति न शङ्करभगवत्पादानाम्, अन्येषां वा भाष्यकाराणां संमतम्; महाभाष्यादौ कुत्रापि तथाऽदर्शनात्॥

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ॥
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"

"सूचनात् सूत्रमुच्यते" इत्यादिसूत्रलक्षणानां सर्वसाधारण्यात्, ब्रह्ममीमांसात्वेन ब्रह्ममीमांसाया एव प्रसिद्ध्या ब्रह्मसूत्रभाष्यप्रसङ्गेन सूत्रपदप्रयोगात्, प्रकरणवशेन परविद्यात्वं ब्रह्मसूत्राणामित्यर्थलाभेनापीष्टसिद्ध्या सूत्रपदस्य ब्रह्मसूत्रमात्रपरत्वकल्पनायां प्रमाणाभावात्॥

"निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः।"

इति श्रीमदानन्दतीर्थपादोद्धृतं वचनं तु—

"चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा।"
"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"

इति ब्रह्मसूत्राणि प्रक्रम्य प्रवृत्तं ब्रह्मसूत्रस्तुतिपरम्; "चकार ब्रह्मसूत्राणी"ति ब्रह्मसूत्रपदायोगात्॥

"नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम्॥
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते॥"

इति ब्रह्मसूत्रभाष्यप्रसङ्गे सूत्रपदेनैव स्वव्याख्येयनिर्देशेऽपि तस्य स्कान्दादिनापि प्रशंसामुपपादयितुमेव स्कान्दवचनानामत्रानुसन्धानमिति वा मन्तव्यम्। सांप्रतिकमुद्रापितस्कान्दपुराणेष्वनुपलभ्यमानत्वम्, उपलभ्यमान वाऽकिञ्चित्करम्॥

आद्यन्तयोः प्रतिसूत्रमोंकारघटितत्वपरीक्षा ।

तत्र—"अथातो ब्रह्मजिज्ञासा" इति भगवत्पादश्रीशङ्कर-श्रीरामानुजादीनां श्रीवल्लभाचार्यान्तानां संप्रदायसूत्रपाठः, भगवत्पादानन्दतीर्थसंप्रदाये तु "ओं अथातो ब्रह्मजिज्ञासा" इत्योमित्याद्यन्तयोरोंकारघटितः सूत्रपाठः, किं बहुना ? सर्वाणि ब्रह्मसूत्राण्याद्यन्तयोरोंकारपदघटितान्येवाधीयन्ते श्रीमध्वसंप्रदाये । तत्र—

"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्माद् माङ्गलिकावुभौ ॥"

इति यद्यप्योंकाराथशब्दयोर्माङ्गलिकत्वं स्मर्यते; तथापि तत्र—

"सर्वत्रानुगतत्वेन पृथगोंक्रियतेऽखिलैः ॥

इति ब्रह्मसूत्रावयवतया तत्पाठो न प्रामाणिकः; अन्यथा वेदवाक्यानामपि प्रतिविधिवाक्यं प्रतिमन्त्रं चादावन्ते चौंकारपाठापत्त्याऽध्येतॄणां प्रतिविधि प्रतिमन्त्रं च तदध्ययनापत्तिप्रसंगः, अविघ्नसमाप्तयेऽध्ययनोपक्रमादौ तत्प्रयोगस्तु न तदवयवत्वेन , किन्तु स्वतन्त्रं मङ्गलार्थम् ॥

मङ्गलार्थमपि ब्रह्ममीमांसायामोंकारपाठानौचित्यम् ।

ब्रह्मसूत्रेषु तु सर्वोपक्रमेऽथशब्दस्याप्योंकारवद् मङ्गलार्थत्वात् तेनैव तन्त्रेण सार्थकेनेष्टनिर्वाहादोंकारस्यापि मङ्गलार्थे नोच्चारणमावश्यकम् । मङ्गलाधिक्यमधिकाय फलायेति कृत्वौंकारस्यापि सूत्राद्बहिः पाठस्तु स्वतन्त्रमङ्गलार्थतया न दण्डेन वार्यते, यदि अथशब्दमात्रेण नालमिति कस्यचनाऽनाश्वासः स्यात् । बादरायणस्य तु भगवदवतारस्य न तादृशानाश्वाससंभावना ॥

ओंकारस्य मङ्गलार्थस्यापि सूत्रावयवत्वायोगः ।

"न चेह मङ्गलमथशब्दस्य वाच्योऽर्थः, किन्तु मृदङ्गध्वनिवदथशब्दस्य तत् प्रयोजनम् । न च कार्य-ज्ञाप्ययोर्वाक्यार्थे समन्वयः शाब्दे व्यवहारे दृष्टः, इति मङ्गलप्रयोजनकत्वमात्रमथशब्दस्य, न तु तस्य वाक्यार्थान्वययोग्यत्वमिति भामत्यादयोऽप्यनेन व्याख्याताः ॥

तथाच यदि "अस्माभिरप्यानन्तर्यार्थाथशब्दश्रुत्या मङ्गलं प्रयोजन-

मित्यङ्गीकारात्" इति न्यायसुधानुसारेण वाक्यार्थान्वयस्त्वथशब्दार्थस्यानन्तर्यस्यैव, इति तदर्थतयैव सूत्रावयवत्वम्, न तु तदनभिधेयमङ्गलप्रयोजकत्वेन, तर्हि तुल्यन्यायेन सूत्रार्थान्वयायोग्यस्यौंकारस्यापि सूत्रार्थान्वयायोग्यस्य न सूत्रावयवत्वं युक्तम्; अन्यथा प्रतिसूत्रं "ओमथे"ति पाठोऽपि कर्तव्यः स्यात्; उभयोरपि मङ्गलार्थत्वात् गरुडपुराणवचनमप्यथातः शब्दयोरेव पाठं समर्थयति, सूत्रादौ न त्वोंकारस्यापि। तद्यथा—

"अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपि।
प्रारभन्ते नियत्यैव तत्किमत्र नियामकम्॥
कश्चार्थश्च तयोर्विद्वन् कथमुत्तमता तयोः।
एतदाख्याहि मे ब्रह्मन् यथा स्यादिति तत्त्वतः॥
एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः।
आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च॥
अथशब्दस्त्वतःशब्दो हेत्वर्थे समुदीरितः।
सिसृक्षोः परमाद् विष्णोः प्रथमं द्वौ विनिःसृतौ॥
ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तस्माद् माङ्गलिकं क्रमात्॥
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः।
अथातश्शब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः॥
सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते।"

इति गरुडवचनान्यथातःशब्दयोः सर्वत्र सूत्रादौ प्रयोगे निमित्तनिरूपणप्रसङ्गे ओंकारस्यापि माङ्गलिकत्वं प्रतिपादयन्त्यपि नौंकारस्यापि सूत्रादौ पाठं समर्थयन्ति॥

निरुपपदसूत्रपदस्य ब्रह्मसूत्रपरत्वायोगः।

अत्र सूत्रशब्दस्य निरुपपदस्य न ब्रह्मसूत्रमात्रपरत्वम्; "अथातो धर्मजिज्ञासे"ति धर्मसूत्रस्याप्यथातःशब्दपूर्वकत्वात्, सूत्राणां सर्वेषां अथातः शब्दपूर्वकत्वाभावाच्च॥

तत्राथशब्दपूर्वकत्वमात्रम्—"अथ शब्दानुशासनम्," "अथ योगानुशासनम्"इत्यादौ, यत्राधिकारमात्रमर्थः, न हेत्वपेक्षा। यत्र तु हेतोरप्यपेक्षा, तत्राथातःशब्दपूर्वकत्वम्। यथा—"अथातो धर्मजिज्ञासा," "अथातो ब्रह्मजिज्ञा-

से"त्यादौ । न चात्रौंकारपूर्वकत्वं कस्यापि सूत्रस्य कथमिति प्रश्नः, तदुत्तरं वा । तत्राथशब्दस्य सौत्रस्यैवान्यार्थस्यापि मङ्गलप्रयोजनत्ववर्णने दृष्टान्तविधयैवोंकारस्यापि मङ्गलार्थत्वं वर्णितम् । तत्र च सूत्रावयवत्वं परं ब्रह्मसूत्रादिषु विशेषोऽथशब्दस्येति ज्ञाप्यते; अन्यथा सर्वत्र "अथातशब्दपूर्वकत्वमेव कल्पनीयं स्यात् । न च प्रतिसूत्रमोंकारपाठ इवादावन्तेचाथातःशब्दयोरपि न्यायसुधादिसंप्रदायस्यापि स संमतः । सर्वथा तु निर्विघ्नपरिसमाप्त्यर्थं ग्रन्थाद् बहिः, न तु तदवयवतया कुत्राप्योंकारपाठो युक्तः । अयमेव संप्रदायः सर्वत्र वेदाध्ययनादावपि ॥

ओंकारस्य सर्ववेदवाक्याद्यवयवत्वानियमः ।

श्रौतार्थवादकल्पितविधिरप्योंकारपूर्वकमध्ययनं वेदस्यैव बोधयति, न तु तत्तद्वाक्यावयवत्वम् , न वा सूत्राणामप्योंकारपूर्वकत्वम् । न च प्रयोगकाल ओंकारपूर्वकं पठ्यमानमेव प्रयोगसमवेतमर्थं स्मारयति; अन्यथा "ओमिति सामानि गायन्ति ओंशोमिति शस्त्राणि शंसन्ति" इत्यादिविधिवैयर्थ्यात् , इति मन्त्राद् बहिः स्वतन्त्रमोंकारोच्चारणं मङ्गलार्थमेव । अतएव—"ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति" इति विधिरुपपद्यते, इति प्रवक्तुरध्येतुर्वा मङ्गलार्थं वैदिकवाक्यविषयओंकारपाठो नियतः, वेदान्तेष्वपि कथञ्चन नियतः; अन्यथेतिहास-पुराण-न्याय-व्याकरणादिवेदाङ्गानामप्यादावन्ते च प्रतिवाक्यमोंकारपाठ आपद्येत ॥

न च महाभाष्यकारादयः पाणिनिसूत्राणि तथा पठन्ति, पाठयन्ति वा । कल्पसूत्राण्यापस्तम्बादिमहर्षीणां वेदाङ्गान्यपि न शिष्टाः केऽपि प्रतिवाक्यं तदवयवतयौंकारसहितं पठन्ति, न वा शस्त्राणि सामानि वा प्रतिशस्त्रं प्रतिसामं चौंकारपूर्वकमधीयन्ते, शस्यन्ते, गीयन्ते वा । सकृत्तदादावन्ते च संपूर्णस्य वाक्यसमुदायस्य प्रत्यहमधीयमानस्योङ्कारपूर्वकं प्रवचनादियोग्यत्वेऽपि प्रतिवाक्यं तदवयवतयैव तेषां तेषां मन्त्राणाम्, सूत्राणां वेति नियमे न मानाभावः, न वा गरुडपुराणवचनमप्यादावन्ते च प्रतिश्लोकम्, प्रत्यवान्तरविषयं वाऽथातःशब्दपूर्वकत्वम् , ओंकारपूर्वकत्वं वा नियच्छति ॥

मङ्गलार्थमप्योंकारपाठस्यानियमः ।

अथशब्दवत् तत्समानार्थकतया मङ्गलार्थतया तदुच्चारणस्यापि विध्यु-

न्नयनं तु यत्र शास्त्रे नाथशब्देनोपक्रमः, तद्विषयमेव भवितुमर्हति, न त्वथ-शब्दघटितशास्त्रोपक्रमेऽपि । इयमेव रीतिः सर्वैरपि वैदिकदर्शनकारैराद्रियते ॥

"स्रवत्यनोंकृतं ब्रह्मे"त्यपि "ओमिति प्रवक्ष्यन्नाहे"त्यादिविधिविषयमध्ययनाध्यापनकालिकौंकारपूर्वकत्वमभिप्रेत्य, न तु सर्वस्य वेदस्य, तदङ्गानाम्, तदुपबृंहकपुराण-न्याय-मीमांसा-धर्मशास्त्राणां वा प्रतिवाक्यमोंकारपूर्वकत्वमभिप्रेत्य ॥

न चात्र ब्रह्मशब्दः परविद्यामात्रपरः, किन्तु त्रयीविषयः, येन परविद्यामात्रे प्रतिवाक्यमवान्तरपरविद्यात्वात् सर्वत्र कर्मकाण्डादौ तदर्थनिर्णायके पुराणेतिहास-धर्मशास्त्रेष्वपरविद्यासु वा न नियमस्यावसरः, किन्तु ब्रह्मसूत्रमात्रे ॥

वेदान्त-ब्रह्मसूत्रयोर्न प्रकृति-विकृतिभावः, इति नौंकारपाठस्योहकथा ।

एतेन—ओंकारस्य परविद्यावयवेषूहवादोऽपि-परास्तः । ऊहो हि प्रकृति-विकृतिभावे, तदुभयाङ्गेषु वैकृतेषु केवलं प्रवर्तते, न तु प्राकृतेष्वपि । न हि वेदान्तवाक्यानां परविद्यापराणां प्रतिवाक्यमङ्गाङ्गिभावः, प्रकृति-विकृतिभावो वा ॥

वेदत्वं हि सर्वेषां वाक्यसमुदायानामिव प्रत्येकस्यापि, अन्यथा "अनधीयाना व्रात्या भवन्ति" "न स्त्री-शूद्रौ वेदमधीयेताम्" इत्यादिवेदाध्ययनानध्ययननिबन्धना दोषाः शाखाभेदमात्रस्य गायत्र्याद्यैकैकवाक्यमात्रस्य वाऽध्ययनेन, सर्ववेदानध्ययनेन च यथायथं न प्रसज्येरन् , इति प्रतिमंत्रं प्रत्यौपनिषदवाक्यैकदेशमात्रम् , तत्रापि केवलं ब्रह्मसूत्रेषूहेनौंकारपाठनियमनं न कथमप्युपपद्यते ॥

ओंकारस्याप्योंकारपूर्वकत्वापत्त्यादिः ।

ओंकारस्य स्वतन्त्रस्य मन्त्रत्वे तस्याप्यादावन्ते चौंकारपूर्वकत्वापत्तिः, अमन्त्रत्वे मन्त्रस्यामन्त्रपूर्वत्वेऽमन्त्रत्वमेव स्यात् ; आनुपूर्वीभेदात्, सर्वथा तस्य स्वतन्त्रस्य प्रतिवाक्यं प्रतिसूत्रं वा तत्तदर्थानन्वयेऽपि तत्तदवयवत्वकल्पना न युक्ता ॥

सर्वथा "किमिव वचनं न कुर्याद् नास्ति वचनस्यातिभारः" इतिन्यायाद्

गौरव-लाघवचर्चाया नावसरलेशोऽपि; तस्य सूत्रार्थानन्वयिनोऽपि सूत्रावयवत्त्वस्याप्रामाणिकत्वात् तस्य तदवयवत्वकल्पनाया अयोगव्यवस्थायामेवात्र तात्पर्यम् , अन्यथाऽनन्वयिनोऽपि वाक्यैकदेशत्वे प्रतिपदमपि सूत्रेषु कथं न तदवयवत्वम् ; परविद्यावयवत्वादोंकारस्य ?

न च तथौंकारस्य संहितापाठेऽस्ति किमप्यथातःशब्दयोरिव प्रमाणम् । तत्र यदि शिष्टैः कैश्चन संप्रदायक्रमेणादावन्ते चौंकारपाठपूर्वकमेव सूत्राणां पाठः समाद्रियते, तर्हि यथासंप्रदायमोंकारस्य न केवलमादौ, अन्ते च, किन्तु मध्येऽपि भवतु नाम पाठः । मङ्गलार्थतया सूत्राणां तदर्थानन्वितानामपि तदवयवत्वं मा विज्ञायीति बोधनार्थमेवैतावान् प्रयत्नः, येन श्रीमदानन्दतीर्थसंप्रदायापेक्षयापि प्राचीनानामाचार्याणां संप्रदायोऽपि सुरक्षितः स्यात् , तस्यासांप्रदायिकत्वं मा भूत्—इति ॥

तत्र "स्रवत्यनोंकृतं ब्रह्म" इत्यर्थवादः कथञ्चन पूर्वोद्धृतगरुडपुराणवचनानुसारेण शास्त्रोपक्रमस्यैवौंकारपूर्वकत्वविधिमुन्नेतुं शक्नोति, न तु प्रतिसूत्रम्, न वाऽदाविवान्तेऽपि तत्पाठविधिम् । ओंकारस्यापि प्रतिसूत्रं प्रतिवाक्यार्थं वाऽन्वयो नास्त्येव। व्यक्तीकरिष्यते चेदं यथावसरमुत्तरत्र। सर्वथा तु शास्त्रोपक्रमे शास्त्राद्बहिः, तदनवयवतयौंकारपाठो न विप्रतिपन्नः। अखिलैर्वेदपाठकैः पृथग् रूपान्तरेण, स्थानव्यत्यासेन वा यदोंक्रियते; तदुक्तन्यायेनादावुच्चारणेनैव सर्वत्रानुगतत्वेनोपपद्यते , इति तु वेदपाठकैस्सर्वैस्तत्र तत्रौंकारोच्चारणस्य तत्तद्वाक्यवयवत्वेन ततो बहिरेव तदुच्चारणात् तेन न्यायेन तदा तदा वेदोपक्रम-तदुत्सर्जनयोरोंकारपाठोऽविप्रतिपन्नः; ओंकारस्य सूत्रानवयवत्व एव तात्पर्यात् । अन्यत्र यथासंप्रदायं मङ्गलार्थं शान्तिपाठादौ, अध्ययनाध्यापनकाले वा ओंकारमात्रस्य, उभयस्य वा पाठेऽनाश्वासात् ॥

### ब्रह्मण आकारार्थत्वम् ।

तदेवं शास्त्रव्याख्येयत्वे प्रेक्षावतस्तत्र प्रवर्तयितुं प्रयोजनादि सावतरणं भाष्यते—"ओमथातो ब्रह्मजिज्ञासे"ति । तत्र प्रथमसूत्रघटकौंकारव्याख्यामिषेण विषय-प्रयोजनादि श्रीमदानन्दतीर्थपादाः सूचयन्ति—

"ओतत्ववाची ह्योंकारो वक्तव्यसौ तद्गुणोततताम् ,
स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥
स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः ।

भावनाच्चैव सुत्वाच्च सोऽयं पुरुष उच्यते ॥
ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः ।
वृणुते यं तेन लभ्य इत्याद्युक्तिबलेन हि ॥"

इति । एतेनौंकारार्थ एव ब्रह्मपदार्थः, इति ब्रह्मस्वरूपनिर्णायकतयौंकारस्य सूत्रार्थान्वयोऽपि व्याख्यात इति न्यायसुधादयः । तत्रौंकारस्यैव ब्रह्मपदार्थत्वे ब्रह्मपदवैयर्थ्यमपरिहार्यमिति त्वन्यदेतत् ॥

इदमत्र विविच्यताम्—ब्रह्मपदार्थः कथं नारायणः? कथं च स ओंकारव्याख्यानेन सिद्ध्यतीति ॥

ब्रह्मजिज्ञासासूत्र ओंकारस्य जिज्ञास्यब्रह्मपरत्वायोगः ।

तत्र—

"अकारस्सर्ववागात्मा परब्रह्माभिधायकः ।
तथौ प्राणात्मकौ प्रोक्तौ व्याप्ति-स्थितिविधायकौ ॥"

इति गरुडपुराणवचनेन यदि सर्वात्म-सर्वव्यापक-नियामकस्वरूपमोंकारार्थः, तर्हि स कथं नारायणपदपर्यायः? अयं चार्थो ब्रह्मपदेनाप्यवगम्यत इत्येव द्वैतसिद्धान्तात् किमर्थं वाऽस्यौंकारेणापि विवरणम्? तत्रौमर्थो ब्रह्म-विष्णु-शिवात्मकं मायोपहितं स्वरूपम्, यदेव सदाशिव-नारायणादिपदबोध्यं सृष्टि-स्थिति-संहारकारणं व्यापकमुपास्यपरमकाष्ठारूपं सगुणमवान्तरतात्पर्यविषयः, "जन्माद्यस्य यतः" इत्युत्तरत्रसूत्रे तटस्थलक्षणलक्षितम्, इति तावन्मात्रस्य ब्रह्मशब्दार्थत्वात् "स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति संकर्षकाण्डेनैव तज्जिज्ञासायाश्चरितार्थत्वाद् निर्विशेषब्रह्मणो जिज्ञास्यत्व एव परमतात्पर्याच्च सविशेषनारायणादिसर्वशब्दवाच्यब्रह्मस्वरूपमात्रविवक्षायां नोक्तसूत्रस्य तात्पर्यम् ॥

ओमर्थो न नारायणः ।

ब्रह्मजिज्ञासेति समस्तपदघटकब्रह्मशब्देनौंपदस्य स्वतन्त्रस्यानन्वयेन सूत्रार्थसमन्वयाभावात्, विनाऽप्योंकारं विवक्षितार्थसिद्धेश्च नौंकारपदघटितत्वमस्य सूत्रस्य युक्तम्; तुरीयार्धमात्राघटितस्यौंकारपदस्य मूर्तित्रयातीततुरीयपरस्य तदन्तर्गतविष्णुमात्रपरत्वायोगः; तस्य स्थितिमात्रकारणस्य जन्मादित्रितयकारणत्वायोगात् । नारायणपदं ब्रह्म-रुद्रसाधारणमपि

तदंशत्वमात्रेण, स्वरूपतस्तदैक्याद्वा परमात्मपरम्, इति तु विष्णुपुराणे व्यक्तम्, यत्र ब्रह्मण्येव 'आपो नारा इति प्रोक्ताः" इति स्रष्टरि नारायणशब्दो व्युत्पाद्यते, जनार्दनशब्दश्च तत्समानार्थो रुद्रे। स्थितिकर्मा विष्णुर्नारायणशब्दार्थ इति तु न विष्णुपुराणे कुत्रापि निरुच्यते। तुरीयस्यैव विष्णुत्वं व्यापकत्वेन नारायणत्वं च यदि व्युत्पत्तिविशेषेण, तर्हि तस्य तत्तदागमानुसारेण सदाशिवादिपरस्य न स्थितिमात्रकर्तृविष्णुपरत्वमिति त्वन्यदेतत्॥

### भर्गशब्दार्थो न नारायणः।

एतेन—भर्गशब्दार्थोऽपि—व्याख्यातः। स हि विष्णुपदस्य नारायणपरत्ववद् रुद्रपरत्व एव प्रसिद्धः, इति यदि व्याहृत्यर्थैकगम्यतया ब्रह्मस्वरूपनिष्कर्षः, तदापि ब्रह्म-विष्ण्वादिभेदशून्यतुरीयस्वरूपब्रह्मतायामेव स स्वरसः, इत्यनुव्याख्यानगतमोंकारव्याख्यानमद्वैतसिद्धान्तस्यानुगुणमेव, न तु प्रतिकूलम्। तत्र विष्णु-नारायण-भर्गादिपदप्रतिपाद्यत्वं परमात्मनस्तत्तदुपाधित्यागेन स्वरूपैक्य एव पर्यवस्यति। ततश्च निर्विशेषं ब्रह्मैव मुख्यतात्पर्यविषयो वेदान्तानाम्, ब्रह्ममीमांसायाश्च, कर्मोपासना-तदुपयोग्यर्थस्त्ववान्तरतात्पर्यविषयः, इति सगुण-नारायण-ब्रह्मावान्तरतात्पर्यगोचरतायामविवादाद् न कोऽपि विरोधः। सर्वथा त्वोमर्थविवरणमेवमत्र सूत्रार्थविवरणप्रसंगे न संगतम्॥

### जीवजिज्ञास्यत्वायोगेन पूर्वपक्षस्याद्वैतमत एवोपपत्तिः।

तत्र शोधितस्त्वंपदार्थ इव शोधितस्तत्पदार्थोऽपि, इति तत्त्वमसिवाक्यार्थ आत्मैव प्रमाणान्तरेणाज्ञातः "आत्मा वा अरे द्रष्टव्यः" इति विषयवाक्यस्य विषय इति सङ्गतिरप्यविकला। न चैवं सति पूर्वोत्तरयोः पक्षयोर्भिन्नविषयता द्वैतमत इव। तत्र प्रत्यक्षावगतशरीरेन्द्रियादिनियामकजीवात्मस्वरूपमतिरिच्य तद्विरोधेऽपि श्रुत्या यदीश्वरो जीवव्यतिरिक्तः प्रामाणिकः, तर्हि जीवोऽपि पूर्वोक्तः प्रत्यक्षाद्यनवगतः कथं न वेदान्तप्रतिपाद्यो भवति? प्रत्यक्षविरोधस्तूभयत्र समानः। किं बहुना? अहं गच्छामि गौरः स्थूलः इति प्रत्यक्षविरोधेऽन्यत् सर्वं यदि प्रमाणम्, तर्हि कथं श्रुतिः, तदुपबृंहितमनुमानादि च न प्रमाणम्? कथं च तद् जरद्गवादिवाक्यवद् उन्मत्तवाक्यमिव वा? कथं चाकर्त्रादिजीवस्वरूपबोधकं वाक्यमुन्मत्तवाक्यम्; अपौरुषेयत्वात्तद्वाक्यस्य? अन्यथेश्वरपरत्वेऽपि कथं वेदान्तवाक्यानि न जरद्गवादिवाक्यवद् भवेयुः?

मुक्तात्मनो ब्रह्मणैक्यात् पूर्वोत्तरपक्षयोरेकविषयत्वम् ।

न च विगलितान्तःकरणादिबन्धस्यात्मनो वेदान्तवेद्यस्य जीवगोचरप्रत्यक्षेण बाधः सुवचः ; अन्यथा जीवमोक्षप्रतिपादनपरवेदान्तानामप्यप्रामाण्यापत्तिः । यदि मुक्तात्मप्रतिपादनेन वेदान्तानामविरोधः, तर्ह्यकर्तृत्वादिस्वरूपसंविन्मात्रस्येश्वरत्वोपलक्षिताखण्डसंविन्मात्रस्यैव मुक्तात्मत्वात् प्रत्यक्षस्यागमेन बाधो दुरपह्नवः ॥

वेदान्तानां तादृशमुक्तात्मनि न प्रामाण्यमिति तु विचारान्तरम् ; जीवात्मस्वरूपविषयप्रत्यक्षेण तन्मुक्तस्वरूपनिरूपणपरागमस्य न बाध इत्येतावन्मात्रस्यात्र प्रकृतत्वात् । व्यक्तीकरिष्यते चोपरिष्टाद् यथावसरमद्वैतसिद्धान्तसंमतं मुक्तात्मस्वरूपमेवौपनिषदम्—यदज्ञानादेव बन्धः, तज्ज्ञानादेव मोक्षश्चेति ॥

एतेन—जीवाविद्याकृतत्वे बन्धस्य जीवज्ञानादेव मोक्षापत्तिः, बन्धनिवृत्तिर्वा; शुक्त्यज्ञाननिबन्धनरजतस्य शुक्तिज्ञानेन निवृत्तिरिवेति—व्याख्यातम् ; विशदीकरिष्यन्ते चोभयत्राविद्याया जीवाश्रयत्वादिपक्षाः, येषां विस्तारोऽद्वैतसिद्धि-लघुचन्द्रिकादौ,अतिप्राचीनेषु ब्रह्मसिद्ध्यादिषु च ॥

ईश्वरसिद्धान्तपक्षायोगः ।

एतेन—ईश्वर एव विषय इति सिद्धान्तोऽपि—परास्तः; तत्र यद्ययमीश्वर औपनिषदः सगुण एव, तर्हि सगुणस्येश्वरस्य संकर्षकाण्डेनैव-"स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति निर्धारितत्वात्, तद्विशेषविचारस्य तत्प्रसंगेन शेष-पैल्वाभ्यामेव कर्तुमुचितत्वात् "अथातो ब्रह्मजिज्ञासा" इति बादरायणेन ब्रह्मजिज्ञासाया अकर्तव्यत्वात्, न केवलम्, "अथातो ब्रह्मजिज्ञासे"ति सूत्रम्, किन्तु त्रिसूत्री, चतुःसूत्री वा निष्फला स्यात् । ईक्षत्याद्यधिकरणासंगतिस्तूत्तरत्र विशदीभविष्यति । सर्वथा तु—'ओतत्ववाची ह्योंकारः' इति विधयौंकारस्य, ब्रह्मपदस्य वा सगुणपरत्वेऽपि निर्गुणब्रह्मजिज्ञासायां सगुणब्रह्मविचारस्याप्युपकारकत्वाद् निर्विशेषब्रह्मजिज्ञासायामनुषङ्गाद् न विरोधः ॥

ओंकारस्योतत्ववाचित्वस्य निर्विशेषवाद एवोपपत्तिः ।

ओतत्वं ह्यनुवर्तमानत्वं स्वरूपेण साक्षान्निर्विशेषब्रह्मण एवाधिष्ठानतया, सर्वविवर्तोपादानत्वेन तत्तादात्म्यात्, विशिष्टस्यापीश्वरस्य तदुपा-

धिमादाय परिणामत्वाच्च सर्वस्य जगतः सुष्ठूपपद्यते। इदमेवाभिप्रेत्योक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥"

इति। ओतशब्दस्यैव विकृतिरोंपदमित्यभिप्रेत्य यदि ओतत्ववाची ह्योंकार इति विवक्ष्यते, तर्हि ओंपदमादौ न मङ्गलार्थम्, अकारोकारमकारार्धमात्रात्मकौंकारस्यैव "ओमितीदं सर्व"मित्यादौ ओंपदतया ब्रह्मपरताया विवक्षणेनोतशब्दविकारौंपदस्य मङ्गलपरतया शास्त्रादौ प्रयोगस्यायोगेन चात्र तथा विवरणं न युक्तम्॥

युक्तत्वे हि सर्वत्र प्रविष्टत्वं ब्रह्मण एव सर्वात्मनः, "सर्वं खल्विदं ब्रह्मे"ति सर्वात्मतया, अधिष्ठानत्वेन वा, न तु गुणपूर्णत्वमोतशब्दार्थः; गुणानाममूर्तानां प्रवेशासंभवात्, परमात्मना तादात्म्यायोगाच्च। वस्तुगत्या तु ब्रह्म-तद्गुणानामभेद एव, भेदस्तु विशेषप्रयुक्त एव, इति विवक्षायामविद्यातिरिक्तविशेषपदार्थकल्पनायां प्रमाणाभावाद्, आविद्यको भेद एव ब्रह्मगुणानां ब्रह्मणेति वक्तव्यम्॥

तत्र सर्वस्य ब्रह्मापेक्षया सजातीय-विजातीय-स्वगतवर्गस्याप्राधान्येन, गुणत्वेन वा ब्रह्मव्यतिरेकेणाभावमादायैव तदोतत्वं ब्रह्मणः, इत्योंपदार्थस्य ब्रह्मपदार्थेन समन्वयोऽप्यद्वैतवाद एव, न द्वैतवादे॥

ओतशब्देन कर्मणि व्युत्पन्नेन गुणैः प्रविष्टत्ववर्णनं तु "तदनुप्रविश्ये"ति ब्रह्मण एवान्तर्यामिणोऽधिष्ठानस्य प्रवेशकर्तृत्वबोधनाद् जगद्वाचित्वेन न ब्रह्मवाचित्वसंभवः, इति कर्तृवाचित्वमेव। तत्र ब्रह्मणः प्रवेशकर्तृत्वं तु तत्सृष्टमात्रस्य तदात्मतया "सन् घटः" इत्येवंरूपेण प्रतीयमानस्येति जगज्जन्मादिनिमित्तकारणतामात्रत्वे ब्रह्मण ओतत्वमसंभवि, इत्योंपदस्य मङ्गलार्थस्य सूत्रावयवतया प्रयोगेऽप्योतत्ववाचिन ओंपदस्याद्वैतानुगुणं विवरणमेव युक्तम्॥

### जिज्ञासा फलसाधनेच्छा, न फलेच्छा।

तत्र ब्रह्मज्ञानमोक्षहेतुता शास्त्रप्रवृत्तिपूर्वाङ्गभूता सामान्यतोऽत्रानूद्यते। विशेषरूपेण तन्निर्णयस्तु शास्त्रेण संपूर्णेन। तत्र त्रिविधा हि पुंसां चित्तवृत्तिः—अनुभवः, इच्छा, प्रयत्नश्च=प्रवृत्त्यपरपर्यायः। तत्र साधनगोचरी इच्छा, प्रयत्नश्च। तत्रेच्छाया अपि प्रवृत्तिनान्तरीयकत्वात् प्रवृत्तिपदेनोपचा-

रः। अनुभवस्तु नेच्छा, प्रयत्नो वा। फलगोचरेच्छाऽपि नेच्छापदार्थः; प्रवृत्त्यनान्तरीयकत्वात् तस्य; सिद्धस्येच्छाऽविषयत्वात्, प्रवृत्त्यगोचरत्वाच्च ॥

अनुभवो ह्युपेक्षणीयस्यापि भवति, अपेक्षणीयस्यापि। तत्र विनेच्छां न प्रवृत्तिः। फलं तु सुखमिष्यमाणमपि प्रयोजनान्तररहितत्वेन न साधनवदिच्छा-प्रवृत्त्युभययोग्यम्, इति प्रथमा साधनेच्छा प्रवृत्त्युपयोगिनी फलं प्रदर्श्यैव सूत्रणीया, इति ब्रह्मसाक्षात्कारसाधनेच्छा भाविफलार्थमत्र सूच्यत इति शास्त्रारम्भात् पूर्वमपि ब्रह्मजिज्ञासासूत्रणमुपपन्नम् ॥

इयान् विशेषः—तत्र जिज्ञासाशब्दसूचितं तदर्थैकदेशज्ञानमात्रं नाऽऽप्यतमम्। तच्चाविद्यानिवर्तकमवगतिपर्यन्तमखण्डाकारवृत्तिमात्रम्, न ब्रह्मस्वरूपम्; तस्य नित्याप्तस्यानाप्यत्वात्, तदप्राप्तिभ्रमनिवृत्तिमात्रस्याप्याप्यत्वाच्च न ततोऽतिरिक्तं किमपीत्यद्वैतसिद्धान्तः। द्वैतसिद्धान्तस्तु प्राप्यतमं ब्रह्मस्वरूपमिति ॥

तत्र प्रवृत्तिप्रयोजकसाधनेच्छा यदि सन्पदार्थः, तर्हि धात्वर्थेन नान्वयः। सनः साधनेच्छापरत्वे न लक्षणाऽपि दोष इति परे। अद्वैतिनस्तु "अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे"ति वदन्तो ज्ञानपदं फलसाधनज्ञानपरं मन्यन्ते, तेन च प्राप्यमपि ज्ञानम्, प्रापकमपि ज्ञानम्। तत्र प्राप्यं साक्षात्कारात्मकम्, साधनं तु विधेयश्रवण-मननादिप्रमाणजन्यं ज्ञानम्, इति प्रमाणजन्यज्ञानमविद्यानिवृत्तिद्वाराऽनावृतसंविन्मात्रब्रह्मस्वरूपं मुख्येच्छाविषयः, गौणेच्छाविषयस्तु जिज्ञासापदेन विवक्ष्यत इत्याशेरते। एवमाशयाना अप्यवान्तरतात्पर्यविषयसविशेषब्रह्मजिज्ञासायां द्वैतिभ्यो न विवदन्त इति त्वन्यदेतत् ॥

सति चैवं निर्विशेषब्रह्मजिज्ञास्यत्वे, अन्यत्र च सिद्धान्तद्वयस्य वैरूप्यम्। अन्यथा तु सर्वात्मना साम्यमिति वस्तुस्थितिः ॥

### जिज्ञासासूत्रस्य साक्षात् फलसूचन एव स्वारस्यम्।

तत्र प्रयोजनं विशिष्य सूत्रेण साक्षाद् निर्दिष्टम्, द्वैतसिद्धान्ते तु न साक्षाद् विशिष्य। सूत्रकारस्याप्तत्वात् सप्रयोजनत्वमात्रमवगतं स्यात्, न तु प्रयोजनविशेषः। अतो विचारे प्रवृत्तिः सूपपादाऽद्वैतराद्धान्ते। विचारस्तु संशयाधीनः। संशयस्तु विचारणीयवाक्ये कोटिद्वयोपस्थापकपदविशेषादिसमभिव्याहार-बलाबलनिर्णयाभावनिबन्धनः ॥

### विचारप्रयोजनं संशयनिवृत्तिमात्रम् ।

तत्र चाध्ययनविधिप्रयुक्तत्वादध्येतॄणां विचारणीयवाक्यपूर्वापरसंबन्ध-पर्यालोचन-निर्णायकप्रमाणबलाबलनिर्णयाधीनानादिपरम्परासिद्धविषय-संशयपूर्वोत्तरपक्ष-संगतिविशेषप्रयुक्तो विचारोऽनादिसिद्ध एवानुक्रियते, न तु सूत्रकारस्य संशयमुपलक्ष्य विचारशास्त्रमिदं प्रवर्तते । परकीयसंभावित-संशयपूर्वोत्तरपक्षादिसंग्रहो वा ब्रह्ममीमांसाशास्त्रमास्ताम् । तेन च यस्य वाक्यविशेषार्थेऽनादिसंप्रदायसिद्धे न संशयलेशोऽपि, तस्याध्येतुर्न विचार-शास्त्रेण किमपि प्रयोजनम् । तथापि तत्तद्दर्शनकारप्रदर्शितमार्गाणां तत्ता-दृशानां समालोचने वेदान्तवाक्यार्थे संशयप्रसक्तिस्तु दुर्वारा, इति प्रसक्तसंशयनिरासार्थं ब्रह्ममीमांसाशास्त्रमिति संप्रतिपन्नम् ।।

सर्वथा तु प्रयोजनव्युत्पादनार्थन्यायप्रतिपादनपरं प्रथमं सूत्रमध्ययन-विधिवच्छास्त्रारम्भसमर्थनमपि न शास्त्रतो बाह्यम्, इति जिज्ञासासूत्रमपि शास्त्रम् । अतो नास्य शास्त्रतो बहिर्भावः । श्रावणाङ्गं तु मननपदबोध्यं न्यायनिबन्धनमवश्यं कर्तव्यम् ।।

### अद्वैतमते विषयाभावाच्च जिज्ञास्यता ।

तदयं निष्कर्षः—विचारकर्तव्यता खलु विषयादिमत्तया व्याप्ता । तत्र व्यापकविषयादिमत्ता व्यावर्तमाना तत्कर्तव्यतां व्यावर्तयति । तथाहि-धर्मादिलक्षणो ह्यनात्मा शास्त्रान्तरादेव सिद्धः । आत्मा तु शरीरादिव्यति-रिक्तो नास्ति । यद्यहमित्यसन्दिग्धाविपर्यस्तानुभवेन शरीरादिव्यतिरिक्त आत्मा सिद्धः, तर्हि तत एव विचारवैयर्थ्यम्; शरीरादिव्यतिरिक्तोऽपि प्रत्यक्षेणावगम्यमानः कर्त्रादिरूपः, श्रुतिस्त्वकर्त्रादिरूपं बोधयतीति विधया विचारसार्थक्यं तु प्रत्यक्षविरोधे श्रुतेर्जरद्गवादिवाक्यवदप्रामाण्याद् न क्षोदक्षमम् । अत एव न परमात्मा जिज्ञास्यः; सोऽपि प्राणादिलिङ्गैस्वगत-त्वेनाजिज्ञास्य एव । ततस्तु न परमात्मा नाम कश्चिदीश्वराख्यो वर्तते, श्रुतौ चेश्वरादिपदानां देहस्वामितामात्रेण जीवविषयत्वात् । सोऽपि शरीरे-न्द्रियादीनामीष्टे । न च जीवातिरिक्त ईश्वरे प्रत्यक्षम्, अनुमानम्, वेदो वा प्रमाणम्; इन्द्रियासम्बन्धात्, तत्प्रतिबद्धलिङ्गाभावात् । वेदस्यापि पौरुषेयत्वेन लौकिकवाक्यवदनुमानविधयैव प्रामाण्येन शब्दप्रामाण्यस्य बाधितत्वाच्च ।।

अद्वैतमते प्रयोजनाभावात् जिज्ञासाऽनुशंका।

तदेवं विषयाभाव इव प्रयोजनाभावोऽपि विचारकर्तव्यतां व्यावर्तयति। प्रयोजनं हि यद्यदृष्टम्, तर्हि कर्मणा चरितार्थम्। ज्ञानमपि दृष्टद्वारैव मोक्षसाधनमिति ब्रह्मजिज्ञासाया प्रयोजनम्। न च प्रसादद्वारा ज्ञानं मोक्षसाधनम्; अदृष्टचरत्वात्तयोः साध्य-साधनभावस्य। अविद्याविलसितो बन्धस्तु आत्माविद्याकल्पित आत्मज्ञानादेव निवृत्तिमर्हति, नेश्वरज्ञानात्; इति न बन्धनिवृत्तयेऽपीश्वरजिज्ञासा युक्ता, इति विषय-प्रयोजनवैधुर्याद् ब्रह्मजिज्ञासा न कर्तव्येति पूर्वपक्षे प्राप्ते, "अथातो ब्रह्मजिज्ञासेति" सूत्रमिति जिज्ञासाधिकरणशरीरम्॥

अत्र जीवात्मविषयत्वासंभवेऽपीश्वरविषयत्वसंभवाज्जिज्ञासा युक्ता; प्रत्यक्षानुमानाद्यसिद्धस्यापि तस्यापौरुषेयवेदसिद्धत्वेन प्रामाणिकत्वादिति सिद्धान्तशरीरं द्वैतिवादिनाम्॥

अद्वैतसिद्धान्ते जिज्ञास्यब्रह्मस्वरूपनिर्णयेन विषयप्रयोजन समर्थनम्।

अद्वैतसिद्धान्तस्तु यदि प्रत्यक्षाद्यविषय ईश्वरो जिज्ञासाविषयः, तर्हि जीवात्मनोऽपि प्रत्यक्षाद्यविषयत्वाद् वेदैकमात्रसमधिगम्यं जीवात्मस्वरूपमादाय श्रुत्यवगतजीवत्वेश्वरत्वोपलक्षितसंविन्मात्रस्वरूपमकर्तृत्वादिकमादाय सिद्धान्तोपपादनमविरुद्धम्—इति॥

तत्र प्रश्नोपनिषत् त्रिमात्रौंकाराधिष्ठानकतया कारणं सविशेषं मायोपहितं प्रतिपादयति, माण्डूक्योपनिषत्तु तुरीयमद्वैतमेव व्यष्ट्यात्मकविश्वसप्राज्ञानाम्, समष्ट्यात्मकानां वा तैजसादीनामधिष्ठानमद्वैतमेव शिवं मङ्गलरूपं प्रतिपादयति, इति कथमोंकारस्यादौ प्रयुज्यमानस्यापि विरोधोऽद्वैतसिद्धान्ते?

ओंकारार्थो न सगुणं ब्रह्म किन्तु निर्विशेषम्।

सर्वथा तु नात्रौतशब्दस्यानन्तकल्याणगुणपूर्णताऽर्थः; तेषां ब्रह्मणि प्रवेशकर्तृत्वस्य, तत्कर्मत्वस्य वाऽभावात्; अन्यथा ओंपदार्थस्यैव "बृहन्तोऽस्मिन् गुणाः" इति लक्षणलक्षितानन्तकल्याणगुणपूर्णपरब्रह्मपदेनापि वर्णने पौनरुक्त्यं ब्रह्मपदस्यात्र स्यात्, ओंपदस्य वा, इति कथं वाक्यार्थेऽन्वय ओंपदार्थस्य?

न हि सूत्रेऽल्पाक्षरे, असन्दिग्धे, विश्वतोमुखे, सारवति जिज्ञासायोग्यतानिरूपणार्थमेकं पदम्, तस्यैव जिज्ञास्यत्वसमनार्थमपरं पदमिति युक्तम्। तत्र ब्रह्मशब्दस्य ओंपदस्य चोभयस्यापि द्वैतमते यौगिकत्वस्य, यौगिकरूढत्वस्य वेष्टत्वादुभयोरपि निखिलगुणपूर्णपरत्वे कथं नैकतरवैयर्थ्यम्?

कृदन्तं तद्धितान्तं वा यौगिकम्, यौगिकरूढं न सुबन्तद्वयघटितम्। तद्धि समस्तपदं वाक्यतामेवार्हति, इत्योंपदस्य समस्तस्य यौगिकेन ब्रह्मपदेन नान्वयो युक्तः, अन्यथा ओंब्रह्मेत्यनेन वाक्यार्थे निष्पन्ने जिज्ञासापदमनन्वितम्, अधिकं चस्यात्, नचात्राध्याहारेण वाक्यभेदः ॥

एतेन—वाक्यत्वमोंपदस्य, ब्रह्मपदस्य चेति-प्रत्युक्तम्। अल्पाक्षरासन्दिग्धविश्वतोमुखात्मकसूत्रस्य वाक्यद्वयघटितत्वकल्पनं निष्प्रयोनमपि। एकेनापि ब्रह्मपरेण पदेन, वाक्येन वा जडव्यावृत्तिः, जीवव्यावृत्तिश्च सिद्ध्यतः इति न तदर्थमप्येकतरापेक्षा नियता ॥

तत्र जिज्ञासाविषयत्वमपि न जीव-जड-व्यावृत्तस्य सगुणस्य; ईश्वरो जड-जीवभिन्न इति प्रत्यक्षादिनाप्यवगतत्वात्। न च जडजीवव्यावृत्ते ब्रह्मणि प्रमाणान्तरावगते संशयोऽपि। ब्रह्मशब्दार्थगुणवत्त्वाभावेनैवानुमानिको जड-जीवप्रतियोगिको भेद एकेनापि पदेनानन्तकल्याणगुणबोधकेन सिद्ध्यति; अन्यथा पदद्वयेन, वाक्यद्वयेन वा तद्व्यावृत्त्यसिद्ध्या विचारितमप्यज्ञातमेव स्यात्, इति नात्र जिज्ञास्यस्वरूपनिर्देशः स्यात् ॥

इदमेवाभिप्रेत्योक्तम्—अकारवाच्येन तत्पदार्थेनोकारवाच्यस्याभेदो मकारेणोच्यते, नित्य-शुद्ध-ब्रह्मस्वरूपं वा ब्रह्मैवौंकारार्थ इति च ॥

न चेदमप्रामाणिकम्, प्रमाणविरुद्धं वा। नित्य-शुद्ध-बुद्धस्वरूपं हि ब्रह्म निर्विशेषप्रत्यगभिन्नसंविन्मात्रम्, शुद्धत्वात्, अनावृतत्वात् तद्व्यतिरेकेण जडानामभावाद्वा न पारमार्थिकजडभेदवत्; उपाधिनाशे तद्भेदप्रयुक्तजीवभेदाभावाद् वस्तुगत्या प्रत्यगभिन्नत्वाच्च न तद् जीवव्यावृत्तम्, इति नित्य-शुद्ध-मुक्त-स्वभावं ब्रह्मेति विवरणं जीवादिव्यतिरिक्तवस्तुसाधनविरोधीति वचनं व्याहतम्, इति जड-जीवव्यावृत्तब्रह्मबोधनार्थमोंब्रह्मेतिपदद्वयमिति न युक्तम् ॥

ब्रह्मपदस्य न नारायणमात्रपरत्वम्।

कथञ्चन तस्य योगेऽपि ब्रह्मपदेन सर्वजगत्कारणं मायोपहितमेवोच्यते;

उत्तरसूत्रस्वारस्यात् , न तु विष्णुः ; तस्य नारायणादिपदेनानिर्देशात् ; "स विष्णुराह हि" इति शास्त्रान्तरमन्यस्य, अन्ययोर्वा बादरायणात् । इति तस्यैव नात्र निर्देशः । अत एव द्विरूपं ब्रह्मात्र जिज्ञास्यम्-एकं शास्त्रान्तरप्रस्तुतमन्तरङ्गसाधनोपासनाविषयः, द्वितीयं तु मुख्यमोक्षसाधनज्ञानविषय इति व्यवस्था । अन्यथा तु बादरायणस्य भगवदवतारस्य शास्त्रान्तरानुकरणं वितथम् ॥

"तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि" इत्यत्र भर्गशब्दो ज्योतिर्मात्रपरोऽपि सामान्येन ज्योतिःपदं स्वप्रकाशचिन्मात्रमेव बोधयति । निघण्टुप्रसिद्धस्तु भर्गः शिव एव, इति न स नारायणपदवाच्यं स्वरूपम् किमपि वदति ॥

"भूर्भुवस्सुव" इत्यादिकमपि भूमसुखस्वरूपं न विशिष्य नारायणपदवाच्यम् ; "स ब्रह्म स शिवः सःहरि सेन्द्र" इति हि "सहस्रशीर्षे"ति प्रस्तुत्य सर्वात्मकं ब्रह्मैव पुरुषसूक्तमपि बोधयति, इति पुरुष-नारायण-शिवादिपदानि ब्रह्मणः पर्यायपदानि, इति ब्रह्मणो नारायणपदमात्रवाच्यत्वनियमो न प्रामाणिकः ॥

नारायणब्रह्मत्वबोधिकाः, सदाशिवब्रह्मत्वबोधिकाः, नित्य-शुद्ध-मुक्तादिनिर्विशेषब्रह्मस्वरूपमात्रप्रतिपादिकाश्च बहव उपनिषदो नारायणपरमात्मत्वबोधकश्रुत्यपेक्षयाऽप्यधिका अद्वैततत्त्वशुद्धौ भूमिकायां समुद्धृता नारायणपदमात्रवाच्यत्वे ब्रह्मणो विरुध्यन्ते ॥

एतेन—"ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणः" इत्यपि—व्याख्यातम् । इदं हि नारायणशब्दबोध्यत्वं ब्रह्मणो न बोधयति । न चात्रेदं वाक्यं प्रमाणम् । भवतु वाऽन्यत्र या कापि विधा । सूत्रकारः कुत्र वाऽमुं नियममुपपादयति ? तदीयानन्यथासिद्धनिर्णयमन्तरा न नारायणशब्दबोध्यत्वमेव ब्रह्मण इति सांप्रतम् ॥

### सूत्रे ब्रह्मशब्दस्य नारायणपदानुपलक्षणत्वम् ।

एतेन—सूत्रे ब्रह्मशब्दस्योपलक्षणत्वमिति—परास्तम् ; तथा कल्पने प्रमाणाभावात् । परश्शतान्यपराणि वेदवाक्यानि, सदाशिवपराणि निर्विशेषपराणि वा तत्र तत्र व्यक्तानि, इति ब्रह्मणो नारायणशब्दमात्रेण विवक्षायां न किमपि प्रमाणम् ॥

वस्तुतस्तु—"अथातो ब्रह्मजिज्ञासे"ति सूत्रे भाष्ये च व्यापकपर-विष्णुपदेनैव ब्रह्मणो निर्देशो न नारायणपदेन ॥

विष्णु-नारायणपदयोरपर्यायत्वम् ।

न च विष्णुशब्दो नारायणपदपर्यायः; अन्यथा "ब्रह्म-विष्णु-शिवात्मिका-मि"ति विष्णुपुराणे ब्रह्म-शिवसमानत्वं विष्णोः प्रतिपाद्यमानं कथमुपपद्यते? तत्र विष्णुपदम्, नारायणपदं वा ब्रह्मपर्याय इति हि—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम् ॥"

इति ब्रह्मशब्दमात्रबोध्यत्वप्रतिपादनमन्यथा नोपपद्यते ॥

"विष्णुर्नारायणः कृष्णः" इति निघण्टुर्लोकप्रसिद्धमानुषस्वरूपमभि-प्रेत्य, न त्वौपनिषदं तत्त्वमाश्रित्य; अमरकोशकारस्य जैनमतावलम्बिनस्तत्र प्रामाणिकत्वानवसायात् । यदेव स्वरूपं भगवता श्रीकृष्णेनापि नारायणा-वतारेण—

"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।"

इति गीयते । अत एव 'वसुदेवोऽस्य जनकः' इति वाक्यशेषः, इति न कोशवशादपि विष्णुशब्दो नारायणपरः । अधिकमन्यत्रान्यदा वा । सर्वथा तु ब्रह्मशब्दोऽत्र सर्वाधिष्ठान-सर्वभासक-सर्वानुविद्ध-सत्य-सर्वगत-ज्ञानान-न्तानन्दस्वरूपमात्रपरः, इति न तस्य नारायणादिशब्दविशेषवाच्यत्वे निर्भरः सूत्रकारस्य ॥

नारायणपदार्थस्य षड्विधस्याप्यद्वैतसिद्धान्ताविरोधः ।

एतेन—"स एव ब्रह्मशब्दार्थो नारायणपदोदितः" इति तत्रौंकारव्याख्या-मिषेण न हि नाम्नि विप्रतिपत्तिरित्युक्तिरपि—परास्ता । नारायणपदस्य नारा-णां गुणानां अयनम्, अराणां दोषाणामनयनम्, नाराणां नरसम्बन्धिनां वेदानामयनम्, नाराणां मुख्यप्राणानामयनम्, नरसमूहवेद्यत्वात्तेषामयनम्, आपो नाराः, तासामयनमित्याद्यर्थाः सर्वेऽपि मायोपहित-तन्नियामक-सविशे-षसदाशिवादितत्तत्पुराणावगतसकलजगत्कारणसर्वशब्दवाच्यस्वरूपपरत्वेन, वेदवेद्यत्वेन, अद्वितीयब्रह्मपरत्वेन, आदिसृष्टिकालीनरजस्तमोगुणाधिकमा-योपहितस्रष्टृवस्थसंहारावस्थरुद्रमात्रस्यैव विष्णुपुराणादौ नारायणशब्दवाच्य-

त्वप्रतिपादनेन, कोशेन मानुषावस्थमात्रकृष्णपरत्वस्यावगमेन च द्वैताभिमत-ब्रह्मस्वरूपमेव नारायणपदार्थ इति न संप्रतिपन्नम् "अथातो ब्रह्मजिज्ञासे"-त्यत्र श्रुतिविशेषेण नारायणस्यैवाब्रह्मत्वात् ॥

ब्रह्मपदस्य निर्विशेष एव स्वारस्यम् ।

नारायणपर्यायानन्तेश्वरशब्दानाम्, किं बहुना ? नारायणपदस्याप्युपलक्षणं ब्रह्मपदमिति तु तुल्यन्यायेन "ध्येयस्सदा शंभुराकाशमध्ये" इत्यादिश्रुत्यनुसारेण सदाशिव-गणेश-स्कन्द-दुर्गादिपदानामप्युपलक्षणमित्यापत्त्या ब्रह्मस्वरूपस्य नियतस्य सूत्रेऽसूत्रणाच्च नोपपद्यते, इति सर्वानुगतमेकमद्वितीयमेव मायोपहितरूपेण, निर्विशेषरूपेण च प्रत्यगभिन्नमत्र सूत्र्यत इति वक्तव्यम् ॥

अत एव "अयमात्मा ब्रह्म" "आत्मेत्येवोपासीत," "आत्मा वा अरे द्रष्टव्यः" "आत्मा वा इदमग्र आसीत्," "तस्माद्वा एतस्माद्वात्मन आकाशः संभूतः" "अनेन जीवेनात्मनाऽनुप्रविश्य," "स आत्मा तत्त्वमसि श्वेतकेतो" इत्यादिप्रत्यगभेदपराणि वाक्यान्युपपद्यन्ते ॥

नृसिंहतापिन्या अद्वैतपरत्वम् ।

नृसिंहतापिन्युपनिषत्तु स्पष्टं जगत्कारणं वस्तुगत्याऽद्वितीयं निर्विशेषं प्रतिपादयति, इति न ब्रह्मशब्दोऽत्र नारायणतात्पर्याभिप्रायमात्रेण, किन्तु नारायणपदस्यापि तत्तत्प्रकरणानुसारेण तत्तत्स्वरूपमात्रपरत्वेन नाम-रूपविशेषानियन्त्रितब्रह्मस्वरूपमेवात्र ब्रह्मपदार्थः ॥

पुरुषसूक्तादीनामद्वैते पर्यवसानम् ।

पुरुषसूक्तप्रतिपाद्योऽपि सदाशिव एव, अथवाऽद्वितीयं ब्रह्मेति तु शिवार्कमणिदीपिकादौ व्यक्तम्, इति सर्ववेदप्रतिपाद्यत्वमपि न नारायणपदमात्रप्रतिपाद्यस्य; अन्यथा पुरुषपदेन पुरुषसूक्तसमाख्यसूक्तेन च ब्रह्मणः प्रतिपादनं कथमुपपद्येत ? तत्र हि "स ब्रह्म स शिवः स हरिरि"ति नारायणपर्यायहरिशब्दस्य पुरुषांशत्वप्रतिपादनम्, किं बहुना ? "वृष्णीनां वासुदेवोऽस्मि" "रामश्शस्त्रभृतामहम्" इति वासुदेवादीनामपि ब्रह्मविभूतित्वप्रतिपादनम्,

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।"

इति 'तमेव'शब्देन भगवता स्वातिरिक्तस्येश्वरस्य ध्येयत्व-विज्ञेयत्वादि-प्रतिपादनं च नारायणपदमात्रवाच्यस्यैव परमात्मत्वे विरुध्येत ॥

वासुदेपदस्य त्रिमूर्त्यतीतपरत्वम् ।

एतेन—वासुदेवपदमपि—व्याख्यातम्, इति सर्ववेदार्थत्वमपि निर्विशेषब्रह्मण एव मुख्यम्, अवान्तरं तु निखिलगुणाकरस्य तत्तद्गुण-विशेषात्मकस्य वेति त्वन्यदेतत्, इति निर्विशेषब्रह्मण एव मुख्यवेदार्थत्वे तदितिकर्तव्यताभूतमीमांसाया अपि तत्रैव मुख्यं तात्पर्यम्; युक्ति-वाक्याभासजनितविप्रतिपत्तिनिरासार्थत्वेन तदितिकर्तव्यतात्वात्, इति न वेदेनैवोक्तार्थसिद्धिः ॥

ब्रह्ममीमांसाया अभिन्ननिमित्तोपादानब्रह्मविषयत्वम् ।

तत्र ब्रह्ममीमांसा निर्विशेषपरमात्मस्वरूपमात्रमुख्यतात्पर्यकत्वं वेदान्तानां निर्धारयति—वाक्याभास-युक्त्याभासाद्यवलम्बनेन प्रवृत्तानां मतानां निरसनपूर्वकम् । तत्र ब्रह्म केवलं निमित्तकारणमिति द्वैतिनो वदन्ति अद्वैतिनस्तु मायोपहितमुपहितरूपेण मायापरिणामात्मकवृत्तिद्वारेक्षितृत्वेन च तस्य निमित्तकारणत्वम्, मायावृतसंविन्मात्ररूपेणोपादानत्वमित्यभिन्ननिमित्तोपादानं ब्रह्मेति ॥

तत्र जिज्ञास्यस्याभिन्ननिमित्तोपादानत्वे "सर्वं खल्विदं ब्रह्मे"त्यादि-रूपेण बाधायां सामानाधिकरण्येनाद्वितीयं ब्रह्मैव मुख्यं तत्त्वमिति तटस्थ-लक्षणविधया ब्रह्मस्वरूपविवेचनमेव ब्रह्ममीमांसाया लक्ष्यम्, इति जन्मादि-सूत्रेण तत्र तत्र साङ्ख्यमतनिराकारणेन सूत्रकारो ज्ञापयति ॥

ब्रह्मणोऽनुपादानत्वे ब्रह्ममीमांसाया बहूनां
भाष्याणां साङ्ख्यमतनिराकरणायोगः ।

तत्र साङ्ख्यमतनिराकरणं न केवलमद्वैतिनः, किन्तु द्वैतिव्यतिरिक्ताः सर्वेऽपि ब्रह्मसूत्रभाष्यकाराः कुर्वते, इति साङ्ख्यमतनिराकरणस्य सर्वात्मना ब्रह्मसूत्रेष्वनादरणं द्वैतिनां न समादरमर्हति । तथाच "ब्रह्मजिज्ञासे"ति प्रस्तुतं जिज्ञासाकर्म प्रधानं ब्रह्मैव जिज्ञास्यं मत्वा तदविरोधिनाम्, तदु-

पकारकाणां च सगुणब्रह्मविचारकाणाम् , अन्येषां च प्रसक्तानां जिज्ञासाऽद्वैतमतेऽप्युपपन्नैव ॥

तत्र ब्रह्मजिज्ञासेत्यत्र षष्ठी कर्मणीति प्रायेण सर्वसंमतम् , द्वैताद्वैतवादेऽपि तु तत् संप्रतिपन्नमेव, अधिकन्तु सर्वमत्र वक्तव्यं भाष्यव्याख्यासु मतद्वयेऽपि विशदम् ॥

अतःशब्दार्थस्वारस्यं न द्वैतमते, ज्ञानस्य
दृष्टविधयैव मोक्षसाधनत्वात् ।

तत्र वेदानां मुख्यतात्पर्यमत्रैव प्रतिज्ञायते, निर्णीयते च, न तु तस्य "अथातो धर्मजिज्ञासे"त्यत्र प्रतिज्ञा, इति पूर्वोत्तरमीमांसयोर्नैकशास्त्र्यमिति संप्रतिपन्नमिदं द्वैताद्वैतयोः ॥

तत्रातश्शब्दम्—

"ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः ।"

इत्यनुव्याख्यानं व्याचष्टे । तेन च ज्ञानस्य मोक्षसाधनत्वं विवक्ष्यत इति न्यायसुधा । न चैतदपि विप्रतिपन्नम् , परं तु तत्र तस्य मुक्तिहेतुत्वं साक्षादज्ञाननिवृत्तिरूपदृष्टफलद्वारेत्यद्वैतिनः, ईश्वरप्रसादरूपादृष्टद्वारेति तु द्वैतिनः । तत्र च दृष्टे संभवति नादृष्टकल्पनेति न्यायस्य बाधः प्रधानं बाधकम् ॥

"उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥"

इति ज्ञानिनः स्वात्मस्वरूपत्वं बोधयन् गीताचार्यस्तु—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति वार्तिकार्थं प्रत्यभिज्ञापयति । न तत्र केवलं साधनत्वम् , किन्तु फलत्वमपि ज्ञानस्य, परंतु रूपभेदेन—प्रमाणजन्यत्वेन, सिद्धब्रह्मस्वरूपेण चेति स्वीकार एवोपपद्यते ; अन्यथाऽदृष्टविधया ज्ञानस्य मोक्षसाधनत्वे कर्मणैव बन्धनिवृत्तिरिति मीमांसकसिद्धान्तेनोपपत्तौ धर्मजिज्ञासातः पृथग्ब्रह्ममीमांसा, किं बहुना ? ब्रह्मस्वरूपमपि न प्रामाणिकं स्यात् ॥

"यमेवैष वृणुते तेन लभ्यः" इत्यपि भगवत्प्रीतिमात्रं मोक्षसाधनं बोधयति, न तु ज्ञानं तत्र हेतुरिति, इति तत्र कर्मणामपीश्वरप्रसादद्वारैव मोक्षसाधनत्वात् किं तदतिरिक्तेन ज्ञानेन ? इतीश्वरप्रसादसिद्धिद्वारा ज्ञानमोक्षसाधनपरत्वे सर्वापि ब्रह्ममीमांसा कथं न निष्फला ?

धर्ममीमांसा हि वेदान्तवाक्यानि कर्माङ्गकर्तृदेवतास्तावकतयाऽर्थवादम्, धर्मेणैव मोक्षं चाभिप्रैतीति कृत्वा तन्मतनिरासार्थं ब्रह्ममीमांसेति समन्वयसूत्रे भगवत्पादा भाषन्ते। इदं चादृष्टविधया मोक्षस्य कर्मसाध्यत्वम्, उपासनासाध्यत्वं वा वारयति। तद्यदि ज्ञानस्यापीश्वरप्रसादद्वारा मोक्षसाधनत्वम्, तर्हि किमनया ब्रह्मजिज्ञासया, ब्रह्मणा वा? अतो "ज्ञानी त्वात्मैव मे मतम्" इति स्मृत्यनुसारेणानावृतसंविन्मात्रतामोक्षतावाद एव पूर्वोक्तरीत्या, इति प्रमाणजन्यवृत्तिद्वारा मुक्तिरिति सिद्धान्त एव ब्रह्ममीमांसास्वारस्यम्। कर्मणामपीश्वरप्रसादद्वारा मोक्षसाधनत्वम्—"अपाम सोममृता अभूम" इति श्रुतिरेव श्रावयति। न चास्यान्यार्थता भगवत्प्रसादद्वारैव मोक्षविवक्षायाम्। "विद्वानेव चामृतः" इत्यपि ज्ञानत्वोपलक्षितात्मस्वरूपमोक्षतावादमुपबृंहयति॥

न च प्रमाणजन्यज्ञानस्य मोक्षसाधनत्वे विवादः, तस्यादृष्टविधया बन्धनिवर्तकत्वं तु न कुत्रापि दृष्टचरम्। रज्जुतत्त्वसाक्षात्कारेणाज्ञाननिवृत्तिर्दृष्टविधयैव, नादृष्टविधया। न च तत्र रज्जुतत्त्वसाक्षात्कारातिरिक्त ईश्वरप्रसादः, अन्यद्वा निमित्तम्॥

"यस्य प्रसादात् परमार्तिरूपाद्
अस्मात् संसाराद् मुच्यते नापरेण।"

इति प्रसादस्याज्ञाननिवृत्तिमोक्षोपयोगित्वम्, सत्यम्, प्रतिपादयति। तत्र प्रसादो नामावरणनिवृत्तिमात्रम्। तेन च ब्रह्मानावृतस्वस्वरूपमात्रेण स्वयं प्रकाशमवशिष्यते। सा च तत्साक्षात्कारमात्राधीना, इति ज्ञानसाक्षान्मोक्षसाधनतावाद एव सर्वेषां वचनानां स्वारस्यम्॥

भक्तेरपि ज्ञानद्वारैव मोक्षसाधनत्वम्।

तत्र भक्तिरपि साधनमिति तु न विप्रतिपन्नम्। भक्तेः प्रसादद्वारा मोक्षसाधनत्वं तु तन्निबन्धनसाक्षात्कारद्वारा तत्साधनत्वाभिप्रायम्। अत एव—"भक्त्या मामभिजानाति" "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इत्यादिस्मृतयो भक्तेर्ज्ञानसाधनत्वमुपपादयन्त्यः सङ्गच्छन्ते॥

एतेन—"भक्त्यैव तुष्टिमभ्येति विष्णुः" इति वचनमपि—व्याख्यातम्; तेन हि सविशेषब्रह्मोपासनमपि श्रवणादिकमिव निर्विशेषब्रह्मसाक्षात्कारेऽन्तरङ्गसाधनमित्येवावगम्यते। तदुक्तम्—

"ईश्वरानुग्रहादेव पुंसामद्वैतवासना।"
"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्॥"

इति। "कर्मणा त्वधमः प्रोक्तः" इति तु काम्यकर्माभिप्रायम्, न तु सात्त्विककर्माभिप्रायम्; तस्य ज्ञानसाधनत्वेनाधमत्वानापादकत्वात्। अत एव—

"कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते।"
"यत्र नान्यत् पश्यति नान्यद् विजानाति।"
"या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥"

इत्यादिवचनानि। एतानि ह्यात्मस्वरूपमात्रसाक्षात्कारवतां स्थितप्रज्ञानां सिद्धावस्थानां जीवन्मुक्तानामपि विद्यमानोऽपि बन्धो न बन्धक इति प्रतिपादयन्ति, इति कैमुतिकन्यायेन, पश्यतीतिप्रयोगात् स्वरूपसाक्षात्कारेणैव निखिलबन्धनिवृत्तिरूपो मोक्षः, सोऽपि दृष्टविधयैवेति ज्ञाप्यते॥

वस्तुतस्तु—"अथशब्दोक्तार्थहेतुत्वसमर्थनार्थं खल्वतःशब्दः। न चाथशब्दार्थ ईश्वरभक्त्यानन्तर्यम्, येन तत्साधनत्वं प्रसादद्वारा समर्थयितुम्—अतः शब्दः स्यात्; अन्यथा जिज्ञासासाध्याया भक्तेः जिज्ञासातः प्रागेव सिद्ध्यै जिज्ञासा वितथा स्यात्॥

न च भक्तिर्जिज्ञासासाधनम्, किन्तु तत्फलम्, इति कथमीश्वरप्रसादहेतुत्वमतःशब्दार्थः स्यात्; तन्मात्रेण बन्धनिवृत्त्यसंभवात्। बन्धो ह्यज्ञानप्रयुक्तोऽज्ञाननिवर्तकेनैव निवर्तते। आत्मतत्त्वज्ञानाद्धि तदज्ञान-तद्विपर्ययौ निवर्तेते; ज्ञानस्य समानाश्रयविषयकत्वेन, समानविषयकत्वेनैव वाऽज्ञाननिवर्तकत्वात्, शुक्तितत्त्वज्ञानस्य तद्विषयाज्ञान-तत्कार्यरजतारोपनिवर्तकत्वदर्शनात्॥

तत्र तत्त्वज्ञानेनाज्ञाननिवृत्तिः, तया बन्धप्रयोजकराग-द्वेषाद्यनुदयः; कारणाभावात्, तदभावेन प्रवृत्तेरभावः, प्रवृत्त्यभावेन जन्मान्तराद्यभावः, तेन तु निर्बीजस्य दुःखस्य निवृत्तावात्यन्तिकदुःखनिवृत्तौ मुक्तिरिति मर्यादा दर्शनान्तरस्थापि संमता, इति ज्ञानस्वभावलभ्यायां मुक्तौ किमीश्वरप्रसादेन? न ह्यन्धकारनिवृत्तावन्तरा प्रदीपं कस्यचन प्रसादः

प्रभोरन्यस्य वाऽपेक्ष्यते। ईश्वरमोक्षसाधनतावचनान्यपि तस्य ज्ञानसाधनतापराणि। तदुक्तम्—

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥"

इति। द्रव्य-कर्म-गुण-काल-स्वभाव-जीवादीनामीश्वरानुग्रहकार्यत्वं तु तदुत्पत्तौ तस्य कारणत्वमात्रेण। न चैतावता ज्ञानमात्रेणेश्वरप्रसादं विना मोक्षसिद्धिविरोधः। तस्यैव मोक्षदत्वादिकमपि तदुपयुक्तज्ञानोत्पादनद्वारेणेत्यनुपदमेवोक्तम्॥

बन्धस्य मिथ्यात्वं ज्ञानैकनिवर्त्यत्वं च।

परमार्थतस्तु—बन्धस्य सर्वस्य मिथ्यात्वात्, मिथ्याभूतस्य चाज्ञाननिवृत्तिमात्रसापेक्षस्य दृष्टविधयैव ज्ञानमात्रेणैव निवृत्त्या परमात्मप्रसादस्य तत्र निरपेक्षाया उपपादनाच्च नेश्वरप्रसादसंभवोऽतःशब्दार्थो हेतुत्वेन॥

एतेन—अनादीनां प्रकृति-धर्माधर्म-ज्ञानानन्दस्वरूपजीवादीनाम्, बन्धमोक्षयोश्चेश्वराधीनसत्ताकत्वात् तत्प्रसादं विनाऽज्ञाननिवृत्तेर्मोक्षस्यासंभवात् बन्धसत्यत्वे ज्ञानमात्रेण तन्निवृत्त्ययोगाच्चेश्वरप्रसाद एव मोक्षसाधनमतःशब्दार्थ इति विवरणान्तरमपि—परास्तम्; ज्ञानानन्दादिस्वरूपत्वं जीवस्य वास्तवम्, तदप्रकाशादेव बन्ध इति संप्रतिपन्नम्। तदप्रकाशोऽयमावरणाधीनः। आवरणं चाविद्याधीनम्। अविद्या च काम-कर्मादिरूपा तस्याः सादेः कारणसापेक्षत्वाद् नानादितामर्हति, इति काम-कर्माद्यतिरिक्तमायाऽविद्याप्रकृत्यादि-शब्दाभिधेयमनाद्यावरकं किमपि द्रव्यं भावरूपमङ्गीकर्तव्यम्॥

तच्चावारकम्—"अनादिमायया सुप्तः" इत्यादिश्रुति-स्मृतिभ्यो भावरूपमज्ञानमेव। न च स्वप्रकाशस्यात्मनो माययाऽवरणं विरुद्धम्। तदावारकतयैव तस्याः प्रमितत्वादित्यादि संप्रतिपन्नम्। इदमेवात्र विप्रतिपन्नम्—यज्जडस्वभावाया मायाया अविद्यायाः स्वतश्चिदावरकत्वं भवति वा, न वेति॥

ईश्वरेच्छयैवाज्ञानकार्यनिवाहः, तस्याश्चेश्वरेच्छयैव
निवृत्तिरिति द्वैतवादः।

तत्र न्यायसुधा—जडस्य न स्वतः किंचित्करत्वं युक्तम्;
"नायं कर्म च कालश्च स्वभावो जीव एव च।
यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया॥

इत्यादिवचनविरुद्धं जडस्य विना ह्यपेक्षामावरकत्वम्। अतः परमेश्वर एव सत्त्वादिगुणमपेक्ष्य विद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्याऽचिन्त्याद्भुतशक्त्या जीवस्य स्वप्रकाशमपि स्वरूपचैतन्यमाच्छादयति। स एव च स्वाधिष्ठानलब्धपरिणामहृदहंकारादिप्रकृत्यंशैः संयोज्य कर्तृत्व-भोक्तृत्वादिस्वातन्त्र्यं कारकफलस्वाम्यं चास्याविद्यमानमुपदर्श्य रागाद्युत्पादनद्वारा दुःखमनुभावयति। तदेवं बन्धस्य मुक्तेश्चेश्वराधीनत्वात् स एव बन्धकः, मोक्षदश्च स्वीयप्रसादवशाद् मायाया व्यावर्तनेन ॥

अत्र यद्यपि सूत्राक्षरतः प्रसादादिति न लभ्यते; तथाप्यन्यथानुपपत्त्या तदङ्गीकर्तव्यमिति युक्तम्। तथाच सूत्रम्—"ततो ह्यस्य बन्ध-विपर्ययौ" इति। सर्वथा तु ज्ञानस्यैव मोक्षसाधनत्वेऽपि प्रसादद्वारकमेव तदिति युक्तम्; तदधीनत्वात् सकलकारकाणां कार्यकारित्वस्य ॥

तथाहि—येन ज्ञानस्य मोक्षसाधनत्वमूरीक्रियते, तेनापीश्वरेच्छा न त्यक्तुं शक्यते; तस्यैव कारकप्रेरकत्वादिति किमन्तर्गडुना ज्ञानेन ? भक्त्या तुष्ट ईश्वर एव स्वयं स्वेच्छामात्रेण मोक्षं प्रदास्यति। ईश्वरशक्तिरेव स्वरूपावरणम्, अविद्या तु निमित्तमात्रम्, इति सत्यप्यावरणे तन्निमित्तानाद्यविद्यानाशादेव मुक्तिः। साऽपीश्वरेच्छाधीनेति—वदति ॥

तत्र स्वतो न किंचित्करत्वमित्यनेनाविद्याया अनादेरपि महदाद्याकारेण परिणामस्वभावायाः स्वप्रकाशमात्राध्यस्तरूपाया एव कार्यकारित्वं विवक्ष्यते, न स्वतन्त्राया इत्यत्राद्वैतिनो न विप्रतिपद्यन्ते। अत एव साक्षिभास्यत्वम्, तदध्यासेन तत्सत्त्वादिकं च तत्रापि ॥

### ईश्वरेच्छातिरिक्ताविद्यासमर्थनम्।

तत्रावरकत्वमावरणशक्तिमत्त्वाज्जडाया अपि संविन्मात्रस्यैवोपाधिभूताया एव तस्याः। स्वप्रकाशचैतन्यस्वरूपमपि विना न मायोपाधिमीश्वरतां भजते, येन तदिच्छयैवोपाधेरपि तस्य जीवावारकत्वं स्यात्। यथा हीश्वरो मायोपधाननिमित्तात्मलाभः, एवं जीवोऽपि तदवस्थाविशेषोपाधिप्रयुक्तम्, तत्कार्यान्तःकरणोपाधिप्रयुक्तं वाऽऽत्मानं लभते, इति तावुभावपि स्वयं स्वप्रकाशत्वादात्मानं प्रति नावृतौ ॥

अत एवाहमिति तौ स्वभानार्थं नावरणनिवृत्तिमपेक्षेते। मायोपहितस्यान्तःकरणोपहितं प्रत्यप्रकाशो हि जीवाश्रितया मायया संविन्मात्रस्यावरणेन। तथाच जीवस्य स्वप्रकाशचैतन्यस्याज्ञानविरोध्यन्तःकरणोपहितस्य नावरणं नाम; साक्षिस्वरूपत्वात्तस्यान्तःकरणोपधानेन। तत्र परमेश्वरस्य स्वोपाधिभूतया सत्त्वादिगुणमय्या मायया प्रकृत्या वाऽऽवृतस्यापि नाम-रूपप्रपञ्चात्मना परिणाममानतदधिष्ठानतया, तदात्मनाऽभानेनैव जगत्कारणत्वम्, न तु विशिष्टरूपेण; निमित्तकारणत्वमात्रेण वा, इति तत्तज्जीवादृष्टापेक्षं तस्य फलदातृत्वमवैषम्येन स्वीक्रियते। अन्तर्यामित्वमपि तस्य तत्तदधिष्ठानतामात्रेण, इति तदधीनसत्ताप्रतीतिविषयत्वादिप्रयुक्तमेव तदधीनत्वम्, न तु स्वरूपतः कस्यापि कार्यस्य तदधीनत्वम्॥

इदमेवाभिप्रेत्य "तेन विना तृणमपि न चलती"ति केनोपनिषन्न्यायः। एवमाशयमेव—स च स्वाधिष्ठानलब्धपरिणाममहदहंकारादिप्रकृत्यंशैः संयोज्य जीवस्य कर्तृत्व-भोक्तृत्वादिकं कारयन् तदुपाधिकं दुःखादिकमनुभावयतीति वर्णनं तत्र तत्र॥

तत्र यद्यविद्यमानमेव कर्तृत्व-भोक्तृत्वादिकं जीवस्येश्वर उपदर्शयति, तर्हि कल्पितं कर्तृत्वं भोक्तृत्वं वा जीवस्य, न स्वतः। एवमेवाहंकारादिसम्बन्धेनैवाहंत्वम्, न तु वस्तुत इति चावगम्यते। बन्धस्तु जीवस्योपाधिविशेषणतया भानादुपाधिनिमित्तक एव, नेश्वरेच्छाधीनः; जगत्सृष्ट्यादाविव जीवस्य कर्तृत्वादावपि तदिच्छाया अप्रयोजकत्वात्, स्वतन्त्रेच्छत्वे त्वीश्वरस्य वैषम्य-नैर्घृण्यदोषप्रसङ्गः। तत्तत्कर्माधीनफलदानेन तत्परिहारे तु किमन्तर्गडुनाऽप्रयोजिकया, अजागलस्तनायमानया च तदिच्छाया॥

### ईश्वरस्यैव बन्धकत्व-मोक्षदत्वयोरयोगः।

एतेन—प्रसन्नस्य तस्याविद्यानिवारकत्वमपि—व्याख्यातम्; आवरिकाया अविद्याया अन्धकारस्येवावृतस्वरूपप्रकाशमात्रानिवर्त्यत्वेनावृतस्वरूपेण कुत्रापि निवृत्त्यदर्शनात्। ईश्वरोऽप्यविद्योपाधानेन प्राप्तात्मलाभोऽविद्योपहितः स्वाधिष्ठानकया मायया जीवमिवात्मानमपि यद्यावृणोति, तर्हि जीववत् स्वयं स्वात्मानं प्रति न प्रकाशेतापि। तत्र यद्युपाधिगतदोषाणां प्रतिबिम्बपक्षपातित्वम्, औपाधिकस्वरूपपक्षपातित्वं वा, तर्हि नित्योपाधिकत्वादीश्वरभावस्य, सत्यपीश्वरप्रसादे नाविद्योपाधिप्रयुक्तबन्धविनाशः, अविद्याया निवृत्तौ त्वीश्वरभावोऽपि तस्य निवर्तते, इति कस्येच्छया कस्य बन्धः? कस्य

वा मोक्षः ? अतो ज्ञानस्यैवाज्ञाननिवृत्तिद्वारा मोक्षसाधनत्वं स्वीकर्तव्यम् ॥

न चान्धकारनिवृत्तिः प्रदीपाधीना कस्यापि प्रसादमपेक्षते, येन ज्ञानमपि प्रसादद्वारैव मोक्षसाधनं स्यात् । ईश्वरप्रसादस्य फलहेतुत्वं धर्माधर्मादिविषय एव । स हि "धर्मं जैमिनिरत एव" इति पूर्वपक्षनिरासार्थेन "फलमत उपपत्तेः" इतिसूत्रेण साध्यते ॥

अनादित्वेऽपि मायाया निवृत्तिः ।

न च जैमिनिर्ज्ञानमप्यपूर्वद्वारा मोक्षसाधनं मन्यते । अत एव "धर्मं जैमिनिरि"ति धर्मपदं तत्र सूत्रे । का वाऽपेक्षाऽज्ञाननिवृत्तावीश्वरप्रसादस्य ? अन्यथा हि धर्मकृतप्रसादद्वारा साध्यो मोक्षोऽप्यनित्य आपद्येत । बन्धनिवृत्तिद्वारं हीश्वरप्रसाद इति न युक्तम् । सत्यम्, निगडबन्धादौ प्रभोरिच्छया बन्धनिवृत्ति र्दृश्यते, परं तु स बन्धः सत्यः, व्यावहारिकश्च । निगडबन्धस्य प्रभुनिमित्तत्वाच्च तत्र तथा । मिथ्याबन्धनिवृत्तिस्तु तत्त्वज्ञानाधीनैव, न तु प्रभोरिच्छाधीना ; मिथ्यासर्पादौ तददर्शनात् ; अन्यथा तत्रापि प्रभोरिच्छया सर्पादिनिवृत्तिरापद्येत । तत्र मिथ्यासर्पोपादानमविद्याऽनादिरपि रज्जुतत्त्वसाक्षात्कारेणैव निवर्तते ; अनिर्वचनीयत्वात् ॥

बन्धस्य ज्ञानेन निवृत्त्युपपत्तिः ।

सत एव खल्वनादेरनिवृत्तिः केनापि, न तु सदसद्विलक्षणस्य । एवमत्रापि सर्वबन्धोपादानभूताविद्याऽनादिरपि तदुपहितस्वरूपतत्त्वसाक्षात्कारेणैव निवर्तते । अनादित्वं निवृत्तिप्रतिबन्धकमिति सन्मात्रविषयम्, परिणामि सर्वमनित्यमिति कृत्वा खलु ब्रह्मपरिणामवादो द्वैतिभिरपि निरस्यते, जैनाभिमतशरीरपरिमाणात्मवादश्च । द्वैतमतमपि मायापरिणामत्वं महदहंकारादीनां स्वीकरोति, इति मायाया अनादेरपि नानिवृत्तिः ॥

सद्रूपत्वमेवानादेरनिवृत्तिप्रयोजकम्, नानिर्वचनीयत्वम् ।

विरोधिसन्निपातासन्निपातावेव हि निवृत्त्यनिवृत्तिप्रयोजकावन्यत्र दृष्टौ । अस्ति च विरोधिसन्निपातोऽविद्यानिवृत्तिप्रयोजकस्तत्त्वज्ञानं नामाऽत्र । न च भावाभावविलक्षणं किमप्यनाद्यनिवर्त्यं दृष्टं लोके, प्रत्युत तद्विपरीतम् । तूलाज्ञान-तच्छुक्तिसंबन्धादिकमनाद्यपि निवर्तमानमेव दृश्यते । साधयिष्यते च सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमनुपदमेव । सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्य प्रकृतेऽनुसन्धानप्रयोजनमप्यत एव व्याख्यातम् ।

अविद्या, न निवर्तते, अनादित्वादित्यनुमाने तु सद्रूपत्वमुपाधिः--तस्यात्मनि साध्यव्यापकत्वम्, पक्षे च साधनाव्यापकत्वम्। उपाधिप्रदर्शनमेव तदनुसन्धानस्य प्रयोजनम्। तेन च अनाद्यज्ञानम्, निवर्तते; अनिर्वचनीयत्वात्; तूलाज्ञानवदिति प्रकरणसममपि। अज्ञानम्, न निवर्तते, इत्यनुमानं हि यद्यद्वैतवादिनं प्रति, तर्हि तूलाविद्यादावनादौ निवृत्तिदर्शनात्, तद्दृष्ट्या तेन व्यभिचारः। तत्र चानिर्वचनीयत्वं प्रयोजकम्। तत्र द्वैतदृष्ट्या तदसिद्धिस्त्वकिञ्चित्कारी। भावाभावविलक्षणत्वम्, सदसद्विलक्षणत्वम्, अनिर्वचनीयत्वं चेत्यनर्थान्तरम्॥

अविद्यायास्तृतीयप्रकारता।

न चाद्वैतमते भाववैलक्षण्याभावः; तद्भावाभावरूपत्वानङ्गीकारात्, तत्र भावत्वव्यपदेशस्याभाववैलक्षण्यमात्राभिप्रायत्वस्य चित्सुख्यादौ निरूपणात्। अस्तु वा कथञ्चन घटादीनामिव भावपदार्थत्वम्, न तु तावताऽपि न सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वम्; तस्य साधयिष्यमाणत्वात्॥

न चानादेरनिवृत्तिरभाववैलक्षण्यमात्रेण; आत्माविद्यासम्बन्धादौ व्यभिचारात्। न च भाववैलक्षण्यमात्रम्; असति व्यभिचारात्; उभयवैलक्षण्यं त्वप्रयोजकमनादेरपि निवृत्तौ तूलाज्ञानादाविति पूर्वमेवोक्तम्। यथाच भावाभावयोः, सत्त्वासत्त्वयोर्वा न परस्परविरहरूपत्वम्, विशिष्य च मिथ्यात्वघटकयोः, तथा न्यायचन्द्रिकायाम्, अद्वैतसिद्ध्यादौ च व्यक्तम्। अज्ञानमिव तन्निवृत्तिरप्यनिर्वचनीयैव, इति न तत्र व्यभिचारः॥

मिथ्यात्वस्यापि मिथ्यात्वेऽपि न प्रतियोगिसत्यम्।

वस्तुतस्तु—निवृत्तेरप्यविद्याया इव मिथ्यात्वरूपाय निवृत्तिस्वीकाराद् न तत्र साध्याभावः। यथाच मिथ्यात्वमिथ्यात्वेऽपि न प्रतियोगिसत्यत्वम्, तथा बहुशो व्यक्तमद्वैतनिबन्धेषु। न चात्मनि निर्धर्मके भावत्वाभावाद् भावाभाववैलक्षण्यम्; भावत्वे धर्मिसमसत्ताकत्वविशेषणेनाविद्यावैलक्षण्यात्, आत्मनि तन्न्यूनसत्ताकभावत्वस्यारोपितस्याङ्गीकारात्, अविद्यायां भावत्वस्यारोपितत्वेऽपि तत्समसत्ताकत्वात्। सत्त्वासत्त्वाभावस्थल इवाभावत्वस्यापि क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावाबाध्यत्वाभावयोरेवात्र विवक्षणादपि नात्र विरोधः॥

अज्ञानस्य ज्ञाननिवर्त्यत्वे नानुपपत्तिलेशोऽपि।

एतेन—अज्ञानम्, ज्ञाननिवर्त्यम्, अनिर्वचनीयत्वात्; शुक्त्याद्य-

ज्ञानवदिति विशेषानुमानेन, अज्ञानम्, न ज्ञाननिवर्त्यम्, अनादित्वादिति सामान्यशास्त्रस्य "पदे जुहोती"तिशास्त्रेण "आहवनीये जुहोती"ति सामान्यशास्त्रस्य पदहोमातिरिक्तविषयकत्ववत्, सामान्यविशेषविषयकत्वप्रयुक्तबलाबलनिर्णयेनानिर्वचनीयेतरानादिज्ञानानिवर्त्यत्वे पर्यवसानमपि—व्याख्यातम् ; अनिश्चिताप्रामाण्यकसामान्यविशेषप्रमाणयोरेव विशेषशास्त्रेण सामान्यशास्त्रस्य संकोचात् । यत्र धूमवान् वह्निमान् पर्वतो वह्निमानिति ज्ञानद्वये नैकतरस्याप्रामाण्यानिश्चयः, तत्र विशेषानुमानेन सामान्यशास्त्रस्य न संकोचापत्तिः, उभयत्राप्यप्रामाण्यानिश्चये तु संकोचस्तत्रापि ॥

अज्ञाननिवृत्त्यनिवृत्तिविषये सामान्य-विशेषन्यायपरीक्षा ।

सामान्य-विशेषभावो ह्यत्र हेतुविषय एव, न पक्षविषयः; अज्ञानस्यैवोभयत्र पक्षत्वात्, हेत्वोरेव सामान्य-विशेषभाववत्त्वात् । तथाचानिर्वचनीयेतरानादिज्ञानानिवर्त्यतापरं सामान्यानुमानमनिर्वचनीयानादिज्ञाननिवर्त्यतापरं विशेषानुमानमिति व्यवस्थायां न कोऽपि दोषः ॥

"न हिंस्यात् सर्वा भूतानि," "अग्नीषोमीयं पशुमालभेते"त्यपि हिंसाविशेषविधि-हिंसासामान्यनिषेधपरमत्रोदाहरणमेव; तत्राप्यग्नीषोमीयपशुभिन्नप्राणिसामान्यहिंसानिषेधेन सामान्यशास्त्रस्य संकोचाविशेषात् । विवक्षितमंशमादाय सामान्य-विशेषभावः, न तु येन केनापि रूपेण । तेन च यदनादि, तदज्ञानातिरिक्तं न निवर्तत इति न संकोचः । जीवेशभेदाऽविद्याचित्सम्बन्धादीनामप्यनिर्वचनीयत्वाद् न ज्ञानानिवर्त्यत्वमनादेरात्मन एव ; तत्र सद्रूपत्वस्यैव तत्प्रयोजकत्वात् अनादित्वस्य तदप्रयोजकत्वाच्च । अनिर्वचनीयत्वस्यैव निवर्त्यत्वप्रयोजकत्वमिति तु निष्कर्षः । यथाच नात्र व्याप्तिविरहः, न वा हेत्वसिद्धिः, प्रत्युत प्रकरणसमत्वमज्ञानानिवर्त्यतानुमानस्य, तथा व्यक्तमधस्तात् ॥

अज्ञानस्य ज्ञाननिवर्त्यत्वानुमानस्य बहुधा समर्थनम् ।

अज्ञानम्, ज्ञाननिवर्त्यम्, अज्ञानत्वादिति वा हेतुः । दृष्टान्तश्च शुक्त्यज्ञानम् । तदपि हि भावरूपम्, अनादि ज्ञाननिवर्त्यं च । व्यवहारदशायामेव शुक्त्यज्ञानस्य तत्परिणामरजतादेश्च बाधात्, मिथ्यात्वनिर्णयात्, भ्रमत्वाध्यवसायाच्च न तदपि पक्षसमः; अन्यथा विपर्ययकथाया एवोच्छेदापत्तेः । असत्ख्यातिखु निरसिष्यते । स्वसिद्धान्तसिद्धिमात्रेण परमतनिरसनं

परेऽपि मन्यन्ते ; अन्यथा जिज्ञासाधिकरणादिसर्वपूर्वपक्षनिरसनं द्वैतिनामपि कथम् ? न हि चार्वाकादिमतनिराकरणं द्वैतिनामपि तदीययैव प्रक्रिययेत्यलमतिविस्तरेण ॥

अनाद्यज्ञाननिवर्त्यतानुमानस्य श्रुत्या बाधः ।

इदमनाद्यविद्यानिवृत्त्ययोगानुमानम् "विश्वमायानिवृत्तिरि"ति "मायामेतां तरन्ति ते" "तरत्यविद्यां विततम्" इत्यादिश्रुतिविरुद्धम्, असाधकं च । न चैवं सत्यात्मनोऽपि निवृत्तिप्रसंगो बाधकः; तन्निवर्तकाभावात्, श्रुतौ तन्निवृत्तिप्रतिपादनाभावात्, सर्वाधिष्ठानस्य, निरधिष्ठानस्य वा तस्यानज्ञानत्वेन, तदप्रयुक्तत्वेन, निवर्तकज्ञानविषयत्वेन च निवृत्त्ययोगाच्च ॥

अवयव-तत्संयोग विनाशाभ्यां द्रव्यनाशस्तु सादिद्रव्यविषयः । अनादेस्तु निवृत्तिश्रुत्यनुपपत्त्या तन्नाशस्य प्रमितत्वात् तृतीयं निवृत्तिप्रयोजकं वा स्वीक्रियताम्, अनिर्वचनीयत्वं वा सर्वसाधारणम् । तत्र सादेर्विनाशः कारणात्मता, अनादेस्तु स्वरूपाभावः ; य एव साद्यनादिसाधारणो बाधो नाम; कारणात्मना नाशस्यैव बाधत्वात् । कार्यत्वं तु योगक्षेमसाधारणं प्रयोज्यत्वमेव, इत्यकारणानामनादीनां नाशो बाध एव ॥

जीवन्मुक्तिस्तु बाधितानुवृत्त्या, उपदेशोपपत्तिश्च ।

ब्रह्मविदामविद्यानिवृत्तिर्यद्यपि तत्साक्षात्कारमात्रेणैव; तथापि यावत्प्रारब्धसमाप्ति तत्संस्कारमात्रात्मना दग्धपटवत् तत्रानुवृत्तिः प्रारब्धमात्रोपादानाज्ञानलेशमात्रतया यावच्छरीरपातम्, इत्युपदेशकत्वमपि तेषां जीवन्मुक्तानाम्, नित्यजीवन्मुक्तानां मृत्यु-ब्रह्मादीनामिव स्थितप्रज्ञानामुत्थितावस्थायाम्, इति नोपदेशानुपपत्तिः ; अप्रामाण्यज्ञानानास्कन्दित-पटुतमसंस्कार सहित-भ्रमव्याप्यभुज्यमानादृष्टाभावसहित एव हि साक्षात्कारः सर्वात्मनाऽज्ञाननिवर्तकः ; श्रुतिप्रामाण्यात् । तत्र साक्षात्कारोऽपि तत्प्रतिबद्धो नाज्ञाननिवर्तकः, किन्तु तावन्मात्रोपयोग्यज्ञानशक्तिविशेषस्यैव बाधकः । न चेश्वरशक्तेः प्रतिबन्धकत्वम्; साधकत्वप्रतिबन्धकत्वयोर्व्याघातात् ॥

प्रसन्नस्येश्वरस्यैव बन्ध-मोक्षदत्वमिति परमतानुवादः ।

एतेन—प्रसन्नः परमेश्वरो बन्धविध्वंसकरः । साक्षात्कृतब्रह्मणोऽप्याब्रह्मलोकवासिभ्यः नित्यमुक्तब्रह्मेन्द्रादयोऽपि तदिच्छाधीना एव व्यवहरन्ति, उपदिशन्ति च । बन्धनिवृत्तिरपि तदिच्छयैव ।

सा तु तत्प्रसादाधीना। न चात्र साक्षात्कारस्य किमपि कृत्यम्। तस्यावरणनिवर्तकत्वमपि तत्प्रसादतारतम्यवशेन सातिशयमेव। न च प्रारब्धकर्मणो जडस्य प्रसादप्रतिबन्धकत्वमपि। अत एव भगवतः प्रारब्धोपमर्दकत्वमात्रसूत्रणमुपपद्यते। प्रारब्धप्रतिबन्धकतावादास्तूपचरितार्था एव। द्विविधं ब्रह्मावरणम्—एकाऽविद्या, अपरा त्वीश्वरेच्छा। भगवत्प्रसादेन निमित्तमात्राविद्याया एव प्रकृत्यादिपदवाच्याया निवृत्तिः, न तु तदिच्छारूपस्याप्यावरणस्य। अत एवानन्दतारतम्यं मुक्तानाम्। आनन्दमीमांसाप्येवमाशयैव। न च ब्रह्मव्यतिरिक्तं किमपि मिथ्या। इदमेवाभिप्रेत्यानुव्याख्यानम्—

"मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः।
मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत्॥
मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः।"

इत्यादीति—परास्तम्॥

ईश्वरस्य न बन्ध-मोक्षदत्वमित्यद्वैतसिद्धान्तोपपादनम्।

"भूयश्चान्ते विश्वमायानिवृत्ति"रिति सति शरीरपाते सर्वावरणनिवृत्तिश्रुतिविरोधेनावरणविशेषानुवृत्तिरप्रमाणिकी। न चेश्वरशक्तेरप्यावरणत्वे किमपि प्रमाणम्; अन्यथा तेनैवेष्टसिद्ध्याऽविद्याख्यावरणस्वीकारवैयर्थ्यम्। ईश्वरशक्तेर्नित्याया नित्यावरणत्वे नित्यबन्धप्रसंगेन न कोऽपि मुक्तः स्यात्, इति मुक्तिवाद एव विमुक्तः स्यात्॥

न च तन्निवर्तकं किमपि प्रामाणिकम्। न वा नित्यायास्तस्या निवृत्तिरपि; "परमेश्वर एव सत्त्वादिगुणमय्या विद्याविरोधिन्याऽविद्यया प्रकृत्याऽचिन्त्यया, अद्भुतया च स्वशक्त्या जीवस्य स्वप्रकाशचैतन्यस्वरूपमाच्छादयति, इति प्रकृत्यतिरिक्तावरणशक्तिस्वीकारः किंप्रयोजनः? सर्वनिर्वाहकशक्त्यैवाऽऽवरणनिर्वाहेऽऽवरणशक्तिमात्रस्याधिकस्याविद्यायामपरस्यां स्वीकारः किं प्रयोजनः? मुक्तानामप्यानन्दांशमात्रस्य तारतम्येनावरणनिवृत्तिरपि कुतः? भक्तितारतम्येन प्रसादतारतम्यम्, तेनानन्दतारतम्यमिति कल्पनायामानन्दमीमांसायाम्—"स एको ब्रह्मण आनन्दः" इत्येतत्पर्यन्तं "श्रोत्रियस्य चाकामहतस्ये"त्येकस्यैव वाक्यस्य कथमभ्यासः। "भोगमात्रसाम्यलिङ्गाच्चेति" भगवदानन्दसाम्यप्रतिपादनं कथमन्यथानयनमर्हति?

"भोगेन त्वितरे क्षपयित्वा ततः संपद्यते" इति प्रारब्धकर्मणां मोक्षप्रतिबन्धकत्ववचनं कुतः ? यदि तत्रापीश्वरशक्त्यैव प्रतिबन्धः, तर्हि सर्वत्र तयैव बद्धेषु संचितागामिकर्मस्वपि सत्सु मोक्षप्रतिबन्धाप्रतिबन्धनिर्वाहे कर्मणां सतामप्यकार्यकारित्वात्—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।"

इति कुतः ? ज्ञाने सत्येवेश्वरप्रसाद इति बोधनार्थं तदिति चेत्, ज्ञानाग्निरित्यग्निपदं किमर्थम् ? न ह्यग्निर्लोक ईश्वरप्रसादद्वारैव दहति, तच्छक्तिं वा कार्यकारितायामपेक्ष्यते; अन्यथा सर्वत्र तयैव निर्वाहे विनापि ज्वालाम्, इन्धनादिना वा दाहः स्यात्, कथं वा जलस्यापि न दाहकत्वमीश्वरशक्त्यैव ? ईश्वरशक्तिरियमीश्वरनिष्ठा कथमग्नेर्दाहकत्वादाहकत्वयोर्नियामिका ? मणि-मन्त्रादिना दृष्टेन दाहप्रतिबन्धादिकं च कुतः ?

अत ईश्वरस्य सर्वकारणत्वमधिष्ठानविधयैवेत्यत्रैव सर्वकारणत्वाम्नानम्, तदप्यावृतस्यैव, न त्वनावृतस्वरूपस्य । तस्य बन्धकत्वमविद्योपहितरूपेण, तद्विशिष्टेन वा रूपेण बन्धप्रयोजकोपाध्युपादानतया । मोक्षदत्वं तु तत्कारणज्ञानसहकारित्वेन । प्रारब्धकर्मणामुपमर्दोऽपि सति तत्त्वसाक्षात्कारे संस्कारात्मना, अज्ञानात्मना वाऽनुवर्तमानानां कर्मणां यावत्प्रतीत्येव सतां बन्धकत्वेन ॥

प्रारब्धकर्मणां स्वाप्नवद् यावच्छरीरपातमनुवृत्त्युपपत्तिः ।

यथा स्वाप्निका वासनापरिणामविशेषाः, अवस्थाज्ञानपरिणामविशेषा वा स्वाप्नत्वेन प्रतीयमानाः स्वप्नावस्थायापि बद्धानामपि स्वपतां बन्धकाः, एवं जाग्रतामेव स्थितप्रज्ञानां स्वाप्नवदेव प्रपञ्चानां भानमिति तु व्यवस्था ॥

व्यक्तं चैतद्योगवासिष्ठे—उत्पतन्त एव क्षणमात्रमनुवर्तमानाः संस्कारात्मना विद्यमानाः सर्वेऽपि जागरिका अपि तदानीमप्यभ्यस्यमानसाक्षात्कारतारतम्येन मिथ्यात्वेन स्वप्नावत् प्रतीयमाना बद्धानामिवाकार्यकरिणः प्रारब्धकर्मनिबन्धना इति तु सारांशः । एवमभिप्रायेणैव प्रारब्धानामुपमर्दवर्णनं सूत्रकृतः प्रारब्धप्रतिबन्धवादानामुपचरितत्वे । मणि-मन्त्रादिप्रतिबन्धवादोऽपि कथं नोपचरितार्थः ? ईश्वरशक्तेरेव सर्वत्र प्रतिबन्धकत्वाविशेषात् ॥

आनन्दः प्रत्यगात्मनः स्वरूपमेव । स ह्यविद्ययाऽऽवृतोऽविद्यानिवृत्तौ

केवलं स्वयं प्रकाशते ; अविद्यानिवृत्तिमात्रपरत्वाच्छास्त्रस्य, इतीश्वर एवानन्ददश्चेति वाक्यमुपचरितार्थम्; ज्ञानोत्पादनद्वारा परम्परयोपकारकत्वात् ॥

ईश्वरशक्तेरावरणत्वायोगः, तदतिरिक्ताविद्यावैयर्थ्यापत्तिश्च ।

तत्र ज्ञानेनाविद्या नश्यति, आवरणं न नश्यतीति व्याहतम्, ईश्वरशक्तेरेवावरणरूपत्वायोगश्च। ईश्वरशक्तेरावरकत्वं यद्यविद्याद्वारा, तर्हि निवृत्तायामविद्यायां कथं स्वीयां बन्धशक्तिं न व्यावर्तयति ? यदि बन्धो नाविद्यापेक्षः, तर्हि किमनयाऽविद्यया ? कथं स्वशक्त्यैव नाविद्याकार्यनिर्वाहोऽपि ॥

सा चाविद्या निवर्तमाना यदि सर्वात्मना निवर्तते, तर्हि जीवस्य स्वरूपचैतन्यमानन्दात्मनः सर्वात्मना प्रकाशते, न वा। यदि प्रकाशते, कथमीश्वरशक्त्याऽप्यंशत आवरणम् ? कुतो वाऽशत इव सर्वात्मनाऽपीश्वरशक्त्यैव नावरणम् ? ईश्वरः प्रसादतारतम्यानुसारेणांशतः प्रतिबन्धकशक्तिं व्यावर्तयति, अंशतश्च सर्वात्मना वाऽवृणोतीति कल्पनायां वितथाऽविद्या ॥

मुक्तावानन्दवृद्धि-ह्रासपक्षनिरासः ।

एतेन—मुक्तावप्यानन्दवृद्धि-ह्रासौ—परिहृतौ। तत्रानन्दवृद्धि-ह्रासौ मुक्तानां नान्तःकरणपरिणामवृत्तिविशेषः; तेषां तदसंभवात्, किन्तु स्वरूपचैतन्यमेवेति हि द्वैतसिद्धान्तः; साक्षिभास्यत्वात्तदानन्दस्य। न च तत्र साक्षिणि तारतम्यम्, न वाऽऽनन्दे, बद्धानन्द इव। न वा स्वरूपचैतन्यात्मन आनन्दस्य स्वरूपचैतन्य इवावृतः, अनावृतो वा विशेषः संभवति, इति कथं वृद्धिह्रासावानन्दस्य ? कथं च चैतन्यानन्दयोर्विषय-विषयिभावः ?

ज्ञानस्यैवाज्ञाननिवर्तकत्वोपसंहारः,
अज्ञानवादस्य सौत्रत्वं च ।

अतो बन्धस्य मिथ्यात्वात्, शास्त्रजन्याखण्डाकारवृत्त्योपहितान्याविषयकत्वे सत्युपहितविषयकत्वेन समानविषयया प्रारब्धसमवहितया विद्यया सर्वात्मनाऽविद्यानिवृत्तावखण्डात्मनाऽवस्थानं मोक्षः स्वप्रकाशसंविन्मात्रस्येति सिद्धम्। तदा ह्यविद्या-तत्प्रयुक्ताविद्यासंस्कारास्सर्वेऽपि निवर्तन्ते; मिथ्यात्वात् तेषाम्। बन्धमिथ्यात्वं "विश्वमायानिवृत्तिरि"ति श्रुतिसिद्धं नापलापमर्हति। एवमपि "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति दृष्टान्तविधया स्वाप्निकमिथ्यात्वस्थापनात्, "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रेण विशदीकरणाच्च न्यायतः सूत्रेण ज्ञाप्यते, इति

बन्धमिथ्यात्वासूत्रितत्ववादः, सूत्राणामर्थान्तरकल्पनं वा नोपपद्यते, इत्यसूत्रितार्थवर्णनेन नाद्वैतभाष्यस्याभाष्यत्वम्, येन—

"सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुसारिभिः ॥
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"

इति भाष्यलक्षणायोगः। ईश्वरशक्तिरेवावरणम्, अविद्या माया वा निमित्तमात्रम्, प्रारब्धकर्मणां बन्धकत्ववाद उपचरितार्थः, मुक्तावप्यानन्दावरणांशानुवृत्तिरित्यादिकमेवासूत्रितम्, इति तदर्थपराणामेव वाक्यानां भाष्यलक्षणायोगः ॥

बन्धमिथ्यात्वस्य सूत्रारूढत्वम् आर्थस्यापि; सौत्रत्वात्।

किं बहुना? "अथातो ब्रह्मजिज्ञासा" इति प्रतिज्ञासूत्रमेवादिमं बन्धमिथ्यात्वं सूचयति। "सूचनात् सूत्रमुच्यते" इति वचनात् सूचितोऽप्यर्थ आर्थोऽपि सौत्र एव। तथाहि—द्विविधो हि सूत्रार्थः—श्रौतः, आर्थश्च। तत्र "अथातो ब्रह्मजिज्ञासा" इति सूत्रे "आत्मा वा अरे द्रष्टव्यः" इति विषयवाक्यमादायात्मश्रवणविधिः समर्थ्यते। तत्र जिज्ञासापदं विधिपरतन्त्रान्तर्णीतविचारसाध्यावगतिपर्यन्तज्ञानमिच्छाविषयमाचष्टे। अथशब्दार्थस्तु—साधनचतुष्टयसंपत्त्यानन्तर्यम्। अत्र ब्रह्मसाक्षात्कारः शब्दविधया, अर्थात्तु तदधीनाज्ञाननिवृत्त्युपलक्षिताखण्डाकारवृत्त्युपलक्षितात्मस्वरूपो मोक्षः फलम् ॥

तच्चाविद्या-तन्निबन्धनसंबन्धाधीनबन्धस्य बाध्यत्वं विना न भवति, इत्यार्थं बन्धमिथ्यात्वमत्र सिद्ध्यति। तस्याक्षेप-समाधानाभ्यां निरूपयितुमेव "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यादिः—"नैसर्गिकोऽयं लोकव्यवहारः" इत्यन्तमध्यासभाष्यं भगवत्पादानाम् ॥

तत्र—"अक्षिप्य भाषणाद्भाष्यमि"ति भाष्यलक्षणसमन्वयार्थम्, अधिकरणसमानयोगक्षेमवर्णकावयवसंग्रहार्थं वा पूर्वपक्षभाष्यम्, सिद्धान्तभाष्यं च। तेन चार्थिकं बन्धमिथ्यात्वमपि प्रथमसूत्रस्यार्थ इति वस्तुस्थितिः। "सूचनात् सूत्रमुच्यते" इति सूत्रलक्षणात् सूत्रसूचितोऽपि शाब्दः, आर्थो वा सूत्रार्थ एव; अन्यथा द्वैतमतेऽपि यत्र सर्वेषां सूत्राणां प्रायेण सिद्धान्तपरत्वम्; तत्र पूर्वपक्षस्य साक्षादसूत्रितत्वात्, आर्थिकपूर्वपक्षमादाय प्रयोजनम्, पूर्वोत्तराधिकरणादिसंगतिं चाऽऽदायाधिकरणलक्षणायोगः सूत्राणामापद्येत ॥

अस्यार्थिकार्थस्यापि सौत्रत्वे परस्यापि संप्रतिपत्तिः।

अतःशब्दार्थो हीश्वरप्रसादहेतुत्वमपि न श्रौतः सूत्रार्थः, किन्त्वन्यथानुपपत्तिसिद्ध एवार्थ इति न्यायसुधाऽपि वदति। ततश्चार्थिकार्थस्यापि सूत्रार्थत्वमगत्या संप्रतिपन्नमिति वक्तव्यम्॥

अथशब्देनानान्तर्यार्थेनाप्यर्थात् मङ्गलमपि, इति तेन, ओंपदेन वा मङ्गलाचरणमपि कथमन्यथा सौत्रं सूत्रकाराणां स्यात्? ब्रह्मपदेन तु नारायणस्य प्रमाणान्तरसिद्धस्य जीवादिव्यावृत्तस्य ग्रहणमपि कथं श्रौतम्? न च पदचतुष्टयात्मकस्य सूत्रस्यात्यन्तपरिमितस्य विस्तृतम्, संक्षिप्तम्, अतिविस्तृतं च भाष्याणुभाष्यानुव्यख्यान-तट्टीकादि सर्वं श्रौतं भवति॥

"सूत्रार्थों वर्ण्यन्ते यत्र पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥"

इति भाष्यलक्षणं विस्तृतस्य भाष्यस्य कथं सूत्रविवरणात्मकं सौत्रं स्यात्?

एतेन—प्रथमप्रतीतमर्थमुल्लङ्घ्य चरमप्रतिपन्नमार्थिकमर्थमेवोपपादयन् कथमकुशलो न स्यादिति—परास्तम्;

आर्थिकस्याप्यर्थस्य प्रथममुपन्यासस्तु—

"आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि मङ्गलम्॥"

इति वचनोपक्षिप्तवस्तुनिर्देशात्मकमङ्गलाचरणम्, सर्वशास्त्रार्थस्य संगृह्य निरूपणेन प्रेक्षावतां विचाराभिमुखीकरणं चोपलक्ष्य। प्रसिद्धं हि तत्र तत्र मङ्गलेन भाव्यर्थसूचनद्वाराऽपि मङ्गलाचरणं सर्वेषु महाकाव्येषु श्रव्येषु, दृश्येषु च, इत्यथशब्देन सूत्रसूचितसर्वशास्त्रविषय-प्रयोजननिरूपणमपि मङ्गलाचरणार्थमेव॥

तत्र "युष्मदस्मत्प्रत्ययगोचरयोरि"ति भाष्यम्—ब्रह्मशब्दार्थः = प्रत्यग्ब्रह्मैक्यम् = जीवत्वेश्वरत्वोपलक्षितसंविन्मात्ररूपं जीवत्वेश्वरत्वयोरौपाधिकत्वम्, उपाधिमिथ्यात्वं चापेक्ष्यात्मानं लभते, इति ब्रह्मशब्दार्थोपपादनार्थमेवोपोद्घाततया शास्त्रविषय-प्रयोजनसंग्रहद्वारा प्रयोजनाक्षिप्तमिथ्यात्वनिरूपणार्थम्; यत् प्रमितमनुपपद्यमानं स्वोपपत्तये यदपेक्षते, तत् तदाक्षिपतीति न्यायात्। अत्र च विषय-प्रयोजनयोरपि प्रमितयोः कर्तृ-

त्वादिबन्धमिथ्यात्वं विनाऽनुपपद्यमानत्वात् कर्तृत्वादिबन्धमिथ्यात्वमर्थाक्षिप्तमेव । न चात्र सगुणः परमेश्वर एव विषयः, प्रयोजनं वा मुख्यं तत्प्रसादादि; ज्ञानमात्राधीनत्वादविद्यानिवृत्तेः, इति नेश्वरेण भक्तिप्रसन्नमात्रेण वाऽत्र निर्वाहः, न वा तत्प्रसादमात्रेण बन्धस्य सत्यस्यापि निवृत्तिः ॥

ज्ञानेनैवाज्ञाननिवृत्तौ श्रुति-सूत्रादिप्रमाणोपन्यासः ।

"तरति शोकमात्मवित्" इत्यादिश्रुतयो हि ज्ञानेनैवाविद्यानिवृत्तिद्वारा मुक्तिमुपदिशन्ति । ज्ञानं तु निवर्तकमज्ञानस्य, तत्प्रयुक्तस्य वाऽनिर्वचनीयस्यैव मिथ्याभूतस्य । निवृत्तिशब्देन चात्र कारणात्मता विवक्ष्यते; तथैव शुक्तिरुप्यादौ दर्शनात् । अत एव "विद्वान्नाम-रूपाद्विमुक्तः" इति । इदं च प्रपञ्चमिथ्यात्वमन्तरेण नोपपद्यते । "अथातो ब्रह्मजिज्ञासे"तीच्छाविषयत्वमविद्यानिवर्तकस्य ज्ञानमात्रस्य प्रतिपाद्यते, इति स्पष्टं सूत्रमप्यज्ञाननिवर्तकतयाज्ञानावाप्तिमेव फलं निर्दिशत् प्रपञ्चमिथ्यात्वं शास्त्रतत्त्वं गमयति ॥

न च ज्ञानम्, अधिष्ठानसाक्षात्काररूपं सत्यस्य कुत्रापि निवर्तकं दृष्टम्, येन सत्यस्यापि निवर्तने बाधकाभावः शङ्क्येत । ज्ञानस्य बन्धनिवर्तकत्वं हि दृष्टसामर्थ्यादेव । तच्च प्रमाणजन्यमपरोक्षम् ॥

आगमस्तु तत्र प्रमाणमात्रं साक्षात् मननादिसहितं साक्षात्कादूरात्मकज्ञानजननेनैव चरितार्थम् । तत्फलांशे त्वनुवादमात्रम् । न ज्ञानस्याज्ञाननिवृत्तिरूपफलसाधनत्वमपि शास्त्रैकगम्यं "दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादाविव । "तरति शोकमात्मवित्" इत्यादि फलमात्रस्याज्ञातस्य बोधनेनाधिकारविधया ज्ञानं ज्ञापयति, इति "व्रीहीनवहन्ती"त्यादाविव फलांशेऽनुवादमात्रम्, लोकसिद्धस्य साध्य-साधनभावस्य साक्षात्कारार्थतया श्रवणादिनियमविधिमात्रमत्र । तथा चावघातस्य यथा विहितस्यापि नेश्वरप्रसादद्वारा वैतुष्यार्थत्वम्, एवमत्रापीति मन्तव्यम् । न ह्यागमप्राप्तम्, इति सर्वमीश्वरप्रसादापेक्षमेव फलसाधनमिति नियमः, अन्यथा हि दृष्टार्थनियमविधीनामनुपपत्तिः ॥

दृष्टार्थसाधनोपन्यासस्यापि वैदिकत्वम् ।

आगामोऽपि हि दृष्टार्थमेव श्रवणादिकं विदधाति । "द्रष्टव्य" इति हि दर्शनस्य फलरूपत्वादनुवादमात्रम्; लोकप्रमितस्यैव साध्य-साधनभावस्यात्र नियमन-

मात्रम्, नापूर्वतया विधानम्। भाष्यं तु—स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थत्वात् श्रोतव्यादिवाक्यं न विधिरिति श्रावयति। प्रमाणमन्वेषमाणस्य वेदान्तविमुखस्य तत्राभिमुखीकरणार्थो नियमविधिरिति तु परे। सर्वथा तु साक्षात्काररूपफलार्थं श्रवणोद्बोधनानुपपत्तिर्बन्धमिथ्यात्वमाक्षिपतीति नानुपपन्नम्। न च सत्यस्य ज्ञानेन निवृत्तिः; एकविज्ञानेन सर्वविज्ञानं विवर्तोपादानोपादेयभावनिबन्धनं नान्यथोपपद्यते, इति "विद्वान्नाम-रूपाद्विमुक्तः" इत्यादिनाऽधिष्ठानज्ञानेन बन्धनिवृत्तिरेवाभिप्रेयते। न च सा निवर्त्यमानस्याज्ञानस्य, तत्प्रयुक्तस्य वा मिथ्यात्वं विनोपपद्यते। न च मिथ्यात्वं येन केनापि निवृत्त्या, किन्त्वधिष्ठानतत्त्वज्ञानेनैव; अन्यथेश्वरप्रसादेनैवाज्ञाननिवृत्तौ तत्रापि कथं येन केनापि सत्यस्यापि बन्धस्य न निवृत्तिः? इति वैदिकेन कर्मणैव बन्धो निवर्तताम्, किं वा भक्तियोगेन, ज्ञानयोगेन वा परमतेऽपि?

वस्तुतस्तु येन केनापि निवृत्तिरीश्वरप्रसादेन वा न सत्यस्य भवितुमर्हति। मिथ्यार्थस्य तु न विना ज्ञानम्, इति ज्ञाननिवर्त्यत्वानुपपत्तिर्बन्धमिथ्यात्वमाक्षिपतीति सुष्ठु लगति॥

अध्यासभाष्यं हि बन्धस्याज्ञाननिमित्तत्वम्, तत्कार्यत्वं वा निर्धारयत् बन्धमिथ्यात्वमेव सिद्धान्तयति॥

तत्त्वसाक्षात्कारनिवर्त्यत्वं मिथ्यार्थस्यैव।

अज्ञान-तत्कार्यान्यतरत्वं मिथ्यात्वमिति चानर्थान्तरम्। अज्ञानकार्यत्वं स्वयमज्ञानपरिणामत्वेन, अज्ञानाधिष्ठानब्रह्मविवर्तत्वेन च; अन्यथा केवलस्याज्ञानस्य, अविद्याया वा विना चिदधिष्ठानं न विषयात्मना परिणामः, न वा केवलायाश्रितोऽन्तरेणाज्ञानविषयताम्, अज्ञानाश्रयविषयतां वा नाम-रूपात्मना विवर्तः, इति बन्धस्याज्ञानकार्यत्वमधिष्ठानविवर्तत्वमप्यपेक्षते। तच्च मिथ्यात्वं विना नोपपद्यते। एतदर्थमेवाध्यासभाष्यम्। न हि विना ब्रह्माधिष्ठानमविद्याकार्यत्वम्॥

एतेन—अस्तु वा ज्ञानमज्ञानस्यैव निवर्तकम्; तथापि बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते, किन्तु बन्धस्याज्ञान-तत्कार्ययोरन्यतरत्वमेवेति—व्याख्यातम्; तस्यैव मिथ्यात्वप्रयोजकत्वात्। तत्र बन्धस्याज्ञानकार्यत्वेन मिथ्यात्वं तदुपादानाज्ञानमिथ्यात्वेनैव। न हि निवृत्तिमात्रं मिथ्यात्वं नाम, किन्तु

ज्ञानप्रयुक्तकार्य-कारणावस्थानिवृत्तिरूपमधिष्ठानज्ञानाधीनम्, इति साक्षाद् मिथ्यात्वमज्ञानस्य ज्ञाननिवर्त्यत्वेनैव ॥

न हि कुत्रापि सत्यस्याधिष्ठानतत्त्वसाक्षात्कारनिवर्त्यत्वं दृष्टचरम्। तत्र गरुडो न सर्पस्याधिष्ठानम्, सर्पो वा न तदज्ञानतत्कार्यान्यतरः नो वा वस्तुतन्त्रसर्पसाक्षात्कारनिवर्त्यः सर्पः, किन्तु विधेयध्यानमात्रं तत्र सर्पविषमात्रस्य नाशकं, विनापि सर्पनिवृत्तिम्, न हि लोकसिद्धार्थस्य श्रवणादिवाक्यमुद्बोधनमात्रम्, नियमो वेति वैषम्यात्। मिथ्यात्वं त्वधिष्ठानज्ञानेन तद्विषयाज्ञान-तत्प्रयुक्तयोर्निवृत्तिं विना नोपपद्यत इत्यत्र नेदं प्रत्युदाहरणम्, येन सत्यस्यापि ज्ञानेन निवृत्त्या ज्ञाननिवर्त्यत्वमुक्तरूपं मिथ्यात्वं विनाऽप्युपपद्येत। विरोधिज्ञाननिवर्त्यमज्ञानम्, तत्प्रयुक्तं वेति तु निष्कर्षः। तत्र विरोधिपदं गरुडज्ञानादिव्यावर्तनार्थम्, अज्ञानविषयाश्रयसंविन्मात्रज्ञानव्यावर्तनार्थं च। प्रमाणजन्याधिष्ठानज्ञानमेव ह्यज्ञानस्य निवर्तकम्, न तु ज्ञानमात्रमिति बोधनार्थत्वात् तस्य ॥

गरुडध्यान-सेतुदर्शनादीनां विषादिनिवर्तकानां तत्त्वसाक्षात्कारत्वम्।

गरुडज्ञानं तु ध्यानरूपं पुरुषतन्त्रम्, न तु प्रमाणतन्त्रम्। "सेतुं दृष्ट्वा ब्रह्महत्यां व्यपोहति"त्यत्रापि दर्शनपदेन सेतुदर्शनं तत्तन्नियमविशिष्टसेतुदेशपर्यन्तगमनार्थपुरुषप्रयत्नसाध्यव्यापारविशेषः, तत्स्नानाद्यङ्गं विधेयमेव विवक्ष्यते ॥

तत्राशक्तविषये नित्ये, नैमित्तिके वा कर्मणि लोपस्याकिंचित्करत्वात् शक्यनियमसहितं स्नानादिकमेव विवक्ष्यते, अन्यथाऽन्धानाम्, तिमिरदूषितानाम्, तद्दर्शनासमर्थानामन्येषाम्, किं बहुना सांप्रतिकानां सर्वेषामेव सेतुदर्शनासंभवात्, श्रीरामेश्वरादियात्रा न पापविघाताय स्यात् ॥

सेतुदर्शनं विधेयक्रियाविशेषमात्रम्, न साक्षात्कारः।

न चेदं वाक्यं सेतुबन्धनात् पूर्वम्, सेतुनाशानन्तरं वा प्रमाणम्। सेतुबन्धानन्तरं तद्दर्शनयोग्यता, तस्य दर्शनमेव पापनिवर्तकमिति द्वैतिनोऽपि मतम्, इति "सेतुं दृष्ट्वा ब्रह्महत्यां व्यपोहति" इति विध्यनुसारेणापि सत्यस्य ज्ञानेन निवृत्तिरिति वक्तुं न सुशकम् ॥

वैधं हि दर्शनं वस्तुगत्या न दर्शनमपेक्षते, किन्तु दर्शनयोग्यताम्, इति दर्शनयोग्यदेशपर्यन्तसेतुप्रदेशगमनमेव पूर्वोक्ताङ्गसहितमत्र दर्शनपदार्थः।

तत्र तत्तत्संख्याकं स्नानमप्युत्तराङ्गमिति न दोषः ; यथा— चन्द्रसूर्योपरागादौ मेघादिनाऽऽवरणेऽपि दर्शनयोग्यकालिकजीवनमेव दर्शनपदार्थः । न चैवं "विद्वान्नाम-रूपाद्विमुक्तः" इत्यादिवाक्यगम्यश्रवणादिसाध्यमधिष्ठानविषयं ज्ञानमसंभवि क्रियमाणेऽप्यपेक्षिते प्रयत्ने साधनसंपन्नस्य, इति ज्ञानेन सत्यस्य निवृत्तौ नैकमप्युदाहरणं शक्यनिर्देशम्। सेतुदर्शनादौ हि क्रियैव विधीयते, ज्ञानं तु न विधेयम्। दर्शनपदं हि विधि-निषेधस्थले तद्विषयसंकल्पपरम्, न तु दर्शनपरम्। यथा—"नेक्षेतोद्यन्तमादित्य"-मित्यत्रानीक्षणसंकल्पो विधेयः; ईक्षणनिषेधस्य प्रकरणविरुद्धत्वात्। ईक्षणनिषेधो हि तदनुकूलव्यापारनिषेध एव। अत एवानीक्षणसंकल्पविधानं तत्र; अन्यथेक्षणविरुद्धं किमपि कर्तव्यमिति वाक्यार्थः स्यात्॥

विधेयक्रियाया इव न ज्ञानस्यादृष्टार्थत्वम्।

न च क्रियास्वपि सति दृष्टे फलेऽदृष्टकल्पना। कारीर्यादौ हि दृष्टफलत्वाद् नादृष्टकल्पना। अत एवासत्यां वृष्टौ कारीर्या यावद्वृष्टि पुनः पुनरावृत्तिः। नियतफले दृष्टफले तु सकृदेवानुष्ठानम्। दृष्टपश्वादिफलकेऽपि नादृष्टं विना फलसिद्धिरिति हि मर्यादा, इति ब्रह्महत्यादिपापनिवृत्तिरपि तत्तत्पूर्वोत्तराङ्गापेक्षेण सेतुदर्शनेन विनाऽङ्गापूर्वादिकं न भवितुमर्हति। न च ब्रह्महत्या, तन्निवृत्तिर्वा दृष्टम्। ब्रह्महत्यानिवृत्तिर्हि तत्प्रयुक्तनरकादिप्राप्तियोग्यतानिवृत्तिः पारलौकिकी, न तु व्यवहारयोग्यतामात्रम्॥

अज्ञाननिवृत्तिस्तु वैतुष्यादिकम्, वृष्ट्यादिकं वा दृष्टफलमेव, नादृष्टम्। अत एव यावत्फलोदयं साक्षात्काराभ्यास आवृत्त्यधिकरणसाध्यमुपपद्यते; अन्यथा सकृदुपासनेनापि "सर्वौषधस्य पूरयित्वाऽवहन्ती"त्यादाविव सकृदेवावघातात् फलसिद्धौ वैतुष्यार्थावघातवदभ्यासः साक्षात्कारस्य नोपपद्येत, इति ज्ञानेनाज्ञाननिवृत्तिर्नेश्वरप्रसादाधीना, किन्तु यावत्फलं तत्साधनाऽऽवर्तने, इति ज्ञाननिवर्त्यत्वमज्ञानस्य ज्ञानमात्रप्रयुक्तम्, नेश्वरप्रसादानेपक्षं च। तच्च तन्निवर्त्याज्ञान-तत्प्रयुक्तबन्धयोर्मिथ्यात्वं विना नोपपद्यते॥

मिथ्यात्वमज्ञानदीनां बाध्यत्वेन न, नाश्यत्वमात्रेण।

तत्र बन्धमिथ्यात्वं बन्धस्य स्वरूपेणेव कारणरूपेणाप्यसत्त्वं, तद्ध्वंसलक्षणम्। ध्वंसो हि कार्यस्य कारणात्मता, कारणस्य तु स्वरूपतोऽभावमात्रम्, न तु कारणात्मनापि कार्याणामिव ; अन्यथा तस्यैव कारणावस्थस्य रूपान्तरेण बन्धकत्वापत्त्या निर्बधत्वं निरस्तनिखिलबन्धत्वं

वा न संभवति, इति तन्मिथ्यात्वं विना न मुक्तिः, इति बन्धमिथ्यात्वमेकान्ततो मुक्तिरपेक्षते ॥

मिथ्यात्वस्य सिद्धान्तत्वम् ।

एतेन—ध्वंसवत्त्वादेव बन्धस्य सत्यत्वम् ; अन्यथा मिथ्याभूतस्यापि ध्वंसवत्त्वे शशविषाणादेरपि ध्वंसः स्यात् । न चैतदस्तीति—परास्तम् ।

मिथ्यात्वं हि स्वाधिष्ठानज्ञानबाध्यत्वरूपं न शशविषाणस्यापि; तस्य निरधिष्ठानत्वात् , तज्ज्ञानाबाध्यत्वाच्च, इति बन्धस्य ध्वस्तस्य न सत्यत्वम् ॥

न हि सत्यत्वं ध्वंसव्याप्यम् ; आत्मनि व्यभिचारात् ,नापि व्यापकम्; दृष्टान्तासंप्रतिपत्तेः । अज्ञान-तत्कार्यान्यतरत्वमेव ध्वंसप्रयोजकम् । न चात्मा शशविषाणादिकं वोक्तान्यतरत्ववत् ; सदसद्विलक्षणत्वं वा ध्वंसप्रयोजकम्; शुक्तिरूप्य-तदुपादानयोस्तथा दर्शनात् , इति ध्वंसवत्त्वादेव मिथ्यात्वम् , इति बन्धः, सत्यः, ध्वंसवत्त्वात् , इत्यनुमानस्य व्यतिरेकिणः, बन्धः, मिथ्या, ध्वंसवत्त्वात् , यथा शुक्तिरूप्यादीत्यनेन विरोधः ॥

बन्धसत्यत्वानुमाननिरासः ।

तत्र प्रथमेऽनुमाने यत्र यत्र सत्यत्वाभावः, तत्र तत्र ध्वंसाभाव इति व्याप्तेरस्मद्दृष्ट्या शुक्तिरूप्यादौ व्यभिचारः । द्वितीये तु परमतरीत्या दृष्टान्तासिद्धिः; उभयत्रापि स्वस्वदृष्ट्यैव स्वीयमनुमानं नासाधकम् ॥

न च बन्धबाधमात्रं मुक्तिः, किन्तु तदुपलक्षितब्रह्मभावः, ज्ञानत्वोपलक्षितबन्धनिवृत्तिस्वरूप आत्मा वा "तत्त्वमसि" "ब्रह्मविद् ब्रह्मैव भवति" "विमुक्तश्च विमुच्यते" "तरति शोकमात्मवित् " इत्यादिश्रुतयः, "आत्मा प्रकरणात्" "एवमप्युपन्यासादविरोधं बादरायणः" "विकारावर्ति च दर्शनात् " इत्यादिसूत्राणि चात्र मानम् ॥

बन्धनिवर्तकं ब्रह्मज्ञानमेव । यस्य तु बन्धो जीवस्य, तद्गतमेव ब्रह्मज्ञानं बन्धनिवर्तकम् , परं तु ब्रह्मविषयकम् , यद्विषयिणी चाविद्या; समानविषयकत्वेनैव निवर्त्य-निवर्तकभावात् ॥

जीवेश्वर-चिन्मात्राणां स्वरूपविवेकः ।

तच्च ब्रह्माविद्योपहितत्वादुपादानम् ; विद्योपहितत्वादनावृतसंविन्मात्रं

मुक्तिः; तदेवाविद्याश्रयत्वात्, तदवच्छिन्नत्वात्, तत्र प्रतिबिम्बत्वाद्वा जीवः, तदुपहितत्वात्, तदधिष्ठानत्वात्, तद्बिम्बत्वाद्वा ब्रह्म, इति वस्तुगत्या जीव-ब्रह्मणोरुपहितानुपहितादिरूपेण भेदेऽपि स्वरूपत ऐक्याद् आश्रय-विषययोः, बिम्ब-प्रतिबिम्बयोः, अवच्छिन्नानवच्छिन्नयोः, उपहितानुपहितयोर्वा भेदादविद्याया अपि ज्ञानस्येवोभयाश्रयविषयकत्वात्। वस्तुगत्या समानाश्रयविषयकत्वाद्वा संविन्मात्रज्ञानं ब्रह्मगतं वा जीवगतं वा बन्धनिवर्तकमिति नानुपपन्नं किमपि ॥

जिज्ञासाघटकज्ञानं जीव-ब्रह्मैक्यसाक्षात्कारः।

तत्र सौत्रं फलरूपं ब्रह्मज्ञानमवगतिपर्यन्तमेव, यथा शुक्तिविषयं शुक्त्यन्तःकरणयोरेकदेशस्थतावस्थायां प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्याश्रयविषयकं जीवगतं शुक्त्यवच्छिन्नाश्रयगतं वा ज्ञानं तत्समानाश्रयविषयकाज्ञानस्य निवर्तकम्। न च शुक्तिज्ञान-घटज्ञानयोरिवोपाधिभेदप्रयुक्तं भेदमात्रं जीव-ब्रह्मणोः। इदमेवाभिप्रेत्य—ब्रह्मज्ञानं नाम त्वंपदार्थस्य तत्पदार्थेनैक्यानुभव इति सांप्रदायिकाः। समर्थयिष्यते चेदमुपरिष्टात् ॥

जिज्ञासाघटकज्ञानस्यैव साधनत्वम्।

बन्धनिवृत्तिर्नाम तदुपादानाज्ञानेन सह बन्धस्य बाधः। स च नाप्रामाण्यशङ्कास्कन्दितेन, पटुतरसंस्काररहितेन, प्रारब्धकर्मफलसहकृतेन वा, किन्तु तद्विपरीतेन, इति साक्षात्कृतब्रह्मणामपि केषांचनाप्रामाण्यशङ्काकलङ्कितज्ञानानां न मुक्तिः, केषांचन प्रारब्धकर्ममात्रावशेषाद् अज्ञानसंस्कारमात्राद् जीवन्मुक्तिः, केषांचनोक्तसर्वलक्षणसंपन्नसाक्षात्कारवतां तु शरीरपातमात्रेणानावृतसंविन्मात्रतयाऽवस्थानात् परमा मुक्तिः। सर्वं चेदं यथावसरं प्रपञ्चयिष्यते। तदेवं प्रयोजनाक्षिप्तबन्धमिथ्यात्वमेतावता समर्थितम्। एतावता तु—

"मिथ्यात्वमपि बन्धस्य नं प्रत्यक्षविरोधतः ॥"

इत्यत्र बन्धमिथ्यात्वमपि नेत्यस्य प्रयोजनाक्षिप्तबन्धमिथ्यात्वनिरासपरतया व्याख्यानस्य प्रथमस्य निरासः ॥

बन्धमिथ्यात्वस्य प्रत्यक्षाविरोधसमर्थनम्।

अयं हि ग्रन्थ उक्तविधयोपक्षिप्तबन्धमिथ्यात्वनिरासपरतयापि

व्याख्यायमानः सांप्रतं परीक्ष्यते, येन ततोऽपि बन्धमिथ्यात्वं समर्थयितुं शक्येत। तत्र "अथातो ब्रह्मजिज्ञासे"ति सूत्रघटकब्रह्मशब्दः—"अयमात्मा ब्रह्म" "आत्मा वा अरे द्रष्टव्यः" "प्रज्ञानमानन्दं ब्रह्म" "तत्त्वमसि" इत्यादिवाक्यैकवाक्यतया न जीवम्, ईश्वरं वा विशिष्टं भिन्नमभिप्रेत्य, तयोरुभयोरपि प्रत्यक्षेण, वेदान्तवाक्यैः, तद्विचारपरसंकर्षकाण्डेन च निर्णीतत्वेन तत्र संशयाभावेन विचारवैयर्थ्यात्, किन्तु संविन्मात्रम्, तयोरुपाधिभेदप्रयुक्तभेदशून्ययोरुपाध्यंशपरित्यागेनानुपहितशुद्धरूपेणैव शास्त्रप्रतिपाद्यत्वात्, तस्य च प्रत्यक्षेण, कर्मोपासनाकाण्डमात्रेण तद्विचारपरधर्मजिज्ञासा-सविशेषब्रह्मविचाराभ्यामप्यनिर्णीतत्वादुभयानुगतानावृतसंविन्मात्रस्यैव प्राधान्येनात्र विचार्यत्वात्, तस्य च तत्तदुपाधिमिथ्यात्वनिर्णयमन्तरेणोपपादनस्याशक्यत्वात्, इति बन्धमिथ्यात्वमप्यत्र सूच्यते, इति नात्र प्रत्यक्षादिसिद्धो विशिष्टोऽहमर्थो जीवः, न वा मायोपहितेश्वरमात्रं विषय इति कल्पद्वयेऽपि तस्मिन् तयोरेकतरस्य विषयत्वनिर्वाहार्थं न बन्धमिथ्यात्वविचारप्रस्तावः, येनान्यस्य, सन्दिग्धता, अन्यस्य च विचार इति संशय-निर्णययोर्वैयधिकरण्यमापद्येत, इति जीवात्मैव तत्तदुपाधिपरित्यागेन संविन्मात्रं ब्रह्म, एवमीश्वर एव तदुपाधिपरित्यागान्मुख्यात्मा, इत्यात्मब्रह्मणोरभेदमभिप्रेत्य, न तु तयोः प्रत्यक्षसिद्धं रूपमादाय परोक्तरीत्याऽऽक्षेपः; निष्कृष्टरूपविवक्षया तस्यात्मस्वरूपस्य विप्रतिपन्नस्य सन्दिग्धस्यात्र निर्णयात् सिद्धान्तः, इति नाद्वैतसिद्धान्ते संशय-निर्णयवैयधिकरण्यम्। व्यक्तीकरिष्यते चेदमुपरिष्टादपि । सकलतन्त्रोपोद्घातः खलु प्रयोजनं "युष्मदस्मदि"त्यध्यासभाष्यस्य ॥

## अद्वैतसिद्धान्तनिष्कर्षः।

सकलतन्त्रसिद्धान्तस्तु सौत्रः—निरस्तसमस्तविशेषं "सदेवे"त्यादिबाधायां सामानाधिकरण्यवशेन, सर्वविवर्तोपादानतया, सर्वाधिष्ठानतया, अध्यारोपापवादविधया, स्वव्यतिरेकेण सजातीय-विजातीय-स्वगतभेदरहिततया, एकविज्ञानेन सर्वविज्ञानेन च सद्विद्यादिमहातात्पर्यविषयः तटस्थलक्षणलक्षितं परमार्थतो नित्य-शुद्ध-मुक्तस्वभावम्, उपाधिसंबन्धात् सर्वज्ञम्, सर्वशक्तिसमन्वितं च प्रत्यक्षादिप्रमाणान्तरागम्यम्, स्वविवर्तेन बाधायाम्, जीवस्वरूपेण त्वभेदे सामानाधिकरण्यप्रतीतिगोचरं च ब्रह्मैव जिज्ञासाविषयः—इति ॥

तत एव जड-जीवात्मकप्रपञ्चाभिन्नं ब्रह्मैवाशेषवेदप्रतिपाद्यमित्येवम्-

"अथातो ब्रह्मजिज्ञासा" "इत्यादेः" "तत्तु समन्वयात्" इत्यन्तस्य प्रतिपाद्यं तत्त्वम्। न च तत्प्रतिपादनं बन्धमिथ्यात्वमन्तरा सिद्ध्यति ॥

न च सकलजगज्जन्मादिनिमित्तत्वमात्रं लक्षणं जड-जीवात्मकप्रपञ्चादत्यन्तव्यावृत्तं ब्रह्मैवाशेषवेदप्रतिपाद्यमित्येव "तत्तु समन्वयादि"त्येतदन्ताया ब्रह्ममीमांसासंग्रहात्मिकाया विषयः, येन तन्निर्णयार्थं न बन्धमिथ्यात्वमपेक्ष्यते, प्रत्युत जड-जीव-ब्रह्मणामभेद एवापेक्ष्यते। तत्र द्वैतसिद्धान्ते भेदस्यैव महातात्पर्यविषयत्वम्, अद्वैतसिद्धान्ते तु तद्विपरीतमद्वैते महातात्पर्यविषयत्वम्। यथा चैतत् तथोपरिष्टाद् व्यक्तीभविष्यति ॥

तत्र "तरति शोकमात्मवित्" इत्यात्मज्ञानस्यैव बन्धनिवर्तकत्वप्रतिपादनाद् ज्ञानाद् बन्धनिवृत्तेर्बन्धमिथ्यात्वं विनाऽनुपपत्तेर्ब्रह्मजिज्ञासा बन्धमिथ्यात्वनिर्णयमादावपेक्षत इति वस्तुस्थितिः। अपेक्षा नामात्र प्रमितस्यार्थस्यान्यथाऽनुपपद्यमानस्योपपादनरूपाऽऽक्षेपशक्तिरेव, इति तस्याः शब्दनिष्ठत्वं न विरुध्यते ॥

प्रत्यक्षादिविरोधाद्बन्धमिथ्यात्वेऽर्थापत्तिप्रमाणनिरासः।

यत्तु—न केवलं बन्धमिथ्यात्वानपेक्षा, किन्तु तदसंभवोऽपि। तथाहि—आक्षेपो नामार्थापत्तिः। तत्सामग्री त्वाक्षेपकस्य प्रमितत्वम्, अनुपपद्यमानत्वं च, आक्षेप्यस्य तूपपादकत्वम्, प्रमाणाविरुद्धत्वं च। अत एव प्रमितत्वस्यानुपपत्त्यभावः, अन्यथोपपत्तिः, प्रमाणविरुद्धत्वं चेत्यर्थापत्तिदूषणानि। अस्ति च बन्धमिथ्यात्वे प्रत्यक्षविरोधः, इति नार्थापत्तेरवकाशः। तदिदमुक्तम्—

"मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः ॥"

इति। प्रत्यक्षविरोधत इत्युपलक्षणम्—अनुमानागमविरोधस्य, अनुपपन्नत्वस्य च ॥

सन् घट इत्यादिप्रत्यक्षस्य मिथ्यात्वाविरोधित्वम्।

तत्र प्रत्यक्षविरोधो न बन्धमिथ्यात्वस्य। तद्धि बन्धस्वरूपमात्रं गृह्णाति, न तु मिथ्यात्वाभावम्। "सन् घट" इत्यादिप्रत्यक्षं हि सत्तादात्म्यमेव घटादेर्गोचरयति, न तु बाध्यत्वाभावरूपं सत्त्वमपि। तत्र हि सद्रूपमेवाधिष्ठानं तादात्म्येन भासते, न तु सत्त्वमपि। अधिष्ठानं हि सद्रू-

पमेव, न तु सत्त्वविशिष्टम्। सत्त्वं ह्यत्र धर्मतया भासमानमपि सत्ता, अर्थक्रियाकारिता वा। न च तद् मिथ्यात्वविरोधि, न च स मिथ्यात्वाभावः। अधिष्ठानमपि सत्यमित्येव श्राव्यते, नामिथ्येति। न ह्यसत्यपदमिव सत्यपदं नञ्घटितम्, येन मिथ्यात्वाभावः सत्त्वं स्यात्॥

एतेन—घटोऽस्तीत्यादिप्रतीतिरपि—व्याख्याता; अस्तित्वस्य कालसम्बन्धरूपस्य मिथ्यार्थानां प्रतीतिसमये सत्त्वाद् न तद् मिथ्यात्वविरोधि। शुक्तिरूप्यमस्ति, किं बहुना? असदप्यस्तीतिप्रतीतिविषयः, इति परैः स्वीकाराद्, न सत्तामात्रं बाध्यत्वविरोधि; बाध्यत्वरूपमिथ्यात्वाभावो वा तत्।

घटोऽस्तीत्यादिप्रतीतेर्न मिथ्यात्वविरोधित्वम्।

वस्तुतस्तु—प्रतीतिकाले मिथ्यात्वेनानिश्चयदशायामेवास्तीति प्रतीतिः, न तु बाधदशायाम्, तदनन्तरं वा। अस्तित्वं हि कार्यसामान्यस्य स्वरूपेण, नास्तित्वं तु कारणात्मना, अधिष्ठानव्यतिरेकेणाभावो वा, इति रूपभेदेन, अवस्थाभेदेन वाऽस्ति नास्तीति प्रतीतिविषयत्वं न व्याहन्यते। अस्ति-नास्त्युभयोदासीनं तु रूपं सदसद्विलक्षणत्वेन शुक्तिरूप्यादौ बाधिते वर्तते। तद्धि सत्तादात्म्येनैव प्रतीयते। अस्तीत्यपि तत्परमेव॥

न चास्तित्वं मिथ्यात्वाभावश्चेत्यनर्थान्तरम्। शशशृङ्गमस्तीति असद् रजतमस्तीति च प्रतीतेः, इति न 'अस्ति'प्रतीतिविषयत्वमात्रेण नासत्त्वम्, मिथ्यात्वाभावो वा। न च नास्तीति प्रतीतावनुभवविरोधः; बाधकाले तथा प्रतीतेरनुभवसिद्धत्वात्, इति न प्रत्यक्षं घटादीनां मिथ्यात्वाभावे प्रमाणम्, इति नाक्षेप्यस्योपपादकत्वम्, प्रमाणाविरुद्धत्वं च सामर्थ्यंशोऽत्र बाधितः॥

प्रमितत्वेन सत्यत्वाक्षेपायोगः।

बन्धनिवृत्तिर्हि "तरति शोकमात्मवित्" इति प्रमाणसिद्धत्वात् प्रमिता निवर्त्यस्य मिथ्यात्वं विनाऽनुपपन्ना च, इत्यपरोऽपि सामर्थ्यंशोऽत्र वर्तते। न चान्यथोपपत्तिः, अन्यथैवोपपत्तिर्वा ज्ञाननिवर्त्यत्वस्य पूर्वोक्तरीत्या कुत्रापि; सत्यत्वादर्शनात्। वस्तुतस्तु--प्रत्यक्षं न तत्त्वावेदकम्। तत्त्वं हि त्रिकालबाधायोग्यमधिष्ठानमात्रम्, यदेव प्रमितमिति गीयते। प्रमात्वं तु ज्ञानसामान्यांशाधिष्ठानसद्रूपांशमादाय, न तु प्रकारांशे, विकल्पांशे वा,

इति हि ब्रह्मसिद्धि-तत्त्वशुद्धिकारादयः, इति तन्मतरीत्या न प्रत्यक्षं बन्धांशे प्रमाणमपि, इति बन्धस्य प्रमितत्वाभावात् तेन सत्यत्वस्यानाक्षेपाद् न मिथ्यात्वाक्षेपायोगः ॥

मिथ्यात्वस्यापि प्रत्यक्षत्वात् श्रुत्यनुग्रहेण तस्यैव प्रमितत्वम् ।

परमार्थतस्तु—मिथ्यात्वमपि बाधदशायां प्रत्यक्षमेव, इति प्रत्यक्षप्रमितत्वं तस्यापि समानम् । न चोभयं प्रमाणमिति युक्तम्, इत्येकतरबाधे नियते 'नेदं रजतमि'त्यादिस्थल इव परस्यैव प्रामाण्यम्, न तु पूर्वस्य । अयमेव न्यायः सर्वत्र भ्रम-प्रमाविवेकेऽनुसन्धीयते । "नेह नानास्ति किञ्चन" "नात्र काचन भिदाऽस्ति" इत्यादिश्रुतयोऽपि प्रत्यक्षबाधिकाः, यदुपष्टब्धं मिथ्यात्वप्रत्यक्षं सत्यत्वप्रत्यक्षं बाधते ॥

श्रुत्यप्रामाण्यापत्त्या श्रुतिर्न मिथ्यात्वे प्रमाणम् ।

एतेन—

"मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत् ।"
इति—परास्तम् । एतदाशयस्तु—आपातप्रतिपन्नोऽर्थो न वाक्यार्थः, मीमांसावैयर्थ्यात्, किन्तूपक्रमोपसंहारादितात्पर्यग्राहकप्रमाणानुगृहीतः, तदविरुद्धश्चार्थो वाक्यार्थः । तत्र चात्मनोऽकर्तृत्वादिप्रतिपादनम्, आत्मव्यतिरिक्तसर्वप्रपञ्चमिथ्यात्वमुपपत्तिविरुद्धं न प्रामाणिकम् । अत एव "नेह नानास्ती"त्यादिवाक्यानां सप्रपञ्चे ब्रह्मणि प्रपञ्चनिषेधपरत्व उपपत्तिविरुद्धेऽत्र न प्रामाण्यम् । अतः प्रतीतमर्थमप्युपपत्तिविरुद्धं परित्यज्यार्थान्तरमेव युक्तम् । कथं चात्रोपपत्तिः ? एवं यदि दुःखादेरात्मातिरिक्तस्य समस्तस्य मिथ्यात्वं श्रुत्यादिबलेन स्यात्, तर्हि ततस्तस्य श्रुत्यादिवाक्यस्यापि मिथ्यात्वं भवेत्; आत्मातिरिक्तत्वात्, इति स्वस्मिन्नेवास्य प्रामाण्यं निहतम्, इति मिथ्याभूतस्य वन्ध्यासुतवचःकल्पस्य तत्त्वार्थबोधकत्वं व्याहतम्, अबोधकत्वं वा । बोधकत्वे तु न मिथ्यात्वबोधकं स्यात्,—इति ॥

प्रपञ्चमिथ्यात्वबोधकत्वेऽपि श्रुतिप्रामाण्योपपत्तिः ।

सिद्धान्ताशयस्तु—आत्मव्यतिरिक्तत्वेन लौकिकवाक्यवद् वैदिकं वाक्य-

मप्यविद्यापरिणामरूपं यद्यपि भाविबाधदृष्ट्या मिथ्या; तथापि प्रामाण्यं विषयस्याबाधितत्वे न विरुध्यते ; असत्यादपि सत्यार्थप्रतीतेरविरोधात्। तदुक्तम्:—

"उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥"

इति। विषयबाधाबाधाभ्यां हि भ्रम-प्रमाविवेकः। तत्र यदि बाधितार्थबोधकं लौकिकं वैदिकं वा वाक्यम्, तर्हि तदप्रमाणम्। विषयाबाधे तु तत्प्रामाण्यं तत्त्वावेदकत्वेनाबाधितम्, इति "नेह नानास्ति किंचन" इति वाक्यस्य" "सदेवे"ति प्रपञ्चतादात्म्यवत्तया प्रस्तुतस्याद्वितीयादिवाक्यैर्द्वितीयाभावोपलक्षितस्वरूपबोधकत्वेनैव ब्रह्मणि प्रपञ्चाभावबोधकत्वेन बाधितद्वितीयाभावोपलक्षितब्रह्मस्वरूपबोधकस्य नाप्रामाण्यम्॥

ज्ञानाप्रामाण्यस्य विषयबाधैकावसेयत्वम्।

न हि वन्ध्यासुतवचस इवापौरुषेयस्य वेदवाक्यस्यात्यन्तासत्त्वं मिथ्यात्वेऽपि। न च मिथ्यात्वम्, अत्यन्तासत्त्वं चानर्थान्तरम्। अप्रामाण्यं हि बाधकालावसेयं भाविबाधदृष्ट्यैव, न तु तदभावदशायाम्, मिथ्यात्वानिश्चयदशायां वा, इति मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वेन प्रामाण्यं यावद्बाधं भ्रमज्ञानस्यापि वर्तते, इति न वस्तुगत्या मिथ्यात्वेऽपि विषयाबाधे वाक्यस्य तत्त्वावेदकत्वं विरुध्यते॥

न हि लौकिकानाप्तवाक्यवद् बाधितार्थबोधकं वैदिकं वचनम्। अप्रामाण्यं ह्यविद्यमानार्थविषयकत्वेन, "नद्यास्तीरे फलानि सन्ती"त्यादेः-यदि न फलवत्तादशायां तत् प्रयुज्यते। तदभावदशायां प्रयुज्यमानस्य तु तस्य प्रामाण्यमेव, इति तेनैव नयेन मिथ्यार्थं मिथ्येति बोधयत् वाक्यं प्रमाणम्, सत्यं मिथ्येति बोधयत्तु न प्रमाणमिति वस्तुस्थितिः॥

भ्रम-प्रमाविवेको विषयबाधाबाधाभ्याम्।

वह्निमान् इत्यादावन्यत्राबाधे धूमभ्रमेणापि प्रमात्मकानुमितिरनुभवसिद्धैव, इति बाधितेन प्रमाणेनाबाधितज्ञानम्, प्रमा वा न भवतीति न युक्तम्। प्रमाणबाध्यत्व-सत्यत्वयोर्न स्वरूपतः प्रमाणबाध्यत्व-सत्यत्वे प्रयोजके, किन्तु विषयबाधाबाधावेव, इति मिथ्यात्वेऽपि प्रमाणस्य

प्रत्यक्षस्यानुमानस्य, आगमस्य वा तत्त्वावेदकत्वं न विषयाबाधे व्याहतम्, इति प्रत्यक्षेणागमविरुद्धेन तत्त्वावेदनं न युक्तम्, इति न बन्धमिथ्यात्वं प्रत्यक्षविरुद्धम्, येन तस्य निषेधः स्यात्। सर्वथा तु कर्तृत्वादीनामात्मनि कल्पितत्वाद् अहं कर्तेत्यादिज्ञानस्य भ्रमात्मकत्वाद् प्रत्यक्षेणात्मनः सत्यकर्तृत्वादिवेदनं न युक्तम्; अन्यथा—अहं गौरः, अहं स्थूल इत्यादिप्रत्यक्षं भ्रमात्मकं कथं शरीरात्मत्वे न प्रमाणम्?

कर्तृत्वाध्यासस्य सम्प्रतिपत्तिपरीक्षा।

तत्राहं कर्तेत्यादिप्रत्यक्षं द्वैतमतेऽपि यद्यपि भ्रम एव। इयान् विशेषः—यत् तत्र पराधीनकर्तृत्वस्य परायत्तस्याऽऽत्मीयत्वानुसन्धानं भ्रमः, न तु तत्कर्तृत्वस्य स्वरूपतोऽन्तःकरणतादात्म्याऽध्यासद्वाराऽध्यासेन। तत्तु पराधीनं जीवस्य सत्यमेव, इति बन्धस्य मिथ्यात्वं स्वरूपतो न युक्तम्; न केवलं कर्तृत्वादिमात्रम्, किन्तु बुद्धीन्द्रिय—सर्वशरीरादिधर्मलक्षणमात्मन्यारोपितम्। तदुक्तं तद्भाष्ये "भ्रमादात्मकत्वाद् बन्धस्ये" ति। तथाहि—

आत्मनि कर्तृत्वाध्यासस्य द्वैतवादरीत्योपपादनम्।

किन्निबन्धनो बन्धमिथ्यात्वनिरासे निर्बन्धः? सत्यम्; तथाप्यस्ति दर्शनभेदः। एवं खल्वध्यात्मविदां दर्शनम्—क्रियाज्ञाने कारकान्तराप्रयोज्यत्वरूपं कर्तृत्वम्, भोक्तृत्वं परमेश्वरायत्तमात्मनि स्वतो विद्यत एव; क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्य वक्ष्यमाणत्वात्, तस्यापरायत्तत्वावभासोऽविद्यानिमित्तको भ्रमः। अविद्यादिकं च स्वरूपेण, आत्मसम्बन्धित्वेन च सदेव। एवं बुद्धीन्द्रिय-शरीर-विषयाः स्वरूपेण सन्त एवेश्वरवशा अप्यविद्यादिवशादात्मीयतयाऽध्यस्यन्ते। परायत्तात्मीयता त्वस्त्येव। अतश्चात्मनो विविक्तानपि विस्पष्टतयाऽनुपलभमानस्तद्धर्मान् दुःखादीन् सत्यानसत्यानेवात्मीयान् पश्यन् तत्कृतनीचोच्चभावलक्षणे विकृती सत्ये एव प्रतिपद्यते। ततो राग-द्वेषाभ्यां प्रयुक्तस्तद्विनिवृत्तये यत् करोति, तदप्येतादृगेवातनोति, इत्यनेकयोनिषु बम्भ्रमीति, न काप्यात्यन्तिकं तदुपशमं लभते विना परमात्माराधनात्—इति॥

कर्तृत्वादीनामारोपितानामेवात्मनि भानम्

इत्यद्वैतदृष्ट्या देहात्मादिज्ञानस्य भ्रमत्वोपपादनम् ।

इदमेवात्रालोचनीयम्—यदन्यस्यान्यथाज्ञानं भ्रमः, तथाऽन्यस्यान्यथा सम्यग् ज्ञानं बाधः, इत्यसत्ख्यातिवादिनां परेषां मते भ्रमे भासमानं शरीरादिकं तद्धर्मो वा कथं सदिति ? तत्र यद्यन्यथाख्यातिः, तर्हि अन्यत्र सतः शरीरादेः संसर्गाध्यासमात्रम्, इति स्वरूपतः सतां शरीरेन्द्रियादिलक्षणानां धर्मिणाम्, तद्धर्माणां च कथमात्मनि भ्रमः स्यात् ? तत्र चात्मनो भ्रमे भासमानं शरीरादिकमत्यन्तविप्रकृष्टं तदसम्बद्धं च शरीरमस्तीति स्वीकर्तव्यम्, अन्यथा त्वन्यथाख्यातिस्तत्र, इति तेषां परायत्तानामन्यत्र विद्यमानानामात्मीयतायाः, तस्या अपि परायत्ततायाश्च स्वीकारे परायत्तशरीरस्यान्यत्र सत्तास्वीकारे च रजतेच्छयेदंङ्काराभिमुखप्रवृत्तिवद् आत्माभिमुखं शरीरादिव्यवहारार्थं प्रवृत्तिर्नोपपद्येत ॥

भ्रमस्थलेऽसत्ख्यातिनिरासेनानिर्वचनीयख्यातिसमर्थनम् ।

न चैवं कुत्रापि दृश्यते, इति यथाऽत्र पराधीनं शरीरादि प्रधानम्, भ्रमे चासत् शरीरम्, आत्मनोऽन्यथा ज्ञानं यावन्मुक्ति, अनन्तरं त्वन्यथा सम्यग् ज्ञानमिति कल्पनायां भाविबाधदृष्टयैव भ्रमव्यावहरः, एवं शुक्तितत्त्वसाक्षात्कारानन्तरमप्यन्यत्र प्रधानस्य रजतस्य सत्त्वम्, मुक्त्यनन्तरमप्यन्यत्र परायत्तस्वरूपैतच्छरीरादिसत्त्वमात्मासम्बद्धतयेत्यादिकं बहु सर्वप्रमाणविरुद्धं कल्पनीयम् । इदं त्वसत्ख्यातौ, अन्यथाख्यातौ च समानम् । अनिर्वचनीयख्यातौ तु तदेव शरीरं कारणात्मना, कार्यात्मना च वर्तते । पूर्वदृष्टसजातीयत्वमात्रस्य तत्रापेक्षणात्तु न शरीरान्तरस्य कल्पना । प्रातिभासिके तु पूर्वदृष्टतादात्म्यस्याप्यध्यासः, तत्सदृश्यस्य वा रजतत्वविशिष्टस्येति त्वन्यदेतत् । न केवलमिदम्, भ्रमस्थलेऽसत्ख्यातौ, अन्यथाख्यातौ च भ्रमात् पूर्वं पृथक् स्वस्वरूपतोऽधिष्ठानज्ञानमारोप्यतादात्म्याविषयकं प्रमात्मकं सर्वत्र प्रत्यक्षम्, न तु भ्रमावसरे यथा भानम्, तथैव । न चात्र शरीरेन्द्रियादिसंसारासंस्पर्शितयाऽत्मस्वरूपं कस्यापि कदाप्याऽऽबाधमनुभवगोचरः । प्रवाहानादित्वे चोक्तरूपस्य भ्रमस्यैकमेव किं शरीरं सर्वेषामामुक्ति,उत भिन्नभिन्नम् । आद्ये जन्मभेद-शरीरभेदादिभेदानुभवविरोधः । शरीरभेदे च प्रधानमपि शरीरं भिन्नभिन्नमेव स्यात् । तच्च पूर्वशरीराधिष्ठानात्मस्वरूपस्यान्यथासम्यग्ज्ञानेनाबाधे न तु युज्यते । अयमेव न्यायो बाल्य-यौवनादिभेदेन शरीरभेदेऽपि, इति प्रकृतशरीरबाधार्थमस्मिन्नेव जन्मन्यात्मस्वरूपस्य

यथावत् बाल्यावयवस्य परिवर्तने, किं बहुना? प्रतिदिनम्, प्रतिरात्रि, प्रतिसप्ताहादि च प्रधानशरीरसदृशशरीरस्यैवासतो भानमित्यापत्त्या, असतश्चार्थक्रियाकारित्वानुपपत्त्या सर्वो व्यवहारो विलुप्येत ॥

परस्पराध्यासोऽनिर्वचनीयख्यातावेव नासत्ख्यातौ ।

एवं प्रवाहत एकस्यात्मन एकप्रधानशरीरसदृशशरीरस्यैवासतो भाने 'अहं स्थूलो गौरः पश्यामि शृणोमी'त्यादावधिष्ठानं किं गौरः, आहो अहम्। आद्येऽहमर्थासत्त्वम्, आत्मान्तरस्य प्रधानस्य स्वीकारश्चापद्येत, द्वितीये तु कृश-स्थूलादिरूपेणैकस्यैव बाल्याद्यवस्थाभेदेन, रुग्णारुग्णाद्यवस्थाभेदेन, सदृश-प्रधानशरीरभेदेन वा शरीरात्मताभ्रमस्य बाधापत्तिश्च दुष्परिहारा। तत्तज्जन्मान्तरकृतकर्मायत्तत्वकथा तु दूरे ॥

किंच भ्रमज्ञानेऽपेक्षितमधिष्ठानाज्ञानं तस्य रजतभिन्नस्यारजतात्मतयाऽज्ञानमिवाऽऽत्मनोऽशरीरात्मतयाऽज्ञानमेवेति वक्तव्यम्। तत्राधिष्ठानस्यात्मनः शरीरादिविविक्ततया न भानम्, किन्तु तस्य तथा विस्पष्टमज्ञानमिति परे मन्यन्ते ॥

तत्र च किं परस्परं विस्पष्टमज्ञानम्, उताऽऽरोप्यसदृशप्रधानविविक्ततामात्रेणात्मन एवाज्ञानम्। आद्ये परस्परसंसर्गाध्यासः। अन्त्ये तु शरीरादिधर्मिकात्मप्रतियोगिकभेदस्य यदि स्पष्टमविवेकः, तर्हि तद्धर्मिकात्मत्वात्मधर्मिकशरीरतद्धर्मतत्संसर्गाणामध्यासः स्यात् ॥

तत्र चानात्मनि न कस्याप्यात्मत्वभ्रमः, किन्त्वात्मन्येवानात्माध्यासः स्यात्, इत्यगत्याऽनात्मनि स्वरूपत आत्मनोऽनध्यास इत्यवश्यमूरीकर्तव्यम्, इति तस्य सन्निकृष्टत्वात् शरीरादिना संसर्गाध्यासमात्रमिति स्वीकर्तव्यम्। सर्वथात्वध्यस्यमानस्यासतोऽनाद्यध्यासे नैसर्गिके पूर्वपूर्वभ्रमविषयसदृशप्रधानसत्त्वमेव भ्रमपरम्परायां निमित्तम्, इति पूर्वपूर्वभ्रमेणैवोत्तरोत्तरभ्रम इति स्वीकर्तव्यम्। अध्यस्यमानस्य, तज्ज्ञानस्य च तत्तद्विषयतूल-मूलाविद्याकार्यत्वेनानिर्वचनीयत्वे परं विप्रतिपत्तिः। तच्चारोप्यमात्रविषये, नाधिष्ठाने। तत्र चाधिष्ठानविषयमेवाज्ञानमारोप्यात्मना परिणमते, नारोप्याज्ञानमधिष्ठानात्मना। विनैवाविद्यापरिणामत्वमज्ञानमात्रेण तथा भाति वेत्यत्रापि विप्रतिपत्तिः ॥

परस्पराध्यासेऽप्यधिष्ठानस्य न स्वरूपाध्यासः,

किन्तु तत्संसर्गमात्रस्याध्यासः, इति नाधिष्ठानं मिथ्या ।

तत्र चासत्ख्यातौ भ्रमेण भ्रमो नोरीक्रियते, न वा संभवति; पूर्वपूर्वभ्रमविषयस्याप्यसत्त्वाविशेषेण प्रधानस्यासंभवात्, अनिर्वचनीयवादे त्वारोप्यसदृशस्य पूर्वदर्शनमेव कारणम्, न तस्य प्रमात्वम्, ततोऽप्यधिकसत्ताकत्वं वा पूर्वज्ञानविषयस्य। तत्रापि सन्निकृष्टस्थले नानिर्वचनीयख्यातिः, न वाऽधिष्ठानस्य स्वरूपतोऽध्यासः । सर्वमिदमुपपादयितुमेवाध्यासभाष्यं भगवत्पादानाम्—"युष्मदस्मत्प्रत्ययगोचरयोर्विषय-विषयिणोरि"ति ॥

अत्र हि परस्परविलक्षणयोरविद्याया अघटितघटनापटीयस्त्वाद् विनापि सादृश्यं भ्रमो मिथ्याऽज्ञानवशादिति "मिथ्याज्ञाननिमित्तः" इतिपदेन सूच्यते, एवमध्यासनिबन्धनोऽप्यध्यासः—"अध्यस्याध्यासः" इति पदाभ्यामिति, 'सत्यानृते मिथुनीकृत्ये'ति सत्यपदप्रयोगादधिष्ठानस्य न स्वरूपतोऽध्यास आरोप्य-तद्धर्म-तत्संसर्गाणामिवेति ज्ञाप्यते। "मिथुनीकृत्ये"ति च्विप्रत्ययेन संसर्गांशमात्रस्याधिष्ठानस्यारोप्येऽध्यास इति सूच्यते, इति परस्पराध्यासेऽपि नाधिष्ठानस्यारोप्यवदसत्त्वम्, अनिर्वचनीयत्वम्, सदसद्विलक्षणत्वं वा ॥

इदमेवाभिप्रेत्याद्वैतिनो वदन्ति—शरीरेन्द्रियान्तःकरण-तद्धर्म-तत्संसर्गाणां स्वरूपतोऽध्यासः, अधिष्ठानस्य त्वारोप्ये संसर्गाध्यासमात्रम्, न स्वरूपतोऽध्यास इति ॥

अत्र न केवलं कर्तृत्वमात्रस्य, किन्तु तदाश्रयस्याहमर्थस्यापि स्वरूपतोऽभाव इति प्रतीयते। तेन च कर्ताऽहमर्थोऽप्यहमर्थरूपेणानिर्वचनीय एव, परंतु तदनिर्वचनीयत्वमहंकाररूपोपाध्यनिर्वचनीयत्वमात्रेणौपाधिकमेव, निर्गलिताहंकारस्वरूपमात्रेण त्वधिष्ठानस्वरूपमात्रं न कर्तृ, न वा मिथ्येतिफलति ॥

अहं कर्तेत्यनुभवस्यानिर्वचनायाहंकारादिविषयकत्वम् ।

अयं भावः—अहं कर्तेति प्रत्यक्षमहमर्थगतकर्तृत्वमेव परापेक्षं गोचरयतीति "यथाच तक्षोभयथा" इति सूत्रभाष्ये व्यक्तम्। तच्च कर्तृत्वमहमर्थस्य धर्मिणोऽपि मिथ्यात्वाद् मिथ्येत्यद्वैतसिद्धान्तः। तत्र कर्तृत्वमधिष्ठानेऽन्तःकरणधर्माध्यासेन, अन्तःकरणे च चिन्मात्रधर्माध्यासेन च; धर्मिणोरिव धर्मयोरपि परस्पराध्यासस्याध्यासभाष्येण साधनात्। न चाहमर्थ

आत्मा मुख्यो नाम, किन्तु मिथ्या, परं त्वौपाधिकेन रूपेण। अनेन न्यायेन मुख्यात्मनः संविन्मात्रस्य कर्तृत्वमपि मिथ्येत्येवाद्वैतराद्धान्तः। तत्रान्तः-करणस्य, तद्धर्मस्य च पूर्वानुभवजन्यसंस्कारमात्रं कारणतयाऽपेक्ष्यते, न तु तस्याधिकसत्ताकत्वम्, प्रमेयत्वं वा ॥

अध्यासपूर्वकोऽध्यासो न विरुध्यते।

वस्तुतस्तु—प्रातिभासिकभ्रम एवायं नियमः, व्यावहारिकस्यान्तः-करणादेस्तस्य तस्य कारणात्मनाऽवस्थितस्य जागराद्यवस्थायामिव सृष्टि-कालेऽपि तस्यैव भानात्। न चाविद्याऽविद्यान्तरम्, अन्तःकरणं वाऽन्तःकरणान्तरं तस्याधिकसत्ताकमपेक्षते। परमतेऽपि परमात्मीयस्यैव कर्तृत्वस्य जीवेऽध्यास आत्मीयत्वेन, परं तु तद् न तस्य स्वयंकर्तृत्वेन; जीवे तस्य कर्तृत्वस्याद्वैतमत इवासंभवात्। मतद्वयेऽपि परमात्मप्रयोजकत्वा-ननुसन्धानमात्रम्, न तु स्वीयस्वसमानसत्ताककर्तृत्वाननुसन्धानमपि ॥

कर्तृत्वाद्यध्यासस्य व्यावहारिकत्वव्यवस्था।

तत्र कर्तृत्वादेरेकेनापि रूपेणाध्यासेऽपि सत्यत्वमिति न व्याहतम्; अध्यस्तत्वस्यैव मिथ्यात्वरूपत्वात्। न चात्र परमत इवासत्ख्यातिः; अभिनवान्यथाख्यातिर्वा संभवतीति पूर्वमेवोक्तम्; आत्मनोऽकर्तृत्वादिक-मखण्डाकारवृत्त्याऽज्ञाननिवृत्त्यधीनान्तःकरणबाधतन्निबन्धनबाध्यत्वेन। यदा न प्रमाण-प्रमेयव्यवहारा निवर्तन्ते, तावत्पर्यन्तं व्यावहारिकसत्य-त्वं तु सर्वेषां मिथ्यापदार्थानामद्वैतिनोऽपि स्वीकुर्वन्ति ॥

किं बहुना? कर्तृत्वाद्यध्यासकालिकाः, तन्निबन्धनाश्च सर्वे प्रमाण-प्रमेय-व्यवहारा लौकिकाः, वैदिकाश्च, सर्वाणि च शास्त्राणि विधि-प्रतिषेध-मोक्षपराणीति हि भगवत्पादा वदन्ति ॥

अधिष्ठानस्येवारोप्यस्यापि न संसर्गमात्राध्यासः।

अत्र शरीरेन्द्रियादिष्वहंममाभिमानस्तेषामात्मन्यारोपेणेति परेऽपि वदन्ति। आरोपश्च भ्रमनिमित्तम्। स तु भासमानस्याऽऽविद्यकत्वं विना नोपपद्यते। न चात्मनोऽधिष्ठानस्येव शरीरादिभिः, शरीरादेरारोप्यस्या-त्मनि तादात्म्यमात्राध्यासेन निर्वाहः; आरोप्यस्यासत्यस्य सत्येनाधिष्ठानेन तादात्म्यमात्रासंभवात्। आरोप्यं ह्यधिष्ठान आरोपितम्, तेन तादात्म्य-मप्यारोपितं विना न प्रकारतया भानमर्हति; अविद्यापरिणामत्वात् सर्वेषा-

मारोप्याणामविद्यावत्सदसद्विलक्षणत्वस्यैव युक्तत्वात्, स्वरूपतस्तादात्म्यं हि विशेषण-विशेष्यभावेन, अभेदे वा भवति। न च शरीरेन्द्रियादिनाऽऽत्मनः प्रथमं सामानाधिकरण्यम्, न वा द्वितीयम्, इति बाधायां सामानाधिकरण्यमेव तत्र शरणम् ॥

आरोपितानां मिथ्यात्वमेव, नाधिष्ठानस्यैव सत्यत्वम्।

तच्च मिथ्यात्वं विना नोपपद्यते। आत्मनः शरीरेन्द्रियान्तःकरणादिभिस्तादात्म्यं बाधायां सामानाधिकरण्यमेव; आत्मतत्त्वसाक्षात्कारनिवर्त्यत्वात्तद्विषयाज्ञान-तत्प्रयुक्तानाम् ॥

न चैवमन्तःकरणतादात्म्यमप्यात्मनस्तत्र तस्यारोपेण; आरोप्यस्याज्ञानकार्यस्योत्पत्तिदशायामेव भासमानस्याभानापादकाज्ञानाविषयत्वेनानधिष्ठानत्वात्। अत एव तत्र तादात्म्यमात्रारोपः। सोऽपि न हि दृष्टेऽनुपपन्नं नामेति नयेन ॥

अधिष्ठानस्य स्वरूपतोऽध्यासस्य भगवत्पादासम्मतत्वम्।

एतेन—आरोपितत्वमात्रेण न मिथ्यात्वम्, आत्मनोऽप्यन्तःकरणादिष्वारोपितत्वेन मिथ्यात्वप्रसङ्गात्, अंगीकृतश्चान्तःकरणादिषु परेणाध्यास इति—प्रत्युक्तम्; अनुक्तोपालम्भनत्वात्, अपसिद्धान्ताच्च। व्यक्तं चैतत्तत्र तत्राद्वैतनिबन्धेषु सांप्रदायिकेषु ॥

एतेन—तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यतीति भाष्यमपि—व्याख्यातम्; आत्मसंसर्गाध्यासमात्रपरत्वात्तद्भाष्यस्य। यथा च चैतन्यस्यापि न स्वरूपाध्यासः, किन्तु संसर्गाध्यासमात्रमिति न समानम्, तथाऽनुपदमेवोक्तम् ॥

आरोपो ह्यज्ञानविषयेऽज्ञानकार्यस्य भवति। तच्चाज्ञानमिव सदसद्विलक्षणम्, न सत्, न वाऽसत्। न च शरीरेन्द्रियादयोऽपि सन्ति, सत्त्वे कथं न तेषां तादात्म्यमात्रारोपः? अन्यथाख्यात्यख्यात्योरयोगात्। परस्पराध्यासेऽप्यधिष्ठानाज्ञानमेव कारणम्, न त्वारोप्याज्ञानमपि; असंभवादित्यादि व्यक्तमन्यत्र ॥

अबाधितस्य नारोप्यत्वम्।

वस्तुतस्तु—यद् बाधितम्, तदेवारोप्यम्, न त्वबाधितम्, इति चिदा-

त्मनोऽबाधितत्वाद् न तदारोप्यम्, किन्तु शरीरेन्द्रियादिकमेव बाधितम्, इति तस्यैवारोपः; इदं रजतमित्यादौ तथैव दर्शनात्, अन्यथा परमते तत्रापि रजतस्येव शुक्तेरप्यसत्त्वमापद्येत। असतोऽपि संसर्गारोपमात्रेण भ्रमनिर्वाहात्, इति तत्रापि रजतस्येव शुक्तेरपि बाधः स्यात्॥

न हि बाधकज्ञानविषयोऽपि बाध्यं नाम। "तत्र को मोहः शोक एकत्वमनुपश्यतः" इति प्रत्यग्ब्रह्मैक्यज्ञानस्य जीवत्वेश्वरत्वोपलक्षितसंविन्मात्राखण्डसाक्षात्कारस्यैवाज्ञाननिवर्तकत्वप्रतिपादनात्, संविन्मात्रमबाधितं बाधकज्ञानविषयश्च नारोप्यतामर्हति। विवेचयिष्यते चेदं संविन्मात्रज्ञानस्यैवाज्ञान-तत्प्रयुक्तबाधकत्वमिति विचारावसरे। अहमर्थनिष्ठं कर्तृत्वादिकं ह्यौपाधिकमनुपहिते चैतन्य आरोप्यते, तेन संविन्मात्र एवाध्यस्तत्वव्यपदेशः, तत्रैव तादात्म्यारोपश्च, न त्वहमर्थमात्मानमादाय कर्तृत्वादेरारोपितत्वव्यपदेशः। इदमेवाभिप्रेत्य—अहंकारनिष्ठं कर्तृत्वादिकं तदुपरागादात्मनि चकास्तीति संप्रदायः। अहंकारशब्दार्थो ह्यत्र—अहमर्थ आत्मानात्मतादात्म्यवान्, औपाधिको मिथ्यात्मैव, न तु मुख्यात्मेति बहुशो निवेदितम्॥

अहमर्थस्य न मुख्यात्मत्वम्।

एतेन—अहंप्रत्ययस्यात्मविषयत्वादिति—प्रत्युक्तम्, न चाहमर्थो मुख्यात्मेति व्यक्तमद्वैतसिद्ध्यादावहमर्थानात्मत्वप्रकरणे। अधिकं ततो लघुचन्द्रिकातः, अद्वैततत्त्वशुद्ध्यादितश्चावसेयम्॥

न चाहमर्थ एवात्मा; सुषुप्तावहंरूपेण तत्प्रतीत्यभावात्, केवलाविद्योपहितरूपेणैव तद्भानात्, सुखमहमस्वाप्समिति जागरे प्रत्यभिज्ञानं त्वविद्योपहितसंविन्मात्रांशे। अहंकाररूपोपाध्यंशे त्वनुभव एव। तदुक्तम्—

"न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः।"

इति। तत्र हि स्वापसुखस्य स्वरूपांशस्याविद्यावृत्त्या प्रकाशितस्य स्मरणम्, अहंकारांशमात्रे तु न स्मरणम्, किन्त्वनुभव इति तदर्थः। न च तदा कोऽप्यहमित्यात्मानं स्पष्टमनुभवति; अन्यथा जागरदशाऽविशेषप्रसंगात्। न चेष्टापत्तिः; अनुभवविरोधात्॥

अहमर्थमुख्यानात्मत्वे श्रुतिप्रमाणोपन्यासः।

वस्तुतस्तु—कारणशरीराविद्यात्मनोपहित एवात्मा सूक्ष्मरूपेणाहमात्मना सुषुप्तावविद्यावृत्त्या प्रकाशते। तत एव जागरावस्थायां तस्यापि स्मरणमिति न विरुद्धम्। अत एव सुषुप्तावहमात्मना नात्मनः स्पष्टं प्रतीतिः। "अथातोऽ-

हंकारादेशः" इत्युपहितमात्मानमुपदिश्योपाध्यविवक्षया "अथात आत्मादेश" इत्युपदेशोऽप्यहमर्थातिरिक्तमात्मानं गमयति ॥

अहं ब्रह्मेति सानानधिकरण्यस्य मुक्तावहं-
कारमात्रनाशेनाभेदादावुपपत्तिः ।

न चात्राहंशब्दो भूतविकारोऽहंकारः; तस्याहंप्रतीतिविषयत्वाभावेन "अहमेव पुरस्तादहमेव पश्चादि"त्यहमात्मना सर्वगतत्ववर्णनायोगात्। अहमर्थस्य सर्वगतत्वं तु जीवाणुतावादे नोपपद्यते। अद्वैतवादे त्वहमर्थस्यात्मत्वमहंकारविशिष्टरूपेण यद्यपि गौणम्; तथापि तस्यैव स्वरूपमात्रेण ब्रह्मत्वात् सर्वगतत्वमुपाध्यविवक्षया युज्यते, इति तस्यैव स्पष्टीकरणम् "अथात आत्मादेशः" इति ॥

एवमात्मोपदेशेऽप्युपाधिविगममपेक्ष्यैव जीवस्य सर्वगतत्वम्, ब्रह्मैक्यम्, जीवत्वेश्वरत्वोपलक्षितस्वरूपत्वम्, तत्त्वमसिवाक्यार्थत्वम्, "आत्मा वा अरे द्रष्टव्यः" इत्यादिवाक्यविषयत्वं चेति हि प्रकरणार्थः ॥

अत्र "अथातोऽहंकारादेशः" इत्यनेनोपाधिद्वाराऽहमर्थ आत्मैव विवक्षितः; आत्मप्रकरणत्वादस्य। अहं कर्तेत्यादावपि कर्तृत्वमहंकारगतमेवात्मनि। तस्य च दुःखादेरिवाऽऽरोप एवेति द्वैतिनोऽपि स्वीकुर्वन्ति ॥

"अहं ब्रह्मास्मी"त्यादावहंशब्दो वाच्यविधयोपहितम्, लक्ष्यविधया संविन्मात्रं च बोधयति। अत एवाभेदे सामानाधिकरण्यम्। नैष्कर्म्यसिद्धिस्तु तत्रापि बाधायां सामानाधिकरण्यमेवेति विशदयति, परं त्वहंकारांशमात्रमादाय, न तु स्वरूपांशमिति तत्रैव व्यक्तम्, इत्यौपाधिकं बाधायां सामानाधिकरण्यमहमर्थेऽप्यबाधम्। मुक्तावहमर्थविनाशोऽप्यद्वैतसिद्धान्त औपाधिकाहमर्थाभिप्रायेणैव, इत्यहंकारमात्रस्यैव मुक्तौ विनाशः, न तु स्वरूपस्य ॥

न चेदं सामानाधिकरण्यं द्वैतमत उपपद्यते। विना गौणीं यत्र न निर्वाहः, तत्रैव गौणी; अन्यथा सर्वत्र लक्षणास्थलेऽपि गौण्यैव निर्वाहाद् लक्षणाया लोपापत्तिः। परम्परासम्बन्धे गौणी, लक्षणा तु साक्षात्संबन्धे। अत एव गौण्या एव लक्षणायामन्तर्भावः; परम्परासम्बन्धेन निर्वाहादिति केचित् ॥

"मामेव ये प्रपद्यन्ते" इति मांपदार्थस्तु श्रोतृदृष्ट्या पुरोऽवस्थितमुपहितं नाभिधत्ते ॥

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।"

इति प्रपदनीयस्य मांशब्दार्थस्य तच्छब्देन प्रक्रमात् । अत एवोक्तम्—"अथातोऽहंकारादेशः इत्यहंरूपेण स्थूलारुन्धतीन्यायेन प्रथममुपदिष्टं प्रक्रान्तमात्मस्वरूपमहमंशपरित्यागेन" "अथात आत्मादेशः" इति, इति तत्पदार्थब्रह्माभिन्नं स्वरूपमेवाहमर्थस्य पारमार्थिकं रूपम् ॥

तत्र यथा व्यष्ट्यहंकारोपहित आत्मा जीव उपाधिपरित्यागेन तत्पदलक्ष्यार्थाभिन्नः, एवमेव समष्ट्यहंकारोपहित ईश्वरोऽपि, इति तत्र व्यष्टिसमष्ट्योरभेदं स्वरूपांशमादायेश्वरेऽप्यहंशब्दस्तदाकारमायापरिणाममादाय वा सूक्ष्मावस्थान्तःकरणोपहितरूपेण वा; अन्यथाऽहमर्थस्य मुख्यजीवत्वे द्वैतिनां कथमीश्वरेऽहंशब्दप्रयोगः ?

अस्मच्छब्दार्थोऽहमर्थः, अहङ्कारशब्दार्थश्चान्यः ।

तत्र दकारान्तास्मच्छब्दो यद्यप्यहंपदम् , अहंकारशब्दस्तु महत्तत्वकार्यमहंकारः । तथापि—"अथातोऽहंकारादेशः" इत्युक्तमहंपदं दकारान्तास्मच्छब्दमात्रमर्थविशेषविवक्षयाऽहंकारशब्देन प्रस्तूयते । कारणं तु तत्र दकारान्तास्मच्छब्दवाच्योऽहमर्थो वस्तुगत्या नात्मा, किन्तु मकारान्ताहंशब्दार्थसम्बन्धेनैव । सर्वत्र चेतनेषु तत्तदहंकारोपहितरूपेणैवात्मा व्यवहारकाले प्रतीयते ॥

अहमर्थात्मनानात्वाभावः ।

तत्राहमर्थानां न नानात्वम्; आत्मस्वरूपमात्राभिप्रायेणाहमर्थस्य द्वित्वम् , बहुत्वं वाऽभिप्रेत्य तदादिपदवत्—'आवाम्' 'वयमि'त्यप्रयोगात् , न हि सः, सः; सः, सः स; इति वा तच्छब्दार्थव्यक्तिभेदमादाय यथा 'तौ ते' इति तत्पदस्य युष्मच्छब्दार्थद्वित्वबहुत्वे अभिप्रेत्य, त्वम् , त्वमिति, त्वम् , त्वम् , त्वमिति युवाम् , यूयमिति वा प्रयोगः, तदर्थस्यानेकत्वात्, तथा अहम् , अहम् , इति अहम् अहम् , अहमित्यहमर्थभेदमाश्रित्य आवाम् , वयमिति, तच्छब्दार्थ-युष्मच्छब्दार्थाननुषङ्गेन प्रयोगो दृश्यते । वादिराजोऽपि विश्वसौरभ इमामाशंकामुक्षिप्य तामाशंकामपरिहार्यैवानुमानादित एवात्मभेदं साधयति । इदं चात्मनो न द्वित्वम् , न वा बहुत्वम् -किन्त्वैक्यमेव वस्तुगत्या, अहंकारोपाधानेनैव तु तद्भेदः । स्वरूपतोऽभेदे सत्यपि नाहंरूपेण भेदानुभव

किन्तु तस्य प्रत्यक्षतच्छब्दयुष्मच्छब्दार्थोपाधिभेदेनैव सः, विगतोपाधिकमात्मस्वरूपमात्रमभिप्रेत्य तु सर्वेषामात्मनामैक्यमेव। अत एवोक्तम्—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥"

इति। इयमेव नीतिर्जीवेश्वरयोरपि। पूर्वोक्तविधया व्यष्टि-समष्टिविधयाऽहंपदव्यपदेशोऽपि जीवेश्वरयोरहंरूपेण भेदमाश्रित्य। तत एव—नावामित्येकेनात्मभेदमादाय प्रयोगः। अत एवाहं ब्रह्मास्मीति, प्रयोगश्च, न तु अहमहमस्मीति। सामानाधिकरण्यं हि पदानां बाधितमबाधितं वार्थमादाय। प्रथमं लोकप्रसिद्धवाचकशब्देनैव। न चाहंशब्दस्य जीव इवेश्वरोऽप्यर्थः, 'मां मां विद्धि इति नोपदेशः, किन्तु क्षेत्रज्ञं मां विद्धीति। इति द्विवचनबहुवचनशब्देन तदादिशब्दानामिवाहंपदस्याप्रयोगात्, अहंकारभेदेऽप्यात्माभेदाद् विभाजकाहंकारविगलितस्वरूपमेव मुख्यमात्मस्वरूपम्, औपाधिकं तूपाधिमिथ्यात्वाद् मिथ्यात्मेति विवेक उपपद्यते। अत एव—

संविन्मात्रस्यैकस्यैवात्मत्वम्, नाहमर्थस्यौपाधिकभेदस्य।
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्॥

इत्यत्र शरीरभेदेनात्मभेदः, संविन्मात्ररूपेण तु सर्वेषां जीवानां जीवेश्वरयोश्चैक्यम्। "न त्वेवाहमि"ति भगवतोऽप्यहंपदव्यवहार्यस्य दृष्टान्तविधया विवरणमिति हि द्वैतिनामपि विवरणम्। इदमेवाप्रेत्य योगवासिष्ठे निर्वाणप्रकरणेऽन्यत्र च गीताश्लोकानां शब्दतोऽर्थतश्च गीतोपदेशप्रकरणे "न त्वेवाहमि"तिश्लोकार्थानुवादः—

"संविदाकाशमेवाहं भवानपि जना अपि।
म्रियामहे नो कदाचित् कुतः संविद् विनश्यति॥

इति। अनेन हि ज्ञायते विगलिताहंकारसंविन्मात्रमेव मुख्य आत्मेति॥

संविन्मात्रमुक्तात्मन एवात्मत्वे प्रत्यक्षाविरोधः, श्रुत्यनुग्रहश्च।

वस्तुतस्तु—मुक्तात्मैव मुख्योऽहमर्थः, न तु जाग्रदाद्यवस्थात्रयवान् जीवः। तेन च सुषुप्तावप्यहमर्थस्य भानेऽपि "सुखमहमस्वाप्समि"ति जागरादौ तत्परामर्शेऽपि न क्षतिः॥

"अथातोऽहंकारादेशः" इति सौषुप्तावियोपहित-प्राज्ञसंपरिष्वक्त-व्या-

पकजीवात्माभिप्रायम्, "अथात आत्मादेशः" इति तु कारणत्वोपहितप्रत्यगभिन्ननिर्गलिताविद्याहङ्कारादिसर्वोपाधिरहितस्वरूपोपदेशः, इत्यहमर्थानात्मत्वे न कोऽपि प्रत्यक्षादिविरोधः ॥

अत एव—"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति प्रश्नोऽपि मुक्तात्मनो विगलितावस्थात्रयस्य सत्त्वासत्त्वविषय उपपद्यते। अयं हि प्रश्नो मुक्तात्मन एव। तत्र चावस्थात्रयातीतोऽपि मुक्तात्मा नावृतसंविन्मात्रः, य एव "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इत्यत्तुर्जगदुपादानाविद्योपहितस्याप्यधिष्ठानम्। तत्त्वमसिमहावाक्यार्थस्वरूपं चाहमात्मना मुक्तावप्रतीयमानोऽपि "अस्तीत्येवोपलब्धव्य;" इत्युत्तरमपीममर्थं ज्ञापयति। न चायं प्रश्नो मुक्तात्मनोऽपि नियमकेश्वरविषय इति यथावसरं वक्ष्यते ॥

एतेन—"अहं ब्रह्मास्मी"त्यहमुल्लेखेन प्रवृत्तमहावाक्यमपि–व्याख्यातम्; तत्त्वमसिवाक्यवद् लक्ष्यार्थाभिप्रायत्वात् तत्राहमादिप्रयोगस्य। अनावृतं हि चैतन्यमवाङ्मनसगोचरम्, न वाच्यविधया बोद्धुं शक्यते, किन्तु 'नेति नेति'वाक्यवदुपाधिसम्बन्धविगमेन लक्ष्यविधयैव ॥

अवाच्यस्यापि लक्ष्यत्वं प्रमेयत्वं च
सुषुप्त्यसंप्रज्ञातसमाध्योरिव।

तस्य प्रमेयत्वं लक्ष्यत्वे नानुपपन्नम्; केवललक्ष्यार्थानामपि प्रामाण्यात्। अवाच्यस्यालक्ष्यत्ववादस्तु यथावसरं निरसिष्यते। एतेन—सुषुप्तावहमवभासस्येष्टत्वात् सुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनाद् विस्पष्टस्मरणाभावस्याविषयजन्यत्वात् स्मर्यमाणस्य पूर्वानुभूतत्वाच्च सुप्तावहमर्थस्य मुख्यस्य भानमिति—परास्तम्; अहंकारस्यान्तःकरणोपाधिपरत्वे तस्य सुषुप्तौ लयात् सुषुप्तावहं प्रतीतिनिर्वाहासंभवात्। महत्तत्त्वकार्यस्याहंतत्त्वस्य तत्रोपाधितायां तु तत्राहमर्थत्वमप्यकिञ्चित्करम्। विगलिताहंकारात्मस्वरूपस्य त्वंपदलक्ष्यार्थस्य पूर्वानुभवस्त्वत्र पक्षेऽसंप्रज्ञातसमाधौ। इदमेवाभिप्रेत्य सिद्धान्तबिन्दौ "सुषुप्त्यसंप्रज्ञातसमाध्योः श्रुति-स्मृतिसिद्धत्वाच्चेति सुषुप्तेः पृथक् समाधेर्निर्देशः; विषयसम्बद्धतयैव प्रतीत्यनियमात् मुख्यसुखानुभवे बाधकाभावेन दुःखाभावविषयत्वकल्पनायोगादिति ॥

२३

अथातोऽहंकारादेश इत्यादेर्देवता-
गुणपरत्वमेवेति मतानुवादः ।

एतेन—"अथातोऽहंकारादेश" इति "सत्यं भवोग जिज्ञासे" इति च सत्यादिरूपभगवद्गुणजिज्ञासायां प्रवृत्तत्वात्, विज्ञानादीनामिव "यत्र नान्यत् पश्यती"-त्यादिना दृश्यत्वादेवाहंकारात्मनोरपि गुणत्वेनैवोपदेशः, सत्यादिगुणास्तस्या परदेवतायाः स्वरूपभूता एव ब्रह्मतर्के च—

"नामादि प्राणपर्यन्तो यो हि सत्यादिरूपवान् ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णवे ॥
सत्याद्या अहमात्मान्ता यद्गुणाः समुदीरिताः ।"
इति श्रीमदानन्दतीर्थभाष्यमपि—व्याख्यातम् ।

पूर्वोक्तब्रह्मतर्काशयनिरासः ।

अत्र हि सुखादीनामात्मत्वनिषेधेन सुखस्वरूपमात्रं निर्गुणमेव प्रतिपद्यते, न तु नामादीनां तद्गुणत्वोपदेशः; अन्यथा "भूय एव मां भगवन् ब्रवीतु" इति प्रश्नपरम्परा नोपपद्यते । न च परमात्मनोऽहंकारत्वमात्मत्वं च गुणः; तस्यानहंकारत्वात् । "अहमेव पश्चादि"त्यहंरूपेण सर्वगतत्वं तु तस्य नोपपद्यते । "आत्मानं विजानीही"त्यात्मानमधिकृत्य प्रश्न आत्मत्वधर्मोपदेशो वितथः । न च तत्र प्रकाराभावबोधनविधयाऽप्यहमादिरूपेण परमात्मस्वरूपोपदेशसिद्धान्तमत्र निरस्यन्ति ॥

भवतु तत्र या कापि कथा । "सैव सत्यादयः" इति सूत्रस्य विषयवाक्यान्तरमेव सर्वेष्वपरेषु भाष्येषु । भूमाधिकरणे प्राणशब्देन वायुर्वा विष्णुर्वेत्युपक्रमप्राबल्य-दौर्बल्याज्ञाननिमित्तसंशय-पूर्वोत्तरपक्षाणां धर्मिपरत्वमेवाश्रित्य, न तु गुणोपदेशः । "एष तु वा अतिवदती"त्यपि प्रसिद्धं ब्रह्मणः सत्यरूपमाम्नायते, इति नात्र गुणोपदेशः ॥

"भूमानं विजानीहि" इति परिप्रश्नोऽपि "भूमानमेव विजिज्ञासते" इति प्रस्तुतभूमपदाभिधेयविज्ञानसाधनोपदेशविषय एव, न तु गुणोपदेशः; अनन्तकल्याणगुणस्य गुणोदीर्णस्य चाल्पतरगुणोपदेशायोगात्, अहंकारस्य त्याज्यस्य तद्गुणत्वायोगात्, तत्सम्बन्धेन तस्यापि हेयत्वापातात् । तत्र निषेध्या दोषाः के ? वस्तुतस्तु तत्र—

"ये चैव सात्त्विका भावा राजसास्तामस श्च ये ॥
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥"

इति तामसादिधर्माणामप्यधिष्ठानस्य तस्य कथं निर्गुणत्वमध्यारोपापवादनयं विना ? तस्य सर्वाधिष्ठानपरत्वमन्तरा वा ? यथा चाहंकारस्य सर्वगतत्वमात्मनः सौषुप्तस्याहंकारसूक्ष्मावस्थसर्वगतमायोपहितरूपेण, तथा पूर्वमेवोक्तम् । इदं च सौषुप्तात्मस्वरूपद्वारा मुक्तात्मस्वरूपोपदेशार्थं स्थूलारुन्धतीन्यायेनेति पूर्वमेवोक्तम् ॥

यत्तु सर्वमिथ्यात्वे श्रुतेरपि मिथ्यात्वाद् न सत्यस्य ब्रह्मणोऽसिद्धिः— इति, तत्र वक्तव्यं सर्वं पूर्वमेवोक्तम् ॥

अर्थक्रियाकारित्वानुपपत्त्या-
प्रपञ्चमिथ्यात्वायोग इति शङ्का ॥

एतेन—

"मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ।
तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वया ॥
सता चेद् द्वैतसिद्धिः स्याद् न सिद्धं चान्यसाधनम् ।
साधकत्वं ततस्तेन साक्षिणा सिद्धिमिच्छता" ॥

इति—व्याख्यातम् ;

अयमत्राभिसन्धिः—"नेह नानास्ती"त्यादिवाक्यैः किं निश्चिताद्वैतो बोध्यते, उत तद्विपरीतः । नाद्यः; वैयर्थ्यात् । द्वितीये तु सत्यस्यैव साधकत्वमिति मन्यमानो यदीदं वाक्यं सकलमिथ्यात्वं प्रतिपादयेत्, तदा सकलान्तर्गतत्वात् स्वयमपि मिथ्या स्यात्, यथा शब्दोऽनित्य इति शब्दः नित्यः । यदि चैतद् वाक्यं मिथ्या स्यात्, न कस्याप्यर्थस्य साधकं स्यात् । कथं त्वभ्युपगममात्रेण स्वतर्कस्य स्वविरुद्धता प्रतिपाद्येत ?

वादिना हि श्रुतिबाधेनात्मातिरिक्तस्याखिलस्य मिथ्यात्वं प्रतिपद्य मिथ्याभूतस्यापि साधकत्वं वक्तव्यम्, इति श्रुतेस्सर्वमिथ्यात्वप्रतिपादकत्वेऽपि मिथ्याभूतस्यैव साधकत्वं प्रतीत्य तर्को निरसनीयः, तन्निरासे च सर्वमिथ्यात्वप्रतिपादकत्वमित्यन्योऽन्याश्रयः ॥

श्रुतेरपि मिथ्यात्वाद् मिथ्यात्ववादे
तस्या अप्यप्रामाण्यापत्तिः ।

अयं भावः—प्रमाणं ह्यर्थसाधकम् । तच्च यदि सत्, तेनैव सद्वितीयत्वादद्वैतविरोधः । न च सतोऽन्यत् मिथ्याभूतं कुत्रापि साधकं दृष्टम् । न हि मिथ्याभूतं प्रमासाधकम्, इति प्रमाणस्य प्रमाणत्वमेव हीयेत । प्रत्यक्षसिद्धं च सत्त्वं सर्वस्य न श्रुतिर्बाधयितुमर्हति; श्रुतिविरोधात् । प्रत्यक्षप्रामाण्यं तु प्रत्यक्षानपेक्षया श्रुतिप्राबल्ये स्यात् । नैवं संभवति । साधयिष्यते च प्रत्यक्षप्राबल्यम् ॥

स्वाप्नस्थले, रेखारोपितवर्णे, बिम्ब-प्रतिबिम्बभावस्थले च स्वाप्नस्य, रेखायाः, प्रतिबिम्बस्य च सत्यस्यैवार्थसाधकत्वम्, न तु स्वाप्नार्थस्य, वर्णानाम्, अन्यस्य च मिथ्याभूतस्य, तत्रार्थक्रियाकारित्वम् ॥

एतेन—दैर्घ्यादीनाम्, सवितृसुषिरस्य चार्थबोधकत्वादिसाधकत्वमपि–व्याख्यातम्; तत्रापि दैर्घ्यादेर्वर्णधर्मत्वस्यैव स्वीकारेण, विच्छेदस्यापि सत्यत्वस्वीकारेण चासत्यत्वाभावात् । अस्तु वा स्वाप्नादिस्थलेऽर्थसाधकत्वम्, सवितृसुषिरादौ च, तथापि तत्रापि सत्यस्य ज्ञानस्यैवार्थसाधकत्वम्, न त्वारोपितस्यार्थस्य—इति ॥

मिथ्यार्थस्यापि साधकत्वम्; सत्त्वस्य
साधकताऽनवच्छेदकत्वात् ।

अयमत्र सिद्धान्ताशयः—अर्थक्रियाकारित्वं हि विषयस्य, ज्ञानस्य वाऽसद्वैलक्षण्यप्रयुक्तमेव, न तु सत्त्वप्रयुक्तम्; सत्त्वस्य कारणतानवच्छेदकतायाः खण्डनकारेण व्यवस्थापनात्, अप्रयोजकत्वात्, सत्त्वासत्त्वयोः परस्परविरहतावादिनामप्यसत्त्वाभावस्यैव सत्त्वरूपत्वाद् असत्त्वाभावरूपस्यासद्वैलक्षण्यस्यैव साधकत्वस्य स्वीकरणीयत्वाच्च । अर्थक्रियाकारित्वमेव सत्त्वम्, सत्ताजातिमत्त्वं वा तदिति पक्षेऽप्यबाध्यत्वरूपसत्त्वासत्त्वौदासीन्येनैवार्थक्रियाकारित्वाद् ज्ञाननिवर्त्यत्वेऽप्यसद्वैलक्षण्येनैव मिथ्यात्वाविरोधिना धर्मेणार्थक्रियाकारित्वम् ॥

तत्र सविशेषं ब्रह्मासद्विलक्षणत्वधर्मवत्त्वादर्थक्रियाकारि, निर्धर्मकं तु तद्धर्मशून्यत्वात्, तद्धर्माभावत्वोपलक्षितब्रह्मस्वरूपत्वाद्वा तदभावेनासाध-

कम्। अतः प्रमाणस्य सतः साधकत्वम्, उत मिथ्याभूतस्येति विकल्पो न विकल्पसहः, उत्तिष्ठति वा। अत एव यावन्मिथ्यात्वनिर्णयम्, यावत्सत्यत्वनिर्णयं वा मिथ्याभूतस्यासाधकत्वकथा कथामात्रम्॥

मिथ्यात्वेऽपि श्रुतिप्रमाणता।

मिथ्याभूतस्यार्थक्रियाकारित्वायोगो यदि बाधानन्तरम्, तर्हि कामं सन्तुष्यताम्। पूर्वमर्थसाधकत्वं तु कथं सुवारम्। अस्ति च सर्वत्र स्वाप्नादिषु वर्णदैर्घ्यादिषु, रेखागवयादिषु, प्रतिबिम्बेऽन्यत्र च मिथ्यात्वेनानिश्चीयमानेऽप्यसद्वैलक्षण्यं संप्रतिपन्नम्, यावद्बाधं स्वतो ग्राह्यं प्रामाण्यं च। सति चैवं श्रुतेरपि मिथ्यात्वे बाधानन्तरं न तया सत्यब्रह्मसिद्धिः, ततः पूर्वं तु कुतस्तस्याः नार्थक्रियाकारित्वम्? तत्र विषयबाधादप्रामाण्यनिश्चयस्तु शुक्तिरूप्यादीनामिव विषयस्य यत्र बाधः, तत्र काममप्रामाण्यं स्यात्। ब्रह्म तु न बाध्यम्; इति तत्रांशेऽप्रामाण्यं तु न भाष्यतेऽपि। अतोऽसद्वैलक्षण्यमात्रेण संप्रतिपन्नेन सर्वनिर्वाहः॥

एतेन—सतोऽन्यद् मिथ्याभूतं साधनं न सिद्धम्, मिथ्याभूतस्य प्रमासाधनत्वं न भवतीति च—परास्तम्; असद्वैलक्षण्येन, सत्त्वासत्त्वौदासीन्येन वा सर्वस्य साधकत्वात्। अधिकं ब्रह्मसिद्धौ व्यक्तम्॥

वादि-प्रतिवादिसम्मतमिथ्यात्वविरोधिसत्त्वासिद्धिः।

इदमेवात्र पृच्छ्यते—किं सत्त्वं वादि-प्रतिवाद्युभयसंप्रतिपन्नमभिप्रेत्य? सत एव साधकत्वं परेणोपदिश्यते, किं सामान्यादिसत्तारूपम्, अर्थक्रियाकारित्वम्, अबाध्यत्वम्, अन्यद्वा। आद्ये तस्य मिथ्यात्वाविरोधित्वाद् न मिथ्याभूतस्यार्थक्रियाकारित्वनिरासोपयोगः। अर्थक्रियाकारिणः साधकत्वसमर्थनमप्यत एव; प्रकृतार्थसमर्थनानुपयोगित्वात्, अर्थक्रियाकारित्वस्य साधकत्वस्य चैकत्वेनात्माश्रयाच्च॥

अबाध्यत्वमपि किमबाध्यत्वधर्मः, उताबाध्यस्वरूपमात्रम्। तत्राद्ये प्रतिवादिभिः सर्वस्य ब्रह्मव्यतिरिक्तस्य मिथ्यात्वस्वीकाराद् न किमपि निदर्शनं वादि-प्रतिवादिसाधारणम्। निर्गुणं न तद्धर्मवत्, सगुणं तु पक्षकोटिनिक्षिप्तम्। सत्प्रतीतिविषयत्वं तु सत्तादात्म्यवत्त्वं मिथ्याभूतसाधरणम्। अबाध्यत्वं सत्स्वरूपमात्रं तु निर्विशेषं ब्रह्मैव। तत्तु न साधकम्। व्यावहारिकसत्त्वं तु शुक्तिरूप्यादिव्यावृत्तम्। व्यावहारिक-प्रातिभासिकसाधारणं सत्ता-

दात्म्यं तु सदध्यस्तत्वरूपं मिथ्यात्वमेव । अन्यत्त्वसद्वैलक्षण्यमात्रं न मिथ्याभूतस्यापि साधकत्वविरोधि ॥

प्रमाणानां सत्यत्व-मिथ्यात्वविकल्पोऽत्र न किंचित्करः, इति मिथ्याभूतस्य प्रमासाधनत्वं नासिद्धम् । प्रामाण्याप्रामाण्ये हि विषयबाधाबाधानिबन्धने । तत्र च प्रामाण्यं स्वतः, अप्रामाण्यं परत इति संप्रतिपन्नम् । तत्र बाधनिर्णयाधीनमप्रामाण्यम् ॥

प्रत्यक्षागमयोः प्राबल्य-दौर्बल्यनियामकव्यवस्था ।

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ॥"

इति ब्रह्मतर्कवचनादागमस्य जात्या स्वार्थपरस्य स्वतः प्राबल्यम्, तस्यान्यपरत्वे तु प्रत्यक्षस्य प्राबल्यम्, इति देहात्मप्रत्यक्ष-तदतिरिक्तात्मवादिश्रुत्योरादित्य-यूपभेदावगाहिप्रत्यक्षतदभेदावगाहिश्रुत्योर्दृष्टम्, न तु प्रत्यक्षमित्येव प्रत्यक्षम्, आगम इत्येव वा प्रत्यक्षागमौ प्रबलौ, दुर्बलौ वा, इत्यप्रामाण्यकारणाभावे प्रामाण्यमित्येव वस्तुस्थितिः, इति प्रमाणान्तराधीनमप्रामाण्यम्, इतराप्रामाण्यनिर्णयाधीनमितरप्रामाण्यमित्यन्योऽन्याश्रयशङ्का नोत्तिष्ठति ॥

न च-"आदित्यो यूपः," इत्यादिश्रुतेरिवान्यपरत्वे प्रकरणानुसारेण, वाक्यगतिपर्यालोचनया वा वेदान्तवाक्यस्य सिद्धब्रह्मस्वरूपमात्रपरस्यान्यशेषत्वम्, अर्थवादत्वम्, अपरं वा किमपि कारणमस्ति । प्रत्यक्षादिकं तु लौकिकम्, सगुणवाक्यानि वा व्यवहारोपयोगितया व्यवहारशेषम्, उपासनादिपराणि वा, न ब्रह्मस्वरूपबोधनमात्रपराणि ॥

सर्वेषां वेदान्तवाक्यानां क्रियाविधिशेषतयैव सिद्धेऽप्यर्थे प्रामाण्यं समन्वयाधिकरणे वर्णकद्वयेऽपि निरस्तमाकरे । अतोऽनन्यशेषवेदान्तवाक्यानामद्वितीयब्रह्मस्वरूपप्रतिपादकानां देहातिरिक्तताबोधकवाक्यानामिवानन्यपराणां स्वतन्त्रप्रामाण्यस्वीकारेऽपि बद्ध-मुक्तजीवेश्वरादिविषयभेदेन परस्परविरोधस्याभावाद् अवस्थाभेदेन सविशेष-निर्विशेषवाक्योभयप्रामाण्यम्, इति नैकतरेणान्यतरस्य बाधः ॥

परेषां चार्वाकनिराकरणेन स्वमत-
समर्थनन्यायेनाद्वैतसमर्थनम् ।

अन्यथा देहातिरिक्तात्मबोधकानामपि देहात्मप्रत्यक्षेण कथं न बाधः ?

यथाऽन्येषां वेदान्तिनां दृष्ट्या निर्विशेषं शशशृङ्गायमाणम्, एवमेव चार्वाकाणां दृष्ट्या प्रत्यक्षातिरिक्तप्रामाण्यवादः। तेषां दृष्ट्या हि न केवलं मुक्तस्वरूपम्, किन्तु सविशेषब्रह्मस्वरूपमपि शशशृङ्गायमाणमेव तत्र यथा वेदप्रामाण्यनिर्वाहाय तदीयप्रसिद्धिमात्रानुवादेन शरीरातिरिक्तात्मसमर्थनम्, तेनैव नयेन कर्मोपासनाकाण्डादिसिद्धार्थानुवादेन स्वतन्त्रं ज्ञानकाण्डप्रामाण्येनानन्यशेषवेदान्तप्रामाण्यनिर्वाहार्थमद्वैतवादः प्रस्तूयते, परमतनिरसनपूर्वकं निर्धार्यते च॥

तत्र यदि वेदान्तवाक्यानामद्वितीयब्रह्मपराणां प्रत्यक्षानुमानागमप्रमाणविरोधादन्यथा नयनम्, अप्रामाण्यं वा, एवं देहात्मवादिनां दृष्ट्या तदतिरिक्तात्मवादिवाक्यानामन्यथा नयनम्, अप्रामाण्यं वा न कथम्? विषयव्यवस्थया प्रामाण्यं तूभयत्र समानम्, इति प्रत्यक्षविरोधेन श्रुत्यप्रामाण्यवादोऽनर्थव्रातायैव द्वैतिनामपि। सर्वथा तु मिथ्यात्वस्यासाधकत्वप्रयोजकत्वं कुत्राप्यदर्शनात्, सत एव साधकत्वमिति व्याप्तेरप्यदर्शनात्, असद्वैलक्षण्यस्य साधकत्वप्रयोजकत्वेनैवेष्टसिद्धेश्च न बन्धमिथ्यात्वे कोऽपि प्रतिकूलतर्कः साधकत्वानुपपत्तिरूपः मिथ्यात्व-साधकत्वयोः सत्त्व-साधकत्वयोर्वा न व्याप्तिः—यत्र यत्र मिथ्यात्वम्, तत्र तत्रासाधकत्वम्; अन्यथा तु साधकत्वम्; तथा यत्र यत्र सत्त्वम्, तत्र तत्र साधकत्वमिति; दृष्टान्तासंप्रतिपत्तेः, इति मिथ्याभूतस्यार्थक्रियाकारित्वे न तर्कस्य विरोधः, चक्रकादिदोषानुषङ्गो वा॥

वस्तुतस्तु—मिथ्याभूतस्याप्यर्थक्रियाकारित्वं न विरुद्धमिति पूर्वं निरूपितम्। अर्थक्रियाकारित्वं यावद्व्यवहारमेवार्थसत्त्वमपेक्षते, न तदनन्तरम्; अतीतादौ व्यभिचारात्। न ह्यतीतान्यपि व्यवहारयोग्यानि सन्ति नाम? कारणात्मना सत्त्वं हि न घटादेरुदकाहरणादिकार्यकारित्वप्रयोजकम्। यावत्तत्सत्त्वं तद्व्यवहारयोग्यत्वं तु मिथ्याभूतस्यापि समानम्॥

असद्वर्जं सर्वव्यवहारयोग्यत्वे यावद्व्यवहारं सत्त्वेनैव तत्त्वमतीतस्य, भाविन इव व मिथ्याभूतस्यापि समानम्। व्यावहारिकं सत्त्वं हि व्यवहारोपयोगिनाम्। अत एव ब्रह्मनन्दिवाक्यं सद्विवर्तवादसाधनानन्तरम्—"संव्यहारमात्रमि"ति।

निरधिष्ठानप्रपञ्चमिथ्यात्ववादे बौद्धैरपि सांवृतसत्यत्वमिति

मन्यते, निर्विशेषं ब्रह्म तु स्वयं व्यवहारायोग्यमप्यसद्विलक्षणं सर्वानुवेधेन स्वतादात्म्यात् 'सन् घटः' इत्यादिव्यवहारकाले घटादिरूपेण भाति। यावद्व्यवहारमिव सर्वबाधानन्तरमपि स्वप्रकाशतया व्यवहारातीतमपि प्रकाशते। अत एव पारमार्थिकमखण्डरूपेण ॥

घटादीनामपि व्यवहारयोग्यत्वं सदनुविद्धरूपेणैव, न स्वतः; अन्यथाऽसतोऽपि व्यवहारापत्तिः। ततश्च सर्वदा सद्रूपेण सर्वत्र प्रकाशमानेषु ज्ञानेषु वाऽनुवर्तमानसद्रूपेणैव घटादीनामर्थक्रियाकारित्वम् सर्वकारणात्मना, कार्यात्मना तु जन्यत्व-विनाश्यत्व-बाध्यत्व-भविष्यत्त्वादिप्रतीतियोग्यानां घटादीनां कथं सत्त्वेनार्थक्रियाकारिताऽपि ? येनार्थक्रियाकारित्वानुपपत्त्या सत्त्वप्रयुक्तमेवार्थक्रियाकारित्वम् , इति मिथ्याभूतस्यैवार्थक्रियाकारित्वमुक्तविधया, न तु सतः ॥

श्रुति-प्रत्यक्षयोरविरोधेन प्रत्यक्षेण न श्रुतिबाधः।

एतेन—श्रुतिप्रामाण्यमपि—व्याख्यातम् । तत्र प्रामाण्यं विषयाबाधेन, न तु स्वविषयविषयकाज्ञाननाशप्रयोजकत्वेन व्यावहारिक-पारमार्थिकसाधारणेन । तच्च निर्विशेषपराणां वाक्यानामपि समानम्। तत्र व्यावहारिकप्रमाणेषु ज्ञानेनाज्ञानविषयत्वमात्रनाशः, यदि ज्ञानकालेऽज्ञानेन सह विषयस्याबाधः। निर्विशेषवाक्यानां प्रामाण्यं त्वज्ञानमात्रनाशेन, न तु विषयबाधेन ॥

तत्र मिथ्यात्वं बाधज्ञानावसेयं घटादेरिव न ब्रह्मणोऽपि। अतो निर्विशेषज्ञानस्य प्रामाण्यमेव, घटादिज्ञानस्य तु यावद्बाधं प्रामाण्यमिति विवेकः। मिथ्यात्वं तु स्वाधिकरणे स्वात्यन्ताभावो वा, बाध्यत्वं वा, न त्वभावप्रतियोगित्वमात्रम्, येन विषयस्य तावन्मात्रेण ज्ञानानामप्रामाण्यापत्तिः ॥

तत्र बाध्यत्वं भाविबाधप्रतियोगित्वयोग्यत्वम्; वर्तमानतादशायां बाधस्येव तत्प्रतियोगित्वस्याप्यभावात्। यावद्बाधं सर्वेषामसद्व्यतिरिक्तानां प्रामाण्यम्, ब्रह्मणस्तु बाधयोग्यताया अभावादबाध्यत्वं सार्वदिकमिति हि वस्तुस्थितिः, इति श्रुतेः स्वरूपतो बाधयोग्यतायामपि बाधायोग्यब्रह्मस्वरूपमात्रबोधकतामपेक्ष्य प्रामाण्यम्, अन्यत्र सर्वप्रमाणाप्रामाण्यं परमार्थत इत्यभिप्रेत्यैव श्रुत्याः स्वव्यतिरिक्तमिथ्यात्वबोधने तात्पर्यमिति तत्र तत्र व्यपदेशः। तेन च श्रवणश्रुतिप्रत्यक्षस्यात्मनि दुःखादिज्ञानस्य, निर्विशेषे ब्रह्मणि गुणबोधक-

वाक्यानाम्, अन्येषां च यावत्स्वविषयबाधं प्रामाण्यम्। विषयबाधे त्व-प्रामाण्यम्। तेन च निर्विशेषब्रह्मणि "तत्त्वमसी"त्यादिमहावाक्यानि, तदर्थसमर्पकाणि च सर्वाणि मुख्यप्रमाणानि, अन्यानि तु व्यावहारिक-प्रमाणानि, प्रातिभासिकप्रमाणानि वेति वस्तुस्थितिः॥

न चैवं सति श्रुत्यर्थस्य संकोचोऽपि, इति यथा यथा यत् यत् प्रमितम्, तथा तथा तत् प्रमाणम्, न तु कथञ्चन प्रमितत्वमात्रेण सर्वं सदैव सर्वदा प्रमाणम्; अन्यथा शुक्तिरूप्य-व्यावहारिकरूप्य-शरीरात्म-शून्यादीनां सर्वेषां प्रमितत्वाविशेषात् प्रामाण्याप्रामाण्य-ग्राह्याग्राह्यव्यवस्थैव लुप्येत। श्रुतिप्रत्य-क्षयोर्भिन्नविषयत्वात्, तत्तदधिकारतारतम्येन तस्य तस्य प्रामाण्याच्च श्रुति-प्रत्यक्षयोः प्राबल्य-दौर्बल्यशंकाया नात्रोत्थितिरपि॥

अद्वैतसिद्ध्यादौ तु वेदान्तवाक्यानामात्माद्वितीयत्वादिपराणां प्रत्य-क्षापेक्षया प्राबल्यमूरीकृत्य, प्रत्यक्षानुमानागम-बाधोद्धारप्रकरणानि परगति-मनुरुद्ध्य, कृत्वाचिन्तयेव। व्यक्तं चैतत् संविन्मात्रप्रामाण्यवाद-सत्तात्रैवि-ध्यैकसत्तावादादिप्रक्रियावलम्बनेन श्रुति-प्रत्यक्षयोरविरोधव्युत्पादनं तत्त्व-शुद्ध्यादौ॥

यत्तु-प्रत्यक्षापेक्षयाऽऽगमप्राबल्यवादो दूष्य इति पुनःपुनराम्रेडनं परेषाम्, तदिदं तदीयप्रमाणमूर्धन्यब्रह्मतर्केणैव पराहतम्। यत्र—

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्।"

इति मूलमन्त्र उपदिश्यते। ब्रह्मतर्कस्याप्यन्यथानयनेन प्रत्यक्षप्राबल्य-समर्थनं तु स्वव्याघातकम्॥

सविशेषवेदान्तवाक्यानामपि निर्विशेषवाक्येन बाधः।

एतेन—जीवेश्वरादिभेदपराण्यपि वाक्यानि—व्याख्यातानि; तेषामपि व्यवहारोपयोगिनां व्यावहारिकभेदमात्रपरतया तदभेदाविरोधात्, इति न भेदस्य तात्पर्यविषयत्वं तेषाम्; "नात्र काचन भिदाऽस्ति" "नेह नानास्ति किंचन" "तत्त्वमसि" "अहं ब्रह्मास्मि" "विज्ञानमानन्दं ब्रह्मे"त्यादि-श्रुतिभ्यः॥

यत्तु—स्वरूपाभेदपरा भेदश्रुतयः—इति, तदिदं यदि स्वरूपैक्य-मनावृतसंविन्मात्रमभिप्रेत्य, तर्हि स्वागतम्, यदि स्वरूपयोभिन्नयोरभेद-

इति, तर्हि भेदाभेदयोरेकतरस्य कल्पितत्वं विना तद्व्यतिरेकेण सर्वाभावेनैव तस्य सर्वस्वरूपत्वाद् न भिन्नयोरभेदव्यवहारः, अभिन्नयोर्भेदव्यवहारो वा । भेदप्रतीतिर्विशेषेण पारिभाषिकेण व्यवस्थापयितुमशक्या; अविद्यातिरिक्ते विशेषे प्रमाणाभावात्, अभेदे भेदव्यवहारमात्रमाविद्यकत्वेनोपपद्यते । भेदाभावे भेदकार्यकारी हि विशेषः ।

अविद्यातिरिक्तविशेषनिरासः ।

इदमेवात्र पृच्छ्यते—कथं भेदाभावे भेदकार्यम्? तत्र भेदस्य सत्त्वे न भेदाभावः, असत्त्वे न भेदकार्यम्, इति कुतो वा तत्प्रतिनिवेर्विशेषस्य सिद्धिः । सर्वत्राभेदो विवर्तोपादानसदात्मना, इति तस्य सत्यत्वम्, नाऽऽविद्यकत्वम् । भेदस्तु मिथ्या कार्यरूपेण, इति भेदव्यवहारस्यैव वैशेषिकत्वम्, आविद्यकत्वं वा । दुर्घटभेदस्तु मिथ्या कार्यरूपेण । भेदव्यहारस्यैव वैशेषिकत्वम्, आविद्यकत्वं वा दुर्घटघटकायविद्याकार्यमित्यद्वैतिनः । विशेषकृत्यं भेदव्यवहार इति परे । तत्राविद्या क्लृप्ता, विशेषस्तु कल्प्यः, व्यवहारातीतायां मुक्तावेवाखण्डस्वप्रकाशसंविदतिरेकेण सर्वाभावादैक्यम्, अभेदो वा । स चोपाधीनाम्, तत्प्रयुक्तभेदस्य वा निवृत्तिमात्रम् । न च तदा भेदकार्यम् ॥

भेदाभावे भेदकार्यव्याघातः ।

न च तत्र भेदः, येन तत्रापि व्यवहारः स्यात् । तत्रापि व्यवहारे सातिशयः संसार एव मुक्तिरित्यापद्येत, इति मुक्ति-संसारयोरविशेषः । "नेह नानास्ति किंचन" इति निषेधस्तु, न केवलं भेदम्, किन्तु भिन्नं वस्त्वपि ब्रह्मणि निषेधति, इति भेद-तत्प्रतियोग्युभयनिषेधपरः, न तु भेदमात्रनिषेधपरः । "यत्र हि द्वैतमिव भवति" इतीवपदघटितं वाक्यं मुक्तौ द्वैतं भवतीव, न तु वस्तुतोऽस्तीतिबोधयद् भेदमिथ्यात्वमपि बोधयति, इति न भेदसत्यतायां किमपि प्रमाणम् । न चोभयनिषेधे गौरवम्; "किमिव वचनं न कुर्याद् नास्ति वचनस्यातिभारः" इति न्यायात्, आम्नायस्य गतिं वक्तुं प्रभवामः, नाम्नायं पर्यनुयोक्तुमिति न्यायाच्च ॥

प्रतियोगिभेदोभयनिषेधो नाप्रसक्तप्रतिषेधः ।

"सदेव सोम्येद"मित्याध्यारोपापवादेन प्रवृत्तानां भेद-भिन्न-प्रतिषेधपराणां वाक्यानां लौकिकालौकिकसर्वव्यवहारोपयोगितया प्राप्तविषयकत्वान्नाप्रसक्तप्रतिषेधः, आत्मदेहनिषेधेऽन्नमय-प्राणमय-मनोमयादीनां त-

तोऽन्य इति स्थूलद्वारा सूक्ष्मदृष्ट्युपदेशवत् "नेति नेति" इति तटस्थ-लक्षणविधया कार्य-कारणभावप्राप्तसर्वनिषेधोपपत्तेर्वा नाप्रसक्तप्रतिषेधः ॥

न च प्रथमप्राप्तत्वात् विशेषणभेदमात्रस्य निषेधः परमते संभवति; तत्र भेदस्यापि परमतातात्पर्यविषयत्वेन, किं बहुना? पञ्चविधस्य प्रतिपिपादयिषितत्वेन निषेधासंभवात्। न च "नात्र काचन भिदाऽस्ती"त्यादाविव भेदमात्रनिषेधोऽपि; तथापि सजातीय-स्वगतनिषेधेषु स्वगतमात्रनिषेधो मा भूदिति "एकमेवाद्वितीयमि"तिवाक्यार्थस्यैव प्रत्यभिज्ञापनार्थं सर्वनिषेधोऽत्र। वैयर्थ्यशंका तु लौकिके वाक्ये, नापौरुषेये वेदे समुन्मिषति ॥

ब्रह्मनिर्विशेषत्वार्थं भेद-प्रतियोग्युभयनिषेधः।

विशेषणनिषेधार्थं विशिष्टनिषेधः सत्येव बाधके। न चात्रास्ति किमपि बाधकं विशिष्टनिषेधेऽपि; अन्यथा तद्वैयर्थ्यात्। अनुवादस्तु तस्याप्यर्थसिद्धत्वेन प्राप्तत्वमभिप्रेत्य, न तु बाध्यत्वम्, इति श्रुत्यन्तरैकवाक्यतामादाय सप्रयोजनताऽनुवादेऽपि ॥

"नेह नानास्ति" "अद्वितीयम्" इत्यादौ भेद इव विशेषा अपि निषिध्यन्ते, इति तदनुवादद्वारा निर्विशेषसत्त्वमेव महातात्पर्यविषयः, इत्युपदेशार्थं वाऽत्रोभयनिषेधः। ब्रह्मणो निर्विशेषत्वं यथावसरं साधयिष्यते ॥

न च विना भेदं सविशेषत्वम्। भेदमात्रनिषेधः, सविशेषत्वं च व्याहतम्; प्रतियोग्यपेक्षत्वात्तु भेदस्य भेदमात्रनिषेधोऽप्रामाणिकः। कथं च विना प्रतियोगिनं भेदमात्रस्य प्राप्तिः? सर्वेषां प्रमाणानां भेदनिषेधपराणाम्, तत्प्रापकाणां च केवलभेदमात्राप्रापकत्वात् ॥

भेदमात्रनिषेधेऽप्रसक्तप्रतिषेधः।

भेदमात्रनिषेधेऽप्रसक्तप्रतिषेधोऽपि। आभासप्राप्तस्य निषेधो नामान्तरेणाध्यारोपापवादः। स चोभयप्राप्तनिषेधेऽपि। निर्विशेषं ब्रह्मैव परमार्थ इति तु "न स्थानतोऽपी"त्यधिकरणे विशदीभविष्यति ॥

न च सविशेषत्वेऽपि विशेषाणां गुणानां तेनाभेदः; विशेषत्वव्याघातात्। व्यावर्तको धर्म एव हि विशेषो नाम। तत्र यदि गुणादीनां विशेषत्वम्, तदर्थसिद्धं व्यावर्तकत्वम्; भेदकत्वस्य भेदव्याप्तत्वात्। तत्र

यदि न भेदः, तर्हि न विशेषोऽपि, इति सविशेषत्वहानिः, निर्विशेषत्व-पर्यवसानम् वा, इति "नेह नानास्ति" "मुक्तोपसृप्यव्यपदेशादि"त्यादा-विव नानात्वनिषेधेऽपि निर्विशेषत्वमेव; अन्यथा भेदमात्रस्य तत्राप्रसक्त-त्वादप्रसक्तप्रतिषेधापत्तिः ॥

प्रत्यक्षानुमान-शब्दादिप्राप्तस्य शब्देन निषेधोपपत्तिः ।

प्राप्तं हि निषेध्यम् । प्राप्तिस्तु येन केनापि प्रमाणेन, अप्रमाणेन वा । शाब्दनिषेधस्थले शब्दप्राप्तमपि शब्देन निषिध्यते, प्रत्यक्षनिषेध इव प्रत्य-क्षेण; अन्यार्थतया शब्दप्राप्तस्यापि शब्देन निषेधात् । अत एव पयोविधिशे-षतया 'न हि निन्दा'न्यायेन शब्दप्राप्तस्य जर्तिल-यवाग्वादेः "अनाहुतिर्वै-जर्तिलाश्च गवीधुकाश्चे"ति शब्देनैव निषेधः । स्वर्गाद्यपूर्वस्यापि हि शाब्दस्य प्रसादरूपस्य ब्रह्मणि निषेधो न विरुध्यते । किं बहुना ? प्रत्यक्षानुमानप्राप्त-स्यापि चन्द्राल्पपरिमाणत्वशङ्खाशुचित्वादेरागमेन बाधो दृश्यते, इति विशेषाणामन्येषामिव फलसाधनद्वारा प्रसादापरपर्यायापूर्वस्यापीश्वरगतस्य निषेधोऽपि नाप्रसक्तप्रतिषेधः ॥

असतः साधकत्वोपपत्त्युपसंहारः ।

अत एव भ्रान्तपुरुषीयरज्जुसर्पवाक्यप्राप्तस्य सर्पस्याप्तेन नायं सर्प इति निषेधः । तत्र हि निषिध्यमानः सर्पो भ्रान्तस्यैव प्रत्यक्षः, न त्वाप्तस्य पित्रादेरपि, इति निर्विशेषेण सर्वनिषेधपरेण स्वर्गाद्यपूर्वनिषेधोऽपि । सर्वथा तु प्रतिवादिनं प्रत्यसिद्धत्वात् सत्यसाधकत्वस्य, जगतः सत्यत्वं न साध-कत्वेन प्रतिवादिनं प्रति साधयितुं शक्यते; सर्वस्य चैतन्यव्यतिरिक्तस्य मिथ्यात्वेन सत्यस्यैव साधकत्वे दृष्टान्ताभावात्, इति न साधकत्वानु-पपत्तिर्मिथ्यात्वेऽपि । अतः—

"मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः" ।

इति नोपपद्यते ॥

एतेन—

साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता ॥
स्वीकृतं ह्यविशेषस्य साध्यसाधकता पुनः ॥"

इति—परास्तम्, साक्षिचैतन्यं ह्यद्वैतमतेऽन्तःकरणोपहितम्, अवि-

द्योपहितं चौपाधिकमुपाधिमिथ्यात्वाद् मिथ्यैव, न तु निर्विशेषं चैतन्यमात्रमिव सत्यं साक्षित्वेन रूपेण, इति न सत्यस्यैवार्थसाधकत्वं साक्षिदृष्टान्तेनापि। निर्विशेषमात्रं ह्यनावृतसंविद्रूपं सत्यम् ॥

अर्थक्रियाकारित्वेन प्रपञ्चसत्त्वानुमाननिरासः।

न च तदानीं साध्यम्, साधनम्, साधयिता, सिद्धिर्वा समस्ति, इति प्रपञ्चः, सत्यः, अर्थक्रियाकारित्वादित्यत्र नान्वयदृष्टान्तः, न वा व्यतिरेकदृष्टान्तः। साक्षिणा भासकेनाभावरूपाज्ञानसाधनमपि न सत्यस्यैव साधकत्वमभिप्रेत्य। अनेन-सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमित्यपि—व्याख्यातम्, इति प्रपञ्चः, सत्यः, अर्थक्रियाकारित्वात्, इत्यनुमानस्याप्रयोजकत्वम् ॥

साक्षिणोऽपि सविशेषतयैव साधकत्वम्;
साक्षित्वादेरप्यनाद्यविद्याप्रयुक्तत्वात्।

एतेन—साक्षिणः सत्यत्वात् तस्य चाज्ञानसाधकत्वाद् मया सतः साधकत्वं नाङ्गीकृतमिति न शक्यते वक्तुं मायावादिभिरिति—परास्तम्; अज्ञानाश्रयत्ववशात्, तद्विषयत्ववशाद्वा पूर्वोक्तरीत्या साक्षित्वस्य स्वीकारेण स्वतो निर्विशेषेण रूपेण साक्षित्वानङ्गीकारात्। न चात्रेतरेतराश्रयत्वम्—अज्ञाने सति साक्षिणोऽज्ञानसाधकत्वम्, तस्मिंश्च सत्यज्ञानसिद्धिः—इति; अनादित्वादुभयोः। संविद्रूपं स्वप्रकाशजीवभावम्, ईश्वरभावम्, तत्तत्साक्षिभावं चानाद्यविद्यासंबन्धेनैवाश्नुते, न स्वतः। तदुक्तम्—

"जीव ईशो विशुद्धा चित् तथाजीवेशयोर्भिदा ॥
अविद्या-तच्चितोर्योगः षडस्माकमनादयः ॥"

इति, इत्यनादिसाक्षिस्वरूपमप्यनाद्यज्ञानयोगेनेत्यभिप्रेत्यैवाज्ञानवशादित्युक्तम्; अविद्या-तच्चितोर्योगस्याप्यनादित्वात्; अन्यथाऽनावृतावस्थायामिव न जीवः, न वेश्वरः, न वाऽविद्या, न वा संसृतिः, इति सर्वमधरोत्तरितं स्यात्। अविद्याश्रयः, तद्विषयो वा संविन्मात्रम्, तदुपधानप्रयुक्तं तु साक्षित्वम्, इति साक्षिस्वरूपस्याज्ञानोपधानप्रयुक्तत्वेऽपि नाज्ञानस्य साक्ष्यधीनत्वं स्वरूपसिद्धौ, उत्पत्तौ वा, इति नात्रोत्पत्तिप्रतिबन्धोऽन्योन्याश्रयणेन। व्यक्तं चैतद् ब्रह्मसिद्धौ ॥

साक्षित्वस्याविद्याप्रयुक्तत्वेऽप्युत्पत्ताविव
ज्ञप्तावपि नान्योन्याश्रयः ।

एतेन—ज्ञप्तावपि नान्योऽन्याश्रय इति—व्याख्यातम् ; अज्ञानस्य साक्ष्यधीने प्रकाशेऽपि साक्षिप्रकाशेऽज्ञानप्रकाशानपेक्षणात्, इति कथमत्रान्योऽन्याश्रयः ? उपहितेन स्वप्रकाशेन साक्षिणोपाधेः प्रकाशेऽप्युपाधिना जडेन तत्प्रकाशायोगात् ॥

एतेन—

"स्वीकृतं ह्यविशेषस्य साध्यासाधकता कुतः ॥
तच्चाविशेषमानेन साध्यमित्यनवस्थितिः ॥"

इति—परास्तम् । सत्यम्, भावरूपाज्ञाने साक्षि प्रत्यक्षं मानमुपन्यस्यते । न च तावता सत्यस्यैव साधकत्वम् । अज्ञानोपहितस्य, अन्तःकरणोपहितस्य वा साक्षिणो हि न संविन्मात्रस्येवाशेषविशेषवैधुर्यम् ; तस्याज्ञानोपहितस्याज्ञानोपाधिनैव सविशेषत्वात्, इति नाविशेषस्य साधकता परं प्रति सिद्धान्तिना साध्यम्; तस्य साधकत्वस्यैवाङ्गीकारात् ॥

यत्तु निर्विशेषं शशविषाणदीति, तदिदं "सत्यं ज्ञानमि"ति श्रुतिविरुद्धम् । न ह्यसद्साधकमित्येतावता निर्विशेषमप्यसाधकत्वाद्सदापतति । तावता ह्यसद्वैलक्षण्यं साधकत्वे तन्त्रमित्येवायाति । यथा चावृतावस्थायां वस्तुतो निर्विशेषमपि सर्वजगदुपादानकारणम्, तथाऽन्यत्र व्यक्तम् । अनावृतावस्थायां तु न साध्यम्, साधनम्, सिद्धिः, साधको वा, इति कथं साधकत्वमसद्वैलक्षण्येऽपि । मिथ्यात्वं त्वसद्वैलक्षण्यमपि, इति न साधकताप्रतिबन्धि, अद्वैतिनां निर्भरो हि न मिथ्यात्वस्य, असत्त्वस्य वाऽर्थक्रियाकारित्वप्रयोजकत्वे, किन्तु सत्यत्वस्यार्थक्रियाकारित्वप्रयोजकत्वनिरासे, असद्वैलक्षण्यस्यैव मिथ्यार्थसाधारणस्य प्रयोजकत्वव्यवस्थापने च ॥

न चासत्त्वं मिथ्यात्वं चेत्यनर्थान्तरम् । बाध्यत्वरूपस्य मिथ्यात्वस्यासदसाधारण्यात् । बाध्यत्वं ह्यधिष्ठानतत्त्वसाक्षात्कारनिवर्त्यत्वं निरधिष्ठानस्यासतो बाधितम्, इति ब्रह्मातिरिक्तस्य मिथ्यात्वं नार्थक्रियाकारित्वविरोधि । मिथ्याभूतस्यार्थक्रियाकारित्वोक्तिस्तु वस्तुस्थितिमनुसृत्यैव, न तु मिथ्यात्वस्य तत्प्रयोजकत्वमपि मत्वा । एवं मिथ्यात्वमपि भाविबाधदृष्ट्या वस्तुगतिमनुसृत्य, इति न मिथ्यात्वं साधकत्वं च व्याहतम् ॥

निश्चितं मिथ्यात्वम्, साधकत्वं च व्याहन्यते । न च यावदखण्डाकार-

साक्षात्कारं कस्यापि ब्रह्मव्यतिरिक्तस्य प्रातिभासिकव्यतिरिक्तस्य मिथ्यात्वं निर्णीयते। देहात्मभ्रमस्थलेऽपि वस्तुगत्यैव भ्रमत्वम्, न व्यवहारदशायाम्। एवमपि व्यवहारसाधकत्वमनुभूयत एव देहात्मबुद्ध्यपरिहाणेन; अन्यथा रोगादिपीडितस्य भग्नाङ्गुल्याद्यवयवविशेषस्य, शीतादिपीडितस्य, अन्यस्य वा न सुख-दुःखाद्यनुभवः स्यात्, इत्यर्थक्रियाकारित्वान्यथानुपपत्त्या मिथ्यात्वविरोधिसत्यत्वानुमानं नोपपन्नम्, असत्ये देहात्मनि सत्यत्वानुमानस्य व्यभिचाराच्च। तत्र यदि प्रमितमेव साधकम्, तर्ह्यद्वैतदृष्ट्या सविशेषब्रह्मणोऽप्यप्रमित्वाज्जगत्कारणत्वानुपपत्तिः स्यात्। तस्येव मिथ्यार्थानामपि व्यावहारिकं प्रमितत्वं तु समानम्॥

प्रमाणं हि वस्तुसिद्धावुपयुज्यते, तत्सविशेषविषयकत्वं किमर्थम्? विशेषमात्रमिथ्यात्वेऽपि प्रमाणत्वाविघातात्? न च निर्विशेषस्याप्रामाण्यम्; वेदान्तानामपौरुषेयाणां तत्राप्रामाण्यकारणाभावेन प्रामाण्याबाधात्। न च तत्र विषयस्य बाधा केनाप्यनुभूयते। न च साधकतमत्वं विषयस्य प्रामाण्यकारणम्; अबाध्यत्वस्यैव तत्प्रयोजकत्वात्, निर्विशेषप्रामाण्येऽपि प्रमाणानां स्वजन्यवृत्तिद्वारा समूलानर्थनिवृत्तिसाधकत्वात् साधकतमत्वं वेदान्तानां निर्विशेषपराणामप्यव्याहतम्॥

विषयस्य तु साधकत्वम्, साधकतमत्वं वा न प्रामाण्यकारणम्; प्रयोजनपराणां वाक्यानामप्रामाण्यापत्तेः। न हि प्रयोजनं सिद्धं साधकम्; साधकतमं वा। वेदान्तप्रमाणस्याखण्डब्रह्मविषयस्य सकलबन्धनिवर्तकज्ञानजनकस्य सप्रयोजनस्य कथमप्रामाण्यम्? तदुक्तं भाष्ये—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति॥

प्रमाणस्य साधकतमत्वमज्ञाननिवर्तकत्वेन; ज्ञापकत्वमात्रेण, वस्तुसाधकत्वेन च। तत्र सिद्धस्यैवार्थस्याज्ञातस्य ज्ञापनं खलु प्रमाणस्य कृत्यम्; अन्यथाऽसतोऽपि प्रमाणतः सिद्ध्यापत्तिः। तत्तु वेदान्तानां निर्विशेषप्रामाण्य एव मुख्यम्; तस्यैव साक्षादज्ञानाश्रयविषयकत्वेन तद्बोधनेनैव तेषां प्रामाण्यात्। सविशेषं ब्रह्म, विशेषा वा नाज्ञानविषयाः साक्षात्, किन्तु शुद्धचैतन्यद्वारैव, इति निर्विशेषप्रामाण्ये विशेषाणाम्, जडानाम्, जडोपहितानां वा न प्रमितत्वमवहीयते॥

तत्र संविन्मात्रं स्वप्रकाशं स्वतः सिद्धम्। तदेवाज्ञानोपहितमपि साक्षिरूपं स्वतः सिद्धम्। एवमज्ञानमपि साक्षिणैव सिद्धम्, येषु न प्रमाणापेक्षा

किन्तु विशेषाणां त्वज्ञानविषये ब्रह्मण्यारोपितानां साक्षिसिद्धानां ज्ञातानामेवार्थक्रियाकारित्वात् तज्ज्ञानजननार्थमेव प्रमाणापेक्षा, इति सविशेषब्रह्मणोऽपि प्रमितत्वं प्रमाणसिद्धविशेषोपधानेनैव, इति तदुपहितस्य, तस्याप्यज्ञानविषयत्वनिवर्तकज्ञानजनार्थमेव प्रमाणापेक्षा ॥

न च तत्राप्यविद्यानिवृत्तिमात्रपरत्वं शास्त्रस्य; तस्य साक्षादज्ञानाविषयत्वात्। अनाद्यज्ञानविषयचैतन्यसम्बन्धोऽपि चैतन्येऽध्यासमात्रेण; अन्यथा सर्वाणि प्रमाणानि वितथानि स्युः। इदमेवाभिप्रेत्योक्तं भाष्ये—"इममेवाध्यासं पुरस्कृत्य प्रमाण-प्रमेयव्यवहाराः सर्वे लौकिकाः वैदिकाश्च प्रवृत्ता सर्वाणि च शास्त्राणि विधि-प्रतिषेधमोक्षपराणी"ति। अनेन हि सविशेषवाक्यानामप्युपासनपराणां विधित्वादध्यासं पुरस्कृत्यैव प्रवृत्तिरुपपाद्यते। अज्ञानान्तःकरणादीना साक्षिणैवाप्रमाणेन भानं तु तदुपहितस्वप्रकाशचैतन्यस्यैव साक्षित्वेन, इति साक्षिण्यारोपिततयैवाऽज्ञानस्य सिद्धत्वात् तत्र साक्षिण एव साधकतमत्वम् ॥

अज्ञानस्य संविन्मात्रेण, साक्षिणा च न
विरोधः, तेन तस्य भानोपपत्तिश्च।

तत्र यथा राहुणाऽऽवृतेन सूर्येण राहोः प्रकाशः, एवं स्वप्रकाशस्यापि चैतन्यस्य तेनावरणम्, अज्ञानस्य स्वावृतप्रकाश्यत्वं च न व्याहन्यते। चैतन्यत्वमात्रं स्वप्रकाशं नाज्ञानस्य विरोधि, किन्तु प्रमाणजन्यं वृत्तिज्ञानमेव तद्विरोधीति व्यक्तमन्यत्र। परमतेऽप्यविद्या शक्तिविशेषरूपेश्वराश्रितैव स्वप्रकाशं जीवचैतन्यमिवेश्वरमाच्छादयतीति स्वीक्रियते; अन्यथा कथमीश्वरः सर्वेषामपि न प्रत्यक्षः? किमर्थानि वा तत्पराणि शास्त्राणि? इति तेनैव नयेनाविद्यापि तत्रेश्वरेणैव तदावृतेन चैतन्येन प्रकाशते, न तु तत्प्रकाशार्थं प्रकाशान्तरमपेक्षते, इति साक्ष्युपाधितया साक्षिभास्यमज्ञानम्, साक्षिस्वरूपं वाऽनादिसिद्धं न प्रमाणव्यापारमपेक्षते ॥

अज्ञानस्य साक्षिविषयत्वपरीक्षा।

यत्तु—अज्ञानमारोपितमपि साक्षिणो विषयः, न वा। आद्ये विषयित्वं साक्षिण्यापतितम्, द्वितीये साक्षित्वमेवानुपपन्नम्; "साक्षाद् द्रष्टरि संज्ञायाम्" इति निर्वचनासंभवात्, अतद्विषयेण तत्सिद्धिरलौकिकी। निर्विशेषत्वस्याप्यज्ञानवशात् साक्षित्वमिति—निरस्तम् ॥

तत्रेदं प्रष्टव्यम्—विषयत्वं घटादाविवावरणाभिभवद्वारकचैतन्याभिव्यक्तत्वं विवक्ष्यते, विनैवावरणाभिभवं स्वप्रकाशचैतन्यसम्बन्धमात्रं वा। आद्ये साक्षिणोऽनावृतस्यैवाज्ञानभासकत्वाद् न विषयत्वमज्ञानस्य घटादाविव मुख्यम्, किन्तु चैतन्यसम्बन्धमात्रं गौणमेव। तेन च यदि साक्षिणोऽपि गौणं विषयत्वमप्यापाद्यते, तर्हीष्टापत्तिः। एतेन—द्वितीयोऽपि—व्याख्यातः; विषयत्वकल्पस्यैव स्वीकारात्, "साक्षाद् द्रष्टरि संज्ञायाम्" इति तु लौकिकसाक्षिणं प्रमाणजन्यवृत्त्याश्रयमभिप्रेत्य। साक्षिणोऽविद्यान्तःकरणवृत्तिद्वारैव भासकत्वमिति विवरणप्रस्थाने तु साक्षिणोऽपि वृत्त्याश्रयत्वमात्रेण साक्षित्वमिष्टमेव। परमते यथा—"तदैक्षत" इति स्वरूपचैतन्यस्य विषयसम्बन्धमात्रेण ज्ञातृत्वव्यपदेशः, न तु स्वरूपचैतन्याश्रयत्वेन, इति गौणमेवेक्षितृत्वं विषयसंबन्धमात्रेण, एवमत्रापि गौणं विषयत्वं साक्षिसम्बन्धमात्रेणेति न दुष्यति। सिद्धान्तितं चैवमेव वृत्तिं विना साक्षिभास्यत्वमतमाश्रित्य सर्वज्ञत्वं भामतीमतानुसारेण सिद्धान्तलेशसंग्रहे॥

### निर्विशेषचैतन्यस्य साक्षित्वेऽपि साधकत्वम्।

इयमेव नीतिर्निर्विशेषस्याप्यज्ञानवशात् साक्षित्वेऽपि। साक्षित्वं ह्यज्ञानोपधानाधीनमित्येवास्य वाक्यस्य तात्पर्यम्, न तु निर्विशेषं साक्षि; अज्ञानवशात् तत्साक्षित्वेऽपि साक्षिणैवाज्ञानस्य प्रकाशोऽप्यविरुद्धः, यथा-राहुणाऽऽवृतोऽपि, सूर्यः स्वावरकस्य राहोरपि प्रकाशकः। न चैतावता साक्षिणः साधकत्वं विरुध्यते। स च यद्यपि सविशेषः, तथापि स्वरूपतः सत्यत्वेऽपि मिथ्योपाधिकत्वाद् मिथ्यापि; स्वरूपतः सत्यत्वेनापि तु स साधक एव इति॥

वस्तुतस्तु मिथ्याभूतस्याप्यर्थक्रियाकारित्वं मिथ्यात्वाविरोधिसत्ताजात्यर्थक्रियाकारित्वरूपसत्ताभ्युपगमादद्वैतमते न व्याहतम्, इति न निर्विशेषं साक्षि, येन तस्याज्ञानविरोधित्वं स्यात्, अन्योन्याश्रयो वा—साक्षिसाधकताधीनं निर्विशेषसाधकत्वम्, तत्सिद्धौ च साक्षिणः साधकत्वसिद्धिः—इति, इति साक्षिण औपाधिकमिथ्यात्वेऽपि साधकत्वमविरुद्धम्॥

### मिथ्यात्वेऽपि श्रुतेर्बोधकत्वाविरोधः।

एतेन—विश्वसत्यतामनङ्गीकुर्वतां स्वातिरिक्तसर्वमिथ्यात्वं प्रतिपाद-

यतां "नेह नानास्ती"त्यादीनामपि वाक्यानां मिथ्यात्वापत्त्या तदबोधकतां, असाधकता वा स्यादिति—परास्तम्, दत्तोत्तरत्वात्। बोधकतादशायां बाध्यत्वानिर्णयात्, साधकत्वाविरोधाच्च ॥

स्वस्वसिद्धान्तप्राधान्येन वादित्वव्यवस्था।

एतेन—प्रमाणादिमिथ्यात्वमपि—व्याख्यातम्। चार्वाकादीनां मायावादिनां वाऽन्येषामपि वादित्वाभावापत्तिरिति तु न युक्तम्; स्वमतसिद्धप्रक्रियामादाय सर्वत्र वादित्वस्याविशेषेण तत्तन्मतरीत्या बौद्धानाम्, अद्वैतिनां वा वादित्वस्याविरोधात्, तत्तद्वादिनः सर्वेऽपि प्रतिवादिप्रक्रियाणां स्वप्रक्रियाप्राधान्येन निरसनेनैव स्वसिद्धान्तं समर्थयन्तीति हि मर्यादा ॥

अद्वैतिनां यावद्बाधं सर्वप्रामाण्यवादिनां वादित्वोपपत्तिः।

अद्वैतिनस्तु यावद्बाधं प्रमाण-प्रमेयव्यवस्थां व्यावहारिकसत्यत्वावलम्बनेनैव स्वसिद्धान्तं समर्थयन्ति प्रतिवादिसिद्धान्तानां स्वसिद्धान्तविरुद्धानामेव निरसनेन। अद्वैतिनां व्यावहारिकसत्यत्वं तदीयमुक्तिक्षणपर्यन्तं सत्यत्वेन, प्रतिवादिनां पारमार्थिकसत्यत्वं तु तदीयमुक्तिसमयेऽपि सत्त्वाङ्गीकारेण। तत्र तदीया मुक्तिरद्वैतिनां व्यवहारदशैव, इति तदीयपारमार्थिकसत्त्वम्, अद्वैतिनां व्यावहारिकसत्त्वं चानर्थान्तरम्; नाममात्रे विवादात् ॥

अद्वैतिनां मुक्तिस्तु वेदान्तमहातात्पर्यविषयः प्रत्यक्षाद्यविरुद्धेन न केनापि प्रमाणेन बाधितुं शक्येति बहुशः पूर्वमावेदितम्, इत्यद्वैतवादस्य बन्धमिथ्यात्वस्य च न कथमपि प्रमाणबाधः ॥

एतेन—

"तस्माद् व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता ॥"

इत्यपि—व्याख्यातम्; यावद्व्यवहारं प्रतिवादिसम्मतमुक्तिपर्यन्तं सर्वबन्धसत्यताया अङ्गीकारेणेष्टापत्तेः, इति व्यावहारिकमेव सर्वं सत्यमित्येव पर्यवसन्नम्। तत्त्वद्वैतिनामपि नानिष्टम्; यावद्व्यवहारयोग्यत्वं सत्यताया एव व्यावहारिकसत्यत्वात्, तथा च प्रातिभासिकसतोऽप्यसद्विलक्षणत्वेन साधकत्वे कैव कथा व्यावहारिकसतः साधकत्वे ? परमार्थ-

सत एव साधकत्वे तु स्वाप्नानां वासनामयानां तत्तत्स्वाप्निकव्यवहार-हेतुत्वं स्वप्न एव दृश्यमानं कथमुपपद्यते ? एतेन—प्रमेयं नास्ति, अस्ति च प्रमाणमिति व्याहतमिति—परास्तम्। यावद् व्यवहारं प्रमाणसत्त्वम्; प्रमेयस्य सत्यत्वात्। तदुक्तम्—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्॥"

इति॥

सत्त्वस्य कारणतानवच्छेदकत्वम्॥

अत एव प्रमालक्षणेऽबाधितपदमपि विशेषणम्। तत्र च व्यवहार-कालाबाधितत्वमेवाबाधितशब्दार्थ इति परिभाषादौ व्यक्तम्।

वस्तुतस्तु—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ॥
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥"
"अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः॥
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः॥"

इति खण्डनोक्त्या सत्त्वासत्त्वौदासीन्येनैव प्रमाणानां सत्त्व-मनपेक्ष्यैव व्यवहारनिर्वाहकत्वात्, सत एवार्थसाधकत्वमिति न नियमः, व्यवहारप्रयोजकत्वेऽसद्वैलक्षण्यमात्रस्य प्रयोजकत्वात्॥

असतः साधकत्वानुपपत्तावविवादः।

यत्तु—यदि प्रमाणानि न सन्ति, तर्हि साधकानि न स्युः; असतः साधकत्वस्यानुपपत्तेः, तेषां च साधकत्वे तत्कार्यो व्यवहारो न निष्पद्येत। तथा च वादिता न स्यात्। अस्ति चेयम्। तस्माद् हेतूनां प्रमाणादीनां सत्ताऽभ्युपगन्तव्या, इत्यसतः साधकत्वानुपपत्त्या प्रमाणादीनां सतामेव साध-कत्वमङ्गीकर्तव्यम्—इति॥

सेयमसतः साधकत्वानुपपत्तिर्यद्यद्वैतिनः प्रति, तर्हि असतस्साधक-त्वस्यानङ्गीकाराद् न दोषावहा। न च शुक्तिरूप्यादिकं घटादिकं वा

व्यावहारिकसद् असद् नाम, न वा प्रमाणान्यपि तन्मतदृष्ट्या न सन्ति, किन्तु मिथ्या, ज्ञाननिवर्त्यानि वा, इति नानुपपत्तिलेशोऽपि ॥

एतेन—विमतो व्यवहारः, न साधनादिक्षमः, प्रमाणादिसत्ताभ्युपगमपूर्वकतारहितत्वादिति—परास्तम्; व्यावहारिकसत्ताभ्युपगमेनैव व्यवहारस्य प्रवर्तनेन हेत्वसिद्धेः। सदसद्विलक्षणत्वं वाऽनिर्वचनीयत्वं व्यवहारप्रयोजकम् ॥

वस्तुतस्तु—कार्यम्, कारणं वा न सत्, न वाऽसत्, उभयमपि ब्रह्मातिरिक्तं सदसद्विलक्षणम्; उभयस्यापि ब्रह्मव्यतिरिक्तस्य श्रुत्या मिथ्यात्ववर्णनात्। श्रुतिश्चापौरुषेयी न स्वप्रामाण्यार्थमन्यत् प्रमाणमपेक्षते। तदुपबृंहकानुमानादेरपि स्मृतीनामनुमापकत्वनयेनोपजीव्यश्रुतिद्वारैव प्रामाण्यमिति न दोषः ॥

निष्कर्षस्तु—"नेह नानाऽस्ति किञ्चने"त्यादिवाक्यबलेनात्मातिरिक्तसर्वासत्त्ववादो नाद्वैतिनाम्, किन्तु व्यावहारिकसत्त्वाभ्युपगम एव, इति सर्वान्तःपातिव्यवहारस्यासतोऽपि प्रमाणादेव साधकत्वे न कोऽपि विरोधः ॥

सत्तात्रैविध्यैकसत्तावादाभ्यां मिथ्याभूतस्यापि सत्प्रतीतिः।

एतेन—व्यवहारसतश्चापि साधकत्वं तु पूर्ववदिति—व्याख्यातम्। तत्र व्यावहारिकं सदिति यावद्व्यवहारमबाध्यमात्रं विवक्ष्यते। तच्च यावद्बाधं सत्त्वादेव, न तु सदेव। यथाच यद् निर्विशेषम्, तत् सदेव। तत्तु न साधकम्, तथा पूर्वमेवोक्तम् ॥

न च तदतिरिक्तं किमपि सदेव; अन्यथा 'सत्यं ज्ञानम्' इति ब्रह्मणः सत्यत्वलक्षणमसङ्गतं स्यात्। तेन हि ब्रह्मव्यतिरिक्तमसत्यमिति ज्ञाप्यते। "प्राणा वै सत्यं तेषामेष सत्यम्" इति ब्रह्मणः सत्यापेक्षयाऽपि सत्यत्वं यदाम्नायते, तदिदं सत्तातारतम्यं विना नोपपद्यते ॥

एवमेव—"सत्यं चानृतं च सत्यमभवदि"ति सत्यानृतयोरपि सत्यताप्रतिपादनम्। तेन च ज्ञायते सत्तात्रैविध्यवादेन सत्पदव्यवहारः, एकसत्तावादः सत्तादात्म्यमात्रेणः, अन्येषां तद्विवर्तरूपाणां सत्पदव्यवहार इति वा। तथा च सदेवपदबोध्यम्, सत्यज्ञानप्रतिपाद्यमानं वा मुख्यं सत्यं ब्रह्मै-

कमेव। निर्विशेषं तु न साधकम्। साधकं तु किमपि सत्ताविशिष्टम्, सत्तादात्म्यवद्वा, इति—सदेव साधकम्; असतः साधकत्वानुपपत्तेरिति परास्तम्। यदि ब्रह्मवत् घटादिकमपि सदेव स्यात्, तर्हि तस्य कामं व्यावहारिकं सत्त्वमास्थीयताम्। व्यावहारिकसत्त्वं तु मिथ्यात्वप्रतिबन्धीति परेषां मनोरथमात्रम्, न तु स्वार्थसाधकम्, न वा व्यावहारिकपदमत्र व्यर्थम्; सदन्तरव्यावर्तनार्थत्वात् तत्पदस्य, सत्तात्रैविध्याङ्गीकारात्॥

सत्तात्रिभागे कारणानि।

तथाहि—द्विविधं सत् मुख्यम्, अमुख्यं च। आद्यं विज्ञानमात्रम्, यस्य न बाधः कदापि केनापि प्रकारेण। अमुख्यं द्विविधम्—मायोपाधिकमाम्बरादिकम्, द्वितीयं शुक्तिरूप्यादि। तत्राम्बरादिकमाब्रह्मज्ञानं बाधवैधुर्याद् अनादिकार्यनिर्वाहकत्वात् व्यावहारिकं कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमाद्, इति लौकिकस्तस्य व्यवहारतेन निरूह्यते। द्वितीयं शुक्तिरूप्यादि। तत्तु प्रतीतिसमयमात्रपरिवर्तिस्वरूपेण न संवाद-हानादिहेतुः, इति प्रातिभासिकमुच्यते। तदेवं सत्तात्रैविध्याद् अम्बरादिकं विश्वं सदपि पारमार्थिकत्वाभावाद् मिथ्येत्युच्यते। व्यावहारिकत्वात्तु तदन्तर्गतप्रमाणादेः कथाऽङ्गता। तत्र व्यावहारिकादि विशेषणं पारमार्थिकत्वव्युदासार्थमित्यद्वैतिनां मर्यादा॥

सत्तात्रैविध्यपरीक्षा।

> यत्तु—किं पारमार्थिकं सदेव सत्, असच्चेति बाधभेदेन द्विविधमिति सत्तात्रैविध्यम्, उत सत्त्वेनावान्तरभेदेन। नाद्यः; सदिति ज्ञानमात्रेण सतोऽर्थक्रियार्हत्वायोगात्, येन तथाविधं प्रमाणादिकथाऽङ्गं स्यात्। बाधविलम्बस्त्वप्रयोजकः; अर्थतादवस्थ्यानिवृत्तेः। एवं ज्ञानसत्यताऽपि; शुक्तिरजतादेरपि रजतोचितार्थक्रियाकारित्वप्रसङ्गात्—इति॥

तत्र पारमार्थिकत्वाविशेषितसन्मात्रस्यैव मुख्यामुख्यभेदेन द्वैविध्यम्, मुख्यत्वामुख्यत्वं तु बाधाबाधाभ्याम्। बाधेऽपि मुख्यामुख्यत्वं कालविलम्ब-तद्भावाभ्याम्। सदसच्चेति विभागस्तु नोरीक्रियते॥

न हि व्यावहारिकं प्रातिभासिकवद् व्यवहारकाल एव बाध्यम्; विसं-

वाद्यर्थक्रियाकारि वा, इति यावद्व्यवहारं बाधाबाधाभ्यां विभागो मुख्यामुख्यभेदेनोपपद्यते । तत्र यद्यपि कालविलम्बोऽप्रयोजकः; तथापि स्वरूपेणार्थतादवस्थ्य-तदभावाभ्यां विशेषस्तु दुर्निवारः ॥

तथाहि—व्यावहारिकं यावत्तन्नाशं स्थूलरूपेण तेनैवानुवर्तते, प्रतीयते च । तन्नाशे तु कारणात्मतामश्नुते, बाधस्तु तस्य मूलोपादाननाशानन्तरमेव, इति प्रतीतिनाशेऽप्यर्थतादवस्थ्यं तत्र वर्तते । प्रातिभासिकमपि यद्यपि प्रतीतिनाशे कारणात्मना भवति, तथापि तस्य बाधः ; संसारदशायामेव कारणात्मनाऽपि नाशात् ॥

सर्वथा तु न तत्रार्थतादवस्थ्यम् । तत्रैव शुक्तौ रजतान्तरप्रतीतिस्तु तत्राविद्यान्तरपरिणामरजतान्तरस्यैवेति विशेषमभिप्रेत्यैव व्यावहारिकप्रातिभासिकभेदः । अर्थक्रियाकारित्वं तु तस्यापि प्रवृत्तिप्रयोजकत्वात्, विविधव्यवहारहेतुत्वात्, यावद्बाधं तल्लाभनिबन्धनानन्दहेतुत्वाद्वा वर्तते, परन्तु प्रवृत्तेर्विसंवादित्वाद् न व्यावहारिकत्वमस्य । रजतेऽरजतभ्रमे तु हानादिबुद्धिहेतुत्वं प्रत्यक्षमेव ॥

एतेन—

"सत्त्रैविध्यं च मानानां सिद्ध्येत् केनेति पृच्छ्यते ।
तस्याप्युक्तप्रकारेण नैव सिद्धिः कथंचन ॥"

इति—व्याख्यातम् । एतदाशयस्तु—किं परमार्थसताऽऽत्मेतरेण सत्तात्रैविध्यं साध्यते, आत्मना वा । आद्ये द्वैतापत्तिः, द्वितीये तु निर्विशेषस्य न साधकत्वम्, व्यावहारिक-प्रातिभासिकयोः स्वरूपमद्याप्यसिद्धम्—इति ॥

अत्रायं समाधिः—ब्रह्मप्रमातिरिक्तबाध्यत्वेन प्रातिभासिकं सत्त्वम्; ब्रह्मप्रमामात्रबाध्यत्वेन व्यावहारिकसत्यत्वम्, अबाध्यत्वेन पारमार्थिकं सत्त्वमर्थापत्तिप्रमाणेन साध्यते । तथा चामुख्यसत् प्रातिभासिकम्, व्यावहारिकं वोक्तविधमधिष्ठानज्ञानबाध्यत्वाद् न सत्, न वाऽसत्, विरोधाद् न सदसत्, किन्तु सदसद्विलक्षणत्वादनिर्वचनीयमेव, इति नासाधकमिति ॥

सदसद्वैलक्षण्यसाधकत्वप्रयोजकत्वम् ।

अत्र च "तरति शोकमात्मविदि"ति श्रुतिरपि मानम् । तत्र प्रमाणादेः साधकत्वं सदसद्विलक्षणत्वेन, असद्विलक्षणत्वमात्रेण वेति पूर्वमुक्तम् ॥

एतेन—

"वैलक्षण्यं सदसतोरप्येतेन निरस्यते।
वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः॥
असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत्।"

इति—व्याख्यातम्;

अस्य सदसद्वैलक्षण्ये बाधकत्वं न स्यात् साक्षिण इवेति यदि तात्पर्यम्, तर्हि पूर्वोक्तप्रकारेण साक्षिणोऽप्यविद्योपहितरूपेण पक्षकोटिनिविष्टत्वात्, तत्रापि सदसद्वैलक्षण्येनैव साधकत्वात् यत्र यत्र सदसद्वैलक्षण्यम्, तत्र तत्र नासाधकत्वमित्यत्र न व्याप्तिः संप्रतिपन्ना, इति साक्षिदृष्टान्तेन सदसद्वैलक्षण्यस्य मिथ्यार्थस्यासाधकत्वप्रयोजकत्वं न सम्भवति॥

एतेन—तत्र प्रमाणानुपपत्तिरित्यपि—व्याख्यातम्; सदसद्विलक्षणेनैव प्रमाणेन सदसद्वैलक्षण्यस्यापि साधनात्। न चात्र वादि-प्रतिवादिनोरसंप्रतिपत्तिः; शुक्तिरूप्यादौ वादिसंप्रतिपत्तेः। प्रतिवादिनोऽसंप्रतिपत्तिर्यदि प्रतिज्ञामात्रेण, तर्हि अप्रयोजकम्—यदि सदसद्वैलक्षण्यस्य साधकत्वे बाधकं न स्यात्। न चेदं युक्तम्; तत्र व्याप्तेरभावात्, साक्षिणोऽपि सदसद्वैलक्षण्येनैव साधकत्वस्योपपादनात्, इति प्रतिकूलतर्काभावात् प्रतिवादिनोऽपि संप्रतिपन्नत्वं वक्तव्यम्; प्रतिज्ञामात्रस्याप्रयोजकस्य प्रतिकूलतर्करहितस्यासाधकत्वात्॥

न च सत्त्वाभावे साधकत्वं न स्यादिति प्रतिकूलतर्कः; असतोऽसाधकत्वस्यासत्त्वप्रयुक्तत्वेन सत्त्वाभावाप्रयुक्तत्वात्। यथा च सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वम्—सत्त्वाभाववति सत्त्वेऽसत्त्वाभावेन, असत्त्वे सत्त्वाभावेऽपि तत्रासत्त्वाभावस्य सत्त्वस्याभावेन च परस्परव्यभिचारात्॥

सति चैवं सद्विलक्षणत्वात् सद्विविक्तत्वरूपस्य, ज्ञाननिवर्त्यत्वरूपस्य वा मिथ्यात्वम्, असद्विलक्षणत्वात् साधकत्वं च सिद्ध्यति, इति मिथ्याभूतस्यापि साधकत्वं न विरुद्धम्॥

साधकत्वानुपपत्तिरेव मिथ्यात्वे प्रमाणम्।

यद्यप्यसद्विलक्षणत्वमात्रं साधकत्वप्रयोजकम्; तथापि तस्य मिथ्यात्व-

सामानाधिकरण्यं मिथ्याभूतस्यापि साधकत्वोपबृंहणार्थमिति मन्तव्यम् । न च सद्वैलक्षण्येऽसत्त्वापत्तिः, असद्वैलक्षण्ये वा सत्त्वापत्तिः; तयोः परस्परविरहरूपत्वाभावादित्यनुपदमेवोक्तत्वात्, इति न मिथ्यात्वोपपादनासम्भवः; तस्य साधकत्वाभावात्, इति मिथ्यात्वानुपपत्त्यापादनं युक्तमेव ॥

यदा सतो न साधकत्वम्; निर्विशेषस्य तदसम्भवात्, तथाऽसतोऽपि न साधकता। साधकत्वं तु विश्वस्य प्रत्यक्षं गत्यन्तराभावात् सदसद्वैलक्षण्येनैव, तथैव शुक्तिरूप्यादौ दर्शनात् इति साधकत्वानुपपत्तिरेव मिथ्यात्वे तन्त्रमिति विवक्ष्यते ॥

### सदसद्वैलक्षण्यस्य श्रौतत्वम् ।

सदसद्विलक्षणत्वं जगतः—"नासदासीन्नो सदासीदि"ति श्रुतिसिद्धम्, "नेह नानास्ति किञ्चन" "विद्वान्नाम-रूपाद्विमुक्तः" इत्यादिश्रुतिसिद्धं च। शुक्तिरूप्यादीनामपि हानोपादानादिप्रयोजकत्वमनुपदमेवोपपादितम्, तेषां घटादिवत् संवादिप्रवृत्तिजनकत्वाभावस्तु मायाऽविद्यारूपोपादानभेदप्रयुक्तः। अत एव तत्रानिर्वचनीयख्यातिः। व्यक्तीकरिष्यते चेदमुपरिष्टात् ॥ एतेन—विवादपदम्, सदसद्विलक्षणम्, ज्ञानबाध्यत्वात्; यदेवं तदेवम्, यथा शुक्तिरूप्यमित्यनुमानमपि पूर्वोक्तश्रुत्युपबृंहणमात्रम्। अत एवैकविज्ञानेन सर्वविज्ञानम्, वाचारम्भणश्रुतिः, तदनन्यत्वाधिकरणादि चोपपद्यते ॥

### सदसद्वैलक्षण्यस्य दशधा विकल्प्य दूषणम् ।

एतेन—

"वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः ।
असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत् ॥"

इति सिद्धसाधनम्—परास्तम् ॥

तथाहि--अत्र सदसद्विलक्षणत्वं विकल्प्य सिद्धसाधनादि न्यायसुधोपपादयति। तत्र सिद्धसाधनमर्थान्तरताया उपलक्षणम्। तत्र सदसच्छब्दौ भावाभावपरौ, विद्यमानाविद्यमानपरौ वा। तत्राद्यस्य सप्तधा विकल्प्य दूषणम्, द्वितीयस्य द्वेधा, यथाश्रुतार्थमादायैको विकल्प इति वस्तुस्थितिः। तत्र सच्छब्दस्य भावपरत्वम्, असच्छब्दस्याभावपरत्वमङ्गीकृत्य भावाभावान्यतरवैलक्षण्यं यदि

साध्यम्, तर्हि भावेऽभाववैलक्षण्यस्य, अभावे भाववैलक्षण्यस्य च स्वीकारात् सिद्धसाधनम्, अर्थान्तरता वा; स्वयं सतोऽपि भावात्मकस्य, अभावात्मकस्य च प्रपञ्चस्य सत्त्वादिति ॥

न चैतद् दूषणमत्र संप्रसरति; अविद्यापरिणामस्य, ब्रह्मविवर्तस्य वा विश्वस्य सर्वस्य न भावरूपत्वम्, अभावरूपत्वं वा संभवति। अविद्याया इवोपादानभूतायाः, तत्परिणामानामपि तत्सलक्षणानां भावाभावोभयविलक्षणतृतीयप्रकारताया एव युक्तत्वात्। तत्र विश्वसत्त्वप्रतीतिः सद्रूपब्रह्मविवर्तत्वात् सर्वस्य तत्तादात्म्यमात्रेण, सत्तासामान्यादिरूपेण वा। अभावस्यासत्पदार्थत्वमेव गतिः ॥

तत्र भावरूपस्य ब्रह्मणः शून्यस्यासतश्च तृतीयप्रकारत्वाभावान्न तत्रातिव्याप्तिः। तथा च न भावाभावान्यतरविलक्षणत्वमत्र सदसद्विलक्षणम्, किन्तु भावाभावोभयवैलक्षण्यमेवेति नात्र सिद्धसाधनम्, अर्थान्तरता वा ॥

एतेन—प्रत्येकं भावाभाववैलक्षण्यमिति द्वितीयकल्पोऽपि—व्याख्यातः। अस्य प्रत्येकं विश्वपक्षतापक्षे प्रतिभावं प्रत्यभावं च भावान्तराभावान्तरोभयवैलक्षण्यसत्त्वादर्थान्तरम्; भावेऽभावसामान्यवैलक्षण्यस्य, भावान्तरवैलक्षण्यस्य, अभावे भावसामान्यवैलक्षण्यस्याभावान्तरवैलक्षण्यस्य च सत्त्वाद्, उक्तकल्पस्यानङ्गीकारपराहतत्वात् ॥

भावत्वाभावत्वानधिकरणत्वमत्र भावाभाववैलक्षण्यपदार्थः; तस्य भावत्वानधिकरणत्वाभावत्वानधिकरणत्वरूपत्वेन प्रथमकल्प इव तदन्यतरत्वस्य विवक्षणीयतया भावेऽभावत्वानधिकरणत्वस्य, अभावे भावत्वाधिकरणत्वस्य स्वीकारेण तद्वदेव सिद्धसाधनात्, अर्थान्तरता च ॥

न चात्र भावत्वाभावत्वोभयशून्यत्वरूपतृतीयप्रकारस्य प्रत्येकं पक्षतामादाय साधनस्य विवक्षणेन तस्यासिद्धतया सिद्धसाधनाद्यनवतारः; एकैकस्य भावत्वाभावत्वानधिकरणत्वस्यास्माकमपीष्टेः सिद्धसाधनात्, भावस्य भावत्वाधिकरणत्वेऽप्यभावत्वानधिकरणत्वात्, एवमभावत्वस्याभाववत्वेऽपि भावत्वानधिकरणत्वेनोभयानधिकरणत्वस्य सर्वत्र स्वीकारात् ॥

न च भावत्वानधिकरणत्वाभावत्वानधिकरणत्वस्यैव भावाभाववविलक्षणत्वरूपत्वात्, तस्य च प्रत्येकमसिद्ध्या न सिद्धसाधनम्; विश्वस्य सतो भावत्वानधिकरणत्वस्य बाधात्, एवमभावस्याप्यभावत्वानधिकरणत्वस्य बाधात् ॥

एकत्रोभयानधिकरणत्वस्य बाधात्, सतो विश्वस्याभावत्वानधिकरणत्वांशमात्रसिद्ध्यांशतः सिद्धसाधनम्, असिद्धसन्निधानेऽपि सिद्धस्य सिद्धत्वानपायेन विशिष्टसाधनासम्भवान्नोभयसाधनम्, विशिष्टस्य साध्यांशनिवेशे तु साध्ये व्यर्थविशेषणता॥

प्रत्येकं भावत्वाधिकरणे भावत्वानधिकरणत्वम्, प्रत्येकमभावत्वाधिकरणेऽभावत्वाधिकरणताऽपि तु न क्षोदक्षमा; प्रतिभावं भावत्वानां विलक्षणत्वेनैकस्मिन् भाव एकभावत्वाधिकरणत्वेऽपि भावत्वान्तरानधिकरणत्वमादाय, एवमेकत्राभाव एकाभावत्वाधिकरणत्वेऽप्यभावत्वान्तरानधिकरणत्वेन सिद्धसाधनावारणात्; भावे भावत्वान्तरानधिकरणत्वस्याऽभावेऽभवत्वान्तरानधिकरणत्वस्य च सत्त्वात् ॥

भावत्वाभिमते, अभावत्वाभिमते च सर्वथा भावत्वानधिकरणत्वस्य, अभावत्वानधिकरणत्वस्य च विवक्षणमपि न युक्तम्, येन तत्तद्भावाधिकरणत्वस्य विवक्षणेन तस्य चासिद्धतया न सिद्धसाधनता; सत एव भावस्याभावत्वानधिकरणत्वांशस्य सिद्धतयांऽशतः सिद्धसाधनस्यावारणात्। एवमसतोऽभावत्वानधिकरणत्वमादाय सिद्धसाधनात्। साध्ये विशेषणान्तरवैयर्थ्यमूहनीयम्, एकैकत्रैकैकांशस्य सिद्धस्य सत्त्वात् ॥

अभावस्याभावत्वानधिकरणत्वम्, एवं भावस्य भावत्वानधिकरणत्वं चाभावस्य भावत्वे भावस्याभावत्वे पर्यवस्यति। तत्र च भावाभावव्यवस्था विपरीता स्यात्, इत्यंशतो बाधोऽपि। अनुमानबलात् तथा साधनं तु न मिथ्यात्वसिद्धावुपयुज्यते—इति ॥

भावाभाववैलक्षण्यादेर्निर्दुष्टस्य निरुक्तिः।

न चेदं क्षोदक्षमम्; भावत्वानधिकरणत्वाभावत्वानधिकरणत्वाभ्यां तस्य तस्य तत्तद्धर्मानधिकरणत्वमात्रस्य विवक्षणात् भावत्वाभावत्वानधिकरणत्वा-

भ्यां नञ्द्वयं प्रकृतार्थं दृढीकुरुत इति न्यायेन तत्र भावत्वाभावत्वपर्यन्तं व्यापारानङ्गीकारात्। तच्च तत्र न सिद्धम्, इति न सिद्धसाधनम्, न वाऽनुपयुक्तम्; तत्तद्धर्मिणि तत्तद्धर्माभावस्यैव मिथ्यात्वात्, भावस्य भावत्वाभावत्वस्यैव मिथ्यात्वात्, भावस्य भावविलक्षणत्वस्य, अभावस्याभावविलक्षणत्वस्यैव च मिथ्यात्वात्। न चैवं सति भावाभावव्यतिकरमात्रम्, येन तस्यानुपयोगः स्यात्॥

एतेन—विद्यमानत्वाविद्यमानत्वे अपि—व्याख्याते; स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व एव पर्यवसानात्, तस्य चासिद्धत्वेन सिद्धसाधनानवतारात्॥

सत्त्वासत्त्वानधिकरणत्वं वा सदसद्विलक्षणत्वम्। न चात्रापि सत्त्वासत्त्वव्यतिकरमात्रं स्यात्, येन सदसत् स्यात्, असच्च सत् स्यात्। न वा सत्त्वासत्त्वयोरेकैकवैलक्षण्यस्यैकैकत्रासत्त्वेनांशतः सिद्धसाधनम्; सत्त्वभावासत्त्वाभावोभयस्य, सत्त्वानधिकरणत्वविशिष्टासत्त्वात्यन्ताभावस्य, सद्भेदासद्भेदोभयवत्त्वस्य वा सदसद्विलक्षणत्वपदार्थत्वेनैकसत्त्वेऽप्युभयासिद्ध्या सिद्धसाधनाभावात्, विशिष्टसाधन उभयसाधने वांशतः सिद्धसाधनस्यादूषणत्वात्॥

अनुगतसत्त्वासत्त्वव्यवस्था।

यत्तु—सत्त्वं नामैकमनुगतं नास्ति, किन्तु प्रतिनियतानि प्रतिवस्तु सत्त्वानि भिन्नानि, एवमेव भावत्वमपि, इति भावाभावविलक्षणत्वपक्षोक्तानां सर्वेषां कल्पानामत्रानुसन्धानम्, तदिदं सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयरूपस्यैव सदसद्वैलक्षण्यस्य मिथ्यात्वरूपत्वस्वीकारात्, सत्त्वस्याबाध्यत्वरूपस्य ब्रह्ममात्रनिष्ठस्यैकत्वेन तत्तादात्म्यमात्रस्य प्रतिवस्तु नियतत्वेन सत्त्वभेदासम्भवात्, प्रतिवस्तु प्रतिनियतानां सत्त्वानामर्थक्रियाकारित्वादीनां मिथ्यात्वविरोधिनामत्र विवक्षणात्, अबाध्यत्वानधिकरणत्वस्यैव सद्वैलक्षण्यपदार्थत्वात्, असद्वैलक्षण्येऽसत्पदेन क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य सत्तादात्म्यपर्यवसितस्य, अबाध्यत्वाभावरूपस्य चैव सत्त्वासत्त्वोभयाभावपदार्थत्वात्, सत्त्वाभावसमानाधिकरणासत्त्वाभावपदार्थत्वात्, सद्भेदासद्भेदघटकसदसद्भेदविवक्षोपयोगित्वाद्वा सदसद्वैलक्षण्यस्य प्रतिवाद्यसम्मतस्यात्र साधनाद् न सिद्धसाधनादि॥

अत्र सत्तादात्म्यपर्यवसितस्यासत्त्वाभावस्य विवक्षणमेकसत्तावादेन, सत्तात्रैविध्यवादे तु ज्ञाननिवर्त्यत्वादिकमन्यदेव मिथ्यात्वम्, न तु सदसद्विलक्षणत्वं मिथ्यात्वमिति वस्तुस्थितिः ॥

सत्त्वासत्त्वयोः परस्परविरुद्धत्वाभावादपि सत्त्वाभावासत्त्वाभावोभयवत्त्वम्। न चानिर्वाच्यत्वसिद्धेः प्रागयं विप्रतिषेधो निवारयितुं शक्यः; अस्यैवानिर्वाच्यत्वरूपत्वात्। विप्रतिषेधो हि लोकप्रसिद्धस्योपन्यासे स्यात्, न तु श्रुत्यर्थस्यैवानुवादे; किमिव वचनं न कुर्यादिति न्यायात्, प्रत्यक्षाद्यपेक्षयाऽऽगमप्राबल्याच्च। तत्र यद्यपि न श्रौतेऽर्थे हेत्वाकाङ्क्षा; तथापि हेतूपन्यासेन साधनं विप्रतिपन्नं प्रति श्रुत्यर्थमुपपादयितुम्।

साक्षिणो मिथ्यात्वाभावाप्रमापकत्वम्।

न च सतो विश्वस्यासद्वैलक्षण्यं स्वयं सदेव साक्षिप्रमितम्, इति साक्षिणा मिथ्यात्वाभावस्य बोधनात् तेन बाधितं प्रपञ्चमिथ्यात्वानुमानम्; साक्षिणो विद्यमानमात्रभासकत्वेन मिथ्यात्वस्य, असतो वा प्रतियोगिनो भाविनो ग्रहीतुमशक्यत्वेन मिथ्यात्वाभावस्य, असद्वैलक्षण्यस्य वा ग्रहीतुमशक्यत्वात् ॥

न हि विना प्रतियोगिग्रहणमभावप्रत्यक्षं कुत्रापि; विद्यमानार्थग्राहित्वात् साक्षिणः, व्यावहारिकसत्त्वस्यैव प्रतीतिदशायां घटादौ, वेदे वा सत्त्वात्। सर्वं वस्तु ज्ञाततया, अज्ञाततया वा यद्यपि साक्षिभास्यम्, न तु तत् स्वरूपेण, किन्तु चैतन्येऽध्यस्तरूपेण; अन्यथा प्रमाणव्यापारवैयर्थ्यात्, सर्वदा सर्वभानापत्तेश्च ॥

साक्षिज्ञानं तु प्रमाऽप्रमासाधारणं न प्रमैव। अत एव शुक्तिरूप्यादीनां साक्षिभास्यानां नाभानापादकमज्ञानम्, उत्पद्यमानानामेव सतां यावत्प्रतीति भानात्। घटादीनां तु न तथा; अज्ञातानामपि तेषां तेनैव रूपेण स्वरूपतः सत्त्वात्, इति साक्षिभास्यं न प्रमितमिति नियमः ॥

सदसत्पदाभ्यां ब्रह्म-शशशृङ्गादिविवक्षायां तु सिद्धसाधनं स्यात्, इत्यबाध्यविलक्षणत्व-तुच्छविलक्षणत्वोभयवत्त्वमेव विवक्ष्यते, इति सदसद्भिन्नत्वं मिथ्यात्वमपि न दुष्टम् ॥

एतेन—

"यद्यच्येताऽपि सर्वस्मादिति सद्भेदसंस्थितिः ॥"

इति—परास्तम्; सदनेकत्वानङ्गीकारात्, अबाध्यभिन्नत्वस्यैव

विवक्षणात्, सत्ताद्यनाश्रयत्वस्याविवक्षणाच्च, इति ब्रह्मवत् सद्रूपत्वमादा-यार्थान्तरमपि नावसरति। अधिकं तु वक्तव्यमत्र पूर्वमेवोक्तम्।

तदेवं विवादपदम्, सदसद्विलक्षणम्, ज्ञानबाध्यत्वात्, शुक्तिरजतव-दित्यनुमाने साध्यदुर्वचत्वं परिहृतम्। अतोऽवसरप्राप्तं हेतुसमर्थनम्॥

तत्र ज्ञाननिवर्त्यत्वं दृश्यत्वहेतुना साधितं हेतुतया विवक्ष्यते। न च तस्यासिद्धिः, अप्रसिद्धिर्वा। एवमेव प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रति-योगित्वमपि; श्रुत्यर्थोपबृंहणार्थत्वादनुमानस्येत्यद्वैतिनः॥

अत्रेदमनुव्याख्यानम्—

प्रपञ्चबाध्यात्वानुमाने ज्ञानबाध्यत्वहेतुनिरसनम्।

"ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः।
विज्ञातस्यान्यथा सम्यग् ज्ञानं ह्येव हि तन्मतम्॥
असद्विलक्षणज्ञस्य ज्ञातव्यं ह्यसदेव हि।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते॥
अन्यथात्वमसत्तस्माद् भ्रान्तावेव प्रतीयते।
सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता॥"

इति। अयं भावः-अद्वैतिनां मिथ्यात्वप्रकाराः सर्वेऽपि दृश्यत्वहे-तुका एव। तत्र यथा सदसद्विलक्षणत्वं न दृश्यत्वहेतुना सिद्ध्यति; तस्य दुर्वचत्वात्, एवं ज्ञाननिवर्त्यत्वम्, प्रतिपन्नोपाधौ त्रैका-लिकनिषेधप्रतियोगित्वमन्यद्वा न सिद्धम्; अन्यथा दृश्यत्वा-दित्येवात्रापि कुतो न हेतूकृतम्॥

प्रपञ्चस्य ज्ञानबाध्यत्वाभावाद् हेत्वसिद्धिः।

न च ज्ञाननिवर्त्यत्वमन्यद्वा वाद्यभिमतं प्रतिवादिनां द्वैतिनां सिद्धम्। अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन बाध एव हि ज्ञाननिवर्त्यत्वं पराभिमतम्। न चायं प्रपञ्चे द्वैतिनां सम्मतः, किन्तु मुद्गरप्रहारादिना घटस्येवेश्वरज्ञाने-च्छा-प्रयत्नव्यापारैर्नाश एव। न च स हेतुर्भवति; पक्षैकदेशेऽ-विद्यायां प्रकृतिशब्दवाच्यायामीश्वरशक्त्यामसिद्धेः॥

वस्तुतस्तु—ज्ञाननाश्यत्वं सत्यस्याप्यस्ति। न च विपदे

बाधकस्तर्कः कोऽपि; "नेह नानास्ति किञ्चने"ति श्रुत्यर्थमुपपादयितुं प्रवृत्तस्यास्यानुमानस्य श्रुत्यर्थनिर्णयात् पूर्वं श्रुत्यनुसार्यर्थविशेषपरत्वमादाय प्रवृत्तिस्तु न युज्यते ॥

अयमेव न्यायः "तरति शोकमात्मविदि"त्यादिवाक्यार्थेऽपि, इति मिथ्यात्वस्य श्रुत्यर्थानुयायित्वं न तन्निर्णयात् पूर्वं वक्तुं शक्यम्। अतः "तरति शोकमात्मविदि"त्यादि वाक्यसिद्धं न बाध्यत्वम् ॥

अज्ञानस्य सह कार्येण वर्तमानेन, प्रविलीनेन वा ज्ञानेन निवृत्तिर्बाधः। न च प्रतिवादिनां द्वैतिनां सम्मतं बाधस्वरूपमादाय बाध्यत्वं वक्तुं शक्यते; अन्यथा ज्ञातस्यान्यथा सम्यग ज्ञानमात्रस्य बाध्यत्वस्य द्वैतिसंमतत्वात्। तस्य च सर्वदा यथावदेव सम्यगेव ज्ञातस्य नोक्तविधं बाध्यत्वम्। यथा सत्य आत्मा देहाद्यात्मना ज्ञातो वेदान्तजन्यसम्यग् विज्ञानविषयः, देहादि बाध्यस्वरूपं चेति ॥

अत्र "श्रोतव्यो मन्तव्यः" इति श्रुतिर्हि वेदान्तार्थस्य श्रवणकालेऽवगतस्योपपादनार्थं मननं विधत्ते, तदनुकूलयुक्तिरपि तदुपबृंहणार्थं कर्तव्येति ॥

न ह्यनुमानाधीनमेव श्रुतिप्रामाण्यं भवति, इत्यपौरुषेयस्य वेदस्य स्वतः प्रामाण्याद् नानुमानापेक्षं वेदप्रामाण्यं नैयायिका इव वेदान्तिनोऽपि केऽपि मन्यन्ते। तदुक्तम्—"तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इति ॥

श्रुतिश्च—"तरति शोकमात्मवित्" इति ज्ञाननिवर्त्यत्वं साक्षादज्ञानस्य "तरत्यविद्यां विततामि"त्यादय इव प्रतिपादयति। तच्चाज्ञानस्य, अविद्यापदवाच्यस्य, मायापरपर्यायस्य वा ज्ञानेन निवृत्तिं विना नोपपद्यते ॥

सति चैवं श्रुत्यर्थस्यावगतस्य विप्रतिपन्नस्यानुकूलोपपत्तिर्लोकसिद्धदृष्टान्तेन सम्भवति वा, न वेति विशयेऽनुमानेन तदुपपादनार्था प्रवृत्तिः। तत्र च लोकसिद्धमाबालगोपालानुभवगोचरं च शुक्तिरूप्यं दृष्टान्तं दृष्ट्वा तदनुसारेणानुमानं प्रवर्त्यते ॥

अज्ञानेन सह कार्यस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वं श्रौतम्।

तत्र तत्तद्दर्शनस्य तत्तत्सिद्धान्तमात्रसिद्धसत्ख्यात्यसत्ख्यात्मख्यात्यादीनां मध्ये का वा ख्यातिरवलम्बनीयेति विप्रतिपत्तौ ज्ञानेनाज्ञाननिवृत्तिद्वारा शुक्तिरूप्यादिबाधो यथा व्यवस्थापयितुं शक्यते, तथैव भ्रान्तिव्यवस्थामङ्गीकृत्य श्रुत्यर्थो वर्णनीयः, यथाश्रुतश्रुत्यर्थनिर्णयार्थत्वादनुमानस्य, न तु यथाश्रुतं श्रुत्यर्थमन्यथयितुमनुमानम्, श्रुत्युपकारकस्यानुमानस्य श्रुतिबाधनाक्षमत्वात्॥

अस्तु वा दार्शनिकानां विप्रतिपत्तिभ्रमविषये, आबालगोपसिद्धानुभवानुसारिणी, श्रुत्युपष्टब्धा चानिर्वचनीयख्यातिः, अन्यथा स्वस्वस्वतन्त्रसिद्धान्तानुसारेण श्रुत्यर्थनिर्णयो दुःस्थ एव स्यात्। "भूयश्चान्ते विश्वमायानिवृत्तिः" इति मायाया अपि निवृत्तिं साधयति, इति शुक्तिरजतादिस्थले रजतस्येव तदुपादानाज्ञानस्यापि नाशात् शुक्तिरजतदृष्टान्तानुसारि बाध्यत्वानुमानम्॥

ज्ञाननाश्यत्वं तु नात्र यत्किञ्चिज्ज्ञाननाश्यत्वरूपम्, किन्तु—'सदेवे'त्यादिवाक्यसिद्धसर्वोपादानात्मज्ञाननाश्यत्वम्। स्वोपादानज्ञाननाश्यत्वं तु कार्यस्यापि परिणामिविधयाऽज्ञाननाशद्वारापि शुक्तिरूप्यादावेव, इति स्वतन्त्रसिद्धान्तदृष्ट्या प्रकृत्यनाशादिकं सर्वं श्रुत्युपजीव्यनुमानद्वारा श्रुतिव्याहतमेव। परिणामिकारणं नश्यति। ब्रह्म न परिणामिकारणमिति भास्करमतं द्वैतिभिरपि निरस्यते, एवमार्हतमतपरीक्षायामात्मशरीरपरिमाणता॥

"यद्वस्त्वन्यथा भावि तदनित्यमिति गीयते।"

इत्यनुव्याख्याने परिणामिनोऽनित्यत्वं स्वीकृतम्। न चैतत् प्रकृतेः परिणामिन्या नित्यत्व उपपद्यते। अतोऽज्ञानस्य ज्ञानेन न नाश इत्यपि न युक्तम्; अन्यथाऽसत्ख्यातेः, सत्ख्यातेर्वाऽप्यसिद्धत्वात्, चार्वाकादीनां श्रुतिप्रामाण्यस्याप्यसिद्धत्वात् श्रुत्यर्थनिर्णयो दुःस्थ एव स्यात्, इति श्रुत्यर्थस्य प्रतीतस्य विप्रतिपन्नस्योपपादनार्थमेवानुमानाद्यपेक्षणात्, अनुमानेन प्रतीतश्रुत्यर्थान्यथानयनं न निरालम्बम्, न वाऽप्रामाणिकम्। अतो ज्ञानबाध्यत्वं सर्वस्य श्रुतं यथोपपद्यते, तथा शुक्तिरूप्यदृष्टान्तानुसारेणानिर्वचनीयख्यात्यैव श्रुत्यर्थो वर्णनीयः॥

तत्रात्मज्ञानं देहात्मज्ञाने बाधः, शुक्तिज्ञानं रजतज्ञाने बाध इति द्वैतिनो मन्यन्ते। तत्र बाध्यत्वं कस्य? यत्पूर्वमन्यात्मना ज्ञातम्, तदेव बाध्यमिति स्वीकर्तव्यम्; न त्वात्मैव बाधरूपज्ञानविषयो बाध्योऽपि। यद् बाधज्ञाने विशेष्यतया विषयः, तदेव बाध्यम्, न तु बाधकज्ञानविषयः शुक्त्यादिरपि ॥

एवं बाधज्ञानेनाज्ञाननिवृत्तिरेव सर्वत्र फलमित्यपि स्वीकर्तव्यम्, इति स्वविषयकाज्ञाननिवर्तकस्वज्ञानस्य बाधज्ञानत्वादज्ञाननिवृत्तिं विना कथं बाधज्ञानं नाम? अज्ञाननिवृत्तिमात्रेण विषयस्यापि निवृत्तिस्तु शुक्तिरूप्यादिस्थले दृश्यते, इत्यन्यथा ज्ञातस्यान्यथा सम्यग् ज्ञानस्य बाधत्वेऽप्यज्ञान-तत्प्रयुक्तयोर्निवृत्तिरङ्गीकर्तव्या। न चात्र सदसद्विलक्षणत्वादाविव व्याघाताशङ्काऽपि ॥

अयमेव न्यायः—"नेह नानास्ति किञ्चने"ति श्रुतिप्रतिपन्नोपाधिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि। 'नेदं रजतम्' 'नात्र रजतमि'ति चानुभवोऽपीदंकाराभिमुखप्रवृत्त्यनन्तरः रजतत्वेन ज्ञातायाः शुक्तेः शुक्तित्वेनाऽन्यथा ज्ञानं बाधरूपं रजतस्य साक्षाद् निषेध्यत्वम्, शुक्तौ तदभावं च गमयति। निषेधस्तु प्रसक्तस्यैव, नाप्रसक्तस्य, इति कथमसतः शुक्तावप्रसक्तस्यानिषेद्धव्यस्य च निषेध्यत्वमपि?

द्वैतिनामसत्ख्यातिनिरासः,
अनिर्वचनीयख्यातिसमर्थनं च।

न च सदिवासदपि बाध्यं नाम। अपरोक्षतया प्रतीतिरपि नासतोऽन्यत्र कुत्रापि। न हि शशशृङ्गं कुत्रापि प्रत्यक्षम्। सत्त्वेन प्रतीतिरपि तस्य बाधिता। द्वैतिनस्तु सर्वप्रमाणविरुद्धम्, लोकानुभवविरुद्धं चासतोऽऽप्यपरोक्षत्वम्, सद्रूपेण प्रतीयमानत्वं चोरीकृत्यासत्ख्यातिमाद्रियन्ते—सदृशस्य प्रधानस्यासदन्तरस्याप्रसिद्धत्वेऽपि, असत्त्वाविशेषेऽपि रजतस्यैवासतो भानं निर्मूलं स्वीकृत्य श्रुत्यर्थं चान्यथयन्ति। नैवमद्वैतिनः, इति ज्ञानबाध्यत्वेन सदसद्विलक्षणत्वानुमानं निर्दुष्टम्। तत्रान्यथा ज्ञातस्यान्यथासम्यग् ज्ञानं बाध इति वादो यदि ब्रह्मान्यथाज्ञानातिरिक्तमूलाविद्याऽस्वीकारेण, तर्हि महदादिरूपेण परिणममानभावरूपाविद्यायां प्रमाणाभावापत्त्या द्वैतिनां सत्कार्यवादायोगः। तत्राविद्या, प्रकृतिरिति चानर्थान्तरम्। तस्या विक्षेपशक्तिरिवाऽऽवरणशक्तिरपि वर्तत इति त्वद्वैतवाद इति

त्वन्यदेतत्। तत्र यदि व्यवहारान्यथानुपपत्त्या मिथ्याज्ञानातिरिक्ताविद्याङ्गीकारः; तर्हि प्रकृतेऽपि समानम्; अत्रापि हानादिव्यवहारोपपादनात्। यदि भ्रमे तदुपादानत्वे सत्यरजतभानापत्तिः तर्हि तत्रासत्यरजतोपादानं तूलाविद्या, पल्लवाविद्या वा व्यवहारकाल एव बाध्या स्वीकर्तव्या॥

अविद्याश्रय-विषयव्यवस्था।

विना विषयं वृत्तिरूपं ज्ञानमिति योगाचारः, देशान्तरस्थरजतस्य भानं त्वन्यथाख्यातिः; तत्रैवापूर्वरजतपरिणामः तूलाविद्याया इत्यनिर्वचनीयख्यातिः; यत एव सविषयज्ञाननिर्वाहः॥

अविद्या चेयं जीवाश्रयैवेति भामतीप्रस्थानम्। तथापि तत्तज्जीवमात्रानुभवस्तु जागरादावपि जगतस्तद्विषयस्यैकस्यैव ब्रह्मणोऽधिष्ठानत्वात् इति, न तत्तन्मात्रानुभाव्यत्वापत्तिः स्वाप्नानामिव। "असदेव रजतमभात्" इति तु लौकिकपरमार्थत्वाभावः, अबाध्यत्वाभाववादो वा। अधिष्ठानज्ञानमात्रनाश्यत्वं तु सोपादानस्य कार्यस्य नानिर्वचनीयत्वमन्तरा। सन्निति प्रतीतिः सत्तासामान्यपरो मिथ्याभूतस्यापि वियदादेः॥

सत्पदार्थनिष्कर्षः।

यत्तु—जगत् न ब्रह्मवत् सद्रूपम्, असद्वा; अभावसाधारण्येन कार्यसामान्यस्य सन्नित्यनुगतैकरूपप्रतीतिस्तु सद्रूपोपादानब्रह्मतादात्म्येन। तत्तु सत्तासामान्यादीनामपि सत्त्वानाम्, इति जगतः सदसद्वैलक्षण्यमबाधम्॥

द्वैतसिद्धान्ते तु क्वचित् सत् क्वचित् प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगि, कचिच्च मूर्तमित्यननुगतः सत्पदार्थः। परन्तु तन्मते शशशृङ्गादीनामपि सत्प्रतीतिविषयत्वम्। तच्चोक्तत्रिविधसत्पदार्थेष्वन्यतमाभावादपरः सत्पदार्थः इति वक्तव्यम्॥

अद्वैतमते तु मुख्यः सत्पदार्थो ब्रह्मैवैकमधिष्ठानम्, तत्तादात्म्येन तु तुच्छव्यतिरिक्तानां सर्वेषां सदिति प्रतीतिमात्रम्, न तु सत्पदार्थताऽपि, इति सत्पदार्थस्य सत्प्रतीतिविषयतानिर्वाहकस्य कस्यापि तदभिमतस्याप्यभावेनाप्यसत्ख्यात्यनुपपत्तिः॥

मिथ्यात्वानुमाने शुक्तिरूप्यदृष्टान्तोऽनिर्वचनीयख्यातावेव ।

अत एव शुक्तिरूप्यादिदृष्टान्तसिद्धिरपि । दृष्टान्तो हि लोकसिद्ध-प्रतीतिमादायैव, न तु स्वतन्त्रसिद्धान्तानुसारेण। शुक्तिरूप्यदृष्टान्तस्तु सद्रजतम् इत्यनुभवारूढोऽनिर्वचनीयवादेन, अन्यथाख्यातिवादेन, सत्ख्यातिमतेन, अख्यातिवादेन वा, नासत्ख्यातिवादेनोपपद्यते ; अन्यथा अख्यात्यन्यथाख्याति-सत्ख्यातिवादा असत्ख्यातिवादिनामपि नाभिमता: ; इति परिशेषादनिर्वचनीयख्यातिरेव तत्र गति: ॥

प्रतिपन्नोपाधौ निषेधमिथ्यात्वोपपत्ति: ।

एतेन—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमपि—व्याख्या-तम्। तच्चेदमसत्साधारणम्, असत्त्वं वा ; स्वाधिष्ठानरूपस्वोपाधिपदा-र्थस्य तत्राप्रसिद्धत्वात्, विशिष्टस्य तस्यासत्त्वाभावरूपत्वाभावात्, तत्सा-धारण्याभावाच्च। अत एव शुक्तिरूप्यादीनां शुक्तावभावेन बाध्यत्वप्रसिद्धि: ॥

बाध्यत्वमिथ्यात्वसमर्थनम् ।

बाध्यत्वं हि नेदं रजतमिति शुक्तौ स्वरूपतो रजताभाव: । स च शुक्तिरियमिति विरोधिभावान्तरमात्रज्ञानफलरूप:, न तु स प्रथमतो भि-न्न: । अयं तु शाब्दबाधस्यापि ब्रह्मसाक्षात्कारस्य विरोधिभावान्तरज्ञान-त्वात् साधारण:; ब्रह्मसाक्षात्कारस्यैवाज्ञान-तत्प्रयुक्ताभावरूपत्वात्, तत्त्वोप लक्षितब्रह्मरूपत्वाद्वा। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित:"

इति ॥

असत्ख्यातिनिरास: ।

असतो रजतस्य सत्त्वादिनावगतस्यासत्त्वादिविज्ञानं बाध इति बाधलक्षणं तु संवाद्यर्थक्रियाकारिभ्रान्तिविषयसदृक्षप्रधानात्मतानिरा-सस्यैव बाधरूपत्वाद् असद्रजतसदृशप्रधानासद्रजतान्तराप्रसिद्ध्या प्रधा-नासदात्मतानिरासस्यासम्भवेन बाधज्ञानेनासत्त्वात्मतयाभानेन न सम्भवति ॥

सद्रजतस्य तु न भ्रमे भासमानरजतसादृश्यम्, तत्प्राधान्यं वा; "असदेवेदं रजतमभादि" ति प्रतीते: स्वरूपतो निषेधेन, पारमार्थिक-

त्वाकारेण निषेधेनैवोपपत्तिः, इत्यन्यथा ज्ञातस्यान्यथा सम्यग् ज्ञानत्वमिति बाधलक्षणं घटादीनामपि वस्तुगत्या बाध्यत्वेन तद्बाध्यतानुभवस्य प्रमात्वापादकतया घटादिव्यावहारिकप्रमाणस्य सर्वत्र भ्रान्तित्वमेवापादयेत् । न च घटादीनां बाध्यत्वेनानुभवो नास्ति । शुक्तिरूप्यज्ञानवतामप्याप्तवाक्येन तदसत्त्वोपदेशेऽपि तदसत्त्वाज्ञाने किं शुक्तिरजतं सदेव ?

तत्र यदि तस्य बाधयोग्यत्वाद् भ्रमत्वम्, तर्हि प्रकृतेऽपि समानम् । न ह्येकस्यापि घटादिज्ञानं भ्रम इत न ज्ञातम्; अन्यथा जात्यन्धानां विपरीत रूपविशेषज्ञानस्यापि प्रमात्वापातः । यदि चक्षुष्मतामेव वाक्यम्, अनुभवो वा तत्र प्रमाणम्, तर्हि प्रकृतेऽपि तत्त्वज्ञानिनः, स्थितप्रज्ञाः जीवन्मुक्ता वा पृच्छ्यन्ताम्, तेषामेव ह्यनुभवस्तत्र प्रमाणम् ॥

अत एव गीतं भगवता—

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" ॥

इति ॥

द्वैतवादे बाधज्ञाननिष्कर्षायोगः ।

तत्रान्यथा ज्ञातस्यान्यथा ज्ञानमेव बाध इत्युक्त्यापीष्टसिद्ध्या किं सम्यगिति विशेषणेन ? न च धारावाहिकभ्रमे रजतत्वेनावगतस्य शुक्तिशकलस्य पुनर्नागवङ्गत्वादिना ज्ञानस्य बाधत्ववारणार्थं तद्विशेषणम्; सर्वत्र भ्रमेऽसत एव भानमित्यसत्ख्यातौ को वा विशेषो रजतस्य, नागवङ्गस्य वा, निर्विशेषेऽसति रूप्य-नागवङ्गादिभेदस्यासम्भवात् ॥

तत्राप्यसदेव सत्त्वेनैव प्रतीयते, न त्वसत्त्वेन, इति न तत्रान्यथाज्ञातस्यान्यथा ज्ञानम्, येन तदपि बाधज्ञानं स्यात् ?

किञ्च तत्तद्भ्रमकारणमन्यथा ज्ञानम्, अज्ञानं वा किमेकम्, उतानेकानि । आद्य एकेन बाधज्ञानेन सर्वभ्रमनिवृत्तौ क्रियासमभिव्याहारो भ्रमाणां नोपपद्येत । अनेकत्वे तु तत्तदज्ञानानिवृत्तौ कथमेकत्र न भ्रमान्तरोत्पादः ? अन्यथा ज्ञानम्, अज्ञानं च यदि यावद्बाधमनुवर्तते, तर्हि तत्र कथं न तस्यैव भ्रमान्तरोत्पादः ? कथं च बाधज्ञानान्तरेण भ्रमान्तरस्य

निवृत्तिः ? इत्यन्यथा ज्ञातस्य रजतस्यान्यथा ज्ञानं नान्यत्र । शुक्तिशकलस्य खलु तत्राज्ञानम् । सत्त्वेन ज्ञातस्य रजतस्यासत्त्वेन ज्ञानं कथं शुक्तिरियमिति ज्ञानम् ? न हि सत्त्वेन ज्ञातस्य रजतस्यासत्त्वेन ज्ञानं शुक्तिरियमिति ज्ञानम् । तत्र रजतस्य तदसत्त्वस्य वा कस्याप्यभानात् ॥

यदि "असद्रजतमभात्" इति ज्ञानमेव बाधज्ञानम्, तर्हि सत्त्वेन ज्ञातस्य रजतस्य वङ्गत्वेन ज्ञानं कथं नान्यथा ज्ञातस्यान्यथा ज्ञानम् । न हि असदेव रजतं सत्त्वेन तत्र प्रतीयते, इति व्यर्थं सम्यकूपदमत्र । सति चैवमेकस्यैव सुवर्णस्य कटक-कुण्डल-ग्रैवेयकादिरूपेणान्यथा ज्ञातस्यान्यथा ज्ञानं कथं न बाधज्ञानं स्यात्, इति बाधलक्षणं द्वैतवाद्यभिमतं न क्षोद-क्षमम्, इति विनापि द्वितीयान्यथापदमन्यथा ज्ञातस्य सम्यग् ज्ञानं कथं न बाधः ? आस्तामियं प्रासङ्गिकदलप्रयोजनकथा ॥

एकेनान्यथा ज्ञातस्य पुरुषान्तरस्यान्यथा सम्यग् विज्ञानमपि कथं न बाधः । न हि पुरुषान्तरभ्रमस्य पुरुषान्तरसम्यगूज्ञानं बाधो नाम; अन्यथा यस्य कस्यचित् सम्यगूज्ञानेन सर्वभ्रमनिवृत्त्या न कोऽपि भ्रान्तो जगतीतले स्यात्, किं बहुना ? ईश्वरस्य सम्यगूज्ञानमेव सर्वदा वर्तते, इति सर्व एवेश्वरतुल्याः स्युः । निरधिष्ठानं निरुपादानं च कथं भ्रमः, बाधज्ञानं वेति व्यवस्थाऽसत्ख्यातौ सुवचा ?

न च सर्वत्र सम्यगूज्ञानेन बाधो नाम; ज्ञानस्य क्षणिकत्वेन स्वत एव नाशात्, उत्तरज्ञानविनाश्ये बाधितत्वव्यवहाराभावाच्च । नाप्यर्थस्य शुक्तिशकलादेः तादवस्थ्यात्, रजतादेर्नित्यमसत्वाच्च, इति यदि पूर्वज्ञान-प्रसञ्जितस्यान्यथाकारस्य बाधः, तर्हि पूर्वोक्तदिशा पूर्वज्ञानप्रसञ्जित-सुवर्णकटकाकारस्य कुण्डलाकारसम्यगूज्ञानेन बाधनात् कटकाकारज्ञानमपि भ्रम आपद्येत ॥

अन्यथाज्ञानप्रसञ्जितस्यान्यथा ज्ञानं बाध इति त्वसतो निराकारत्वात् न विकल्पसहः । विपरीतख्यातौ ह्येकस्य सतोऽन्यसदाकारप्रतीत्या बाधः, न त्वसदाकारप्रतीत्या, इति नामान्तरेणाभिनवान्यथाख्यात्यादिनाम्ना व्यवहारोऽक्षतो रजतस्य भाने, परं तु स न विचारसहः ॥

असत एव रजतस्य भ्रमे भाने कुतः शुक्तावेव रजतस्य भ्रमः ? न त्वङ्गारादौ ? किञ्च तस्यापूर्वस्योपादानम्, अधिष्ठानं वा ? नच शुक्तेरसद्रजतेन,

असतो रजतस्य सत्यरजतेन वा समस्ति सादृश्यम्, असदन्तरं प्रधान्याद्वाऽत्र प्रसिद्धम्, असत्त्वाविशेषात्, असति विशेषाभावाच्च। कथं वा शशशृङ्गादिरूपेण न भ्रमः?

किञ्चान्यथा सम्यग्ज्ञानबाध्यान्यथाज्ञानविषयत्वं यदि बाध्यत्वम्, तर्हि केन कस्य बाधः—किं ज्ञानस्य, उतार्थस्य? आद्ये ज्ञानस्य क्षणिकत्वेन स्वयं नाशात् न ज्ञानान्तरनाश्यत्वम्, पूर्वज्ञानेनोत्तरज्ञाननाशेऽपि बाधत्वव्यवहारप्रसङ्गश्च। अर्थस्तु शुक्तिकादिः तदवस्थ एव। असत्तु न बाध्यम्॥

निवर्त्य-निवर्तकभावो हि परस्परविरुद्धविषयकत्वेनैव—यथाऽद्वैतसिद्धान्ते—समानविषयकज्ञानाज्ञानयोः परस्परविरुद्धयोः॥

अन्यथाज्ञानस्यान्यथा ज्ञानान्तरेण विरोधः कुतः? यदि सम्यग्ज्ञाज्ञानत्व-तदभावाभ्याम्, तर्हि विविच्यताम्—कुतः कस्य सम्यग्ज्ञानत्वम्, असम्यग्ज्ञानत्वं वा निर्धार्यते? यदि विसंवादिप्रवृत्तिजनकत्वेनासम्यक्त्वम्, तर्हि किं वा कृत्यं सम्यग्ज्ञानस्य? यदि तदन्यथानुपपत्तितो बाधज्ञानम्, तेन च पूर्वज्ञानस्य दोषजन्यत्वेनाप्रामाण्यम्, तर्हि दोषजन्यत्वज्ञानेनासम्यक्त्वे निर्णीते तदितरस्यान्यथाज्ञानस्य बाधत्वनिर्णयः, इति बाधत्वनिर्णयः पूर्वस्यान्यथाज्ञानत्वनिर्णयाधीनः, तन्निर्णयाधीनश्चोत्तरस्य बाधत्वनिर्णयः, इति तदा तदा प्रत्यक्षागमोद्धारादिविचार आपाद्यमानस्यान्योन्याश्रयदूषणस्य कः परिहारः?

यद्युत्तरस्य स्वतः प्रामाण्यान्न दोषः, तर्हि पूर्वस्य वा कथं न प्रामाण्यम्? यदि पूर्वोक्तरीत्या दोषजन्यत्वनिर्णयेन पूर्वस्य बाध्यत्वम्, तर्हि दत्त एव मार्गः स्वयं प्रत्यक्षस्यागमेन बाधाय। सत्यप्येवं सुवर्णस्य कटक-कुण्डलाद्याकारेणान्यथा सम्यग्ज्ञानेन कथं न बाधः? यद्युभयोरपि संवादिजनकत्वेन स्वतः प्रामाण्यम्, तर्हि प्रथमाकारज्ञानमप्यन्यथा सम्यग्ज्ञानम्, एवमुत्तरान्यथाज्ञानमपि, इत्युभयोरपि परस्परं न कथं बाधज्ञानत्वम्? अन्यथा ज्ञातस्यान्यथासम्यग्ज्ञानत्वाविशेषात्। अतो बाधितार्थविषयकज्ञानं भ्रमः, अबाधितार्थविषयकं ज्ञानं प्रमेति स्वीकर्तव्यम्॥

तत्रार्थस्य, ज्ञानस्य चोभयोरपि युगपद् बाधे प्रातिभासिकत्वम्, अन्यथा तु प्रमा। साऽपि सर्वत्र यावद्बाधमेव, सति तु बाधे सर्वत्र भ्रमः। अस्ति

चान्यथा ज्ञातस्य शुक्तिशकलस्य, रजतस्य वा शुक्तिरियमित्यन्यथा सम्यग् ज्ञानमपि । "सन् घटः" इत्यत्राज्ञातानन्दात्मसखण्डब्रह्मणोऽखण्डात्मनाऽसाक्षात्कारो बाधः । घटादिज्ञानस्यापि ज्ञाताज्ञाताधिष्ठानविषयत्वाद् बाधः, इति विरोधित्वेन प्रसिद्धयोर्ज्ञानाज्ञानयोर्बाध्य-बाधकभावः, इत्यनिर्वचनीयख्यातिरेव युक्ता ॥

सदसद्विलक्षणत्वादिनाऽनिर्वचनीयत्वनिरुक्तिः ।

न चानिर्वचनीयत्वं दुर्वचम्; तद्धि सदसद्विलक्षणत्वम् । न च तद् दुर्वचम्; तत्र निरुक्तिविरहः, निरुक्तिनिमित्तविरहो वा नानिर्वचनीयत्वमद्वैतिनोऽपि मन्यन्ते । अधिकं तु न्यायचन्द्रिकायाम् ॥

अयं भावः—सदसद्विलक्षणत्वं मिथ्यात्वम्, यथा शुक्तिरूप्ये । तथाहि-शुक्तिरूप्यं न सत्; बाध्यत्वात्, नाप्यसत्; सत्त्वेनापरोक्षतया प्रतीयमानत्वात् । तद्धि सदधिष्ठानकत्वेन, सत्तादात्म्येन वा । न च शशशृङ्गादौ सदधिष्ठानकत्वम्, अर्थक्रियाकारित्वं वा किमपि सत्तादात्म्यस्य सत्त्वस्य वा प्रयोजकमस्ति, येन तत् तथा प्रतीयेत ॥

अज्ञानेन भ्रमनिर्वाहोऽद्वैतवाद एव ।

असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यं खलु ज्ञानं नाम । तच्च चैतन्य-तदधिष्ठानकान्यतरविषयाज्ञानप्रयुक्तविषयमेव । न चेदमसदाकारविकल्पाख्यवृत्तौ निरधिष्ठानासद्विषयकम् । तत्र हि निर्विषयवृत्तिमात्रम्, नाज्ञानविशेषनिवर्तकं मुख्यं ज्ञानं प्रमाणजन्यम् । अतः सदसद्विलक्षणत्वरूपं मिथ्यात्वमविरुद्धम । ज्ञानबाध्यत्वविषये वक्तव्यं सर्वं पूर्वमेवोक्तम् ॥

तत्र द्वैतमतेऽपि।यद्यपि काम-कर्मातिरिक्तभावरूपमज्ञानमावरणशक्तिमद् जीवस्वरूपचैतन्यप्रकाशप्रतिबन्धकमीश्वराश्रितशक्तिरूपमूरीक्रियते, ईश्वरो हि सगुणोऽपि स्वप्रकाशचिन्मात्र इति च; तथापि तत्रापि प्रकाशस्वरूपस्येश्वरस्यापि स्वशक्तिद्वारा कथमावरकत्वमिति शङ्का समाना ॥

इयान् विशेषः—स्वाश्रिताविद्याख्यया शक्त्येश्वर आवृणोति जीवं स्वप्रकाशमपीति द्वैतमतम्, अद्वैतसिद्धान्तस्तु—अविद्यैव स्वप्रकाशं ब्रह्मचैतन्यमावृणोति—तत्तदुपाध्यात्मना नाम-रूपात्मना परिणममाना तत्तदुपाध्युपहितत्वाच्च । तत एव जीवोऽपि न स्वरूपमात्रेण प्रकाशते—इति ॥

तत्रेश्वरप्रसादद्वारा ज्ञानेन, भक्त्या वाऽज्ञाननिवृत्तिर्द्वैतमते, अद्वैतमते तु साक्षात् स्वविरोधिस्वसमानविषयकसाक्षात्कारेण साक्षादज्ञानस्य तत्प्रयुक्तादेश्चाज्ञाननिवृत्तिद्वाराऽज्ञानात्मना स्वरूपेण च निवृत्तिः ; ज्ञानस्यैव शुक्तिरजतादिस्थल इवेश्वरप्रसादापेक्षां विना निवर्तकत्वात् ॥

अज्ञानस्य, तत्प्रयुक्ताकाशादेश्च बाध्यत्वाविशेषः ।

सर्वं चेदं विशदीकृतं पूर्वमेव । पुनरप्यत्रानुसन्धानं तु तस्यैव ज्ञानबाध्यत्वस्य पुनरत्राप्याक्षेपमुपलक्ष्य । यद्यपि वियदादौ न साक्षाद् ज्ञाननाश्यत्वम् ; तथाप्यज्ञानोपादानकत्वाद् वियदादेः स्वोपादानाज्ञाननाशप्रयुक्तनाशप्रतियोगित्वमविशिष्टम् ॥

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥
हेमात्मना यथा भेदः कुण्डलाद्यात्मना भिदा ॥"

इति न्यायेन वियदादीनां कारणात्मना निवृत्तिरपि स्वरूपतो निवृत्तिरेव ; कारणस्वरूपातिरिक्तकार्यरूपस्य वाचारम्भणमात्रत्वात् , इति तस्यापि साक्षाद् ज्ञानेन निवृत्तिरबाधा ॥

न च वियदादि कार्यं "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिश्रुतिसिद्धं नित्यं नाम । तदपि तु कारणात्मनैव घटादिकमिव नित्यम् , न तु कार्यात्मना; प्राकृतप्रलयादौ तस्यापि कार्यात्मना विलयाम्नानात् । तत्र प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमपि वियदादेः कारणात्मनापि स्वाधिष्ठाने ब्रह्मण्यभावेनैव, इति न मिथ्यात्वस्य दुर्वचनम् ॥

अथ प्रसङ्गात् भ्रमविषयेऽख्यात्यन्यथाख्यात्यात्मख्याति-सत्ख्यात्यादिनिरसनं प्रस्तुत्य न्यायसुधाऽनिर्वचनीयख्यातिमपि पराकृत्यासत्ख्यातिपक्षं समर्थयति ॥

असत्ख्यातिसमर्थनप्रसङ्गेन शुक्तिकाया
रजतपरिणामित्वेन सत्ख्यातिवाददूषणानि ।

यत्तु—अख्यातिनिराकरणप्रसङ्गे शुक्तिकाया रजताकारपरिणामः किं सकारणः, उताकारणः ? नान्त्यः; कादाचित्कत्वानुपपत्तेः । सकारणत्वे न करणदोषः कारणम् ; करणसम्बन्धिनस्तस्य शुक्तिकापरिणामहेतुत्वायोगात् , अन्यथा सदैव सर्वपदार्थानां

रजताकारपरिणामप्रसङ्गात् । दुष्टकारणसंसर्गस्तु न शुक्तित्वापगमेन रजतपरिणामहेतुः ; पुरुषान्तरस्य शुक्तित्वाज्ञानप्रसङ्गात् । शुक्तित्वांशानपगमेन हेतुत्वे तु भ्रान्तेनापि शुक्तित्वं प्रत्येतव्यम् । शुक्त्यथाकारेण रजतस्य परिणामे तु सर्वदा रजतस्य तत्र सत्वाद् बाधोऽपि भ्रम एव स्यात् । न च तत्र कारणं करणदोषोऽस्ति अन्यथा तत्र समस्तप्रतिपत्तृसाधारणं रजतं प्रमीयेत, तत्तद्भ्रान्तपुरुषमात्रवेद्यं च तद् न स्यादित्यादिदूषणानि सत्ख्यातौ—इति ।

तत्रेमानि ख्यात्यन्तरदूषणान्यस्यासत्ख्यातावपि शुक्तेरसद्रजतात्मना परिणामे समानानि ; कारणस्य वक्तुमशक्यत्वादिदूषणानां तुल्यत्वात्, शुक्तावविद्यमानस्य, असतो वा रजतस्य भानं कथमिति पर्यनुयोगोऽसत्ख्यातावपि समानः । यत्तु शुक्तित्वानपगमे भ्रमो न स्यादिति, तदपि समानमेव ॥

अनिर्वचनीयख्यातेरदुष्टत्वम्, तदुपपादनं च ।

अनिर्वचनीयख्यातौ तु न शुक्ती रजतात्मना परिणमते, न वा शुक्तित्वापगमात् क्षतिः, दोषस्तु करणदोषः प्रातिभासिकभ्रमे, घटादिभ्रमे तु मूलाविद्यैव कारणं परिणामविधया, दोषविधया च । तत्र प्रथमे करणदोषेण शुक्तित्वावरणमात्रम्, शुक्त्यवच्छिन्नचैतन्याभिन्नशुक्तित्वविषयकाविद्या रजताकारेण, तदाकारवृत्त्याकारेण च परिणमते ; तत्तत्प्रमातृचैतन्यनिष्ठतूलाविद्याकार्यत्वात् प्रातिभासिकस्य रजतस्य तत्तत्पुरुषवेद्यत्वम्, घटादिभ्रमे तु प्रत्यगभिन्नचिन्मात्राश्रितमूलाविद्याकार्यत्वात् तस्याश्चैकत्वात्, सर्वाधिष्ठानचैतन्याश्रयत्वाच्च सर्वपुरुषवेद्यत्वोपपत्तिः । तदपि प्रमाणाधीनमेव, न तु स्वतश्चैतन्यस्यावृतत्वेनावरणविरोधिवृत्तिविशेषं विना तं तं प्रति भानासम्भवात्, सादृश्यज्ञानस्यापि प्रातिभासिकभ्रमे कारणत्वेन शुक्तिकायामेव रजतभ्रमसम्भवात्, 'न विलक्षणत्वा'धिकरणोक्तरीत्या सादृश्यस्यात्र कारणत्वानियमेन तन्नियमेऽपि सत्त्वेन प्रतीत्यर्हत्वेन साम्यस्य सम्भवाच्च सर्वाणि दूषणानि न प्रसरन्ति, इत्यनिर्वचनीयमेव रजतं भ्रमज्ञानस्य विषयः, तेन च नासतोऽत्र भानम् ॥

परे तु तत्सदृशरजततादात्म्याध्यासेन तदात्मनाऽपि रजतं भासते, अथवोभयसाधारणं रजतत्वमेकम्, इति सत्यरजतप्रत्ययवत् प्रवर्तकत्वम्, इति तत्र प्रथमप्रवृत्तेर्निर्वाहः—इत्याशेरते ॥

तत्र जनकस्यैव विषयस्य जन्यसाक्षात्कारिप्रत्यक्षविषयत्वं घटादौ दृष्टम्, प्रातिभासिकस्य तु ज्ञानसमकालत्वेन कारणात्मना शुक्त्यभेदेनैव रजताध्यासादेकदेशस्थत्वेन शुक्तिकाया इव पूर्ववृत्तितया कारणत्वम्, न चैवसतः, इति नासत्ख्यातिः सम्भवति ॥

तत्र प्रत्यभिज्ञाने तत्तांशस्योपलक्षणत्वादसंकीर्णस्वरूपमात्रस्य जिज्ञासितत्वाद् नोक्तनियमस्य व्याघातः। विषय-विषयिभावाश्रयः संबन्धो निरूपकतावच्छेदकस्य निरूप्यगतत्व एवोपपद्यते। तच्च परोक्षज्ञानेऽपि, इति न व्याहतिः; प्रमाणप्रवृत्त्यधीनत्वात्तज्ज्ञानस्य, इति भ्रमज्ञानेऽपि प्रकार-प्रकारिभावो निरूप्य-निरूपकभावविषयतावच्छेदकविषयितावच्छेदकसामानाधिकरण्य एवोपपद्यते ॥

निर्विकल्पभ्रमस्तु नोरीक्रियते, न वा सम्भवति। प्रत्यक्षं तु वर्तमानमात्रग्राहित्वाद् असतोऽविद्यमानस्य वा भ्रमे भानायोगेन शुक्त्याऽद्यावधिष्ठानेऽनिर्वचनीयख्यातावपूर्वस्योत्पत्तिस्वीकारेणोक्तनियमाव्याहतेश्चाविद्यकप्रातिभासिकविषयकत्वेन, व्यावहारिकविषयकत्वेन वोपपद्यते; इत्यनिर्वचनीयख्यातिनिष्कर्षः ॥

अनिर्वचनीयख्यातौ प्रातिभासिक-व्यावहारिकत्वनिमित्तविवेकः।

इयान् विशेषः—प्रातिभासिकस्थले तूलाविद्यापरिणामत्वं विषयतज्ज्ञानयोः। तत्र साक्षाद्विषयेन्द्रियसन्निकर्षाभावेनैन्द्रियकप्रत्यक्षासम्भवेन वृत्तेरविद्यापरिणामत्वस्वीकारः, व्यावहारिकस्य तु विषयमात्रस्याविद्यापरिणामत्वम्; तस्या एव काचादीनां करणदोषाणामिवाधिष्ठानावरणशक्तिरपीति स्वीकारेण दोषविधया स्वीयविक्षेपशक्त्या घटाद्याकारेण परिणामितयोपादानत्वस्यास्वीकारात् ॥

यावद्ब्रह्मसाक्षात्कारं सर्वैरपि घटादिरूपेणैव सदा वेद्यतया, एकरूपार्थक्रियाकारित्वेन च विषयमात्रस्याविद्यापरिणामत्वम्, वृत्तिस्तु तत्तत्प्रमाणजन्यान्तःकरणपरिणाम एव, न तु सापि प्रातिभासिकस्थल इवाविद्यापरिणामः। अत एव तेषां मुद्गरपातादिना नाशेऽपि कारणात्मता, पुनरपि घटाद्यात्मतेत्युपपद्यते ॥

तत्र घटादेरपि मूलाविद्यापरिणामस्य तत्समानयोगक्षेमस्य विद्यमानत्वाद् नाविद्याया एकस्या नाश आब्रह्मसाक्षात्कारम्, प्रातिभासिकस्थले तु

प्रतिभ्रमं रजतभेदः, अविद्याभेदश्च, इति शुक्त्यधिष्ठानतत्त्वसाक्षात्कारेण तदुभयनाशात्तयोः स्वरूपविवेको विशदः, इति भ्रमे प्रातिभासिकस्य रजतादेरपूर्वस्य भानम्, तस्य सोपादानस्य तदाकारवृत्त्या सह बाधश्चोपपद्यते ॥

असत्ख्यातिनिरासः ।

असत्ख्यातिवादे त्वसत्त्वाविशेषाद् भ्रमस्य प्रतिनियतरजतादिविषयकत्वं बाधितम्, संबन्धोऽप्यसतस्सता तादात्म्याख्यो व्याहतः । न तरां सत्त्वं त्वबाध्यत्वम्, सत्ताजात्यादिमत्त्वम्, अर्थक्रियाकारित्वं वा, नतमां चेदं रजतमिति सामानाधिकरण्यम् ॥

तत्र सामानाधिकरण्यं त्रिविधम्—विशेषण-विशेष्यभावे, अभेदे, बाधायां च । तत्साधारणं लक्षणं तु भेदसामानाधिकरण्योपलक्षितोऽभेदः । तत्र नीलो घट इत्यादौ विशेषणविशेष्यभावेनेव तत्त्वमसीत्यादावभेदेनेव 'सन् घटः' इत्यादौ स्थाणुरयं पुरुष इत्यादाविव बाधायामेव तत्; समानविभक्तिकनानापदप्रतिपाद्यत्वस्य तत्प्रयोजकस्य सर्वत्राविशेषात् ॥

तत्र जगद्-ब्रह्मणोः सामानाधिकरण्यम्—'सदेव सोम्येदम्' इत्यत्रेदं रजतमित्यादाविव बाधायामेव । अत एवानन्तर एव वाक्ये "एकमेवाद्वितीयमि"ति सामानाधिकरण्यप्रतीतिसिद्धस्याद्वितीयत्वस्योपदेशोऽध्यारोपापवादविधया । तत्र सामानाधिकरण्ये समानाधिकरणत्वादिविकल्पो निरालम्बः, समानविभक्तिकानेकपदप्रतिपाद्यत्वमन्तरा सर्वत्रोक्तलक्षणस्य तस्यासम्भवात्, "इदं रजतमि"त्यादावप्यस्य सामानाधिकरण्यस्य दुर्वचत्वाच्च । तादात्म्य-रजतोभयासत्त्व इदमोऽप्यसत इवाभानापत्तिः; असदधीननिरूपणत्वाविशेषात्, इति कथं न शून्यवादः ?

अधिष्ठानारोप्यभावे तु न तत्प्रसङ्गः, अधिष्ठानमात्रपारमार्थ्यात् । इदम इव रजतस्यापि तादात्म्यमात्राध्यासो यदि देशान्तरस्थस्य तस्याभिप्रेत्य, तर्हि निरस्ता साऽन्यथाख्यातिः, इदंकाराभिमुखरजतार्थिप्रवृत्त्यनिर्वाहश्च; अन्यथा विपरीतख्यातितः को वा विशेषोऽसत्ख्यातेः ॥

शुक्तिकासन्निकृष्टमिन्द्रियं शुक्तिकामसद्रजतात्मता गृह्णाति, इति न तत्र विशेषः । तत्र देशान्तरस्थस्येवासतोऽप्यसंनिकृष्टत्वं हि समानम्, तत्र तस्यास्तदात्मना भानं किं शुक्तिकायास्तदात्मना परिणामात्, तदाकारावभासमात्राद्वा । आद्यः पक्षस्त्वन्यथाख्यातिपक्षोक्तदूषणैरेव दूषितप्रायः । द्वितीय-

पक्षेऽपि—तथा प्रतीतिः सती, उतासती। तत्राद्येऽख्यातिवादः, द्वितीयेऽसंनिकृष्टस्याऽपरोक्षत्वानुपपत्तिरन्यथाख्यातिपक्ष इव, इत्युपक्षिप्तमेव दूषणम्। अनिर्वचनीयख्यातौ त्वधिष्ठानस्य सर्वत्र भ्रमेष्वारोप्यात्मना भानम्, अविद्यायास्त्वारोप्यात्मना परिणामः, इति न कापि बाधा॥

साक्षिग्राह्यत्वं त्वसतः "सर्वं वस्त्वेव ज्ञाततया, अज्ञाततया वा साक्षिभास्यमि"ति नियमादसतोऽवस्तुनो न साम्प्रतम्। तत्र साक्षिभास्यत्वमपि तदुपाध्यन्तःकरणपरिणामापेक्षवृत्त्यपेक्षयैव कल्पते, इति तत् सुतरां बाधितम्। अविद्योपहितमपि साक्षि स्वोपाध्यविद्यावृत्तिद्वाराऽपि स्वसंबद्धं वस्त्वेव भासयति, यथा सुषुप्तावानन्द-स्वापादीन्। अनिर्वचनीयख्यातौ तु प्रातिभासिकं रजतम्, तदाकारवृत्तिश्चोभयमपि साक्ष्युपाधित्वात् साक्षिभास्यमिति पूर्वं व्यक्तम्, भ्रान्त्यनुभवः स्वयमेव तदा रजतस्यानिर्वचनीयस्य शुक्तौ॥

तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं तु स्वतो ग्राह्यं यावद्बाधं भ्रमस्यापि। अत एव रजतस्य प्रातिभासिकं सत्त्वम्॥

द्वैतमतेऽपि रजतस्य भ्रमकालिकं सत्त्वं प्रतीयत इति संप्रतिपन्नम्। तत्र सत्त्वमसतो रजतस्य कुतः? किं तस्य रजत आरोपेण, उतोक्तशुक्तिसंनिकर्षवशात्। आद्ये त्वध्यस्तं नाधिष्ठानतामर्हति। द्वितीये तु तत्र संसर्गमात्राध्यास इति फलति॥

तत्र शुक्तिका यदि तदानीं ज्ञाता, तर्हि न रजतात्मना भानम्, यदि न गृहीता, तर्हि इदंपदार्थः कथं शुक्तिका? सा यदि ज्ञातेदंमात्रेण, शुक्तित्वेन त्वज्ञाता, तर्हि शुक्तित्वाज्ञानमपि तत्र कारणम्; उभयत्रेदन्त्वस्य शुक्तित्वस्य वा ज्ञातस्याज्ञातस्य वा कथमसता रजतेनासंबद्धस्य तत्र कारणत्वम्॥

यद्यज्ञानमात्रं हेतुः, तर्हि कथं सर्वदाऽज्ञानदशायां सर्वस्य केनचन रूपेण न भ्रमः॥

यदि ज्ञानमपि तत्र कारणम्, तदाप्यन्यत्र निर्विकल्पकेदंज्ञानमात्राद् न रजतभ्रमः कथम्? यदि दोषोऽपि कारणम्, तर्हि दोषस्याकारणत्वादियुक्तयः सर्वा अन्यथाख्यातिवाद इव कथं नासत्ख्यातावपि॥

असत्ख्यातौ बाधानुपपत्तिः।

एतेन—बाधोऽपि—व्याख्यातः। स हि प्रतिषेधः प्रसक्तस्यैव, नाप्र-

सक्तस्य। न च शुक्तौ रजतस्य प्रसक्तिः, यदि तदसत्। असदेवेदमिति प्रतीत्युपपत्तिस्त्वबाध्यवैलक्षण्यमात्रपरतया प्रागेव समर्थिता। इदं सर्वमभिप्रेत्यैवाद्वैतिनः, मायावादिनो वा वदन्ति—अनिर्वचनीयमेव। शुक्तिकादौ प्रतीयमानं रजतमिति॥

तत्र घटाद्यनिर्वचनीयत्वे प्रमाणम्—घटादिकम्, अनिर्वचनीयम्, अधिष्ठानज्ञानप्रयुक्ताभावप्रतियोग्यज्ञानपरिणामत्वात्; संप्रतिपन्नवदित्यनुमानम्। संप्रतिपत्तिस्तु शुक्तिरूप्ये पूर्वोक्तरीत्या लौकिकानुभवमादाय; प्रपञ्चमिथ्यात्वे विवदमानं प्रत्येव लोकसिद्धदृष्टान्तस्यात्र विवक्षणात्। स्वतन्त्रसिद्धान्तमात्रग्राहिणस्तु लोकातीता नात्र प्रतिवादिनः। लौकिकानुभवस्तु कीदृश इति लौकिका एव प्रष्टव्याः, न तु लोकातीताः स्वतन्त्रसिद्धान्तमात्रनिर्भराः॥

तत्र न सत्त्वम्, नासत्त्वम्, न वा सदसद्रूपत्वं लौकिका रजतस्यानुभवन्ति। न हीदं रजतमिति ज्ञानमात्रेण प्रथमं रजतार्थं प्रवृत्तिवत् शशशृङ्गाद्यर्थं शशशृङ्गमित्याप्तवाक्यं श्रुत्वापि कोऽपि प्रवर्तते॥

लौकिका हि किमपि वस्तु कीदृशमिति पर्यनुयोक्तारः शशशृङ्गमिदमितीत्युत्तरिताः शून्यं तदित्येव प्रतियन्ति। अत एव मम माता वन्ध्येति वाक्यं व्याहतार्थम्। न हि कोऽपि तद्वाक्यश्रवणे वन्ध्याया अयं पुत्र इति कमपि प्रत्येति। न चानेन मातरि वन्ध्यात्वभ्रममात्रमिति स्वतन्त्रसिद्धान्तः कस्यापि, इति शुक्तिरूप्यादिदृष्टान्तो नासिद्धः॥

सदसद्भिन्नत्वख्यातिरूपानिर्वचनीयत्वनिरुक्तिः।

अनिर्वचनीत्वं तु सदसद्भिन्नत्वम्। तच्च सत्त्वात्यन्ताभावसमानाधिकरणासत्त्वाभावमात्रम्। तत्र समानाधिकरणेति विशेषणमसत्त्वस्य। तेन च शुक्तिरूप्येऽसत्त्वादिनामपि सत्त्वेन प्रतीतिमङ्गीकुर्वाणानामपि दृष्ट्या शुक्तिरूप्यदृष्टान्तसिद्धिरनुसन्धेया। तत्र सत्त्वाभावविशिष्टासत्त्वास्वीकारेण चोक्तविशिष्टसिद्ध्या निदर्शनत्वाविरोधः॥

इदमद्वैतसिद्धान्तसाधारणमपि; शुक्तिरूप्यादौ सदसद्विलक्षणेऽपि सत्त्वस्य=सत्त्वेन प्रतीत्यर्हत्वरूपस्य स्वीकारेण सत्त्वसमानाधिकरणा-

सत्त्वस्यास्वीकारेण सत्त्वाभावविशिष्टासत्त्वस्यास्वीकारात्, इति न दृष्टान्तासिद्धिः ॥

एतेन—शुक्तिरजतादेः सत्त्वस्य, सदसत्त्वस्य चास्माभिरनङ्गीकारेप्यसत्त्वस्य स्वीकारात् सिद्धसाधनमिति—परास्तम्। अत्र शुक्तिरूप्यादेः सत्त्वं न स्वीक्रियते, न वा सदसत्त्वमित्यनेन सदसद्विलक्षणत्वं, केवलमसत्त्वं स्वीक्रियत इति वाक्यार्थः ॥

सत्त्वासत्त्वनिष्कर्षः।

तत्र सदसद्विलक्षणत्वं यत् स्वीकृतम्, तत्र सत्त्वम्, असत्त्वं च किमिति वक्तव्यम्। तत्र यदि सद्रूपं सत्, तुच्छमसत्, तर्ह्यबाध्यविलक्षणं तुच्छविलक्षणं चेति फलति। तेन चाबाध्यत्वाभावसमानाधिकरणतुच्छत्वाभाव इति विवक्ष्यते; समानाधिकरणपदस्य विशेष्येऽन्वयोऽपि न दुष्टः, शुक्तिरूप्यादेर्बाध्यत्वस्य तुच्छविलक्षणत्वस्य च स्वीकारात् ॥

सति चैवं कीदृशमसत्त्वं शुक्तिरजतादेः स्वीक्रियते ? यदि सत्स्वरूप भिन्नत्वमात्रम्, तर्हि तुच्छस्यापि तत्साधारणम्, इति किमसद्भिन्नत्वविशेषणस्य कृत्यम्, यदि न तुच्छव्यावृत्तिः ? सद्भिन्नत्वमात्रविवक्षायाः सद्भिन्नपदेनैव निर्वाहात्। यदि सदसद्रूपत्वमपेक्ष्यासदपि प्रतियोगिकोटौ प्रवेशितम्, तर्हि क्व वा सदसद्रूपं वस्तु दृष्टम्, तत्र भाट्टानां सत्ख्यातिः—

"स्वरूप-पररूपाभ्यां नित्यं सदसदात्मके ॥"

इति वचनानुयायिनी फलतः सत्ख्यातिरेव; पररूपस्य सत एव स्वरूपमात्रेणासत्त्वात्, इति तन्मतसिद्धसदसद्रूपता नोरीक्रियत इति विवक्षायां सत्ख्यातिवादनिरासेनैवापरस्यापि निरासाद् व्यर्थं सदसद्रूपतानिरसनम्, आर्हतानामपि सतसत्ख्यातिरप्येवमेव। विशेषस्तु तत्रानेकान्तवादमात्रेण ॥

अथ यदि पञ्चीकरणप्रक्रियया सत्ख्यातिवादिनो निरासाभिप्रायेणात्र सद्रूपतानङ्गीकारः, तर्हि कथमन्याख्यातौ न पर्यवसानम् ? तत्राप्युक्तदृष्टिद्वयमात्रमवलम्ब्यापि सत्ख्यातिनिरासात्, कुतो वा नाख्यातिवादे पर्यवसानम्? सर्वथा तु सद्भिन्नत्वमात्रेण सर्वविधसत्ख्यातिनिरासस्मभवेऽसदर्थस्यापि प्रतियोगिकोटौ निवेशोपपत्तये शशशृङ्गादिसाधारण-

तुच्छत्वस्वीकारः पर्यवस्यति, इति सदसद्विलक्षणत्वमकामेनापि स्वीकृतं भवति। अत्र सत्त्वाभावसमानाधिकरणासत्त्वाभावस्यानिर्वचनीयत्वरूपत्वविवक्षणाद् न सत्त्वाभावमादायार्थान्तरम् ॥

दोषप्रयुक्तभानत्वं न सत्त्वाभावः, स तु नासतः।

एतेन—असत्त्वाभावमात्रं साध्यमिति—परास्तम्। तच्च यदि दोषजन्यज्ञानविषयत्वम्, तर्हि नामान्तरेण प्रपञ्चस्यानिर्वचनीयत्वमेव; स्वाधिष्ठानसाक्षात्कारनिवर्त्यत्वात्। न चास्यासद्रूपत्वम्, इति नासद्रूपत्वमादाय सिद्धसाधनम्, अर्थान्तरं वा। असदेव रजतमभात्, इत्यस्योपपत्तिस्तु पूर्वमेव निरूपिताऽनिर्वचनीयस्य सदसद्विलक्षणत्वेऽपि ॥

तच्च दोषप्रयुक्तभानत्वम्। तत्र भानविषयत्वं ब्रह्मणोऽपि वृत्तिव्याप्यस्य, अतस्तज्ज्ञानव्यावृत्तये दोषप्रयुक्तत्वविशेषणम्। तत्र दोषप्रयुक्तस्य भानमिति षष्ठीसमासात्, ब्रह्मणश्चातथात्वात्, शुक्तिरूप्यघटादीनां तथात्वाच्च सर्वत्र समन्वयोऽनतिव्याप्तिश्च ॥

दोषप्रयुक्तत्वं च विषयस्य निमित्तविधयैवं, निमित्तोपादानोभयविधया वा, इति शुक्तिरूप्यादीनाम्, घटादेश्च तत्त्वात् तज्ज्ञानस्य भ्रमत्वम्। तत्र वृत्तेर्दोषप्रयुक्तत्वमकिञ्चित्करम्, इत्यखण्डाकारवृत्तेर्दोषप्रयुक्तत्वेऽपि न तस्य भ्रमत्वम् ॥

वस्तुतस्तु—वृत्तेरविद्यापरिणामत्व एव भ्रमत्वम्। न च साऽज्ञानस्य निवर्तिका। अन्तःकरणवृत्तिर्ह्यविद्यानिवर्तिका। न च सा दोषविधयाऽज्ञानप्रयुक्ता, इति न घटादिज्ञानस्य, अखण्डाकारवृत्तेश्च प्रमात्वविरोधः ॥

एतेन—दोषप्रयुक्तपदवैयर्थ्याशङ्कापि—परास्ता। शुक्तिरूप्यादीनामविद्यावृत्तिविषयाणामपि रजताकाराविद्यावृत्ति-शुक्त्याकारान्तःकरणवृत्त्योरेकदेशस्थत्वेन तदवच्छिन्नचैतन्ययोरैक्याद् ज्ञानतादात्म्येन ज्ञानत्वं नाक्षतम् ॥

तत्राभानापादकाज्ञानाभावेऽपि साक्षिसम्बन्धाद् भानमबाधमेव इति भानविषयत्वं प्रातिभासिकस्याप्यव्याहतम् ॥

एतेन—असतो ज्ञानविषयत्वानङ्गीकारेण व्यावर्त्याभावात् दोषप्रयुक्तेति विशेषणवैयर्थ्यमिति—परास्तम्, तत्र यदीयमापत्तिर्द्वैतमतानुसारेण,

तर्हि तत्रासतोऽपि प्रत्यक्षतयापि भानम्, किं बहुना ? सत्त्वेनाऽपि प्रतीतेः स्वीकारात् तद् नोपपद्यते ॥

अद्वैतसिद्धान्ते तु शुक्तिरूप्यादिकं नासत्, न वा ज्ञानाविषयः; विपर्ययाख्यवृत्तिवृत्तिविषयत्वस्य, वृत्त्यवच्छिन्नचैतन्यविषयत्वस्य वाऽसंभवाद् न तस्या उत्थानमपि। अविद्यावृत्तेर्ज्ञानत्वानङ्गीकारेऽपि शुक्तिरूप्यादीनां तदवच्छिन्नसाक्षिभास्यत्वं स्वीक्रियते ॥

तत्र शुक्तिरूप्यादीनामधिष्ठानज्ञानविषयत्वं नास्ति, अधिष्ठानमात्रस्य तद्विषयत्वात्, इति दोषजन्यत्वमकिञ्चित्करम् ॥

न च तस्य तन्मात्रविषयत्वम्, किन्तु तदवच्छिन्नचैतन्याभिन्नाविद्यावृत्त्यवच्छिन्नचैतन्यविषयत्वम्। विषयत्वं चात्र प्रकारताख्यमेव, इति नाधिष्ठानस्याप्यन्तःकरणावच्छिन्नचैतन्याभिन्न-वृत्त्यवच्छिन्नचैतन्यविषयत्वेऽपि मिथ्यात्वम् ॥

प्रकारांश एव दोषप्रयुक्तभानत्वम्, न त्वधिष्ठानांशेऽपि।

एतेन—मायावादिमते अधिष्ठानज्ञानस्यान्तःकरणवृत्तेः सत्यत्वान्न दोषजन्यत्वम्। भ्रमस्य दोषजन्यत्वेऽपि तस्याविद्यावृत्तित्वाद् न ज्ञानत्वम्। साक्षिणस्तु जन्यत्वमेव नास्तीत्यसिद्धिः। भ्रमज्ञानस्याधिष्ठानारोप्योभयविषयकस्यैकत्वात् शुक्तौ व्यभिचार इति—परास्तम्; दोषप्रयुक्तत्वस्य ज्ञानविशेषणत्वेन पूर्वोक्तविधया नाधिष्ठाने शुक्त्यादौ व्यभिचारः, भ्रमज्ञानेऽसम्भवो वा। यथा च प्रतितन्त्रसिद्धान्तेनात्र न दृष्टान्तः, स्वतन्त्रसिद्धान्तेन वा, किन्तूदासीनलौकिकानुभवेन, तथा पूर्वमेवोक्तम्, इति प्रतितन्त्रसिद्धान्तेन दृष्टान्तासिद्धिरकिञ्चित्करी; अन्यथा स्वतन्त्रसिद्धान्तेन सत्ख्यातिवादनिरासोऽसत्ख्यातिवादिनां कथम् ॥

वस्तुतस्तु—द्वैतमतेऽपि करणदोषप्रयुक्तमेवेदं रजतं इत्यादिभ्रमः सम्मतः; अन्यथा शुक्तितत्त्वज्ञानेऽपि कथं न भ्रमः ? इति तत्रापि विषयभानस्य दोषप्रयुक्तत्वं दुर्निवारम्, इति दोषप्रयुक्तभानविषयत्वं भ्रान्तिविषयस्य तादात्म्यस्य वा न व्याहतम् ॥

यथा च शुक्तिरूप्यादावसत्ख्यातिवादे बाधो न ज्ञानस्य, न वा विषयस्यान्यथाख्यातिवाद इव सुनिरूपः, तथा पूर्वमेव विशदीकृतम्, इति यदि तेन न्यायेन विषयस्य, ज्ञानस्य वा न दोषप्रयुक्तत्वमपि, तदा

ज्ञानविषयत्वमात्रस्य भ्रमत्वप्रयोजकत्वे भ्रमस्य निर्विषयत्वम्; सर्वस्यापि ज्ञानस्य भ्रमत्वं प्रमात्वं वेति भ्रम-प्रमाऽविवेकः, योगाचारमतं वेत्याद्यपि पूर्वमेवोक्तम् ॥

अनिर्वचनीयत्वानुमानस्यादुष्टत्वम् ।

एतेन—विवादपदम्, अनिर्वचनीयम्, भ्रमविषयत्वात्; यद् नैवं तद् नैवम्; यथाऽऽत्मा, इत्यनुमानमपि—व्याख्यातम्; यथा चात्र न सिद्ध-साधनम्, न वाऽप्रसिद्धविशेषणत्वम्, तथा पूर्वमेवोक्तम् ॥

यत्तु—शुक्त्यादावात्मनि च व्यभिचारोऽत्र—इति, तत्रापि भ्रमविषयत्वस्य प्रकारताख्यस्यैवात्र विवक्षणात्, तस्य च शुक्त्यात्मनोरभावाद् न दोषलेशः ॥

अत एव विवादपदम्, अनिर्वचनीयम्, बाध्यत्वात्; व्यतिरेकेणात्मवत्; सत्त्वासत्त्वे, एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी, धर्मत्वात्; रूपरसादिवदिति—व्याख्यातम्। तत्राद्ये सिद्धसाधनाद्यभावः पूर्ववदेवानुसन्धेयः । द्वितीये तु सत्त्वम्, सद्रूपत्वम्, ज्ञानानिवर्त्यत्वं वा, असत्त्वं त्वनुपाख्यत्वम्, तुच्छत्वं वा ? तदुभयं च रूप-रसवत् परस्परासमानाधिकरणम्, न त्वत्यन्ताभावाप्रतियोगित्वम्, येन घटादौ बाधः स्यात्, न वा सत्तासामान्यरूपम्, येनाश्रयासिद्धिः स्यात्, किन्तु सत्त्वं सद्रूपत्वमभिप्रेत्य । तच्च ब्रह्मस्वरूपमात्रं घटादौ बाधितम् ॥

एतेन—स्वरूपसत्त्वस्य सत्त्वरूपत्वे यत्किञ्चित्स्वरूपपक्षीकारे घटादौ पटादिस्वरूपसत्त्वस्यासत्त्वविशेषस्य चाभावेनार्थान्तरताऽनिस्तारः, सर्वस्वरूपसत्त्वपक्षीकरणे तु हेत्वसिद्धिः; विशेष्यत्वस्य धर्मत्वात्, विशेष्यत्वाभावे च विशेषणताया अप्यभावात्, धर्मिसापेक्षत्वाच्च धर्मत्वस्येत्यादि—परास्तम्। आत्मा, निर्धर्मकः, न वा धर्मः, इत्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वरूपं साध्यं धर्मत्वरूपं साधनं वा तत्र नास्ति, इति न तत्र व्यभिचारः ॥

प्रमेयत्वहेतोरदुष्टता ।

एतेन—प्रमेयत्वादिकमपि—व्याख्यातम्। तस्यापि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन केवलान्वयित्वाभावाद् न तत्राप्यनेकान्त्यम् । अत्र धर्मिपदेनैकत्वगुणवतो विवक्षणेन ब्रह्मातिरिक्तमेव विवक्ष्यते । प्रमेयमात्रे

तु सत्त्वासत्त्वयोरभावेन नार्थान्तरता । एकत्वगुणस्तु गुण-कर्म-सामान्यादिधर्मिमात्रनिष्ठः । नित्यमेकमनेकानुगतं सामान्यमित्यादिकमिति हि वदन्ति, इति ब्रह्मव्यतिरिक्तं सर्वं गुणवदेव, न तु गुणवद्भिन्नमेकमप्यधिकरणं ब्रह्मातिरिक्तं प्रसिद्धम्, येनैकत्वगुणवद्भिन्नाधिकरणसंसर्गराहित्येन प्रतिज्ञातार्थासिद्ध्याऽर्थान्तरता स्यात् ॥

सत्त्वम्, असत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगि, असत्त्वम्, सत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगीति प्रत्येकपक्षकं वाऽनुमानद्वयमत्र मन्तव्यम् । तत्र प्रथमानुमानस्य न प्रमेयत्वादौ व्यभिचारः । अत्र सत्त्वानधिकरणानात्मपदेन प्रमेयत्वस्यापि विवक्षणेन प्रमेयत्वस्यापि सत्त्वसंसर्गाभावप्रतियोगित्वस्य साधनादसत्त्वस्य साध्यमानत्वात्, प्रमेयत्वस्यात्मनीवानात्मन्यपि संसर्गाभावप्रतियोगित्वेन साध्यसत्त्वेनाव्यभिचारात् ॥

असत्त्वनिरुक्तिः ।

असत्त्वं त्वत्र निरुपाख्यत्वं शशविषाणादिधर्मोऽपरोक्षतायाः, विकल्पातिरिक्तायाः प्रतीतेर्वा प्रतिबन्धको धर्मविशेषः, न तु सत्त्वाभावमात्रम्, अबाध्यत्वाभावरूपं बाध्यत्वं वा, येन सत्त्वासत्त्वयोः परस्परविरहरूपता स्यात् । यत्किञ्चिदधिकरणकसत्त्वप्रकारकप्रतीत्यविषयत्वं वाऽसत्त्वम्, न त्वभावप्रतियोगित्वमात्रम्, अत्यन्ताभावप्रतियोगित्वं वा, येनानात्मनि सर्वत्र तस्य सत्त्वेन हेत्वसिद्धिः स्यात् ॥

एतेन—साध्यघटकानात्मपदेनात्मातिरिक्तमात्रं किं विवक्षितम्, उताऽऽत्मव्यतिरिक्तं वस्तु । आद्ये शशविषाणादौ निर्धर्मके सत्त्वासत्त्वयोरभावेनार्थान्तरता । द्वितीये दृष्टान्तस्य साध्यविकलता; रूपादीनां सत्त्वानधिकरणानात्मवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वस्यासंप्रतिपत्तेरिति—परास्तम्; तत्रानात्मपदेनात्मव्यतिरिक्तमात्रविवक्षणेऽपि निर्धर्मकेऽसति शशविषाणादावनात्मनिष्ठसंसर्गाभावप्रतियोगित्वस्याप्यभावेनार्थान्तरताया अनवकाशात् । द्वितीयस्तु पक्षोऽनङ्गीकारपराहतः ॥

अनेन प्रकरणेन सत्त्वाभावासत्त्वाभावरूपधर्मद्वयं साध्यमिति कल्पः समर्थ्यते । तेन च सत्त्वाभावसमानाधिकरणासत्त्वाभावो मिथ्यात्वमिति पक्षादतिरिक्तमिदं मिथ्यात्वमिति सूच्यते, फलतस्त्वैक्यमेव ॥

सदसद्भिन्नत्वमिथ्यात्वसमर्थनम् ।

सदसद्भिन्नत्वं वा साध्यं भेदघटितमिति तु कल्पान्तरम् । तत्र शुक्तिरूप्यादीनां सदसद्रूपत्वानङ्गीकारस्य स्वयमेव न्यायसुधायामुक्तत्वात्, न साध्याप्रसिद्धिः । यदि विशिष्टास्वीकारेऽपि सद्भेदमात्रं विवक्षितम्, तर्हि शुक्तिरजतादावसत्यपि सत्त्वेन प्रतीतेः स्वीकारात् कथं सद्भेदः ? यदि तत्र सत्त्वमपि भासमानं कल्पितम्, तर्हि तत् सद्वा, असद्वा । आद्ये न सद्भिन्नम्, अन्त्ये सदिति प्रतीत्यनुपपत्तिः ॥

अद्वैतसिद्धान्ते तु सत्तादात्म्येन प्रतीत्या सद्भेदः । तस्य च तत्र रजतस्यारोपं विनाऽनुपपत्तेराविद्यकत्वेन नासत्त्वम्, इति सदसद्विलक्षणत्वम्, तथापि सत्प्रतीतिविषयत्वं चोपपद्यते, इति सत्त्वासत्त्वयोः समाहारपक्षात् सदसद्भिन्नत्वयोः समाहार एवोपपद्यते; सदसत्त्वानङ्गीकारात् । असत एव सत्त्वेन प्रतीतिस्तु व्याहता ; अन्यथा तत्र को वा विशेषः सदसत्ख्यातिपक्षादसत्ख्यातेः ? अतः सदसद्भिन्नस्यैव सत्तादात्म्यात्, सत्प्रतीतिविषयत्वम्, न त्वसतः सत्त्वेन प्रतीत्याः । तत्रानिर्वचनीयत्वपक्षे प्रातिभासिकसत्त्वेन सत्तात्रैविध्यवादे, एकसत्तावादे तु सत्तादात्म्येन सत्प्रतीतिरुपपद्यते ॥

अत एवात्र साध्येऽसत्पदं किञ्चिदधिकरणकसत्त्वप्रतीत्यनर्हत्वम्, सद्भेदत्वबाध्यभेदः बाध्यस्वरूपमिति सद्भेदविशिष्टासद्भेदाशून्यत्वं शुक्तिरूप्यादौ सत्त्वेन प्रतीत्यर्हे, बाध्ये च लगति । तत्र सदसद्भेदानङ्गीकारेऽपि सद्भेदाङ्गीकारात्, अत्र सद्भेदपदेनाबाध्यभेदो बाध्यता यदि विवक्ष्यते, तदाऽप्यसतो रजतस्य कथं बाध्यत्वम्, सत्त्वेन प्रतीतिश्च ? तत्रासत्त्वेन प्रतीतिविषयत्वम्, सद्भेदवत्त्वं बाध्यत्वं चेति युज्यते । असद्भेदपदेन सद्रूपताविवक्षणे तु तत्र सत्प्रतीतिनिर्वाहो न कथमपि ॥

एतेन सद्भेदविशिष्टासद्भेदस्त्वप्रसिद्ध इति—परास्तम्, अनिर्वचनीयवाददृष्ट्या शुक्तिरूप्यादौ प्रसिद्धेः । असत्ख्यातिवादे तु सदसद्रूपतैवाप्रसिद्धा । स्वतन्त्रसिद्धान्तमात्रसिद्धा तु सा नोदाहरणतामर्हति । इदमेवाभिप्रेत्योक्तम्—सद्विलक्षणत्वमसति प्रसिद्धम्, असद्विलक्षणत्वं सति प्रसिद्धम्, उभयं तु शुक्तिरूप्यादौ प्रसिद्धमिति ॥

द्वैतमते तु विरोधादेव सदसत्त्वपक्षो निरस्तः, इति तत्रैवाप्रसिद्धिः ।

असद्विलक्षणत्वमात्रम् , सद्विलक्षणत्वमात्रं वा न साध्यतया विवक्षितम् , इति तथा विकल्प-तद्दूषणान्यनवसराणि ॥

तत्रापि अख्यातिवाद-सत्ख्यातिवादमात्रयोर्निरासाभियेण सद्विविक्तत्वमात्रं मिथ्यात्वमप्यूरीक्रियते , इति तेनैव नयेनासत्ख्यातिमात्रनिराकरणदृष्ट्या, असद्विलक्षणत्वमात्रं साध्यं कामं भवतु । तत्रासद्विलक्षणत्वं तु पूर्वोक्तदिशा किञ्चिदधिकरणकसत्त्वप्रकारकप्रतीतिविषयत्वाभावरूपं किञ्चिदधिकरणकसत्त्वप्रतीतिविषयत्वरूपं तुच्छव्यावृत्तं न दुष्यति। परं तु सत्ख्यातिमादायार्थान्तरवारम् , सिद्धसाधनं वा नानेन भवितुमर्हति, इति वादिद्वयप्रतिपन्नरूपद्वयस्यापि सकृदेव निषेधेन भ्रमव्यवस्थापनार्थमेव सदसद्भेदोभयवत्त्वमत्र विवक्ष्यते ॥

तत्रांशतः सिद्धसाधनं केन वाऽऽपाद्यते ? यद्युभाभ्यां मिलित्वा, तर्हि न सम्भवति; यदि प्रत्येकम्, तर्हि प्रत्येकं साध्यभेदोऽङ्गीक्रियताम्, उभयवैलक्षण्यस्य प्रत्येकमुभयोरप्यसिद्धत्वाद् न सिद्धसाधनम् । अत एवोक्तम्—सद्विलक्षणत्वमसत्त्वमित्यसत्ख्यातिदृष्ट्या सिद्धम्, असद्विलक्षणत्वं च सति सत्ख्यातिकल्पे सिद्धम्, उभयोरुभयमप्रसिद्धमित्युभयस्यात्र साधनम्। शुक्तिरूप्यादौ तु पक्षद्वयमपि बाधितम्; सुन्दोपसुन्दन्यायेनोभयोरपि व्याहतयोः सहावस्थानायोगादिति ॥

### अनिर्वचनीयस्य सदसदुभयप्रतीत्युपपत्तिः ।

एतेन—अनिर्वचनीयं चेद् रजतम्, कथं तर्हि प्रतीतिसमये सदिति, उत्तरकालं चासदिति प्रतीतिः? अनिर्वचनीयमित्येव कुतो न भवेदिति—परास्तम्। अनिर्वचनीयत्वादेव हि प्रतीतिसमये सत्तादात्म्यात् सदिति प्रतीतिः, उत्तरकाले तु बाध्यत्वादसदिति प्रतीतिः ; बाध्यत्वातिरिक्तस्यासत्त्वस्याभावात् ॥

असत्त्वस्य तु न पूर्वकाले प्रतीतिः ; तत्र सत्त्वेन प्रतीतेः, उत्तरकालिकासत्प्रतीत्या पूर्वकालप्रतीतसत्त्वं रजतं च बाध्यं प्रतीयते। तत्र सत्त्वं सत्तादात्म्यमेव; न तु सद्रूपत्वम् ; तत्र तस्याप्रसक्तत्वात् ॥

तत्र चासद्रजतमिति रजतस्य बाध्यत्वमवगम्यमानं न धर्ममात्रविषयं भवितुमर्हति; अन्यथा धर्मिणोऽबाधे सत्त्वेन रजतं शुक्तौ बाधानन्तरमपि प्रतीयेत; असतो रजतस्याबाधात् , असतो यदि न भानम्, तर्हि

भ्रमकालेऽपि कथं भानम् ? अतोऽसत्ख्यातिवादो न क्षोदक्षमः, इत्यनिर्वचनीयख्यातिरेव युक्ता ॥

वियदादावपि शुक्तिरजतन्यायातिदेशः ।

तत्र बाधितत्वमेवानिर्वचनीयत्वमिति बाधप्रतीत्यैवानिर्वचनीयत्वस्य सिद्धत्वात् तदतिरिक्तानिर्वचनीयत्वप्रतीत्यापत्तिर्न प्रसरति । तच्च रजतं बाधज्ञाने सति बाध्यम् , अनित्यमपि । तत्र बाध्यत्वप्रतीत्यभावस्तु तत्प्रतीतेः कारणात्मना सत्त्वनिबन्धनः, रजतस्य बाधितस्य तु कारणात्मनाऽप्यभावाद् न नष्टत्वप्रतीतिः ॥

वियदादेः प्रमातृचैतन्याध्यस्ततापि ।

अयमेव न्यायो वियदादावपि । न हि तदपि नित्यम् , येन सर्वदोपलम्भः स्यात् । अनित्यस्य तस्य कारणं त्वविद्यैव । सा ह्यात्मनिष्ठा शुक्त्याकारान्तःकरणवृत्तिद्वारा शुक्त्यवच्छिन्नचैतन्याभिन्नत्वादात्मनोऽधिष्ठानतादशायां शुक्त्यवच्छिन्नचैतन्यनिष्ठाऽपि । अत एवेदं रजतमिति प्रतीति तत्राभिन्नत्वेऽपि शुक्त्यवच्छिन्न-चैतन्य-प्रमातृचैतन्ययोः शुक्त्यवच्छिन्नत्वेन चैतन्यस्याधिष्ठानत्वात् । इयमेव नीतिर्घटादिप्रत्यक्षेऽपि ; तत्रापि विषयचैतन्याभिन्न-प्रमातृचैतन्याध्यस्तत्वाद् घटादेरपि प्रत्यक्षत्वम् ; अन्यथाऽऽन्तरत्वापत्तिः, अहं घट इति प्रतीत्यापत्तिश्च स्यात् । नैमित्तिके सति निमित्तानुसरणम् , न तु निमित्तमस्तीति नैमित्तिकारोप इति न्याय एवैतादृशे स्थाने शरणम् । अत एव न सर्वोपलब्धिप्रसङ्गः ; शुक्त्यवच्छिन्न चैतन्यस्य विना वृत्तिनिर्गमं प्रमातृचैतन्याभिन्नत्वाभावात् ॥

घटादीनां स्वप्रकाशचैतन्याध्यस्ताना-
मपि कादाचित्कप्रत्यक्षत्वनिमित्तम् ।

प्रत्यक्षत्वं हि सर्वस्य ब्रह्मेतरस्य प्रमातृसम्बन्धेन, न तु संविन्मात्रसर्वगतात्मस्वरूपसंबन्धेन; अन्यथा सर्वेषां सर्वदा सर्वप्रत्यक्षप्रसङ्गात् । न च ततः परिच्छिन्नत्वमेवात्मनः स्यात् ; यावदुपाधिपरिच्छेदं परिच्छिन्नत्वस्येष्टत्वात् । तत्र रजतादेः प्रत्यक्षत्वं न घटादिवत् साक्षादिन्द्रियसन्निकर्षादिवशात् , किन्तु शुक्त्याकारवृत्त्यवच्छेदेन रजताकारवृत्त्युदयात् द्वयोरेकदेशस्थत्वेन तदवच्छिन्नचैतन्याभेदात् ॥

अत एव साक्षिभास्यत्वमपि रजतादेः; साक्षिचैतन्यस्य रजताधिष्ठानशुक्त्यवच्छिन्नचैतन्यतादात्म्यात् , इति न सुखादिवदान्तरत्वापत्तिः । प्रतीति-

समय एव रजतोत्पत्तिरप्यत एव सुखादिवत्। इन्द्रियान्वय-व्यतिरेकानु-विधानं त्वधिष्ठानज्ञानार्थमेव, न तु रजतावभासार्थम् ॥

तत्रेन्द्रियेणाधिष्ठानाकारा वृत्तिः; रजताकारा वृत्तिस्त्वाविद्यकी रजतविषयिणी, इति वृत्तिभेदेऽपि तदवच्छिन्नमुख्यज्ञानरूपचैतन्यैक्याद् नाख्यातिवादप्रसङ्गः। शुक्तितादात्म्यमपि रजतस्य शुक्त्यज्ञानकार्यत्वात् शुक्त्यवच्छिन्नचैतन्याभिन्नप्रमातृचैतन्येन, साक्षिणा वा प्रातिभासिकत्वादेव रजतादिवत् वेद्यम् ॥

संनिकृष्टस्थलेऽन्यथाख्यातिरेव।

तत्र सन्निकृष्टत्वात् शुक्त्यवच्छिन्नचैतन्यस्य शुक्तेरेवेदं रूपेणेदं तादात्म्यमात्रमध्यस्यते, न त्विदमपि; प्रयोजनाभावात्, असम्भवाच्च। अत एव परस्पराध्यासेऽसन्निकृष्टरजतत्वविशिष्ट-रजतत्व-तत्संसर्गाणामध्यासः॥

अख्यातिवादवैषम्यमनिर्वचनीयख्यातौ।

न चैवं सति ज्ञानद्वयम्; वृत्तिद्वयस्य चैतन्यावच्छेदकत्वेनैव ज्ञानत्वेन चैतन्यस्य तदवच्छिन्नस्यैकत्वेनानुभवभेदाभावात्। अत एव प्रकारि-प्रकारभावोऽपि शुक्ति-रजतयोः, न त्वख्यातिवाद इव स्वतन्त्रे प्रकार-विशेष्यभावरहिते द्वे ज्ञाने अत्र॥

वृत्तिव्याप्य-फलव्याप्यविवेकः।

घटादीनां जडानां वृत्त्यभिव्यक्तफलचैतन्यभास्यत्वेनैव प्रत्यक्षत्वम्, अस्वप्रकाशत्वात्, इति सर्वत्र साक्षिभास्यत्वम्, फलव्याप्यत्वं वा, ब्रह्म तु स्वप्रकाशमावरणाभिभवमात्रमपेक्षते, इति न फलव्याप्यम्। अखण्डाकारवृत्तिदशायामन्तःकरणाद्युपाधिविलयाद् न साक्षिचैतन्यमपि वर्तते, इति तद् न साक्षिवेद्यमपि। अयमेव न्यायो रजतप्रत्यक्षतायामपि, इति तस्यासत्त्वे प्रत्यक्षत्वमपि दुर्वचम्; तस्य फलव्याप्यत्वेन, साक्षिवेद्यत्वेन, ब्रह्मवत् स्वप्रकाशत्वेन, वृत्तिव्याप्यत्वमात्रेणानावृतस्वभावस्याऽऽवरणाभिभवार्थं तदाकारवृत्तेः स्वीकर्तुमशक्यत्वात्॥

असद्विलक्षणत्वप्रतीत्यर्थमपि न सत्प्रतीत्यपेक्षा।

एतेन—

"असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि।

तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥"

इति—परास्तम्। शुक्तिरजतं हि प्रतीयमानमपरोक्षप्रतीत्यनुपपत्त्या नासद्भवितुमर्हति। अपरोक्षत्वं हि साक्षिभास्यत्वेन, इन्द्रियसंनिकर्षद्वारकनिर्गतवृत्त्यभिव्यक्तचैतन्यभास्यत्वेन, साक्षादपरोक्षत्वेन, स्वतः प्रत्यक्षत्वेन वा भवति। असति नोक्तेष्वेकमप्यपरोक्षत्वनियामकं वर्तते; अन्यथाऽतीतादीनामपि प्रत्यक्षत्वापत्त्या परोक्षज्ञानं कथामात्रं स्यात् ॥

तत्रासद्विलक्षणत्वोपपत्त्यर्थमसतोऽपि यदि प्रतीतिरपेक्ष्यते, तर्हि सा विकल्पाख्यामेव तत्र सिद्धिमुपपादयति ॥

वस्तुतस्तु—असद्वैलक्षण्यघटकमसत्त्वं किञ्चिदधिकरणकसत्त्वप्रकारकप्रतीत्यविषयत्वमेव। तच्च ब्रह्मणि प्रसिद्धम्। न च तदसति; सर्वथा तुच्छस्य प्रत्यक्षत्वमेतदर्थं नोरीकर्तव्यम् ॥

इदं रजतमित्यादौ रजतं प्रत्यक्षं प्रतीयते। तदसत्ख्यातिवादे नोपपद्यते, इति खलु प्रस्तुतम्, असद्वैलक्षण्यं तूक्तेन प्रकारेण येन केन वाऽप्यसतः प्रसिद्ध्या कामं भवतु, प्रत्यक्षत्वानुपपत्त्या रजतं कथमसदिति पर्यनुयोगस्तु निरुत्तर एव ॥

एतेन—विमतः, असत्प्रतीतिमान्, तत्संबन्धिधर्मनिषेधकत्वादित्यनुमानमपि—परास्तम्; विकल्पाख्यतत्प्रतीतिमादाय, असद्वैलक्षण्यघटकासत्त्वरूपान्तरविषयकप्रतीतिमत्त्वमादाय वा सिद्धसाधनात् ॥

असत्प्रतीतिर्विकल्पवृत्तिरेव, नापरोक्षा।

अयमत्र निष्कर्षः—असतः प्रतीतिमात्रं न वार्यते; विकल्पाख्यतत्प्रतीतेः स्वीकारात्, शशविषाणं नास्तीति प्रतीतेरप्येवमेव निर्वाह्यत्वात्। किञ्चिदधिकरणानुविद्धप्रतीतिविषयत्वानर्हरूपपारिभाषिकासत एव प्रतियोगितयाऽत्र विवक्षणेन तस्य सद्रूपस्य तादात्म्येन प्रतीत्याऽप्यसद्वैलक्षण्यप्रतीतेर्निर्वाहसम्भवाच्च ॥

यो यद्विलक्षणतया, यत्सम्बन्धितया वा किञ्चिन्निषेधति, स तत्प्रतीतिमानित्यत्र निषेधशब्देनाभावसामान्यं विवक्ष्यते, उताभावविशेषो भेदः, संसर्गाभावो वा। एवं प्रतीतिशब्देन वैलक्षण्यज्ञानं सजातीयप्रतीतिरेव विवक्ष्यते, उत प्रतीतिसामान्यं वा। तत्रोभयत्राऽऽद्ये स्तम्भः पिशाचो

नेत्यत्र वैलक्षण्यस्य प्रत्यक्षत्वम्, तत्प्रतियोगिनः परोक्षत्वमिति व्यभिचारः, इति तेन न्यायेनासद्वैलक्षण्यस्य प्रत्यक्षत्वेऽपि प्रतियोगिनः प्रसिद्धिमात्रमपेक्ष्यते ॥

विकल्पोऽपि वृत्तिरूपं ज्ञानमेव, न सविषयं ज्ञानम्। इयान् विशेषः—विनाऽपि विषयात्मनाऽविद्यापरिणामं वृत्तिमात्रेणाविद्यापरिणामविशेषः स सुषुप्ताविव। विशेषस्तु सुषुप्तौ सदानन्दस्वरूपमज्ञानोपहितम्, अत्र तु शशशृङ्गाद्यसत्। उभयमपि नाविद्यापरिणामः, इति तत्र केवलं वृत्तिमात्रम्। सा च विषयभेदेनान्तःकरणपरिणामः, अविद्यापरिणामो वेत्यन्यदेतत्। अधिकं चित्सुख्याम्, न्यायचन्द्रिकायां च। स्मृतिस्थलेऽपि तस्या भ्रमत्वपक्षे तस्या अप्यविद्यापरिणामत्वमात्रम् ॥

अपरोऽयं विशेषः—यदन्तःकरणवृत्तिरिव नाज्ञाननिवर्तको विकल्पश्चैतन्याभिव्यञ्जकः, भासकसाक्षिचैतन्योपाधिर्वा, किन्तु तत्तच्छब्दोल्लेखमात्रम्। अत एव हि वस्तुशून्यता। तदुक्तम्—'वस्तुशून्यो विकल्पः' इति। अर्थानुपरक्तशब्दमात्रोल्लेखिनी वृत्तिर्विकल्पो नाम ॥

विकल्पाख्यप्रतीतेः प्रतीत्यन्तराद्विशेषः।

अत एवासत्त्वाविशेषेऽपि शशविषाण-नरविषाणादिप्रत्ययानां विशेषः; शब्दभेदेन वृत्तिभेदात्, इत्यौपचारिकत्वेऽपि वृत्तित्वमात्रेण प्रतियोगि प्रसिद्धिरविकला। असत्त्वं निरुपाख्यत्वम्, नास्तीतिप्रतीतिविषयत्वम्। शशविषाणमस्तीति वृत्तिरपि तच्छब्दोल्लेखमात्रम्। वाक्यतानिर्वाहार्थमेव तत्रास्तिपदप्रयोगः, यथा तत्त्वमसीत्यादावखण्डार्थबोधस्थले, इत्यसद्वैलक्षण्यस्थलेऽसतो वृत्तिमात्रेणापि वैलक्षण्यप्रतीतिनिर्वाहोऽनुयोगिप्रत्यक्षतामात्रेणाविरुद्धः ॥

शशशृङ्गभ्रमस्य विकल्पाद् विशेषः।

अत एव दूरात् तुरगकर्णयोः तुरगकर्णत्वाज्ञाने शृङ्गप्रत्ययस्थलेऽनिर्वचनीयशृङ्गमेव प्रतीयते, बाध्यते चाधिष्ठानतुरगकर्णत्वविज्ञाने; अज्ञानकार्यत्वात्तत्र शृङ्गस्य। अतोऽपरोक्षप्रतीत्यनुपपत्त्या न शुक्तिरूप्यमसत्, इत्यसत्प्रतीतिनिषेधसामर्थ्याद् विकल्पसिद्धस्यैव तत्र निषेधः, इति नासद्वैलक्षण्यबुद्धिविरोधः ॥

एतेन—नरशिरसि विषाणं नास्तीति वाक्यमपि—व्याख्यातम्;

तत्र शृङ्गसम्बन्धमात्रस्य निषेधेन शृङ्गानिषेधेन प्रमात्वेन वैलक्षण्यात् ॥

नरशिरसि विषाणमस्तीति वाक्यं तु तत्र विषाणसम्बन्धमात्रं बोधयति, स चासन्नेवाऽनुयोगिमात्रस्य तत्र सत्त्वेऽपि । सर्वथा तु नेदं प्रत्यक्षम्, इति शब्दात्, तद्बोधो न दोषाय ॥

अनाप्तवाक्यत्वात्तु तस्य परोक्षधीजनकस्य संसर्गांशमात्रे प्रामाण्यभ्रम एव । परोक्षे त्वन्यथाख्यातिः, इति तस्यामन्यत्रावस्थितस्य संसर्गस्यान्यथाख्यात्यैव विज्ञानाद् न प्रातिभासिकत्वम्, असत्त्वं वा, किन्तु सत एव निषेधः । परोक्षभ्रमेऽप्यनिर्वचनीयख्यातिरेवेति कल्पे तु तत्राप्यसत्त्वापादकतूलाविद्यापरिणामरूपविषयतदाकारवृत्त्या भ्रमनिर्वाह इति व्यवस्था । सर्वथा तु प्रमाणजन्यप्रत्यक्ष-परोक्षज्ञानविषयत्वं भ्रमे भासमानस्यासत्त्वे प्रतिबन्धि ॥

स्मृतावविद्यावृत्तिरेव ।

अत एव भ्रमस्य विकल्पाख्यवृत्तितो भेदेन योगसूत्रे परिगणनम्— "प्रमाण-निद्रा-स्मृति-विपर्यय-विकल्पाः" इति । तत्र स्मृतेरपि भ्रमत्वेऽपि विद्यमानविषयकत्वाभावादतीताकाराविद्यावृत्तिमात्रम्, तद्विषयस्य कारणात्मना सत्त्वमात्रेण, विकल्पे तु न केनापि रूपेण विषयसत्त्वम् । अत एव पृथक्—"शब्दज्ञानानुपाती तु वस्तुशून्यो विकल्पः" इति तद्गणनम् । सर्वथा त्वविद्यावृत्तित्वमात्रेण स्मृतेरिव विकल्पस्यापि कथंचनोपचारेण ज्ञानत्वेऽपि भ्रमस्यासद्विषयकत्वं बाधितमेव ॥

शशविषाणादिकमपि नासदिति तु—

"एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ।"

इत्यादिवाक्यस्याप्यनुन्मत्तवाक्यत्वमापादयेत् ; असतोऽर्थक्रियाकारित्वाभावात्, पञ्चीकरणप्रक्रियया सत्ख्यातिपक्ष इव न्यायसुधोक्तरीत्या मातृ-मतङ्ग-मदिरादिभ्रमेण तदुपयोगे न प्रत्यवायः स्यात्, इति धर्माधर्मव्यवस्थाऽपि लुप्येत ॥

अनिर्वचनीयख्यातौ तु यावद्बाधमर्थक्रियाकारित्वाद् भ्रान्त्या क्रियमाणानि, कृतानि वा पापान्यनर्थाय प्रभवन्तीति न भिन्नकर्मतापातः ॥

यो हि शशविषाणं नास्तीति न जानाति, तस्य शशविषाणमस्तीति

वाक्यात् शशीयत्वेन विषाणज्ञानं यद्यपि भवति; परस्तात्तु पूर्वोक्त-प्रकारेण तत्र संसर्गमात्रस्य निषेधः, नासतः। अत एव गोविषाणमस्तीति वाक्यात्तस्य विशेषः ॥

विकल्पो हि किमपि वस्तु नोल्लिखति, शब्दमात्रोल्लेखित्वात् तस्य। न ह्यसद्नाम्नाऽपि किमपि वस्तु; तस्यावस्तुत्वात्। घटादिज्ञानमिव न सविषयकत्वं विकल्पस्य, विपर्ययादिवृत्त्यन्तरस्येव वा। शब्दमात्रोल्लेखित्वात्तस्य वृत्तित्वमात्रम्, न ज्ञानत्वमपीति तु केचन। अतो घटादिज्ञानतोऽपि विशेषः, इति न "सन् घटः" इत्यादिज्ञानं न ज्ञानमिति मन्तव्यम् ॥

शशविषाणमस्तीति वाक्यस्य वाक्यत्वं तु सुबन्त-तिङन्तशब्दघटितत्वमात्रेण, अन्यथा तस्य प्रमाणत्वे प्रमाणात् पृथक् तत्परिगणनम्, तज्ज्ञानस्यार्थक्रियाकारित्वाभावश्च न स्यात्। आप्तवाक्यत्वाभावात्तु नास्य प्रामाण्यमपि। आप्तवाक्यत्वे त्वस्तिपदं वाक्यसाधुत्वार्थम्। शशविषाणमिति शब्दोल्लेखमात्रे तात्पर्यमिति तु निष्कर्षः ॥

एतेन—विमतानि पदानि, स्वार्थान्वयबोधकानि, आकाङ्क्षासन्निधिमत्पदत्वात्; गामानयेत्यादिवाक्यवदित्यनुमानमपि—परास्तम्; अशून्यवस्तुकत्वेन सोपाधिकत्वात्। वस्तुशून्यो हि विकल्पः इति साधनाव्यापकत्वम्। आकाङ्क्षा-योग्यतादिमत्पदत्वहेतुस्त्वसिद्धः। न ह्यसतो ज्ञानकर्तृत्वम्, तत्कर्मत्वं वा; समस्तसामर्थ्यविरहित्वात्। सर्वथा त्वसतोऽपरोक्षतया, सत्त्वेन च प्रतीत्यनुपपत्त्या भ्रमस्थले तदुपपत्त्यर्थमख्यात्यन्यथाख्यात्यादीनां निरासाच्चानिर्वचनीयख्यातिरेव शरणम् ॥

तत्र पूर्वोक्तरीत्या सत्तादात्म्येन, यावद्बाधमर्थक्रियाकारितया वा, सत्त्वेन प्रतीतेः, अपरोक्षत्वस्यापि निर्वाहात् सर्वमक्षुण्णम् ॥

एतेन—

"अन्यथात्वमसत्तस्माद् भ्रान्तावेव प्रतीयते।
सत्त्वस्य सत एवं हि स्वीकार्यैव प्रतीतता ॥"

इति—परास्तम् ॥

अनिर्वचनीयख्यातावप्यसत एव भानमिति परेषां शङ्का।

यत्तु—अनिर्वचनीयख्यातावपीदं रजतयोस्तादात्म्यमवभासते। तच्च "सत्यानृते मिथुनीकृत्य" "अध्यासो नामातस्मिन्

३०

तद्बुद्धिरित्यवोचाम" इति भाष्यादसदिति प्रतिपाद्यते; अन्यथा 'अतस्मिन्नि'ति पदस्य 'मिथुनीकृत्ये'ति च्विप्रत्ययस्य च नोपपत्तिः। न ह्यनिर्वचनीयख्यातावतस्मिन् तद्बुद्धिः; तद्वति तत्प्रकारकज्ञानत्वाद् भ्रमस्यानिर्वचनीयख्यातौ, इति शुक्तीदमंशस्य रजतत्वसंसर्गः, रजतस्येदंतासंसर्गश्चासन्नेवेति स्वीकर्तव्यम्; अन्यथा अभूततद्भावे च्विप्रत्ययः कथमत्रोपपद्यते? स च प्रतीयतेऽपरोक्षतयैव, सत्त्वेन चानिर्वचनीयख्यातिवादेऽपि। तथा चासदपरोक्षतया, सत्त्वेन च न प्रतिभासत इति व्याप्तेर्भग्नत्वात् नानेन हेतुनाऽसत्त्वाभावोऽनुमातुं शक्यते—इति ॥

भ्रमस्थले न कस्याप्यसतो भानम्।

तत्र भ्रमस्थलेऽधिष्ठान अरोप्य–तत्तादात्म्ययोरध्यासः। तत्रारोप्यं रजतत्वविशिष्टमेव। अत एव पूर्वदृष्टसदृशस्यापि पूर्वदृष्टत्वमपि; प्रातिभासिक-व्यावहारिकसाधारणस्य रजतत्वस्य स्वीकारात्। तत्र विशिष्टाध्यासेन विशेषणसंसर्गस्याप्यध्यासः। रजते त्विदंतादात्म्यमात्रस्याध्यास इति चतुर्णामध्यासः। रजततादात्म्योपहितरूपेणेदमोऽप्यज्ञातशुक्तित्वोपहितचैतन्याध्यास इति पञ्चानां वाऽध्यासः॥

तत्र रजतत्वस्य प्रातिभासिकमात्रवृत्तित्वमिति मते तु व्यावहारिकरजततादात्म्यापन्नस्य प्रातिभासिकरजतस्येदम्यध्यास इति प्राचामाचार्याणाम्, नव्यानां च प्रस्थानभेदः। सर्वत्रापि भ्रमे भासामानमज्ञातशुक्तित्वोपहितमधिष्ठानमनध्यस्तं सदेव; तत्तादात्म्येनारोप्यस्य सन्निति प्रतीत्यर्हत्वम्॥

सर्वत्र तत्र सत्तादात्म्याविशेषेऽपि प्रतियोगिमात्रप्राधान्येन सत्तादात्म्यप्रतीतिः, अन्येषां तु तादात्म्यादीनामपि तदुपसर्जनतया विद्यमानमपि तद् न विशदं प्रतीयते, इति तत्र सर्वारोप्याकारैकैवाऽविद्यावृत्तिः, अधिष्ठानांशमात्रेऽन्तःकरणवृत्तिरिति व्यवस्था। सति चैवमनिर्वचनीयख्यातावप्यसतस्तादात्म्यस्यापरोक्षतया, सत्त्वेन च प्रतीत्यर्हत्वमनिर्वचनीयख्यातावपि व्याहतमित्यसदनुवाद एव॥

सत्यानृते मिथुनीकृत्येत्यस्य तादात्म्यासत्त्वे न तात्पर्यम्।

तत्र "सत्यानृते मिथुनीकृत्ये"ति भाष्यं स्वमतोपष्टम्भकतया परो

मन्यते, "अतस्मिन् तद्बुद्धिरि"ति भाष्यं च। तत्र "सत्यानृते" इत्यनृतपदप्रयोगमात्रं पर्याप्तं भ्रमे भासमानस्य प्रकारस्य न शशविषाणादितुल्यमसद्रूपत्वम्, किन्तु तद्व्यतिरिक्तत्वमेवेति ॥

एवं सत्यपदप्रयोगादधिष्ठानसत्त्वरूपभिन्नत्वमप्यवगम्यते, इति "सत्यानृते मिथुनीकृत्य" इत्यंशः सदसद्विलक्षणत्वम्, सत्यानृतमिथुनीकरणमिति विवक्षणात् सत्यतादात्म्यमेव सत्त्वमिति सूचनार्थम्, न सत्यत्वमारोप्यस्येति, इति सत्तादात्म्यमात्रस्यात्र विवक्षणात् नात्र सत्त्वमारोप्यस्य, न वा तस्यानृतस्यासत्त्वमिति प्रतीयते ॥

एतेन—च्विप्रत्ययोऽपि—व्याख्यातः; आरोप्याधिष्ठानयोरज्ञानकार्यान्तःकरण-प्रत्यगात्मनोः प्रथमाध्यासोऽप्यज्ञानाध्यास इव नानादिः, किन्तु सादिरेव। सादिरपि तदध्यासः प्रवाहतोऽनादिः। अत एवोक्तम्--"नैसर्गिकोऽयं लोकव्यवहारः" इति, इत्यन्तःकरण-प्रत्यगात्मनोरध्यासः प्रवाहतोऽनादिरपि नाज्ञानादिवत् स्वभावतोऽनादिः, इति सूचयितुमेवात्र च्विप्रत्ययः। एतावतैवाभूततद्भावः, अन्यथात्वं वा, न तु ततस्तादात्म्यादेरसतोऽपि तत्र प्रत्यक्षत्वम् ॥

"अतस्मिन् तद्बुद्धिरि"ति भाष्यस्यापि नासत्ख्यातौ तात्पर्यम्।

एतेन—"अतस्मिन् तद्बुद्धिरि"ति वाक्यमपि—व्याख्यातम्। तेन ह्यधिष्ठानविषमसत्ताकत्वमारोप्यस्य बोध्यते, येन बाधायां सामानाधिकरण्यमप्यर्थसिद्धं भवति। तेन च यावद्बाधमेवाधिष्ठानतादात्म्यम्, अनन्तरं तु तद्व्यतिरेकेण तदभाव इति फलति ॥

"यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते ॥"

इति तत्त्वार्थोऽत्र सूच्यते, इत्यनिर्वचनीयख्यातिदृष्ट्याऽपि नासत्ख्यातिसमर्थनं विकल्पसहम्। इदं रजतमित्यादौ सत्तादात्म्याद् व्यावहारिकरजततादात्म्याध्यासात्, व्यावहारिक-प्रातिभासिकसाधारणरजतत्वज्ञानाद्वा प्रवृत्त्युपपत्तिरनिर्वचनीयख्यातौ, असत्ख्यातिवादे तु रजतार्थिनः प्रवृत्त्यनुपपत्तिः ॥

अत एव प्राग् बाधात् सत्यरजतेदंतासंसर्गो मात्रयाऽपि विलक्षणो नानुभूयते। सर्वथा तु भ्रमे तादात्म्यम्, प्रकारो वा न सन्; सत्ख्यातिवादनिरासात्; नाप्यसन्, सत्त्वेन, अपरोक्षतया च प्रतीयमानत्वादिति सिद्धम् ॥

वस्तुतस्तु—"अध्यासो नामातस्मिन् तद्बुद्धिरित्यवचाम" इति ख्यातिपञ्चकसाधारणं तत्तद्वाद्यनुगुणमख्यातिवादं वर्जयित्वा तत्तन्मतानुसारेणारोप्यस्य तेन रूपेणाधिष्ठानेऽभावाभिप्रायम्, अनिर्वचनीयख्यातेः, असत्ख्यातेः, उभयोरेव वा साधारणस्य तस्यानिर्वचनीयख्यात्यनुसारेण योजनं तु "अतस्मिन् तदसमसत्ताकज्ञानमि" ति, इति रजतानिर्वचनीयत्वं वस्तुस्थितिकृतम्, न तु प्रतीतिकृतम्। अतोऽनिर्वचनीयतया प्रतीत्यभावोऽकिञ्चित्करः ॥

अनिर्वचनीयत्वादेऽनवस्थादूषणं परेषाम्।

एतेन—

"तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः।"

इत्यपि—परास्तम्॥

यत्तु—संसर्गद्वयमनिर्वचनीयमिति कोऽर्थः–किं व्यावहारिकम्, उत प्रातिभासिकमिति। नाद्यः; अनङ्गीकारात्, व्यावहारिकतथात्वे रजतस्यापि व्यावहारिकत्वप्रसङ्गात्। द्वितीये प्रातिभासिकतयैव प्रतीयते, व्यावहारिकतया वा। नाद्यः; प्रवृत्त्यभावप्रसङ्गात्। तद्धि प्रातिभासिकमर्थक्रियास्वनुपयुक्तम्, तथा क्वचिदुपलब्धं वा। यतः तद्भावं प्रतीत्यापि प्रवर्तेत। द्वितीये तु किं व्यावहारिकता सती, अथासती। नाद्यः; प्रातिभासिकत्वानुपपत्तेः, द्वितीयेऽपरोक्षतया, सत्त्वेन चासतोऽपि प्रतीतिप्रसङ्गः॥

अथ सा व्यावहारिकताऽप्यनिर्वचनीया, तर्हि सदाऽनिर्वचनीयेति कोऽर्थ इत्यादेरावृत्त्याऽऽरोपपरम्पराऽपर्यवसानापत्तिः स्यात्। न चेयमपर्यवसिता परम्परा सिद्धविषया, येन बीजाङ्कुरवद् न दूषणं स्यात्, इति पूर्वपूर्वारोपानुपपत्तावुत्तरोत्तरारोपानुपपत्तिः, प्रवृत्त्यनुपपत्तिश्च॥

न च सर्वेऽप्यारोपा एककालीनाः; अधिष्ठानसिद्ध्युत्तरकालीनत्वादारोपस्य, अनन्तानिर्वाच्यविशेषविशिष्टार्थगर्भस्यारोपस्याननुभवात्। स्वरूपेण संसर्गभानं तु व्यावहारिकत्वाद्यप्रतीत्या प्रवृत्त्यनुपपत्त्या च न युक्तम्—इति॥

अनिर्वचनीयख्यातावनवस्थापरिहारः ।

तत्र संसर्गद्वयेऽप्यारोप्यारोस्य व्यावहारिकत्वे व्यावहारिकम्, तस्य प्रातिभासिकत्वे प्रातिभासिकम्। उभयमप्यनिर्वचनीयमेव, सदसद्विलक्षणत्वादिति वस्तुस्थितिः ॥

तत्र शुक्तिरूप्यादिविषये प्रातिभासिकत्वमेव संसर्गद्वयस्यापि। प्रातिभासिकस्यापि यावद्बाधं व्यावहारिकवदर्थक्रियाकारित्वस्य, तत्तद्विशेषस्य च पूर्वमेवोपपादनान्न तत्त्वे प्रवृत्त्यनुपपत्तिः। शुक्तिरूप्यव्यावहारिकताया अनङ्गीकारात्, तद्व्यावहारिकतासत्त्वासत्त्वविकल्प-तद्दूषणानां नावसरः ॥

तच्च प्रातिभासिकं न सत्, न वाऽसत्, किन्तु सदसद्विलक्षणमप्यधिष्ठानतादात्म्यमात्रात् सत्त्वेन,।अपरोक्षतया च प्रतीयते, इति न तस्य सत्त्वे, प्रत्यक्षविषयतायां वाऽनवस्था। तत्र प्रातिभासिकाध्यासे तत्तत्कालिकतत्तत्तूलाज्ञानावृततत्तत्कालिकाधिष्ठानाज्ञानस्यैव सादृश्यज्ञानादिसध्रीचीनस्य तत्तदारोपं प्रति कारणत्वाद् न पूर्वपूर्वारोपनिबन्धनत्वमुत्तरोत्तरारोपस्येति हि सिद्धान्तमर्यादा, इति नानवस्थागन्धोऽपि, न वा तदा प्रवृत्त्यनुपपत्तिश्च ॥

तत्र प्रातिभासिकमनिर्वचनीयमिति चानर्थान्तरं शुक्तिरूप्यादिस्थले। एवमेव व्यावहारिकस्थलेऽपि व्यावहारिकमनिर्वचनीयमिति च। अधिष्ठानविषमसत्ताकत्वमारोप्यमात्रस्य साधारणमनिर्वचनीयस्य। तदपि स्वरूपत एव, न तु तथा प्रतीतितः, इति नानवस्था, न वा प्रवृत्तेस्तज्ज्ञानापेक्षा; यावत्तत्प्रतीति सत्त्वेनैव प्रातिभासिकत्वम्। सर्वथा तु प्रातिभासिकानां प्रतीतिभेदाद् नानवस्था, प्रत्युतासत्ख्यातिपक्ष एवोक्ताः सर्वेऽपि विकल्पाः, तद्दूषणानि च ॥

असत्ख्यातिपक्ष एवानवस्थादिदूषणानि ।

तथा हि—तत्पक्ष एव रजतस्य प्रतीयमानमसत्त्वं सद्वा, असद्वा। नाद्यः; रजतस्यापि सत्त्वापत्तेः, द्वितीये किमसत्त्वेन प्रतीयते, किं वा सत्त्वेन। नाद्यः; प्रवृत्त्यभावप्रसङ्गात्। द्वितीये तदपि सत्, असद्वेति समानो दोष इति ॥

रजतप्रत्ययमात्रेण प्रवृत्त्युपपत्तिस्तु परस्यापि समाना। न च सत्त्वे सत्त्वान्तरं तत्रापि। वस्तुतस्तु – सिद्धान्ते शुक्तिरूप्यादीनां सत्तादात्म्यमेव, न तु सत्त्वम्, येन सत्त्वेन प्रतीत्यनुपपत्तिः, प्रवृत्त्यभावादिकं च स्यात् ॥

इदमेवात्र पृच्छ्यते—असतो रजतस्य कथं प्रवृत्तियोग्यता? कथं वा रजतार्थिनस्तदिच्छया विफलाऽपि प्रवृत्तिः, यावद्बाधं तल्लाभप्रयुक्तानन्दानुभवादिकं च? न च तदप्यसत्; अनुभवविरोधात्। तच्च सत्तादात्म्यं मायोपाधिकं व्यावहारिकम्, आविद्यकं तु प्रातिभासिकमिति सत्तात्रैविध्यमादायावसीयताम्। समर्थितो हि सत्तात्रैविध्यवादः पूर्वमेव तदवसरे, इति नानवस्था, प्रवृत्त्यव्यवस्था वा॥

अद्वैतमतवत् कारणानुपपत्त्याऽसत्ख्यातिवादायोगः।

न केवलमिदम्—असत्ख्यातिपक्षेऽसतः प्रतीयमानस्य न निमित्तकारणम्, उपादानकारणं च सुवचम्। सर्वत्र प्रतीयमानस्य घटादेरुपादानं निमित्तकारणं चोभयं दृश्यते। न चासतः किमप्युपादानम्, इत्युपादानकारणान्यथानुपपत्त्याऽपि नासत्ख्यातिवादः। अद्वैतमते तु—

"आश्रयत्व-विषयत्वभागिनी
निर्विभागचितिरेव केवला
पूर्वसिद्धतमसो हि पश्चिमो
नाश्रयो भवति नापि गोचरः॥"

इति सिद्धान्ताद् निर्विशेषचैतन्याश्रितम्, तदावरकं चाज्ञानमुपादानं निमित्तं च व्यावहारिकारोपे, प्रातिभासिकारोपे तु तत्तच्छुक्तित्वावरकप्रमातृचैतन्याभेदप्रयुक्तशुक्त्याद्यवच्छिन्नचैतन्याश्रिता तूलाविद्योपादानकारणम्, काचादिदोषाश्च निमित्तकारणं च कारणद्वयं सम्भवति। ततश्चानिर्वचनीयख्यातिरेव सर्वत्र युक्ता। तच्चानिर्वचनीयमाब्रह्मसाक्षात्कारमध्यस्तत्वे व्यावहारिकम्, ततः पूर्वमधिष्ठानज्ञानेन बाधे तु प्रातिभासिकम्, इति न काप्यनुपपत्तिरद्वैतसिद्धान्त इत्यद्वैतिनां मर्यादा॥

आश्रय-विषयानुपपत्त्याऽज्ञाननिरासः।

एतेन—

निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत्।
मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव पेक्षते॥
न चावरणमज्ञानमसत्ये तेन चेष्यते।
स्वप्रकाशस्वरूपत्वाद् जडेऽज्ञानं न मन्यते॥
अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति॥

इति—व्याख्यातम्॥

अज्ञानस्य जड-जीवाश्रयत्वायोगः ।

यत्तु 'यत् परेण भावरूपमज्ञानमङ्गीकृतम्, तत् जीवाश्रयम्, उत जडाश्रयम्, उत ब्रह्माश्रयम्। नाद्यः ; प्रकृत्यधिकरणे निराकरिष्यमाणत्वात्। न द्वितीयः; अनभ्युपगमात्,। जडस्याज्ञानकल्पितस्य तदाश्रयत्वेऽन्योन्याश्रयात्, कारणस्य कार्याश्रितत्वादर्शनाच्च ॥

अज्ञानस्य ब्रह्माश्रयत्वायोगः ।

तृतीयेऽपि वक्तव्यम्—किं ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नाति, उत जीवम, जडं वा। आद्ये ब्रह्माश्रितस्याज्ञानस्यावरणस्य विषयो वक्तव्यः—आवरणं हि कामलादिकं क्वचिदाश्रितं क्वचिद्विषये किञ्चित् प्रतिबध्नातीत्युपलब्धम्। ब्रह्मावरणेनाज्ञानेन ब्रह्मगतः कश्चिद्धर्मो वाऽऽव्रियते, स्वरूपमेव वा, अन्यद्वा किञ्चित्। न किमपि ॥

अज्ञानविषयानुपपत्तिः ।

न तावदाद्यः; ब्रह्मणः परमते निर्विशेषत्वात्। नापि स्वरूपम्; स्वयंप्रकाशत्वेन स्वतः सिद्धत्वात्। न हि प्रकाशमानं चावृतं च भवति; आवरणकृत्याभावात्। ब्रह्मणोऽद्वितीयत्वादिधर्मो मिथ्याभूतोऽपि नाज्ञानस्य विषयो भवितुमर्हति; अज्ञानसिद्ध्यधीनत्वादद्वितीयत्वादिधर्माध्यासस्यान्योन्याश्रयात्। न ह्यज्ञानातिरिक्तं किञ्चिदद्वितीयकत्वादिकारणमस्ति; अन्यथाऽनवस्थापातात् ॥

एतेन—अज्ञानेन ब्रह्माश्रितेन जीवावरणमपि—परास्तम्; जीवस्यापि कल्पितत्वेनोक्तदोषानिस्तारात्। जडस्त्वज्ञानकार्यो नाज्ञानस्य विषय इति पूर्वमेवोक्तम्, मिथ्यात्वाच्च तस्य। तत्राप्यनवस्था, अन्योन्याश्रयादिप्रसङ्गश्च। स्वतोऽप्रकाशस्याऽऽवरणेन न किमपि कृत्यम्। न ह्यन्धकारोऽन्धकारेणाव्रियते। न हि जडाश्रयत्वेऽविद्याया भानमपि।

अविद्याया भानानुपपत्तिः, तन्निवर्तक-निवृत्त्यनुपपत्तिश्च ।

तत्राविद्यायाः प्रकाशः स्वयमप्रकाशरूपत्वाद् न स्वतः ;

नापि प्रकाशाश्रयतया; तदाश्रयस्य जडस्यास्वप्रकाशस्वरूपत्वेन न प्रकाशाश्रयतयाऽपि तत्प्रकाशः, इत्याश्रय-विषयाभावादज्ञानासिद्धेः, तन्निबन्धनस्य ज्ञाननिवर्त्यस्य बन्धस्याभावात्, ज्ञानस्य च तन्निवर्तकत्वायोगाद् न ब्रह्मजिज्ञासा सप्रयोजना, इति विचारशास्त्रमनारम्भणीयं स्याद्द्वैतवादे--इति ॥

चिन्मात्रस्याविद्याश्रयत्व-विषयत्वोपपत्तिः ॥

इयमत्राद्वैतिनां मर्यादा—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति वचनात्—जीवादिषट्कमनादि । तत्र जीवेश्वर-प्रकृत्याख्याविद्यातदीश्वरसंयोगानादित्वं बहुसम्मतम् । शुद्धचैतन्यं तस्याऽविद्यया संबन्धश्च परं विप्रतिपन्नम् । तत्रापि जीवेश्वरयोरविद्या-तत्प्रयुक्तोपाधिकयोरविद्यानाश्रयत्व-तदविषयत्वे अविप्रतिषन्ने ; शुद्धचिन्मात्रस्याविद्याश्रयविषयत्वाङ्गीकारात् , इति जीवस्य, विशिष्टस्येश्वरस्य, जडस्य, अन्यस्य वाऽज्ञानाश्रयत्व-विषयत्वविकल्पानामनङ्गीकारपराहतत्वात् तेषां कल्पानां विस्तरेणानूद्य दूषणं ग्रन्थविस्तरमात्रम् ॥

तत्र निर्विशेषं ब्रह्मैव शास्त्रमहातात्पर्यविषय इत्यद्वैतसिद्धान्तात्, तत्रैव श्रुतिपर्यवसानस्य विशदीकरिष्यमाणत्वात्, तदङ्गीकृत्यैवाज्ञानस्य तदाश्रयत्वपक्षनिराकरणप्रस्तावाच्च तदङ्गीकृत्यैव विचारः सांप्रतमवसरप्राप्तः ॥

तत्राविद्यासम्बन्धः शुद्धचैतन्यस्य यदि स्वीक्रियते, तर्हि कीदृशो योगोऽविद्याया अनादिरिति वक्तव्यम् । तत्राद्वैतिनां सिद्धान्तः—आश्रयाश्रितभावः, विषय-विषयिभावो वा योग एवानादिरिति, इत्यविद्याया ब्रह्माश्रयत्वम् , तद्विषयतकयैव सिद्धस्य ब्रह्माश्रयत्वम्, तदावरकत्वम्, प्रस्थानभेदेन जीवाश्रयत्वम्, ब्रह्मविषयकत्वं वा सिद्धवत्कृत्य तत् कथमित्येव विचारः प्रस्तूयते ॥

तत्र निर्विशेषे ब्रह्मणि स्वप्रकाशे किं तत्र कल्पितानां धर्माणामावरणम्,

उत स्वरूपस्य । स्वरूपेऽपि किं कस्यचनांशस्येति कल्पाः सर्वेऽपि निरालम्बाः; अनङ्गीकारात् ॥

तत्राज्ञानादिषु षट्सु जीवेशभेदोऽप्यनादिरिति सर्वतन्त्रसिद्धान्तः, यत्र नाद्वैतिनामपि विप्रतिपत्तिः । तत्र जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रस्यैवैकत्वेन, विशिष्टयोर्जीवेश्वरयोरैक्यानङ्गीकारात् , इति तत्र तत्र जीवेश्वरैक्यानुपपत्त्यापत्तिर्नावसरतीति प्रथममवसेयम् ॥

तत्रानादित्वेऽपि विशिष्टस्य जीवस्येश्वरस्य वा स्वरूपम्, अनादिमायया तद्योगः, तन्निबन्धनस्तयोर्भेदोऽप्यनाद्यविद्याकल्पित एव । संविन्मात्रं तु नाविद्याकल्पितम् , किन्तु स्वतः सिद्धम् , सर्वाधिष्ठानं च; अनाद्यविद्योपाधिवशात् ॥

परमार्थतो निरुपाधिकस्यैव कारणत्वादि ।

सति चैवम् "जीव ईशो विशुद्धा चित्" इति निर्दिष्टनिर्विभागाखण्डसंविन्मात्रस्योपनिषत्तः "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "सदेवसोम्येदमग्र आसीत्" "आत्मा वा इदमग्र आसीत्" "तस्माद्वा एतस्मा दात्मन आकाशः संभूतः" इत्यादिभिरुपदेशानुपपत्त्या निर्विभागस्य कारणत्वानुपपत्तेश्चाज्ञानवशादेव सदादिखण्डरूपेण भेदस्यापि प्रयुक्तत्वादनाद्यविद्याकल्पितानादिसदादिभेदभिन्न-सर्वजगदभिन्ननिमित्तोपादानेश्वरस्वरूपस्यानादिमायोपधाननिमित्तं सविशेषत्वमनादिसिद्धमेवाद्वैतिनां दृष्ट्या वेदान्तप्रतिपाद्यं तत्त्वम् ॥

निर्विशेषस्य स्वप्रकाशस्याप्यावरणोपपत्तिः, अनवस्थाऽभावश्च ।

तत्र च तटस्थलक्षणविधयाऽनाद्यविद्योपधानप्रयुक्तत्वेनेश्वरस्य कारणत्वं लक्षणम् , उपाधिपरिहाणेनाद्वितीयत्वादिना "नेति नेती"ति विधया तु स्वरूपलक्षणमिति वस्तुस्थितिः । तथा चानाद्यज्ञानयोगवशाद् अखण्डस्यापि सदाद्यंशभेदकल्पना, तत्रानन्दांशस्याज्ञानम् , सदाद्यंशस्य स्वयंप्रकाश इति निर्विशेषस्य स्वयंप्रकाशस्याप्यावरणमंशभेदेन न विरुध्यते ।अंशभेदस्यानादित्वात् , अज्ञानस्येवाज्ञानान्तराकल्पितत्वाच्च जीवेश्वरभेदादेरज्ञानप्रयुक्तत्वेऽपि नानवस्था, न वाऽन्योन्याश्रयः । विवेचितं चेष्टसिद्धावज्ञानादेरज्ञानान्तराभावादिकम् , इति शुद्धस्य ब्रह्मणः स्वप्रकाशस्यापि सच्चिदानन्दभेदेनावरणम् , स्वयं प्रकाशश्च सर्वमुपपद्यते ॥

अविद्यानिवर्तकोपपादनम् ।

अत एव घटादावावृतब्रह्मोपादानके सदात्मनाऽऽवृतस्यैव कारणत्वात् "सन् घटः" इति सामानाधिकरण्यं सदनुवेधेन। तत्रानन्दात्मना तु यावदखण्डाकारज्ञान तदावरणम्, इति "आनन्दो ब्रह्मेति व्यजनादि"त्युक्तविधया तदात्मनाऽप्यखण्डस्वरूपज्ञानाद् अज्ञाननिवृत्तिः अनावृतसंविन्मात्रावस्थमुक्तिस्वरूपसिद्धिश्चाबाधा ॥

तत्र "सदेव सोम्येदमि"ति सामानाधिकरण्यात् सदात्मना, तस्य चिद्रूपत्वात् चिदात्मना च सद्वितीयत्वम्; आनन्दस्वरूपस्यापि ज्ञानेऽखण्डात्मनाऽद्वितीयत्वमिति सद्विद्यार्थः, इत्यानन्दात्मनाऽपि ज्ञानमेवाद्वितीयत्वादिरूपेण ज्ञानम्। "तत्त्वमसी"त्यादिवाक्यानि त्वखण्डात्मनाऽऽत्मस्वरूपबोधनद्वाराऽज्ञाननिवृत्तिमात्रप्रयोजनानि। तदेवं ब्रह्माश्रय-विषयाज्ञानवादप्रस्थानम् ॥

अज्ञानस्य जीवाश्रयत्वकल्पोपपत्तिः ।

जीवाश्रयमप्यज्ञानं ब्रह्मावृणोतीति वा मन्तव्यम्। तत्र जीवाश्रयत्वं तदुपाधित्वमात्रेण, तस्यैव विशेषणत्वेन तु जीवत्वमित्युपहित-विशिष्टभेदेन जीवस्य भेदाद् विशिष्टस्य जीवस्य तत्प्रयुक्तस्य तदनाश्रयत्वाद् ब्रह्मसूत्रभाष्यवार्तिकोक्तरीत्या तदतिरिक्तब्रह्मान्तराभावात् फलतो न विशेषो ब्रह्माश्रयत्वपक्षादित्येकः कल्पः ॥

कल्पान्तरं त्वाविद्यकधर्माश्रयत्वेन, अन्तःकरणाद्युपाधिकत्वेन वा जीवत्वम्; उपाधेस्तदवच्छिन्नपक्षपातित्वात्, उपहितपक्षपातित्वाद्वेति । व्यक्तमिदं ब्रह्मसिद्धावपि। ततश्च नान्योन्याश्रयशङ्का ब्रह्माश्रयत्वपक्ष इव जीवाश्रयत्वपक्षेऽपि ॥

अज्ञानस्यानादित्वम्, अज्ञानान्तरानुपादानकस्यापि ज्ञाननाश्यत्वं च ।

अद्वैतसिद्ध्यादावनादित्वाद् नोत्पत्तावन्योन्याश्रय इत्युपपादनं तु कृत्वाचिन्तया। तत्र यद्यप्यनादि भावरूपं चाज्ञानम्; तथापि तन्नश्वरमेव; परिणामित्वेन विकारित्वात्। अत एवाऽऽर्हतमतपरीक्षायामनुव्याख्यानमप्यात्मनः शरीरपरिमाणत्वे विकारित्वादनित्यत्वनिरूपणपरमिति व्यक्तमधस्तात् ॥

अनादेरपि गिरिगुहावर्तिनोऽन्धकारस्य कादाचित्केनाऽऽकस्मिकेनावि-

तर्कितसम्भवेन वा सावित्रेण तेजसा नाशाद् विरोधिसंनिपातेन नाशोपपत्तिरज्ञानस्यानादेरपि; अनादित्वाच्चाज्ञानस्य नाज्ञानान्तरापेक्षा, न वा ब्रह्मवद् निवृत्त्यनुपपत्तिः। अन्यथेश्वरप्रसादेन कथं जीवानामज्ञानं निवर्तेत? न च ब्रह्मणो विरोधिसंनिपातः, येन तस्यापि नाशः स्यात्। इदं सर्वमभिप्रेत्यैवोक्तम्—"मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहारः" इति॥

न हि मिथ्याभूतं सर्वमज्ञानवशादिति नियमः, अधिष्ठानज्ञाननिवर्त्यत्वस्यैव तत्रारोपप्रयोजकत्वात्, येनाज्ञानस्याप्यज्ञानान्तरप्रयुक्तत्वमापद्येत। तद्धि साक्षादेव ज्ञाननिवर्त्यं न कारणान्तरमपेक्षते। तदुक्तम्—'अविद्यानिवृत्तिपरत्वाच्छास्त्रस्य' इति॥

अनादिरज्ञानस्य ब्रह्मणा सम्बन्धः स्वभावत एवेत्यनुपदमेवोक्तम्। न च स्वतः सिद्धत्वेऽप्यनिवृत्तिरज्ञानस्य, येनानिर्मोक्ष आपतेत्; विरोधिसन्निपातप्रयुक्तत्वान्नाश्यत्वस्य, परिणामित्वप्रयुक्तत्वाद्वा। कथमन्यथा स्वाभाविकात्मपरिणामवादिजैनमतनिरासः? मिथ्याज्ञानानां पूर्वपूर्वाध्यासरूपाणां व्यावहारिकाणामपि प्रथमाज्ञानं मूलाविद्यापरपर्यायमेकमेवोपादानम्, इति ततः पूर्वस्य कस्याप्यज्ञानस्याभावात् तत्रैव सर्वेषां विरतेर्नान्योन्याश्रयः, अनवस्था वा॥

अत एव प्रलयावस्था, यत्र सर्वेषामज्ञानप्रयुक्तानां जडानाम्, मिथ्याज्ञानादीनां च मूलाविद्यात्मनाऽवस्थानम्। तत्राज्ञानारोपस्य स्वाभाविकत्वस्य सत्त्वेऽपि ज्ञाननिवर्त्यत्वस्योक्तत्वात्, तत्सहेतुकत्वपक्षस्यानङ्गीकाराच्च तत्कल्पप्रयुक्तानां दोषाणां निरालम्बनत्वम्॥

### अज्ञानस्य साक्षिभास्यत्वम्।

सा चानादिः स्वोपहितसाक्षिस्वरूपेणैव भासते। निर्विभागं चैतन्यमेवाज्ञानोपहितात्मना, तदवस्थाविशेषोपहितात्मना, अन्तःकरणोपहितात्मना वा साक्षि, इति तस्य, किं बहुना? अज्ञातानामिव, ज्ञातानामपि साक्षिभास्यत्वम्; संविन्मात्रस्यैव, साक्षिणोऽपि स्वप्रकाशत्वेनानावृतत्वात्, इति तज्ज्ञानपरम्परयापि, नानवस्था॥

### अज्ञानाभावरूपत्वनिरासः।

अत एव साक्षिवेद्यत्वात् तस्य भावरूपत्वम्। न च तदज्ञानं ज्ञाना-

भावः; तस्याहमज्ञ इत्यादिप्रत्यक्षयोग्यताया असम्भवात्। अभावज्ञाने प्रतियोगिज्ञानकारणतयाऽऽश्रय-तियोगिज्ञानयोः सतोः, असतोर्वा ज्ञानाभावप्रत्यक्षायोगात्॥

अज्ञानस्य ज्ञानप्रागभावत्वनिरासः।

न हि तद् ज्ञानप्रागभावः। न हि स स्वरूपज्ञानस्य नित्यस्य प्रागभावः। वृत्तिज्ञानप्रागभावस्तु वृत्तिभेदेन तत्तद्वृत्तिनाश्योऽनेकः, इत्यनन्ताज्ञानकल्पना, तस्य ज्ञानजनकस्य बन्धकारणत्वानुपपत्तिश्च॥

अत एव वृत्त्युत्पत्तिमात्रनाश्यस्य तस्य नेश्वरप्रसादेन निवृत्तिः। विषयावरणं तु ज्ञानप्रागभावस्यान्तःकरणाश्रयस्य विषयासम्बद्धस्य न कार्यम्। तत्र भ्रमप्रागभावस्य भ्रमकारणस्य भ्रमोत्पत्तौ नाशाद् भ्रमकालेऽज्ञानाननुवृत्त्यापत्तिः, तस्य प्रमाणज्ञानमात्रनाश्यत्वानुपपत्तिः, वृत्तिप्रागभावस्य तत्कारणान्तःकरणावस्थाविशेषरूपस्यैकस्य ज्ञानभेदेन भेदायोगात् तत्तज्ज्ञानविशेषोत्पत्तौ तन्नाशायोगश्च॥

न चान्तःकरणस्याज्ञानविरोधिनोऽज्ञानत्वम्। 'न जानामी'तिवत् 'न किञ्चिदवेदिषम्' इत्यपि ज्ञानं वर्तते। तत्र भूतकालो विषयावच्छेदको न प्रागभावविषयो भवितुमर्हति। अतीतज्ञानविषयो हि स परामर्शो न तत्प्रागभावविषयः। प्रागभावो निर्विषय इति त्वन्यदेतत्॥

भावरूपेऽज्ञाने प्रत्यक्षं प्रमाणम्,
न च तस्याभावविषयकत्वम्।

'अहमज्ञः' इति प्रतीतिसमय आश्रय-प्रति योगिज्ञानयोः सतोर्न तदभावप्रत्यक्षोपपत्तिः। भावरूपाज्ञानवादे त्वनुपदोक्तरीत्या तस्य साक्षिभास्यत्वेनोपपत्तिः॥

सर्वत्रापरोक्षे, परोक्षे च 'न जानामी'ति प्रतीतौ भावरूपाज्ञानस्यैव प्रतीतिः, न कुत्रापि ज्ञानाभावस्य। प्रमाणव्यापारस्तु भावरूपाज्ञाननिरासार्थ एव, न त्वभावनिरासार्थः। तारतम्यानुभवस्तु नाभावे, किन्तु भावरूप एवाज्ञाने सम्भवति॥

साक्षिणाऽपि नाज्ञानस्याभावरूपस्य प्रतीतिः, किन्तु भवरूपस्यैवाज्ञानस्य। अभावो हि षष्ठप्रमाणगम्यः, न प्रत्यक्षप्रमाणावसेयः, इति न प्रत्यक्षयोग्यताऽप्यज्ञानस्य॥

सौषुप्तानुभवोऽपि भावरूपाज्ञाने प्रमाणम् ।

सुषुप्तावज्ञानप्रतीतिः कस्यापि व्यापारस्य तत्राभावाद् नाभावविषया भवितुमर्हति, इति विना साक्षिभास्यतां न तत्र गतिलेशः ॥

"न किञ्चिदवेदिषमि"ति परामर्शोऽप्यज्ञानस्य भावरूपस्यैव, नाभावरूपस्य; साक्षिप्रत्यक्षगम्यत्वात्, साक्षिणोऽज्ञानभासकस्य तन्निवर्तकत्वाभावेन तदविरोधित्वात्, अज्ञानस्य, तद्विषयस्य च साक्षिभास्यत्वस्य सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति न्यायसिद्धत्वाच्च ॥

भावरूपाज्ञाने विवरणानुमानादि ।

विवादगोचरापन्नं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभाववदित्यनुमानमपि भावरूपेऽज्ञाने प्रमाणम्। तत्राप्रकाशितार्थप्रकाशकत्वम् = आवृतविषयावरणनिवर्तकत्वरूपं पक्ष-दृष्टान्तसाधारणम्, इति न पक्षे, दृष्टान्ते वा हेत्वसिद्धिः । अभावमानं तु षष्ठमत्यन्ताभावे, न प्रागभावे; योग्यानुपलब्धेः प्रागभावाविषयत्वात् । न हि प्रमाणज्ञाननिवर्त्यस्य प्रमाणगोचरत्वम् ॥

साक्षिभाष्येऽपि तत्र प्रमाणोपन्यासस्तु तस्याभावत्वव्यावृत्तये, न तु तत्स्वरूपसाधनाय । भावाभावविलक्षणतृतीयप्रकारत्वादज्ञानस्य तस्यानिर्वचनीयत्वम् ॥

विगीतम्, देवदत्तज्ञानम्, तन्निष्ठप्रमाप्रागभावातिरिक्तानादिनिवर्तकम्, प्रमाणज्ञानत्वादित्यनुमानमपि तत्र मानम्। एतेन—अज्ञानम्, न ज्ञानाभावः, अभावमानागम्यत्वात्; सम्प्रतिपन्नवत्, इत्यनुमानमपि—व्याख्यातम् । न चाभावे मानागम्यत्वमसिद्धम्; तत्राश्रय-प्रतियोगिज्ञानसापेक्षस्य तस्य बाधितत्वात् ॥

भावरूपेऽज्ञानेऽर्थापत्तिप्रमाणम् ।

अध्यासकार्यानुपपत्तिरप्यनिर्वचनीयेऽज्ञाने प्रमाणम्; रजतवत् तदाकारवृत्तेरप्यविद्यापरिणामत्वात्, तद्विना तद्बाध्यत्वानुपपत्तेश्च तत्प्रतीतिबाधोभयानुपपत्तिरप्यनिर्वचनीयेऽज्ञाने प्रमाणम् । असत्ख्यातावपि वृत्तिरविद्यावृत्तिरेव। सा चोपादानस्याभावत्वे नोपपद्यते । किं बहुना ? अङ्गीकृतं हि द्वैतिभिरप्यावरणविक्षेपशक्तिमदभावव्यतिरिक्तमज्ञानम् ॥

इयान् विशेषः—भावविलक्षणत्वमप्यद्वैतिनां सिद्धान्ते, इत्यज्ञानाभावत्वसमर्थनं वृथैव द्वैतिनाम्, अद्वैतिनां भावत्वानुमानमपि यद्वानुरूपबलिनयेन—भावत्वसमर्थनपरतया, न तु तत्र निर्भरेण। निर्भरस्तु भावाभावविलक्षणतृतीयप्रकारे, अनिर्वाच्यत्व एव॥

### अज्ञानाश्रयनिर्णयः।

तच्चाज्ञानं ब्रह्माश्रितम्, जीवाश्रितं वा प्रस्थानभेदेन। उभयत्र निर्विभागचिदंशस्यैवावरणम्। तत्र जीवोऽप्यहमर्थो नाज्ञानाश्रयः, किन्त्वज्ञानावच्छिन्नः; उपाधेः प्रतिबिम्बपक्षपातित्ववदवच्छिन्नपक्षपातित्वादुपाधिदोषेण बन्धेनाक्रान्तो बम्भ्रमीति, बद्धश्च तेन संसरति। अज्ञानाश्रयत्वं तूपहितैकदेशचिदंशस्यैव॥

### जीव-ब्रह्मणोर्भेदभेदव्यवस्था।

इयान् विशेषः—अद्वैतेऽविद्योपहितं मुख्यं जीवस्वरूपमसंसारि ब्रह्माभिन्नम्, द्वैतमते, त्वहमर्थातिरिक्तजीवाभावादहमर्थस्य तस्य भेद एवेति॥

वस्तुतस्तु—द्वैतमतेऽपि जीवस्येश्वरप्रतिबिम्बत्वाद् बिम्ब-प्रतिबिम्बयोरभेदाच्च जीवोऽपि ब्रह्माभिन्न एव। अत एव "नित्यः सर्वगतः स्थाणुः" इत्यत्र तदीयभाष्यादृते पाठे बिम्बस्वरूपाभिप्रायेण सर्वगतत्वमुपपाद्यमानमुपपद्यते। तथापि—

"अनन्योऽप्यन्यरूपेण तथैको बहुरूपवान्॥"

इति नीत्या विशेषकृतो भेदोऽपि तत्र स्वीक्रियते, अद्वैतसिद्धान्ते तूपाधिसम्बन्धकृतः सः—इति॥

तत्र द्वैतमते विशेषस्य नित्यत्वात्, तत्कृतो भेदो नित्यः। अद्वैतसिद्धान्ते त्वविद्याया बाधात् भेदोऽपि बाधितः। ज्ञानस्वरूपत्वं तूभयत्राश्रयस्य, विषयस्य च समानम्॥

तत्रेश्वरेच्छयाऽविद्यया जीवस्यावरणं द्वैतमते, अद्वैते त्वविद्ययैव केवलया ब्रह्मणः साक्षादावरणम्, जीवस्य तु तद्विरोधिनाऽन्तःकरणेनानवच्छेदेनौपाधिकस्यापि नावरणम्; उभयत्राप्यनादिरविद्या निवर्तते, तत्प्रयुक्तावरणं वा। निवर्तकं तु साक्षात्, ईश्वरप्रसादद्वारा वेत्यन्यदेतत्। अघटितघटनापटीयस्या मायायाः, विशेषस्य वा सर्वमपि दूषणं भूषणमेवोभयत्रापि।

दुर्घटघटकत्वं ह्यविद्याया अनिर्वचनीयस्वभावत्वेन, इति संविदाश्रयत्व-विषयत्वयोस्तत्र न दोषलेशः । न तु तस्या अचेतनाया ब्रह्मानपेक्षा परिणामे, न वा स्वस्याः प्रकाशे, येन सा न साधिष्ठाना, न वा ससाक्षिका स्यात्; तस्याः ब्रह्माधिष्ठिताया एव परिणामं समर्थयितुं खल्वद्वैतिनामीहृत्यधिकरणम् ॥

अविद्याया दुर्घटत्वस्य भूषणत्वम् ।

"मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्" इति श्रुत्यनुसारिणी चाद्वैतिनामविद्या । बहुतरोपनिषत्स्वद्वैतिनामविद्यावादस्यैव प्रामाणिकत्वे सन्ति बहूनि वचनानि । तत्र दुर्घटघटकत्वमविद्यायाः शुक्तिरजतादिकारणत्वे, ब्रह्मणउपादानतापादकत्वे, तस्या ब्रह्माश्रयत्व-विषयत्वयोः, साक्षिवेद्यत्वे, स्वस्य, स्वकार्याणां चानिर्वचनीयत्वे, अखण्डे ब्रह्मणि सदादिभेदप्रयोजकत्वे, अनादित्वेऽपि निवर्त्यत्वे, यद्यदविद्यापेक्षमेव घटनीयम्, तत्र सर्वत्र सुघटत्वापादकत्वमेव, न तु दुर्घटैकस्वभावत्वम्, येन तस्या दुर्घटत्वे सा साधिष्ठाना, ससाक्षिका च न स्यादित्यापादनमवसरेत्, दुर्घटघटकत्वमेवाविद्यायाः न स्वभाव इति तु तत्त्वम् ॥

दुर्घटत्वमविद्यायाः स्वविषयब्रह्मविवर्तोपादनत्वादौ सर्वस्य दूषणस्यापातदृष्ट्याऽऽपाद्यमानस्य भूषणत्वेन । तेन च न तस्या अविद्यात्वस्य भङ्गः । अयमेव न्याय ईश्वरशक्तौ द्वैतमतेऽपि । अपर्यनुयोज्यस्वभावत्वं दुर्घटघटकत्वम् । यावत् प्रमाणसिद्धं तावतः सुघटस्य, दुर्घटस्य वा घटनायां पाटवमीश्वरशक्तेर्दुर्घटघटकत्वमविद्यायामपि समानम् । यदीश्वरशक्तिर्दुर्घटकभावा, तदा किमपि न घटयिष्यति, अन्यथा तु सुघटत्वप्रसङ्गादीश्वरशक्तिरपि कथं घटमपि पटयितुं न शक्नुयात्?

न चेदं युक्तम् । न हीश्वरः, आगमाः सहस्रमपि वा घटं पटयितुमीशते । इष्टापत्तौ वेदेषु, प्रपञ्चसृष्टौ, जीवभेदेन सुख-दुःखादिप्रधाने सर्वत्र स्वातन्त्र्यापत्त्या वेदापौरुषेयत्वसिद्धान्तः, "धाता यथा पूर्वमकल्पयदि"ति यथापूर्वस्रष्टृत्वादिकम्, तत्तद्धर्मापेक्षमेव सुख-दुःखादिप्रधानव्यवस्था च नोपपद्येत, इत्यगत्याऽपर्यनुयोज्यस्वभावत्वमेवाविद्यायाः, ईश्वरस्य वाऽघटितघटनापटीयस्त्वम् ॥

मायावादे ब्रह्मजिज्ञासाधिकारि-विषयाद्ययोग इति शङ्का ।

एतेन—

"स्वभावाज्ञानवादश्च निर्दोषत्वान्न तद्भवेत् ।
अतोऽधिकारि-विषय-फलयोगादिवर्जितम् ॥
अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ॥"

इति—परास्तम् । अत्र स्वभावाज्ञानवादशब्देन जीवाश्रिताज्ञानवादः, स्वस्य परमात्मनः स्वतन्त्रस्य भावः, अज्ञानमिथ्यात्वायोगवादः, परमेश्वरेच्छाधीनजीवाज्ञानवादः, इति बहुधा विवक्ष्यते ॥

तदाशयस्तु—नाज्ञानाङ्गीकारमात्रं दोषो द्वैतमते, अद्वैतसिद्धान्ते वा, येन तदनङ्गीकारे शास्त्रस्य विषय-प्रयोजनशून्यतयाऽनारम्भः स्यात् ॥

तत्र जीवाश्रितं जीवविषयं चाज्ञानं द्वैतवादिभिरपि स्वीक्रियते । तस्य च स्वत एव ब्रह्मणो भिन्नत्वात्, ज्ञानस्वभावत्वाच्च । परं तु तस्य स्वयंप्रकाशस्यापि परमेश्वरेच्छया परमेश्वरे, स्वधर्मेषु चाज्ञानं सम्भवत्येव ॥

यद्यपि धर्माः स्वप्रकाशचैतन्याद् न भिद्यन्ते; तथापि सविशेषत्वादज्ञानविषयतोपपत्तिः । तच्चाज्ञानं सत्यम्, न कल्पितम्; तथापि तस्येश्वरप्रसादान्निवृत्तिर्न विरुद्धा ॥

यद्यपि जीवचैतन्यं स्वधर्मप्रकाशात्मकम्; तथापि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशाद् न तथा संसारे प्रकाशते—इति ॥

इदमेवात्र वक्तव्यम्—अविद्या भावरूपा जीवाश्रिता जीवविषया चेत्यत्र जीवाश्रितत्वे शब्दतो न विवादः, परन्तु तज्जीवचैतन्यमसंसार्येवाविद्याश्रयः, न संसारीति स्वीकर्तव्यम्, अन्यथा जीवाश्रिताऽविद्यावशात् संसारः, संसारिणोऽविद्येत्यन्योन्याश्रयः । परमते त्वीश्वरेच्छावशात् तस्याः बन्धकत्वे तत एव निर्वाहाद् अविद्यावैयर्थ्यम् ॥

जीवस्य स्वस्वरूपविषयमज्ञानं यदि स्वाश्रिताविद्यावशात्, ईश्वरेच्छया च, तर्हि ब्रह्मस्वरूपाप्रकाशः कथम्? तथा च सर्वेषां विनैवाज्ञाननिवृत्तिं कथमनावृतब्रह्माप्रकाशः? यदि ब्रह्माप्यावृतम्, तर्हि जीवाश्रितस्य तद्विषयकस्य चाज्ञानस्य कथं ब्रह्मविषयकत्वम्? कथं वा तद्विषयाणाम्, तदनाश्रितानां च जडानां सर्वदा न प्रकाशः?

यदि सर्वमीश्वरेच्छावशात्, तर्हीश्वरेच्छयैवाज्ञानकार्यनिर्वाहादविद्या वितथा स्याद्, इति जीवाश्रयत्ववद् ब्रह्माश्रयत्वमपि स्वीकर्तव्यम्। तत्र च ब्रह्माश्रिताऽविद्याख्यशक्त्यैव निर्वाहे किमिति तस्या जीवाश्रयत्वमपि ?

न चोभयाश्रयत्वमेकस्य भवितुमर्हति, तस्या भेदे न जीवाश्रिताऽविद्याकृतं किमपि। तत्र चैकतराश्रयत्वपक्ष एव युक्तोऽविद्यायाः, तथा विषयोऽप्येकस्या अविद्याया एकं ब्रह्मैव भवितुमर्हति, इत्यद्वैतप्रक्रियैव प्रायेण विनेश्वरेच्छाद्वारीकरणम्॥

अविद्यानिवृत्त्युपपत्तिरद्वैतमते।

तत्राविद्याया निवृत्तिस्वीकारे, चैतन्येन स्वप्रकाशेनाविरोधेऽपि साम्यमेवोभयोरपि। निवर्त्यस्य तस्य मिथ्यात्वे परं विप्रतिपत्तिः। तत्राविद्यायाः, मायायाश्च ब्रह्माश्रिताया महदाद्याकारेण परिणतिस्वीकारात् तयोः स्वरूपभेदे, शक्तिभेदे वाऽविद्याया निवृत्तिः, न मायाया इत्यत्र न किमपि प्रमाणम्। अद्वैतिनस्तु–मायाऽविद्ययोरैक्यम्, शक्तिभेदमात्रं वा स्वीकृत्यात्मतत्त्वज्ञानात् शक्तिद्वयवतोऽप्यज्ञानस्य निवृत्तिम्, तत्प्रयुक्तानां च चैतन्यातिरिक्तानां तन्निवृत्तिप्रयुक्तां निवृत्तिमभिप्रयन्ति॥

तत्र च "भूयश्चान्ते विश्वमायानिवृत्तिः" "तरत्यविद्यां विततम्" इत्यादिश्रुतयो मानम्॥

ईश्वरेच्छाया अविद्यात्वायोगः।

तत्रेश्वरेच्छापि यदि मिथ्या, तर्हि कथं तया नावरणम्। तत्रापि सहेतुकमावरणम्, अहेतुकं वा। अहेतुकत्वे वचनादिः, यदि चैका, तर्हि तस्याः पुरुषभेदेनावरणानावरणाव्यवस्था, सहेतुकत्वे निमित्तं किमित्यादि पर्यनुयोगा अविद्यायामिव प्रसरन्ति। तच्छक्त्या जडानामावरणं वर्तते, न वा। यदि वर्तते, तर्हि कथं चक्षुरादिप्रमाणजन्यज्ञानेन प्रकाशः? अप्रकाशस्वभावस्य तस्य कथं नु प्रकाशः? एवं घटादीनाम्, अविद्यया संबन्धो वर्तते वा, न वा। यदि वर्तते, तर्हि तस्य निवृत्तिरपीश्वरेच्छया चेत्, प्रमाणव्यापारादिवैयर्थ्यम्, विधि-निषेधवैयर्थ्यादिकं च॥

अतो वरमविद्ययैवावरण-विक्षेपशक्तिमत्या ब्रह्मचैतन्यावरकया तत्तदवच्छिन्नचैतन्यस्याप्यावरणेन, प्रमाणजन्यज्ञानेन चैतन्यनिष्ठाज्ञानविषयत्वस्य, विषयत्वानां वा निवृत्त्या प्रकाशाप्रकाशादिव्यवस्थया सर्व-

कार्यनिर्वाहः, तेन च ब्रह्मोपादानताऽविद्योपादानताश्रुत्यादीनां सामञ्जस्यमपि, इति ब्रह्माश्रय-विषयकस्य, ज्ञाननिवर्त्यस्य, मिथ्याभूतस्य चाज्ञानस्य स्वीकारेणैव जीवस्याहङ्काराद्युपहितस्य, बद्धस्य किञ्चिज्ज्ञत्वादिव्यवस्था, प्रकाशाप्रकाशव्यवस्था, सर्वस्य जगतो ब्रह्मोपादानकताव्यवस्था चोपपद्यते ॥

अद्वैतसिद्धान्ते विषय-प्रयोजनाधि-
कार्यसम्भवेन जिज्ञासानुपपत्तिः ।

सति चैवमज्ञाननिवृत्तिरूपप्रयोजनस्य, अनावृतसंविन्मात्रस्य विषयस्य च सम्भवाद् ब्रह्मजिज्ञासोपपन्ना; अधिकारिणोऽपि श्रुत्यादिसिद्धाधिकारतः सम्भवादिति सर्वमनवद्यम् ॥

न चैवमद्वैतसिद्धान्ते दोषलेशोऽपि, येन तद् हेयं स्यात् । निःश्रेयसप्रधानमुक्तिसाधनात्मतत्त्वसाक्षात्कारोपायप्रदर्शनपरशास्त्रसिद्धोऽद्वैतसिद्धान्तो यद्यनधिकारिणाम्, तद्विद्वेषिणां च हेयः, तर्हि स्वागतम् ॥

निःश्रेयसाभिलाषिणां तु यावदधिकारं यथाक्रमं तत्तत्कर्मयोग-भक्तियोगादिनिष्ठया, तदधिकारनिर्वृत्तौ संन्यस्तानाम्, अविक्षिप्तचित्तानां गृहस्थादीनामपि ब्रह्मविचारसम्पत्त्या कथमप्यद्वैतमार्गो न हेयः, प्रत्युताऽऽदर-निरन्तराभ्यासपूर्वकं केवलमुपादेयः । सर्वथा तु बन्धनिवृत्तिपूर्वकत्वाद् मुक्तेः, तस्याश्च तन्मिथ्यात्वमन्तराऽसम्भवात् तन्निरूपणार्थमध्यासभाष्यमित्यद्वैतमर्यादा ॥

भक्त्यैव बन्धनिवृत्तिर्मोक्षो वेति द्वैतवादः ।

द्वैतिनस्तु वदन्ति—बन्धस्य सत्यत्वात् तस्य चेश्वरेच्छाधीनमात्रनिवृत्तिकत्वात् तदुपयोगितया भक्तिमार्गस्यैवोपादेयत्वात् तदर्थम्, ब्रह्मस्वरूपावगमार्थं च ब्रह्मविचारः कर्तव्यः । तेन च ब्रह्मस्वरूपे सम्यगवगते भक्तिः, तया प्रसन्नो भगवानज्ञानादिबन्धनिवृत्तिद्वारा निःश्रेयसं वितरिष्यतीति सर्वमुपपन्नम्—इति ॥

द्वैताद्वैतसिद्धान्तनिष्कर्षः
तदुपष्टम्भकप्रमाणानि च ।

तत्र वेद-शारीरकमीमांसयोरेकविषयत्वं वक्तव्यमिति सम्प्रतिपन्नम्;

वेदेतिकर्तव्यतारूपत्वात् शारीरकमीमांसायाः, करणेतिकर्तव्यतयोरेकविषयत्वनियमाच्च । तत्र च द्वैतिनो वेदस्य जीव-ब्रह्मभेदपरत्वं प्रतिपन्नाः, अद्वैतिनस्तु तदैक्यमिति विभागः । तत्र द्वैतसिद्धान्तः—सर्वस्यापि मन्त्र-ब्राह्मणात्मकस्य सोपनिषत्कस्य वेदस्य ब्रह्मालम्बनत्वमिति, अद्वैतसिद्धान्तस्तु कर्मकाण्डोपासनाकाण्डयोर्जीवेश्वरभेदपरत्वेऽपि वेदान्तानां काण्डद्वयावगतजीवेश्वरत्वोपलक्षितसंविन्मात्रपरतयैक्यबोधन एव तात्पर्यम्—इति ॥

उभयोरपि स्वस्वसिद्धान्ते "सदेव सोम्येदमग्र आसीदि"त्यादीनि 'तत्त्वमसी'त्यादीनि च सद्विद्यापराणि, बृहदारण्यकादिगतानि "अहमात्मा ब्रह्मे"त्यादीनि च तत्तन्महावाक्यघटितप्रकरणानि प्रमाणानीति सम्प्रतिपन्नम्; उभाभ्यामप्युपक्रमादितात्पर्योपबृंहितानामेषां तत्तदभिमतजीवेश्वरभेद-तदैक्यपरतायामेव समन्वयस्य स्वीकारात् ॥

तत्राद्वैतसिद्धान्ते कानिचन त्वंपदार्थशोधकानि, कानिचन तत्पदार्थशोधकानि, महावाक्यानि तु तदैक्यपराणीति व्यवस्था । तत्र सृष्ट्यादिवाक्यानि ब्रह्मणो निष्प्रपञ्चताबोधनार्थं प्रतियोगिविधयाऽपेक्षिताध्यारोपमाश्रित्य प्रवृत्तानि । उपासनापराण्यन्तःकरणस्य परागवृत्तिनिरोधद्वारेण प्रत्यगभिमुखीकरणद्वाराऽद्वैततत्त्वावगमायोपयुज्यन्ते, एवं कर्मकाण्डगतानि विचाराधिकारोपयुक्तचित्तशुद्ध्यादिद्वारसम्पादकतया तत्रोपयुक्तानि ॥

तदेवं शोधिततत्त्वं पदार्थैक्यस्य विषयस्य निर्णयार्थं ब्रह्मजिज्ञासा कर्तव्येति मर्यादा । स च "तत्त्वमसी"त्यादिवाक्यजन्याखण्डसंविन्मात्रनिर्विकल्पशाब्दापरोक्षसाक्षात्काराधीनः, इति "तत्त्वमसी"त्यादिवाक्यानि जीवत्वेश्वरत्वरूपविरुद्धधर्मत्यागेन, तदविवक्षया वा संविन्मात्रैक्यं बोधयन्ति सन्त्यखण्डार्थानीति व्यपदिश्यन्ते ॥

### तत्त्वमस्यादिवाक्यानामखण्डार्थत्वपरीक्षा ।

तत्राखण्डार्थत्वं तेषां वाक्यानां भवति वा, न वेति विशयेऽनुव्याख्यानम्—

"न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन ।
यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् ॥
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ।
सार्वज्ञादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः ॥

ईशितामुपजीव्यैव वर्तते ह्यैक्यवादिनी ।
उपजीव्यविरोधेन न स्यात्तन्मानता भवेत् ॥"

इति ॥

वाच्यार्थाविवक्षयैक्यपरत्वायोगः ।

अयमाशयः—त्वंपदार्थस्य तत्पदार्थब्रह्मभावो न वेदप्रतिपाद्यः; प्रत्यक्षेण जीवस्य दुःखादिधर्मवत्त्वस्य, ब्रह्मणः शास्त्रेण तद्विपरीतभावस्य चावगमात् । विरोध्याकारपरित्यागेन जहदजहल्लक्षणा निर्वाहस्तु न विरोध्याकाराविवक्षामात्रेण । न हि पृथिवीत्वाद्यविवक्षामात्रेण पृथिवीजलादेरभेदो भवति ॥

परित्यागोऽपि तस्य—'असी'तिवर्तमाननिर्देशात् नानित्यत्वेन भवितुमर्हति । मिथ्यात्वं तु तस्य तत्सत्यत्वावगाहिप्रत्यक्षविरुद्धम् । दृष्टं हि "यजमानः प्रस्तरः" इत्यादौ प्रत्यक्षविरोधेन श्रुत्यर्थस्य प्रच्यावनम्, गौणार्थत्वं च, इति स एव न्यायोऽत्र गतिः । तदिमावत्र प्रयोगौ—जीवब्रह्मैक्यम्, न मीमांसाशास्त्रविषयः, तदुपकर्तव्यवेदाविषयत्वात्; संप्रतिपन्नवत्, तत्त्वमस्यादिवाक्यम्, न प्रतीतार्थम्, प्रत्यक्षविरुद्धार्थत्वात्, "यजमानः प्रस्तरः" इति वाक्यवत्—इति ॥

निर्दोषत्व-तत्परत्वाभ्यां प्रकरणसमस्तु "यजमानः प्रस्तरः" इत्यादौ व्यभिचारी । व्यवहारतोऽगृहीतवृत्तित्वं तूभयत्र समानम्; प्रत्यक्षविरोधोऽप्युभयत्र समानः ॥

प्रत्यक्षविरोधाद् नाखण्डार्थत्वम् ।

वस्तुतस्तु—उपजीव्यत्वेनैव प्रत्यक्षप्राबल्यमुभयत्रापि । प्रत्यक्षगृहीतजीवत्वमनूद्य ब्रह्मत्वविधाने जीव-ब्रह्मैक्यपरत्वे वाऽत्रोपजीव्यविरोधो दुष्परिहरः ॥

न चात्रेश्वरमनूद्य जीवैक्यं बोध्यते, येनोपजीव्यविरोधो न स्यात्; अप्रतीतस्यानुवादायोगात् ॥

श्रुतेर्जीवेश्वरभेदपरत्वाद् नाखण्डार्थत्वम् ।

श्रुतिस्तु जीवेश्वरयोर्भेदमेव गोचरयति, इत्युपजीव्यश्रुतिविरोधाद् नास्याः श्रुतेरपि तत्परत्वम् । जीवेश्वरस्वरूपानुवादेनैक्यपरत्वं तु तस्य पूर्वमसिद्धत्वात्, असिद्धस्य वस्तुस्वभावस्य बाधितस्य शास्त्रेणापि बोधनासम्भवाच्च नोपपद्यते ॥

अत एव मुक्तौ "परेऽव्यये सर्वं एकीभवन्ती"ति च्विप्रत्ययेन पूर्वमसिद्धस्यैवैक्यस्य बोधनम् । न हि कस्यांचनावस्थायां घटः पटीभवतीति वाक्यं प्रमाणमिति सम्प्रतिपन्नम्, इति स्वरूपमात्रैक्यविवक्षायां घटः पटीभवतीति वाक्यवदप्रामाण्यमेव स्यात्; प्रस्तरवाक्यवत् ॥

असिद्धस्वरूपस्य साधनार्थः कस्यचनः प्रयत्नः, स्वाण्डापहारेण रुष्टस्य कस्यचन पक्षिणः समुद्रशोषणप्रयत्नः, कृष्णवर्णस्य कुक्कुरस्य वचनमात्रेण, भ्रमेण, प्रमादेन वा श्वेतीकरणार्थः प्रयत्नः ॥

रज्जुसर्पस्य 'नायं सर्प' इत्यपवादेन बाधवत् नात्रापवादः कोऽपि जीवेश्वरभेदविषयो दृश्यते; श्रुत्या श्रुतिबाधासम्भवेन तन्न्यायस्यात्राप्रसरात् । न हि निर्दोषा श्रुतिः पौरुषप्रत्यक्षवत् बाध्या, अबाध्या च स्यात्; अन्यथा भेदश्रुतिविरोधेन कथमभेदश्रुतिरेव न बाध्या ? भेदपराण्यपि "द्वा सुपर्णा सयुजा सखाया" इत्यादीनि कर्मविध्यशेषाः, उपासनाविधिशेषा वा जीवेश्वरस्वरूपमात्रपराणि वा वाक्यनि नाप्रमाणीभवितुमर्हन्ति ॥

सावकाश-निरवकाशन्यायेनापि भेदश्रुतय एव प्रबलाः, अद्वैतश्रुतयस्तु कथंचिद् मुक्त्यवस्थायामीश्वरसाम्यमादायोपपद्यन्ते । न चैवं भेदश्रुतयः; तासां मिथ्याभेदपरत्वे बोध्य-बोद्धृ-बोध-बोधकानां सर्वेषां बाधाद् बोधकत्वमेव हीयेत । अद्वैतश्रुतीनामपि मिथ्यात्वाविशेषाद् कथं नाम प्रामाण्यम् ॥

मिथ्यात्वदुर्वचत्वाप्रामाणिकत्वे ।

मिथ्यात्वमपि तु भेदस्य दुर्वचम् । तद्धि नासत्त्वम्; अनङ्गी-

कारात्। न चानिर्वचनीयत्वम्, तद्ध्यज्ञानकार्यत्वरूपमज्ञानसिद्ध्यधीनम्। न चाज्ञानस्य सिद्धिरिति पूर्वमेव साधितम्॥

अस्तु वा कथंचन मिथ्यात्वं भेदस्य; तथापि श्रुतेर्निर्दोषाया मिथ्याभेदानुवादित्वं कथम्? न हि श्रुतिरप्रमाणं नाम। तथाहि—श्रुत्याऽनुवादः प्रमितस्य वा, भ्रान्तिसिद्धस्य वा। आद्ये प्रमाणत्वविरोधोऽद्वैतश्रुतेः। न द्वितीयः; अज्ञानासम्भवेन तन्निरासात्॥

### भेदस्यैव प्रामाणिकत्वम्।

ईश्वरस्य जीवाद्भेदो हि न प्रमाणान्तरसिद्धः, इत्यपूर्वताऽपि भेदस्य वर्तते; इति ततोऽपि भेदश्रुतेः प्रामाण्यमनपोद्यम्। सर्वथा त्वद्वैतश्रुतीनामुपजीव्यभेदश्रुतिविरुद्धानाम्, प्रत्यक्षादिविरुद्धानां च गौणार्थतया सावकाशत्वाद् निरवकाशा द्वैतश्रुतिरेव मोक्षोपायप्रदर्शनपरा स्वीकर्तव्येति सिद्धम्—इति॥

### तत्त्वमस्यादिवाक्यानामखण्डार्थत्वसमर्थनम्।

अत्र "तत्त्वमसी"त्यादिवाक्यान्यखण्डार्थपराणि जीवब्रह्मैक्यपराण्येव। न च प्रत्यक्षविरोधः; कर्तृत्व-दुःखादिविशिष्टस्येश्वरेणाभेदाबोधनेन, प्रत्यक्षावगतविशिष्टजीवैक्यपरत्वाभावेन च तत्पराणां तेषां प्रत्यक्षेणाविरोधात्, "यजमानः प्रस्तरः" इत्यत्र तु तस्य प्रस्तरस्तुतिपरस्य स्वार्थे तात्पर्याभावेन प्रत्यक्षेण बाधाद् गौणार्थत्वमिति युक्तम्। तावतापि तस्य प्रकृतविध्यर्थवादतयैवोपयोगः। सा तु "विद्यमानेनाप्यर्थेन स्तुतिर्भवत्यविद्यमानेने"ति शाबरसिद्धान्तेन विद्यमानभेदपरत्वेऽपि यद्यपि न दुष्यति; प्रशंसायामेव तात्पर्यात्, तथापि प्रत्यक्षाविरोधेन विद्यमानेनैवार्थेन स्तुतिः संभवन्ती नोपेक्ष्येत्यभिप्रायेणैव तत्सिद्धिपेटिकायामस्य वाक्यस्य गौणार्थत्वसमर्थनम्; अन्यथा "स प्रजापतिरात्मनो वपामुदखिदत्" इत्यादीनामपि गौणार्थत्वापत्तिः, इति गुणार्थवादा सर्वेऽपि भूतार्थवादा स्युः, इति गुणार्थवादकथा कथामात्रं स्यात्॥

न च तत्त्वमस्यादिवाक्यानि विधिशेषाः, किन्तु स्वतन्त्राण्येव वस्तुस्वरूपप्रतिपादकानि, विधितुल्यान्यपूर्वार्थत्वेन। न च विधौ परः शब्दार्थः, इति यया कयापि विधया लक्षणया, अन्यथा वा वस्तुसदर्थबोधकत्वमेव युक्तम्॥

तात्पर्यविषयेऽर्थे प्रत्यक्षादिविरोधोऽ-
किञ्चित्करः, तस्यार्थाविवक्षयाऽविरोधात्।

एतेन—प्रत्यक्षापेक्षया श्रुतिप्राबल्ये विशिष्टयोरेव बाधितोऽप्यभेदो बोध्यतामिति शङ्का—परास्ता ; गुणार्थवादताया अनङ्गीकारात्। मुख्यार्थत्वं नाम तात्पर्यविषयार्थत्वम्, न तु शक्यार्थत्वम्। तात्पर्यं तु सद्विद्यादीनामद्वितीये ब्रह्मणि, जीवब्रह्मैक्य एव वेति व्यक्तमन्यत्र। तच्च यथा यथा निर्वहति, तथा तथा लक्षणाया एकत्र, द्वयोः, त्रिषु, बहुषु वाऽङ्गीकारेणैव निर्वहणीयम्; यथा—"विषं भुङ्क्ष्व" "वायुर्वै क्षेपिष्ठे"त्यर्थवादादौ ॥

एतेन—'तत्त्वमसि' इत्यादेरेकपदलक्षणयैवान्वयबोधोपपत्तौ किमिति सर्वेषु पदेषु लक्षणेति शङ्का—परास्ता। न ह्यन्वयानुपपत्तिमात्रं लक्षणाबीजम्; "विषं भुङ्क्ते"त्यादावप्यन्वयोपपत्त्या लक्षणाभावप्रसङ्गेन यथाश्रुतार्थत्वस्य मुख्यार्थत्वापत्तेः। लक्षणा चात्र जहदजहल्लक्षणा, यतो विरुद्धाकारपरित्यागेन स्वरूपैक्यं तात्पर्यविषयो वाक्यार्थः सिद्ध्यति ॥

विरुद्धाकारपरित्यागस्तस्याविवक्षामात्रेण; वाक्यस्य तावन्मात्रेणाभेदबोधकत्वोपपत्तेः, तावन्मात्र एव वाक्यव्यापाराच्च। तस्यानित्यत्वं वा, मिथ्यात्वं वेति तु वाक्यान्तरावसेयम्। वाक्यान्तरं तु "सदेव सोम्येदमि"ति प्रस्तुत्य प्रवृत्तम् "एकमेवाद्वितीयमि"ति प्रपञ्चमिथ्यात्वपरं प्रत्यक्षम्॥

न च पृथिवी-जलादीनां जलत्वाविवक्षयाऽभेदोऽपि जीव-ब्रह्मैक्यमिवाबाधितः। तत्रापि हि द्रव्यत्वादिनाऽभेदमादाय पृथिवी जलमिति वाक्यं नाप्रमाणम्; पृथिवीत्व-जलत्वरूपेणाभेदस्तु तद्विवक्षायां न वाक्यार्थः, न वा तन्मिथ्यात्वं तत्र निर्णीतम्॥

खण्डननिबन्धस्तु—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥"

इति नयेन सर्वेषां सर्वैः सद्रूपेण ब्रह्मरूपेणाभेदं साधयति। अत एव "यतो वा इमानि भूतानि जायन्ते" इत्युत्पत्तिश्रवणेऽपि "सद्भावेन ह्यजं सर्वमि"ति कारणात्मनाऽजत्वं सर्वस्य जगत इति गौडपादा अजातवादं समर्थयन्ति ॥

अनया दिशा यदि पृथिवी-जलयोरप्यभेदो विवक्ष्यते, तर्हि तयोरपि स्वरूपेण मिथ्यात्वमर्थसिद्धं न सुवारम्। अयमेव न्यायस्तत्त्वमस्यादिवाक्येषु। अत्रापि हि जीवत्वेश्वरत्वप्रयोजकोपाध्यविवक्षया, तत्तदुपाध्य-

धिष्ठानसंविदात्मनाऽभेदे बोधिते, तद्व्यतिरेकेणोपाधेः, तत्संबन्धप्रयुक्तोपहित-तद्भेदादेरपि मिथ्यात्वमर्थसिद्धं भवति, इति वेद-तदितिकर्तव्यतारूपब्रह्मसीमांसयोरुभयोरप्यद्वैत एव पर्यवसानम् ॥

सन्ति च तदनुगुणानि वेदवाक्यानि, ब्रह्मसूत्राणि च—"नेह नानास्ति किञ्चन" "एकमेवाद्वितीयमि"त्यादीनि, "तदनन्यत्वमारम्भणशब्दादिभ्यः" "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"त्यादीनि, स्मृति-पुराणेतिहासादिवाक्यानि च ॥

न च विवक्षितार्थस्य प्रत्यक्षेण विरोधः। अविवक्षितार्थेन विरोधस्त्वकिञ्चित्करः; अन्यथा देहात्मप्रत्यक्षविरुद्धम्—"स एष यजमानोऽञ्जसा स्वर्गं लोकं याति" इति वाक्यमप्यप्रमाणं स्यात्; प्रत्यक्षविरुद्धत्वात्। तत्र यदि प्रत्यक्षागमयोर्भिन्नविषयत्वादविरोधः, तर्हि प्रकृतेऽपि समानम् ॥

प्रत्यक्षस्य श्रुतिबाधकत्वे देहातिरिक्तात्मासिद्धिः।

तत्र यद्युपजीव्यं प्रत्यक्षं जात्यैव बाधकम्, तर्हि बाधितेऽपि देहात्मन्येव शास्त्रपर्यवसानं स्यात्। तत्र यदि देहात्मताज्ञानम् प्रमा, तर्हि प्रकृतविशिष्टजीवस्वरूपज्ञानम्, तादृशेश्वरस्वरूपज्ञानमपि तथा। व्यवहारोपपत्तिर्यदि सत्यपि देहात्मताज्ञाने तदतिरिक्तात्मपरोक्षज्ञानेनाबाधितेन परोक्षबाधेऽप्यपरोक्षसाक्षात्काराभावात्, तर्हीदं विविच्यताम्—किं देहादिविविक्तात्मसाक्षात्कारवतां कर्मोपासनादावधिकारः, उत देहात्मज्ञानवतामपि ॥

आद्ये न कस्यापि कर्माधिकारः; विना देहात्मताभिमानं शारीर-वाचिकादिकर्माधिकारायोगात्। द्वितीये तु कथं देहातिरिक्तात्मसिद्धिः? कथं वा स्वर्गगामिता, तज्ज्ञानं वा मृतस्याप्येतच्छरीरसम्बन्धवियुक्तस्य? न ह्यन्यस्य कर्माधिकारः, अन्यस्य तु फलभोगः; अन्यथा कृतहानाकृताभ्यागमप्रसङ्गात् ॥

तत्र यदि वस्तुस्थितिमनुसृत्य व्यवस्था, तर्ह्ययमेवात्रानुयोगः—का वा वस्तुस्थितिरिति? सा च केन प्रमाणेनावधारणीयेति। यदि श्रुतिप्रामाण्यात्, तर्हि प्रत्यक्षस्य का गतिः? अत्र यदि प्रत्यक्ष-श्रुत्योर्भिन्नविषयत्वाद् नविरोधः, तर्हि का वा गतिः प्रत्यक्षप्राबल्यवादस्य?

यदि क्वचित् प्रत्यक्षस्य प्राबल्यम्, क्वचिच्च दौर्बल्यम्, तर्हि विवि-

च्यतां तन्नियामकम्। यदि भिन्नविषयत्वम्, तर्हि प्रकृतेऽपि प्रत्यक्षदौर्बल्यं भिन्नविषयत्वादिति समानम्॥

अयमत्र निष्कर्षः—देहातिरिक्तात्मविषयकनिर्विचिकित्सपरोक्षज्ञानिनां कर्माधिकारः, अन्यथा तु न कर्माधिकारोऽपीति। इदमेवात्र पृच्छ्यते—कदा वा देहात्मताबुद्धिरेकान्ततो निवर्तते? किं वा तत्र कारणमिति?

अशरीरत्वमेव मुक्तिः।

तत्र यदि सति कर्मयोग-भक्तियोगाराधितभगवत्प्रसादादीश्वरीयशक्तिविशेषस्याज्ञानस्य नाशादात्मसाक्षात्कारः, तर्हीदं विविच्यताम्—ईश्वरप्रसादाद् मुक्त्यवस्थायामपि किं शरीरान्तरमुत्पद्यते? न वा? तत्रापि शरीरात्मताभिमानो भवति वा, न वेति॥

आद्ये तत्रापि शरीरातिरिक्तात्मसिद्धिः कथम्? तेषां किं सशरीरत्वकृत्यम्। यदि विनाऽभिमानं व्यवहारः, तर्हि विनैव शरीराभिमानमिहैव कर्मकृतेन शरीरेण व्यवहरताम्, भगवत्प्रसादप्राप्तदिव्यशरीरवतां च को वा विशेषः? आनन्दतारतम्यकथा तु ब्रह्मपर्यन्तानामिव "श्रोत्रियस्य चाकामहतस्ये"त्यैहिकस्यापि स्थितप्रज्ञादेः समाना कथं च दिव्यमप्युत्पन्नं न नश्यति॥

दिव्यत्वं शरीरस्याकिञ्चित्करम्।

यद्यानन्दमीमांसा मुक्तात्मपरैव, तर्हि "श्रोत्रियस्य चाकामहतस्ये"ति श्रोत्रियपदकृत्यं किम्? को वा विशेषोऽस्य शरीरस्य भगवत्प्रसादप्राप्तदिव्यशरीरस्य च शरीरत्वाविशेषे? यदि दुःखायतनत्व-तदनायतनत्वाभ्याम्, तर्हि सत्यपि शरीरे तद्दुःखेनादुःखितानां तदभिमानरहितानामाणिमाण्डव्यादीनाम्, वैकुण्ठादिगतानां मुक्तानां समलोष्टाश्मकाञ्चनानां वा स्वर्णमयेन, ज्ञानमयेन, मृण्मयेन, भौतिकेन, प्राकृतेन, अप्राकृतेन वा शरीरेण स्वरूपानन्दभरितानां किं वा सुखम्? दुःखं वा? इति कृतात्मसाक्षात्कारवतामशरीरत्वमेव, यदेवात्मनः पारमार्थिकं स्वरूपम्, इति विगलितशरीरादिसर्वबन्धं सच्चिदानन्दस्वरूपमेवात्मा सर्वशास्त्रार्थतत्त्वम्, तदेवेश्वरस्यापि समष्टिशरीराभिमानरहितस्य, निवृत्तमायस्य, दिव्यशरीरस्यापीति वक्तव्यम्॥

दिव्यत्वं हि शरीरस्य ज्ञानविग्रहत्वम्, ज्ञानस्वरूपत्वं वा, इति शास्त्रावगतं जीवब्रह्मस्वरूपैक्यमेव वेदान्तार्थः। तच्च शरीरादेः सर्वस्य मिथ्यात्वम्, स्वरूपतोऽप्यभावं वा विना नोपपद्यते, इति प्रत्यक्षबाधेन श्रुत्यर्थवर्णनमेवात्र युक्तम्॥

### जीवब्रह्मैक्यस्य मीमांसाविषयत्वम् ।

एतेन—जीव-ब्रह्मणोरैक्यं न मीमांसाशास्त्रविषयः; तदुपक्रर्तव्यवेदाविषयत्वात् ; तत्त्वमस्यादिवाक्यम् , न प्रतीतार्थम् , प्रत्यक्षविरुद्धार्थत्वादित्यनुमानद्वयमपि—परास्तम् ; तत्र प्रथमानुमाने हेत्वसिद्धिः ॥

यत्तु—हेतुसाधकमनुमानम्—तत्त्वमस्यादिवाक्यम् , न प्रतीतार्थम् , प्रत्यक्षविरुद्धार्थत्वात् , "यजमानः प्रस्तरः" इति वाक्यवत्--इति, तत् "स एष यजमानोऽञ्जसा स्वर्गं लोकं याती"ति वाक्ये व्यभिचारि । तत्त्वमस्यादिवाक्यस्य तत्र प्रत्यक्षविरुद्धप्रतीतजीवत्वविशिष्टेश्वरत्वविशिष्टैक्यपरत्वाभावेन सिद्धसाधनम् । "स एष यजमानोऽञ्जसा स्वर्गं लोकं याती"ति वाक्यम् , न प्रतीतार्थम् , प्रत्यक्षविरुद्धार्थत्वादित्याभाससाम्यम् । अन्यशेषत्वमुपाधिः—यत्र यत्र मीमांसाशास्त्रविषयत्वाभावः—यजमानप्रस्तरैक्यादौ, तत्र तत्रान्यशेषत्वम् , पक्षे तु न तत् , इति साधनाव्यापकत्वात् ॥

द्वितीयानुमानेऽप्ययमुपाधिः–प्रतीतार्थत्वाभाववतो "यजमानः प्रस्तरः" इति वाक्यस्यान्यशेषत्वात् , पक्षे च तदभावात् । जीव-ब्रह्मणोरैक्यम् , मीमांसाशास्त्रतात्पर्यविषयः, तदुपक्रर्तव्यवेदविषयत्वादिति सत्प्रतिपक्षः ॥

तत्त्वमस्यादिवाक्यम् , जीवब्रह्मैक्यपरम् , तत्तात्पर्यग्राहकसर्वलिङ्गोपबृंहितत्वादिति द्वितीयानुमानस्यापि प्रकरणसमः । ब्रह्ममीमांसाया अद्वैत एव तात्पर्यस्य भाष्ये भगवत्पादैरुपपादितत्वाद् बाधोऽप्यनुमानद्वयस्य ॥

जीवब्रह्मभेदः, न ब्रह्ममीमांसाशास्त्रविषयः, असन्दिग्धत्वात् । असन्दिग्धत्वं च प्रत्यक्षसिद्धत्वात् । इदमेवाभिप्रेत्योक्तम्—"अथ यदसन्दिग्धम् , न तत् प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकवर्ती घटः—" इति ॥

### ब्रह्ममीमांसाया अद्वैतपरत्वमेव ।

जीवेश्वरस्वरूप-तद्भेदादिकं तु कर्ममीमांसायाः, संकर्षकाण्डस्य वा विषयः, न तु ब्रह्ममीमांसायाः, अन्यथा तेनैव गतार्थत्वाद् ब्रह्मजिज्ञासायां ब्रह्मलक्षण-तत्प्रमाणादिप्रतिज्ञाया वैयर्थ्यापाताद् , तत्त्वसाक्षात्कारावस्थामभिप्रेत्यैव जीव-ब्रह्मैक्यस्य वेदान्तार्थत्वात् तावत्पर्यन्तं भेदवाक्यानामप्रामाण्याच्च जीव-ब्रह्मभेदप्रतीतिदशायां तदैक्यस्य शास्त्रतात्पर्याविषयत्वेन सिद्धसाधनादिकं पूर्वमेवोक्तम् । सर्वथा तु प्रत्यक्षविरोधोऽत्राकिञ्चित्करः ॥

न हि "तत्त्वमसी"त्यत्र त्वंपदं प्रमाणान्तरसिद्धं त्वंपदार्थं त्वंपदेनानूद्य तदसीति ग्राहयति। प्रमाणान्तरसिद्धो हि भेदो न शास्त्रार्थः, किन्तु तेन विधीयमानोऽभेद एव। अभेदश्चोभयोरपि निर्विशेषत्व एव, नान्यथा॥

प्रत्यक्षस्यैवागमेन बाधः, न तु विपरीतम्।

तत्र चोपजीव्यत्वेऽपि प्रत्यक्षस्य न प्राबल्यम्, अनूद्य विधानस्थलेऽनुवादापेक्षितपुरोवादस्योपजीव्यस्याप्युपजीवकतो दौर्बल्यस्य न्यायसिद्धत्वात्। अत एव "यो होता सोऽध्वर्युः" "औदुम्बरो यूपः" इत्यादिप्रत्याम्नानादिस्थले प्राकृतधर्मस्यातिदेशप्राप्तस्योपजीव्यस्याप्युपजीवकेन बाधः, किं बहुना? रागप्राप्तहिंसानिषेधपरं "न हिंस्यादि"ति वाक्यमपि ततो दुर्बलमप्रमाणं स्यात्॥

शास्त्रप्राप्तस्यापि हि शास्त्रेण निषेधोऽपि नाप्रामाणिकः; शास्त्रेऽपि पूर्ववाक्यस्योत्तरवाक्याविरोधेन सावकाशत्वमात्रमपेक्ष्य प्रामाण्येनान्यथा नयनं हि बहुशो दृश्यते। अयमेव न्यायः कलिवर्ज्यप्रकरणेऽपि; अन्यथा गोवधादीनामपि कलावपि धर्मत्वापत्तिः॥

शास्त्रप्राप्तस्यापि श्राद्धस्य शास्त्रेणोपरागादौ निषेधो दृश्यतेऽन्यत्र सावकाशत्वमात्रेण। अनेनैव नयेन कर्मोपासनाधिकारिविषयाणि भेदपराणि वाक्यानि, निवृत्तकर्माधिकारिज्ञानिपराणि "नेति नेति" "एकमेवाद्वितीयम्" "नेह नानास्ति" इत्यादीनि, अन्यानि च परःशतानि प्रमाणान्यत्रानुसन्धेयानि। तदुक्तम्—

"ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्।"

इति, इत्याश्रमान्तरधर्माणामाश्रमान्तरे, तत्तद्वर्णधर्माणां वर्णान्तरे च निषेधोऽप्यत्रासन्धेयः, इत्यतीतकर्माधिकाराणाम्, मुक्तानां वा दृष्ट्या जीवेश्वरस्वरूपनिरूपणपराणि कथं बद्धप्रत्यक्षेण, तदधिकारिकोपासनाकाण्डमात्राधिकारिप्रत्यक्षेण निर्विशेषवाक्यानि शशशृङ्गायमाणानि, प्रत्यक्षेण वा बाधितुं शक्यन्ते?

सगुणवाक्यानामपि व्यावहारिकं प्रामाण्यम्।

अपच्छेदन्यायवैषम्यभङ्गादौ सगुणवाक्यानाम्, अन्येषां च निर्गुण-

वाक्येन सर्वात्मना न बाधः, किन्तु व्यावहारिकप्रामाण्यपरतया सावकाशत्वमिति वर्णनस्याप्ययमेवाशयः ॥

अत्र व्यावहारिकपदं न विषयमात्रदृष्ट्या, किन्तु ज्ञातृदृष्ट्यापि, येषां देहात्मताबुद्धिरात्मतत्त्वसाक्षात्कारेण सर्वात्मना न बाधिता। अयमेव न्यायो दिव्यशरीराणां हिरण्यगर्भान्तानामपि। अत एव—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति वचनम्। अत्र ब्रह्मपदं सशरीरपदं यं कमपि वदतु; अशरीरावस्थामभिप्रेत्यैव तत्त्वमसिवाक्यमिति तु तत्त्वम् ॥

सगुणोपासनस्याप्यखण्डाकारवृत्तावन्तरङ्गोपायत्वम्।

साधनावस्थामाश्रित्य भेदवाक्यानि, सिद्धावस्थामाश्रित्याभेदवाक्यानीति तु निष्कर्षः, यदेवोपास्यं सगुणं जीवभिन्नं च स्वरूपम्, तदेवोपासनापाटवाद् निर्गुणं स्वयं भास्यति। तत्र चेश्वरप्रसादोऽपि तत्त्वसाक्षात्कारान्तरङ्गसाधनेष्वन्यतम इत्यत्र नाद्वैतिनो विवदन्ते। तदुक्तम्—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इति ॥

सगुणवाक्यानां महावाक्यशेषतयाऽवान्तरतात्पर्यम्।

तेन चोपास्यस्वरूपनिरूपणपराणां "यः सर्वज्ञः सर्ववित्" इत्यादिवाक्यानां मुख्यं प्रामाण्यं व्यावहारिकदृष्ट्या, महावाक्यापेक्षया त्ववान्तरं तात्पर्यं तदपेक्षितनिषेध्यगुणसमर्पणद्वारा ॥

यथाच द्वैतमते परमात्मपरतया परविद्यात्वम्, कर्मादिपरतयाऽपरविद्यात्वम्, परत्वमपरत्वं वा विद्याया विषयस्यावान्तरतात्पर्यविषयतया, महातात्पर्यविषयतया च। इदमेवाभिप्रेत्याऽपच्छेदन्यायेन प्रपञ्चमिथ्यात्वपराणां जीवब्रह्मैक्यपराणां च मुख्यं प्रामाण्यमिति वर्ण्यते ॥

अनुवादापेक्षितपुरोभागो बाधितविषयोऽपि, अबाधितविषयोऽपि। बाधाबाधौ तु न प्रतीतिकालनिर्णेयौ, किन्तु बाधे सिद्धे; अन्यथा "योऽयं स्थाणुः, स चोरः" इति वाक्यमपि प्रत्यक्षाविरोधेनैव व्याख्येयं स्यात् ॥

यावद्‌बाधं सगुणवाक्यान्यपि प्रमाणानि ।

एतेन—नायं सर्प इति वाक्यमपि—व्याख्यातम् । तत्त्वविषयमुपजीवकमतत्त्वविषयकमुपजीव्यमपि बाधत इति हि नीतिः । तत्त्वविषयकत्वं लौकिकेऽपरोक्षाधीनम्, अलौकिके तु बाधकशास्त्रैकसमधिगम्यम् । न हि बाध्यं सर्वमशास्त्रीयम्; अधिकारिभेदेन प्रामाण्यादित्यनुपदमेवोक्तम् ॥

तत्रोपक्रमादितात्पर्यग्राहकानुगृहीतत्वं निर्विशेषतत्त्वतायामेव । यथाच द्वासुपर्णादिवाक्यान्युपक्रमोपसंहारादिलिङ्गैर्भेदनिषेधेनाभेदपराण्येव, तथाऽद्वैतसिध्यादौ व्यक्तम् ॥

एतेन—सावकाश-निरवकाशन्यायोऽपि—व्याख्यातः । सगुणवाक्यानां व्यावहारिकपरतया प्रामाण्यस्य, निर्विशेषपराणामेव निरवकाशतया प्रामाण्यस्य च पूर्वमुपपादनात्, इत्यभेदवाक्यानां प्राबल्येऽपि भेदवाक्यानां न सर्वथाऽप्रामाण्यम् । स्वतन्त्रमोक्षोपायप्रतिपादने तात्पर्याभावेऽपि न वैयर्थ्यम् ॥

हेयगुणराहित्यपरतया विवरणं त्वप्रसक्तप्रतिषेधापत्त्या, उपास्यगुणसमर्पकतयोपासनाशेषत्वाभावेन निष्प्रयोजनम् । पराक्रान्तं चात्राद्वैतसिद्ध्यादौ । अनिर्वचनीयाज्ञानसाधनाद् मिथ्यात्वेन तत्त्वमस्यादिवाक्येषु गुणानामविवक्षेति तु चर्वितचर्वणम्, इति स्वरूपमात्रैक्य एव तत्त्वमस्यादिवाक्यानां प्रामाण्यम् ॥

एकीभवन्तीति च्विप्रत्ययस्याद्वैतमते समन्वयः ।

तच्च स्वरूपं स्वप्रकाशतया स्वतः सिद्धमप्यविद्यासंबन्धादनादिदृढवासनावशाच्चौपाधिकरूपेण ज्ञाततया निरुपाधिकस्वरूपेण सर्वोपाधिविगलितात्मनाऽसिद्धमेव । उपाधिविरहे तु स्वस्वरूपमात्रेण प्रकाशते ॥

तत्रासिद्धत्वं न स्वरूपस्य, किन्तूपाधिसम्बन्धविरहस्यैव । इदमेवाभिप्रेत्य 'परेऽव्यये सर्व एकीभवन्ति' इति च्विप्रत्ययः । एकीभावोऽत्र "सर्वे" इति बहुवचनाच्छरीराद्युपाधिभेदप्रयुक्तभेदाभावः । स च पूर्वमसिद्धः पश्चात् सिद्ध्यतीत्यभूततद्भावेऽत्र च्विप्रत्ययः । अधिकमुत्तरत्र भोक्त्रापत्त्यधिकरणे, अंशाधिकरणे च ॥

अत एव—

'न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः ।

न चैव न भविष्यामः सर्वे वयमतः परम् ॥"

इति बहुवचनं शरीरभेदाभिप्रायेण, स्वरूपेण त्वैक्यमिति भगवत्पादानां भाष्यम्। यथा—घटाकाश-मठाकाशादयो महाकाशीकृताः, बद्धो मुक्तीकृत इत्युपाधिनाशमात्राभिप्रायेण, इति नात्र घटस्य पटीकरणम् ॥

यदा पक्षिणोऽपि स्वप्रभुसाहाय्येन स्वाभिलषितप्राप्तिः, एवमत्रापि कृते प्रयत्ने महति नाप्राप्यं फलम्। तत्र स्वरूपस्य नित्यसिद्धत्वेऽपि पूर्वमसिद्धस्यानन्तरं साध्यताविवक्षाभिप्राय "एकीभवन्ती"ति च्विप्रत्ययः। अनादिसिद्धजीवेशभेदविरहस्यासिद्धस्य तत्र साक्षात्कारमात्रसाध्यत्वाभिप्रायेण, अज्ञान-तत्प्रयुक्तसर्वब्रह्मेतरनिवृत्तेर्ज्ञानसाध्यत्वाभिप्रायेण वा च्विप्रत्ययः। स्पष्टं चेदं भाष्य एव—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"त्यादौ ॥

तथा चाज्ञानादिनिवृत्त्यभिप्रायश्च्विप्रत्ययः, मिथ्याभेदपरा भेदश्रुतयः। अद्वैतश्रुतयस्तु त्रिकालाबाध्यानावृतसंविन्मात्रपरा इति निष्कर्षः। प्रपञ्चमिथ्यात्वम्, अनिर्वचनीयस्याज्ञानस्य तदुपादानकत्वम्, तस्याधिष्ठानज्ञाननिवर्त्यत्वं सर्वं पूर्वमेव निरूपितम् ॥

### प्रपञ्च-तद्भेदयोरनूद्य निषेधोपपत्तिः।

एतेन—प्रमितस्यानुवादः, भ्रान्तिसिद्धस्य वा। नाद्यः; अनभ्युपगमात्, अभ्युपगमे वा तत्प्रमाणप्रतिरोधोऽद्वैतश्रुतेः। न द्वितीयः; अज्ञानासम्भवेन निरस्तत्वादिति—परास्तम् ॥

दत्तोत्तरत्वात्, व्यावहारिकप्रमितस्य परामार्थतो निषेधाभ्युपगमात्, तस्य चानुपदमेवोपपादितत्वात्। भ्रान्तिसिद्धत्वं तु बाधोत्तरकालिकत्वेन, न तु निषेधात् पूर्वम्। निषेधान्यथानुपपत्त्या तूपादानमज्ञानम्, तत्प्रयुक्तत्वादिकं चाऽऽर्थम्। न तत् पृथक् साधनमपेक्षते। ततश्च ज्ञानेनाज्ञानतत्प्रयुक्तबन्धनिवृत्तिरूपमोक्षफलसम्भवात् सफला ब्रह्मजिज्ञासा ॥

### मुक्तेर्विष्णुप्रसादैकसाध्यत्वादतःशब्दार्थो विष्णुप्रसादहेतुत्वमेवेति शङ्का।

एतेन—

"अतो यथार्थबन्धस्य विना विष्णुप्रसादतः ॥
अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्राभिधीयते ॥"

इति—व्याख्यातम् । अत्र बन्धनिवृत्त्यधीनो मोक्ष इति यद्यपि सम्प्रतिपन्नम्; तथापि तस्य भगवत्प्रसादसाध्यत्वमेव, न तु ज्ञानमात्रसाध्यत्वमिति प्रतिपादनद्वारा "अथातो ब्रह्मजिज्ञासे"ति सूत्रघटकोऽतःशब्दार्थः प्रतिपाद्यते । तथा च भगवत्प्रसादस्य बन्धनिवृत्तिद्वारा मोक्षसाधनत्वात्, भगवत्प्रसादार्थं ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः फलति । अत एवोक्तम्—सत्यश्चेद्बन्धो न ज्ञानेन निवर्त्येतेति ॥

मोक्षस्य साक्षाद् ज्ञानैकसाध्यत्वम्, बन्धमिथ्यात्वं च ।

तत्र ब्रह्मज्ञाने भगवत्प्रसादोऽपि द्वारं भवतु वा, मा वा । ज्ञानाद् बन्धनिवृत्तिस्तदसत्यत्वं विना नोपपद्यते; शुक्तिरूप्यादौ तथा दर्शनात् । तत्रानादिरप्ययं बन्धो निवर्तत इति संप्रतिपन्नम्; भगवदिच्छाया अघटितघटनापटीयस्त्वात् ॥

सिद्धार्थप्रामाण्येऽप्युपासनाशेषतयैव
वेदान्तानां प्रामाण्यमिति शङ्का-परिहारौ ।

यत्तु—अत्र ब्रह्मणि सिद्धेऽपि वेदान्तानां तात्पर्यनिरूपणार्थं प्राभाकराणां कार्यपरत्वव्युदासपूर्वकं सिद्धार्थे प्रामाण्यं निरूप्यते । तत्र नाद्वैतिनोऽपि विप्रतिपन्नाः, तथा मण्डनसंमतेष्टसाधनताविध्यर्थतायां च ॥

अत्रोपासनारूपक्रियाकर्मतया ब्रह्मणोऽन्वयेऽप्युपासने, ब्रह्मणि च मुख्यं तात्पर्यं व्यवस्थाप्यते द्वैतिभिः ॥

अद्वैतिनस्तु—तत्तत्कर्मकोपासनविधिमात्रोपासनापराणां वाक्यानां तन्मात्रपरतया, विनोपासनाविधिं सिद्धब्रह्मपराणां तु ब्रह्मस्वरूपसमर्पणमात्रेण प्रामाण्यम् । तेन च प्रमाणजन्यज्ञानमात्रेण मोक्षः प्रयोजनमिति वदन्ति ॥

सिद्धार्थप्रामाण्यसमर्थनस्याद्वैतवाद एव सार्थक्यम् ।

तत्र कार्यपरत्वमङ्गीकृत्यापि यदि वेदान्तानां सिद्धे ब्रह्मण्येव न पर्यवसानम्, यदि वा प्रमाणतन्त्रस्य ज्ञानमात्रस्य न मोक्षसाधनत्वमिति द्वैतिनामाशयः, तर्हि वेदान्तानां सिद्धेऽर्थे व्युत्पत्तिसमर्थनं किंप्रयोजनम्? यदि "तत्त्वमसी"त्याद्युपासनारहितेष्वप्युपासनाकल्पनम्, तर्हि लौकिकपारमार्थिकब्रह्मोपसनाया उपासनाविधिपरेषु स्वीकारेण, तत्त्वमस्यादीनां ब्रह्मणि

स्वतन्त्रप्रामाण्यास्वीकाराद् मीमांसकमतवद् विनोपास्यमपि तच्छेषतया ब्रह्मसिद्ध्या व्यर्थं कार्यपरतानिरसनम् । अतस्तन्निरसनसार्थक्यार्थं पारमार्थिकं शुद्धं ब्रह्मस्वरूपमपि स्वतन्त्रं शास्त्रार्थः सिद्धो भवति । तेन च न सर्वत्रोपासनाकल्पनागौरवमपि ॥

इदमेवाभिप्रेत्य भगवत्पादा वदन्ति—"द्विरूपं हि ब्रह्मावगम्यते—कल्पितोपाधिसम्बन्धम्, निरस्तोपाधिसम्बन्धं चे" ति, इति सगुणब्रह्ममात्रे न वेदान्तानां तात्पर्यम्, न वा कर्तृत्वविशिष्टजीवेश्वरस्वरूपमात्रे, किन्तु निरस्तसमस्तोपाधिजीवत्वेश्वरत्वोपलक्षितसंविन्मात्रेऽपि, इति सर्वेषां वेदान्तानामवान्तरतात्पर्यविषयतया, महातात्पर्यविषयतया च यथासंभवं प्रामाण्यमबाधम् । तत्र च प्रमाणजन्यज्ञानस्य बन्धनिवृत्तिद्वारा मोक्षसाधनत्वात्, प्रमाणेन प्रमायां जननीयायामीश्वरप्रसादस्याहेतुत्वात् विनैवेश्वरप्रसादं स्वत एव प्रमाणजन्यज्ञानेनाज्ञानस्य निवृत्तेश्चेश्वरप्रसादहेतुत्वादिति नातःशब्दार्थो भवितुमर्हति ॥

अतःशब्देनेश्वरप्रसादफलताविवक्षाऽयोगः ।

ईश्वरप्रसादाय ब्रह्मजिज्ञासा कर्तव्येतीश्वरप्रसादस्याश्रुतस्य फलत्वोन्नयनमपि न योग्यम् । तदेवं बन्धमिथ्यात्वासम्भवात् भगवत्प्रसादस्य, भगवत एव वा मोक्षसाधनत्वात् प्रयोजनसम्भवादित्यतःशब्दस्यैकं विवरणं परीक्षितम् ॥

द्वैतवादे ख्यात्यन्तरनिरसनाखण्डा-
र्थत्वादिनिरासानामसौत्रत्वम् ।

अत्र प्रसङ्गे सर्वविधख्यातिनिरासेनासत्ख्यातिसमर्थनम्, ज्ञानस्वरूपब्रह्माश्रयविषयाज्ञाननिरासः, ज्ञानस्य साक्षाद् मोक्षसाधनत्वखण्डनम्, अन्यच्च प्रासङ्गिकं तत्त्वमस्यादिवाक्यानां जीवब्रह्मैक्यपरत्वनिरासादिकं प्रस्तूयते ॥

इदमत्रालोचनीयम्—कथमिदं सर्वं सूत्रारूढमिति ? न ह्यतःशब्दस्यान्यथा व्याख्यानमत्रासम्भवि । कथञ्च सूचनमात्रेण जीव-ब्रह्मभेदस्यैव न शास्त्रप्रतिपाद्यत्वमिति निरूपणप्रसङ्गेन जगत्सत्यत्वविचार इव सत्ख्यात्यादिकमप्यत्र यदि सङ्गतम्, तर्हि प्रत्यग्ब्रह्मैक्यनिरूपणप्रसङ्गेन तदुपपादकाध्याससमर्थनं कथं न सूत्रारूढम् ?

द्वैतवादे जीवपूर्वपक्षताया बन्ध-
मिथ्यात्वनिरासस्य च न सङ्गतिः ।

वस्तुतस्तु—निर्विशेषब्रह्मजिज्ञासायां तदुपपादकतयाऽध्यासस्येव सगुणब्रह्ममात्रजिज्ञास्यतायां जगत्सत्यत्वनिर्णयस्य न काऽपि सङ्गतिः । यदि बन्धमिथ्यात्वस्याद्वैताभिमतस्य सूत्रानारूढत्वव्युत्पादनार्थं तत्सत्यत्वसमर्थनम्, तर्हि सूत्रकारैर्निर्विशेषब्रह्मजिज्ञासापूर्वपक्षः, सगुणब्रह्मजिज्ञासासिद्धान्तश्चाभिप्रेत इति वक्तव्यम् । न चैवमत्र द्वैतिनामपि पूर्वपक्षः; जीवपरत्वपूर्वपक्षनिरासेन तदतिरिक्तब्रह्मजिज्ञासासिद्धान्तस्यैव तैरत्र विवक्षणात् ॥

न चात्र सौत्रं ब्रह्मपदमन्यद्वा किमपि निर्विशेषब्रह्मजिज्ञासापूर्वपक्षगमकं द्वैतसिद्धान्तदृष्ट्या संभवति । तत्र ब्रह्मपदं यदि सगुणमात्रपरं निर्विशेषपूर्वपक्षस्य सूचकम्, तर्हि जीवपूर्वपक्षतायाः कथमुत्थितिः ?

यदि जीव-ब्रह्माभेदपराणां वाक्यानां दर्शनेन तयोरभेदं मत्वा पूर्वपक्षः, तर्हि 'अथातो जीवब्रह्मभेदजिज्ञासे'त्येव सूत्रमापद्येत, इति स्वातन्त्र्येण जीवजिज्ञासापूर्वपक्षो ब्रह्मशब्दस्य जीववाचित्वमभिप्रेत्य, मुख्यार्थमादाय तु सिद्धान्त इति वक्तव्यम् । सर्वथा तु पूर्वपक्षोपपादकता, सिद्धान्तोपपादकता वा न मिथ्यात्वनिरासपूर्वकबन्धसत्यत्वसमर्थनस्य नचैवं तत्र द्वैतभाष्यमपि ॥

ईश्वरप्रसादहेतुत्वस्यातःशब्दार्थस्यापि सूत्रानारूढत्वम् ।

तत्र जीवस्याज्ञानाश्रयत्वम्, अज्ञानविषयत्वं वा सादि, अनादि वा । आद्ये निमित्तं वक्तव्यम्, न तु तत् किमप्युक्तम् । द्वितीयेऽनादित्वे कथमीश्वरशक्त्यधीनत्वमविद्यावरणस्य ? अधिकं चात्र वक्तव्यं पूर्वमेवोक्तम् । सर्वथा त्वीश्वरप्रसादस्यैव फलत्वं न सूत्रारूढम्, येनेश्वरप्रसादाय जिज्ञासा स्यात् ॥

ईश्वरप्रसादस्येष्टसाधनत्वादित्यतः
शब्दव्याख्यानस्याप्यसौत्रत्वम् ।

अपरं व्याख्यानमतःशब्दस्येश्वरस्येष्टसाधानत्वात्, तादृशस्य ब्रह्मणो जिज्ञासेति । तत्र मुख्यमिष्टत्वं ब्रह्मणः प्राप्यस्य, गौणं साधनस्येष्टत्वम् । तथा चेष्टत्वात्, इष्टसाधनत्वाद्वा ब्रह्मणो ब्रह्मजिज्ञासेति विवरणे जिज्ञासेतिपदेन ज्ञानस्येष्यमाणत्वं सौत्रं कथं विरुद्धम् ? ज्ञानं ह्यत्रेष्यमाणं

सूत्रितं स्वतः फलरूपम्, फलसाधनं वा, इति ब्रह्मण इष्टसाधनत्वोक्तेः का वा सूत्रेण सङ्गतिः ?

द्वैतिनामतःशब्दस्य श्रुतिप्रामाण्यसंभवा-
दिति व्याख्यानानौचित्यम् ।

अन्यत्तु विवरणम्—अतःशब्दस्य श्रुतिप्रामाण्यसम्भवात्—इति । इदं तु सर्वेषां वैदिकदर्शनानां साधारणम्, न केवलमात्मतत्त्वविचारे, किन्तु धर्मजिज्ञासायामपि, संकर्षकाण्डे, वैदान्तिकदर्शनेषु च सर्वेषु, इति नासाधारणं कारणं ब्रह्मजिज्ञासायाम् । न च साधारणं साधनं जिज्ञासाहेतुरत्र संभवति; तदुक्तम्—"स्वाध्यायाध्ययनं तु समानमि"ति ॥

परं तु वेदान्तवाक्यानामेवात्र प्राधान्येन विषयत्वात्, वेदान्तानां निर्विशेषपरत्व एव ब्रह्मव्यतिरिक्तस्य मिथ्यात्वे वेदान्तस्यापि मिथ्यात्वादप्रामाण्यशङ्कावारणार्थमद्वैतसिद्धान्त एव तत्प्रामाण्यस्य समर्थनीयत्वादन्यत्र तत्साधनस्य सिद्धत्वात्, तत्प्रामाण्यानुसन्धानस्य स्वतन्त्रमत्रानुषङ्गस्यायुक्तत्वात्, तस्यानपेक्षितत्वाच्चात्रानुपयुक्तम्, असङ्गतं च तथा विवरणम् ॥

वस्तुतस्तु—श्रुत्यपेक्षयाऽपि प्रत्यक्षप्राबल्यवादमनुसृत्यैव द्वैतसिद्धान्तस्थापनेन विप्रतिपन्नप्रत्यक्षप्रामाण्यसाधनस्यैवात्र सङ्गतत्वेन श्रुतिप्रामाण्यसम्भवादिति स्थाने प्रत्यक्षप्रामाण्यसम्भवादित्येव व्याख्येयं स्यात् । परं त्वनुपदोक्तरीत्या देहात्मवादादिनिरासानुपपत्त्या प्रत्यक्षप्राबल्यासम्भवादिति विवरणं बाधितम् ॥

द्वैताद्वैतविप्रतिपन्नप्रमाण-प्रमेयविशेषाः ।

प्रत्यक्षानुमानशब्दाः प्रमाणमित्यत्र न विप्रतिपत्तिः, परं तूपमानार्थापत्त्यनुपलब्धयो न प्रमाणमिति नाद्वैतिनां मतम् । एतद्विषये न्यायचन्द्रिका विद्यासागरीया विस्तरेण न्यायसुधां परीक्षते, इति तत एवाधिकमवगन्तव्यम् ॥

तत्र शब्दप्रामाण्ये प्रत्यक्षदृष्टान्तेनाष्टावनुमानप्रयोगाः संगृहीताः । ते यथा—(१) शब्दः, प्रमाणम्, संशय-विपर्ययाजनकत्वे सति ज्ञानजनकत्वात्, प्रत्यक्षवत्; (२) शब्दः, प्रमाणम्, प्रत्यक्षानुमानाविषयशब्दमात्रगम्यनित्यपरोक्षविषयकत्वात्, अनुमानवत्; इन्द्रिय-

वत् स्वरूपतः, अनुमानवत् शब्दज्ञानस्य प्रमाणत्वादपि शब्दप्रामाण्यमित्यादिरूपेण । न चात्र सर्वत्र क्वापि विप्रतिपत्तिः । अन्यच्च सर्वशब्दप्रामाण्यप्रसङ्गेन शब्दनित्यत्व-स्फोटाशब्दत्वान्विताभिधानवादादयः प्रायेण न विप्रतिपन्नाः ॥

सुधाव्यवस्थापितान्विताभिधानवादे
नाद्वैतवादस्यैकान्ततो विरोधः ।

तत्रान्विताभिधानवादनिरासेन चित्सुख्यामभिहितान्वयवादः समर्थितः न्यायचन्द्रिका त्वन्विताभिधानवादं स्वीकृत्यैवाद्वैतवादं समर्थयति, इति नात्राद्वैतिनां निर्भरः विस्तरस्तु न्यायचन्द्रिकाभूमिकायाम् ॥

अन्विताभिधानवादे न्यायसुधाऽपि तात्पर्यानुसारेणान्वयविशेषस्याशक्यस्यैव शाब्दबोधे भानं स्वीकुरुते । तात्पर्यविषयस्यैव शाब्दबोधेभाननियमात्, इति नान्विताभिधानाभिहितान्वयवादयोः फलभेदः । उभयत्रान्वयपदद्वयं तात्पर्यविषयपरम्, यथा—'तत्तु समन्वया'दित्यत्रोपक्रमाद्यवगततात्पर्यपरम्, तद्विषयपरं वा समन्वयपदम् । द्वैताद्वैतविप्रतिपन्ना विषया अत्र परीक्ष्यन्ते, इति नात्र तदविप्रतिपन्नस्य परीक्षणं सावसरम् ॥

प्रामाण्यस्वतस्त्वं संप्रतिपन्नम् ।

एवमेव प्रमाणानां स्वतः प्रामाण्यविषयेऽपि । साक्षिग्राह्यं प्रामाण्यमेव स्वतो ग्राह्यं प्रामाण्यमिति सिद्धान्तस्योभयत्राविशेषात् । अत्र बौद्धाद्यागमानां स्वतःप्रामाण्यप्रसङ्गो वेदविरोधित्वेन निरस्यमानोऽपि न विप्रतिपन्नः । अयमेव न्यायो वेदापौरुषेयत्ववादे वेदविरुद्धबाह्यागमानामप्रामाण्यप्रसङ्गे च ॥

अत्रातश्शब्देन ब्रह्मजिज्ञासाकर्तव्यत्वोपयुक्तशब्दप्रामाण्यवेदापौरुषेयत्व-शब्दनित्यत्व-स्फोटवादनिरासान्विताभिधानासमर्थनादिकस्य सर्वस्य सम्भवादित्यतश्शब्दव्याख्यानमिषेण तत्तद्दर्शनान्तरस्वतन्त्रसिद्धान्तनिरसनपूर्वकस्वस्वतन्त्रसिद्धान्तास्सर्वेऽपि प्रायेण सङ्गृहीताः ॥

ब्रह्ममीमांसायाः परविद्यात्वम् ।

ते यथा ( १ ) ब्रह्मसूत्राणां वेदेतिकर्तव्यताभूतानामपि वेदव-

देव परविद्यात्वम् । तत्रापि मुख्यं परविद्यात्वं ब्रह्ममीमांसाया एव, ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृतानामृगादीनां परविद्यात्वाभावात्, ब्रह्मविद्योपकर्तृत्वेनैव परविद्यात्वाच्च । तत्र ब्रह्ममीमांसाया इतिकर्तव्यत्वं निर्णयप्रतिबन्धकसंशय-पूर्वपक्षनिरासेनैव, न तु साक्षात्, इति प्रयाजादीनामिव वेदान्तब्रह्मजिज्ञासया नाङ्गाङ्गिभावः ॥

श्रुति-स्मृति-मीमांसा-लौकिक-

वाक्यप्रामाण्यनिमित्तम् ।

तत्र वेदानां प्रामाण्यं युक्तिपूर्वकत्वेन । तत्र युक्तिस्त्वप्रामाण्यशङ्कानिरसनेन प्रामाण्यायोपकरोति । स्मृतीनां प्रामाण्यात् तत्प्रामाण्ये श्रुत्याप्ती उपकुर्वाते । ब्रह्ममीमांसायास्तु श्रुतियुक्त्याप्तिमूलकत्वेन प्रामाण्यात् तत्र श्रुतियुक्त्याप्तय उपकुर्वन्ति । लौकिकवाक्यानान्त्वाप्तिमात्रमूलत्वेनैव प्रामाण्यम् ॥

द्वैतवादाभिमताः जिज्ञासाधिकरणप्रस्तुताः षट्पञ्चाशत् प्रक्रियाः ।

(२) ब्रह्मसूत्राणामोमथशब्दपूर्वकत्वनियमः ; (३) प्रथमसूत्रस्य प्रयोजनव्युत्पादनार्थन्यायप्रतिपादनपरत्वम्; (४) जीवव्यतिरिक्तेश्वरसाधनम्; (५) ईश्वरस्यैवैङ्कारार्थत्वम्, वेदार्थत्वं च; (६) ब्रह्ममीमांसायाः स्वतन्त्रशास्त्रत्वम्; (७) साक्षाद् ज्ञानस्य न मोक्षसाधनत्वम्, किन्त्वीश्वरप्रसादद्वारा; (८) अनादीनां प्रकृति-धर्माधर्माज्ञानानन्दादीनामीश्वराधीनसत्ताकत्वम्; (९) अविद्यासाहाय्येनेश्वरशक्तेरेव स्वप्रकाशचैतन्यस्वरूपजीवस्यावरणम्;- (१०) बन्धस्येश्वरशक्तिनिबन्धनत्वम्, न त्वज्ञाननिबन्धनत्वम् ॥ (११) अनादेः प्रकृतेर्नित्यत्वम्; (१२) अज्ञानस्य, बन्धस्य वाऽनिर्वचनीयत्वायोगः; (१३) अज्ञानस्यानादेरीश्वरशक्तिव्यतिरिक्ताज्ञानादिनिवृत्त्यनुपपत्तिः ; (१४) ज्ञाननिवर्त्यत्वस्य, बन्धसत्यत्वस्य च विरोधः; (१५) असत्ख्यातिः; (१६) ब्रह्मणो नोपादानकारणत्वम्, किन्तु निमित्तकारणमात्रत्वम्; (१७) प्रत्यक्षविरुद्धबन्धमिथ्यात्व आगमाप्रामाण्यम्; (१८) बुद्धीन्द्रियशक्तिविषयतद्धर्माणामनात्मनामात्मन्यारोपस्य बन्धत्वेऽपि तस्ये-

श्वरशक्त्याऽविद्यावरणनिमित्तत्वेऽपि स्वरूपेण न तेषामारोपः, किन्तु कर्तृत्वादीनां स्वीयानां परायत्तानामपरायत्तत्वारोप एव बन्धो नाम" तेषां शरीरादीनामपि संसर्गमात्राध्यासः, न स्वरूपतोऽध्यास इत्यादि ( १९ ) अहमर्थस्यैव सुषुप्तावपि भासमानस्यात्मत्वम्; ( २० ) मिथ्याभूतस्याऽऽमस्यागमाण्यापत्त्या तत्सत्यत्वम् ॥

( २१ ) मिथ्याभूतस्यार्थक्रियाकारित्वायोगः; ( २२ ) भेदनिषेधपराणां भगवतस्तदीयधर्मादीनां च स्वरूपाभेद एव तात्पर्यम्, न तु स्वरूपभेदे; ( २३ ) मिथ्याभूतस्य कथानङ्गत्वम्; ( २४ ) असतस्साधकत्वानुपपत्तिः; ( २५ ) अनिर्वचनीयत्वस्य भावाभावविलक्षणत्वस्य च दशधा विकल्प्य निरासः; ( २६ ) सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन सदसद्विलक्षणत्वमिथ्यात्वासम्भवः, तत्र प्रमाणाभावश्च; ( २७ ) सदसद्वैलक्षण्ये सत्प्रतीत्यनुपपत्तिः; ( २८ ) दृश्यत्वहेतुनिरासः; ( २९ ) अन्यथा ज्ञातस्यान्यथा सम्यग् ज्ञानस्यैव बाधत्वात्तस्यासत्ख्यातावपि बन्धमिथ्यात्वं विनैव सम्भवः ॥

( ३० ) सत्पदार्थस्य सत्यपरत्वम्, द्रव्यादिपरत्वं वा। सत्त्वं तु न ब्रह्ममात्रस्य, किन्तु सर्वस्य विश्वस्य; ( ३१ ) विश्वस्य सत्यत्वाविरोधो ज्ञाननिवर्त्यत्वेऽपि; ( ३२ ) सर्वाऽपरख्यातिनिरासपूर्वकमसत्ख्यातिसमर्थनम्; ( ३३ ) अज्ञानाभावत्वसमर्थनं, परमतमनुसृत्य, स्वमतेऽपि तद्भावत्वस्वीकारेऽपि। तेन चाद्वैतिनां तदभावत्वनिरासेन भावत्वसमर्थननिरासद्वारा भावाभावविलक्षणत्वरूपानिर्वचनीयत्वस्य तन्मुखेन निरासः; ( ३४ ) अज्ञाने भावरूपे प्रत्यक्षानुमानादिनिरासः; ( ३५ ) तत्त्वमस्यादिवाक्यानां जीवब्रह्मैक्यपरत्वनिरासः, ( ३६ ) प्रत्यक्षस्यागमबाधकत्वे युक्तयः; ( ३७ ) अद्वैतसिद्धान्ते स्वरूपाभेदस्य तत्त्वमसिवाक्यार्थत्वात् तस्मिन् नित्यसिद्धे "परेऽव्यये सर्व एकीभवन्ती"त्यभूततद्भावार्थच्विप्रत्ययायोगः; ( ३८ ) वेदान्तानां कार्यमात्रपरत्वायोगेन सिद्धेऽपि तात्पर्यसमर्थनम् ॥

( ३९ ) तिङर्थस्येष्टसाधनत्वमुखेन ब्रह्मण इष्टसाधनत्वम्;

( ४० ) उपास्यस्यापि ब्रह्मणस्तात्पर्यविषयस्य सत्यत्वम्; ( ४१ ) सर्वस्य वेदवाक्यस्य विष्ण्वतिरिक्तार्थत्वेनापरविद्यात्वम्, विष्णुपरत्वेन परविद्यात्वं च; ( ४२ ) पूर्वोत्तरकाण्ड-तन्मीमांसयोर्भिन्नार्थत्वेन भिन्नशास्त्रत्वम्; ( ४३ ) 'सत्यं ज्ञानमि'त्यादावपि सत्यं ब्रह्म ज्ञानं ब्रह्मेत्यादिरूपेणावान्तरवाक्यत्वम्, एवमेवोपासनावाक्येष्वपीति ब्रह्मणोऽपि वाक्यार्थत्वेऽप्यवान्तरवाक्यार्थत्वम्, स्वतन्त्रवाक्यार्थत्वमिवेति वाक्यभेदः; ( ४४ ) श्रुतिप्रामाण्यम्; (४५) तेन प्रसङ्गेन प्रत्यक्षानुमानातिरेकेण शब्दप्रामाण्यम्, तज्ज्ञानप्रामाण्यं वा ॥

( ४६ ) शब्दार्थसम्बन्धस्य तादात्म्यातिरिक्तस्य स्वाभाविकस्य, संकेतस्य च समर्थनम्, संकेतस्येश्वरानीश्वरसाधारणस्यानादेस्सम्बन्धत्वम्, ।तत्र व्याकरणादिसार्थक्यं च; ( ४७ ) शब्दस्य लौकिक-वैदिकसाधारण्येन सर्वविधस्य प्रामाण्यम्; ( ४८ ) स्वतः प्रामाण्यम्; परतोऽप्रामाण्यम्, तत्प्रसङ्गेन बौद्धाद्यागमाप्रामाण्यं च; ( ४९ ) अप्रामाण्यस्यापि ज्ञानगतत्वाविशेषादपवादकासहितसाक्षिग्राह्यत्वम्; ( ५० ) वेदापौरुषेयत्वम्; ( ५१ ) पदानां शक्तिग्रहोपायो वृद्धव्यवहारः; ( ५२ ) अन्वयेऽपि पदानां शक्तिरित्यन्विताभिधानवादः ॥

( ५३ ) स्फोटवादनिरासः; ( ५४ ) वाक्यस्यैव स्मर्यमाणवर्णमालारूपस्य पदार्थप्रतीतिनिरपेक्षस्य वाक्यार्थबोधकत्वायोगः ॥

( ५५ ) वाक्यान्त्यवर्णस्य वाक्यार्थबोधकत्वायोगः; ( ५६ ) पदाभिहितपदार्थानां वाक्यार्थबोधकत्वमित्यभिहितान्वयवादनिरासश्चेत्येवमतश्शब्दव्याख्यानप्रसङ्गेन स्वतन्त्रसिद्धान्ता एतावन्त उपक्षिप्ताः ॥

तत्राद्वैतवादविप्रतिपन्नास्त्रिचत्वारिंशत् प्रक्रियाः ।

तत्राद्वैतविप्रतिपन्ना विषयाः—(१) ब्रह्मसूत्राणामोमथशब्दपूर्वकत्वनियमः, तत्र प्रमाणाभावात्; (२) ईश्वरस्यैवोङ्कारार्थत्वम्, यत्राद्वितीयं निर्विशेषं वा तत्त्वमेव तदर्थ इति माण्डूक्योपनिषदनुसारेण मन्यते; (३) जीवव्यतिरिक्तेश्वरसाधनम्, यत्र तदङ्गीकारेऽपि जीवेश्वरैक्यं जीव-

त्वेश्वरत्वाविवक्षया; (४) ज्ञानस्येश्वरप्रसादद्वारा मोक्षसाधनत्वम्, यत्र यत्र साक्षाद् बन्धनिवृत्तिद्वारा ज्ञानस्य मोक्षसाधनत्वम्, (५) प्रकृत्यादीनामीश्वराधीनसत्ताकत्वम्, यत्र निर्विशेषचैतन्यसमकालिकत्वमात्रं प्रकृतीश्वरजीवादीनां सर्वेषां समानैव सत्ता, नेश्वराधीनत्वम् ॥

(६) ईश्वरशक्त्यैव जीवाश्रितजीवविषयाविद्यायाःस्वप्रकाशजीवचैतन्यावरकत्वम्, यत्राविद्या स्वभावत एव ब्रह्माश्रिता, जीवाश्रिता वा ब्रह्मैवावृणोति, न तु जीवमन्यद्वा; (७) बन्धस्येश्वराधीनत्वम्, यत्राज्ञानप्रयुक्तत्वम्; (८) अनादेः प्रकृतेर्नित्यत्वम्, यत्रानादेः प्रकृतेरपि नाश्यत्वम्; (९) अज्ञानस्य बन्धस्य वाऽनिर्वचनीयत्वायोगः, यत्रोभयोरप्यनिर्वचनीयत्वम्; (१०) अज्ञानस्यानादेरपीश्वरशक्तिविनाश्यत्वम्, यत्राज्ञानस्य ज्ञानमात्रबाध्यत्वम् ॥

ज्ञाननिवर्त्यत्वं सत्यत्वाविरोधि; यत्र ज्ञाननिवर्त्यत्वं सत्यत्वविरोधि; (११) असत्ख्यातिः, यत्रानिर्वचनीयख्यातिः (१२) ब्रह्मणो निमित्तकारणत्वमात्रम्, यत्र ब्रह्मण उपादानत्वमपि; (१४) प्रत्यक्षविरुद्धागमाप्रामाण्यम्, यत्रानन्यपरागमविरुद्धप्रत्यक्षाप्रामाण्यम्; (१५) शरीरेन्द्रियादीनामात्मनि न स्वरूपत आरोपः, किन्तु तत्तादात्म्यमात्रस्य, यत्रोभयस्याप्यारोप; (१६) अहमर्थस्यैव सुषुप्त्यादावपि भासमानस्यात्मत्वम्, यत्र तुरीयावस्थायां प्रतिभासायोग्यत्वादहमर्थो न मुख्य आत्मा ॥

(१७) मिथ्यात्व आगमाप्रमाण्यम्, यत्र मिथ्यात्वेऽप्यागमस्य यावद्बाधं प्रामाण्यम् (१८) मिथ्याभूतस्यार्थक्रियाकारित्वायोगः, यत्र मिथ्याभूतस्याप्यर्थक्रियाकारित्वम्; (१८) "नेह नानाऽस्ती"त्यादिभेदनिषेधपराणां श्रुतीनां ब्रह्मणि भेद-तत्प्रतियोगिसजातीय-विजातीय-स्वगतनिषेधपरत्वम्; (२०) मिथ्याभूतस्य कथानङ्गत्वम्, यत्र मिथ्याभूतस्यापि सत्त्वसत्त्वौदासीन्येनार्थक्रियाकारित्वम्; (२१) अनिर्वचनीयत्वस्य भावाभावविलक्षणत्वादीनाऽनिर्वचनीयत्वम्, यत्र भावाभावविलक्षणसदसद्विलक्षणत्वादिना; प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिना च तस्य निर्वचनसम्भवः ॥

(२२) सत्त्वासत्त्वयोः परस्परविरहरूपत्वे सदसद्विलक्षणत्वमिथ्यात्वायोगः, यत्र सत्त्वासत्वयोः परस्परविरहरूपत्वासम्भवेनोक्तरूपमिथ्यात्वाविरोधः; (२३) सदसद्वैलक्षण्ये सत्प्रतीत्यनुपपत्तिः, यत्र सदसद्वैल-

क्षण्येऽपि सत्प्रतीत्युपपत्तिः, (२४) निर्दुष्टदृश्यत्वहेतुनिर्वचनासम्भवः, यत्र दृक्तादात्म्यस्य निर्दुष्टस्य दृश्यत्वम्, (२५) अन्यथा ज्ञातस्यान्यथा-सम्यग्ज्ञानं बाधोऽसत्ख्यातिनिर्वाहकः, यत्राधिष्ठानतत्त्वसाक्षात्कारो बाधः, (२६) सत्पदार्थस्य प्रतीयमानसर्वसत्यसाधारण्यम्, यत्र सत्पदार्थः सद्रूपं ब्रह्मस्वरूपमात्रम्, तत्तादात्म्येनैवान्येषां सत्प्रतीतिविषय-त्वम्; (२७) विश्वस्य ज्ञाननिवर्त्यत्वेऽपि सत्यत्वाविरोधः, यत्र ज्ञाननि-वर्त्यत्वं सत्यत्वविरोधि ॥

(२८) ख्यात्यन्तराणां निरासेनासत्ख्यातिसमर्थनम्, यत्र ख्यात्यन्तर-निरासेनानिर्वचनीयख्यातिसमर्थनम्; (२९) तार्किकादिदृष्ट्याऽज्ञानस्य भावरूपत्वनिरासेनाभावरूपत्वसमर्थनम्, तत्र प्रत्यक्षानुमानादि प्रमाण-परीक्षा च, वस्तुतः स्वदृष्ट्या भावरूपत्वेऽप्यभाववैलक्षण्यनिरा-सार्थतया, यत्र भावत्वमिव नाभावत्वमपीति भावाभाववैलक्षण्योपयोगि-तयाऽभाववैलक्षण्यस्यापि साधनम्, उभयवैलक्षण्यस्यापि स्वाभिमत-त्वेन, तत्र प्रत्यक्षादिप्रमाणपरिक्षा च; (३०) तत्त्वमस्यादिवाक्यानां जीवब्रह्मैक्यपरत्वनिरासः, यत्र तत्त्वमस्यादिवाक्यानां जीवत्वेश्वरत्वविशि-ष्टैक्याभावेऽपि तदुपलक्षितस्वरूपैक्यपरतासमर्थनम् ॥

(३१) प्रत्यक्षस्यागमबाधकत्वस्य "यजमानः प्रस्तर" इत्युदाहरणेन, अनुमानादिना च समर्थनम्, यत्र "यजमानः प्रस्तर" इत्यादिवक्यस्यान्यशेष-स्यात्रानुदाहरणतया देहात्मप्रत्यक्षस्याप्यागमबाधकत्वापत्त्या च प्रत्यक्ष-स्याद्वैतागमबाधकत्वायोगः; (३२) "तत्त्वमसि" वाक्यस्य नित्यसिद्धत्व-रूपैक्यपरत्वे "परेऽव्यये सर्व एकीभवन्ती"त्यभूततद्भावच्विप्रत्ययविरोधः, यत्र घटाकाश-मठाकाशादयौ महाकाशीभवन्ति, बद्धो मुक्तीभवतीत्यादाविवो-पधिनिवृत्तेः, बन्धनिवृत्तेश्चासिद्धायाः साध्यत्वेन च्विप्रत्ययोपपत्तिः; एकीभावस्य तत्तदुपाधिनिवृत्त्युपलक्षितस्वरूपमात्ररूपत्वात् ॥

(३३) उपास्यस्यापि ब्रह्मणो ओम्पदार्थविधयाऽवान्तरतात्पर्यविषयस्य सत्यत्वम्, यत्रोपास्यस्य व्यावहारिकसत्त्वम्, न तु त्रिकालाबाध्यत्वम्; (३४) सर्वस्य वेदस्य विष्णुव्यतिरिक्ताकारपरत्वेनापरविद्यात्वम्, विष्णुपरत्वेन परविद्यात्वम्, ऋगादीनां शब्दब्रह्मविधयाऽ-परविद्यात्वम्, कर्मकाण्डानां कर्मबोधकानामपि वाच्यविधयाऽन्यथा वा न विष्णुपरत्वेनापरविद्यात्वम्, किन्तु परविद्यात्वमपि, यत्र ब्रह्म-विष्णु-

शिवात्मकतत्तदुपाध्यधिष्ठानविधया तत्तदधिष्ठानतुरीयातीतनिर्विशेषसंविन्मात्राक्षरपरतया निर्विशेषवाक्यमात्रस्य परविद्यात्वम् ॥

(३५) प्रामाण्यवदप्रामाण्यस्यापि साक्षिग्राह्यत्वम्, परन्त्वपवादकसाहित्येन, यत्र प्रामाण्यमात्रस्य स्वतो ग्राह्यत्वम्, न त्वप्रामाण्यस्य; साध्यसंबद्धविषयघटितस्य (३६) वाक्यस्य कार्यार्थानुभावकत्वमन्विताभिधानवादेनैव, नाभिहितान्वयवादेन, तेन च संसर्गागोचराखण्डार्थतानिरासः, यत्रान्विताभिधानवादे, अभिहितान्वयवादे च वा निर्भरः, उभयस्याप्यविरोधात्। तत्र न्यायचन्द्रिकाऽन्विताभिधानवादं समर्थयति, चित्सुखी त्वभिहितान्वयवादम्। तत्रान्वयपदस्य, "तत्तु समन्वयादि"-त्यादाविव तात्पर्यानुसारेणोभयत्राप्युपपत्तेर्नाखण्डार्थत्वविरोधः ॥

(३७) वेदाङ्गेषु व्यासप्रणीतब्रह्मतर्कस्यापि स्वीकारः, यत्र शिक्षादीनां षण्णामेव वेदाङ्गत्वम्, न तु व्यासप्रणीतब्रह्मतर्कस्यापि; ब्रह्मपदस्य जीवपरत्वेन पूर्वपक्षः, ईश्वरभेदं तस्य मत्वा सिद्धान्तस्तु तदतिरिक्तेश्वरपरत्वमेव तस्येति मत्वा, यत्र तयोरभेदं मत्वाऽऽत्मनो ज्ञातत्वाद्विचारायोग्यतेति पूर्वपक्षः, सिद्धान्तस्तु ज्ञायमानस्याप्यहमर्थस्य न मुख्यात्मत्वम्, किन्तु मिथ्यात्मत्वम्, गौणात्मत्वं वेति विषयभेदेन ब्रह्मैक्ययोग्यं संविन्मात्रमज्ञातमिति कृत्वा विचारारम्भः। (३८) शब्दान्तरावाच्यस्यामेयस्य निर्विशेषब्रह्मणोऽलक्ष्यत्वम्, यत्रेक्षुक्षीररसादीनामिवाकृत्यधिकन्यायेनाकृतिपराणां लक्षणया व्यक्तिबोधनवद्वा न लक्षणया निर्विशेषबोधविरोधः ॥

(३९) ईश्वरानुयोगिकभेदस्य प्रमाणासिद्धस्यापूर्वत्वम् अन्येषामपि भेदानां ज्ञातानामप्यभ्यासेनात्र तात्पर्यग्राहकलिङ्गेन तत्त्वमसीत्यादावपि परमत इव तात्पर्यविषयत्वं शास्त्रमहातात्पर्यविषयत्वं च, यत्रेश्वरभेदस्य शास्त्रावगतस्याप्युपासनोपयोगितामात्रेण चारितार्थ्यात्, परत्वेन निर्विशेषवाक्य प्रामाण्येन निषेधापेक्षितनिषेध्यसमर्पकतयाऽवान्तरतात्पर्याविरोधात्, अन्येषां भेदानामप्यवान्तरतात्पर्योपपादकतयाऽभ्यासोपपत्तेः, "औदुम्बरो यूपः" "यो होता सोऽध्वर्युः" इत्यादाविव प्रत्याम्नानात्, अर्थलोपात्, प्रतिषेधाद्वोपजीव्यशास्त्रप्राप्तस्योपजीवकेनापि शास्त्रेणापि निषेधोपपत्तेः, "नेति नेती"ति विधया विविधसगुणवाक्यप्राप्तगुणनिषेधेन निर्विशेषवाक्यानां प्रवृत्तत्वादभेद एव परमं तात्पर्यम्,

न भेदे, किन्तु भेदवाक्यानाम्, अभेदवाक्यनां चाधिकारिभेदेन व्यवस्था ॥

(४०) प्रत्यक्षानुमानशब्दा एव प्रमाणानि, अन्येषां तत्रैवान्तर्भावः, यत्र प्रत्यक्षानुमानोपमानागमर्थापत्त्यनुपलब्धयः षट् प्रमाणानि (४१) "स्मृतिः प्रत्यक्षमैतिह्यमि"ति वचनात् स्मृतेरपि प्रमाणत्वम्, यत्र याथार्थ्यमेव प्रमाणत्वम्, अनधिगताबाधितार्थविषयकज्ञानत्वं वा, स्मृतिस्तु न प्रमा (४२) स्वाप्नानां तत्तद्वासनामयत्वम्, यत्र स्वाप्नानामपि प्रमातृचैतन्याश्रिततूलाविद्याकार्यत्वेनाऽऽविद्यकत्वम्। (४३) ईश्वरप्रतिबिम्बो जीवोऽणुपरिमाणः, नित्यपरमात्मस्वरूपोपाधिको भिन्नांशश्च, तस्य सर्वगतत्व तु बिम्बरूपेण, यत्र जीवोऽहमर्थोऽल्पपरिमाणान्तःकरणोपाधिकत्वात्तत्परिमाणः, व्यापकत्वं तु सर्वोपाधिविरहितसंविन्मात्रत्वेन। नित्यस्य चिद्रूपस्य परमात्मनः स्वरूपस्य बिम्बत्वम्, उपाधित्वम्, स्वरूपाणामुपाधीनामनेकत्वम्, जीव-रामाद्यवतारावैलक्षण्यापत्त्या स्वरूपोपाधिकत्वायोगश्च ॥

अन्ये तु मतद्वयसाधारणाः, तत्तत्स्वतन्त्रसिद्धान्ताश्च विस्तरभयान्नात्र निर्दिश्यन्ते। अतश्शब्दार्थनिरूपणप्रसङ्गेनैतावतां विषयाणां संकलनस्य ईश्वरप्रसादहेतुत्वोपन्यासस्य च न क्वापि साक्षादत्र सङ्गतिः। अत्र ज्ञानस्य साक्षात्साधनत्वाभावेन बन्धमिथ्यात्वनिरास-तत्सत्यत्वनिर्णय-वेदप्रामाण्यादीनामनुपयोगात् आस्तामियं प्रासङ्गिकी सर्वाऽपि कथा ॥

ब्रह्मतर्कस्य विद्यास्थानत्वपरीक्षा।

एतेन—

एतत् सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात्।
उक्तं विद्यापृथक्त्वात्तु संक्षेपेणात्र सूत्रितम् ॥
मान-न्यायैस्तु तत्सिद्धैर्मीमांसा मेयसाधनम्।
प्रमाण-न्याय-सच्छिक्षा क्रियते तर्कशास्त्रतः ॥
ब्रह्मतर्कं च भगवान् स एव कृतवान् प्रभुः।
पञ्चाशत्कोटिविस्ताराद् नारायणतनौ कृतात् ॥
उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः।
अतस्तदर्थसंक्षेपात् "अतः" इत्यारभ्यसूचयत् ॥
यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपि च ?

इत्यादि—व्याख्यातम्।

यत्तु—अस्ति तावत्तर्कमीमांसयोः पृथक्त्वम्; "वेदास्सर्वाङ्गानि सत्यमायतनमि"ति स्मरणात्। तत्र वेदाः = चत्वारः, सर्वाङ्गानि = पुराणस्मृतितर्कशास्त्रसहितानि षडङ्गानि संगृह्यन्ते। "सत्यमि" तिमीमांसा। तथाच चतुर्दशविद्यास्थानानि। तदर्थं च व्युत्पाद्यभेदेनावश्यं भाव्यम्। ततश्च प्रमेयव्युत्पादनपरे मीमांसाशास्त्रे तर्कशास्त्रव्युत्पाद्यवेदप्रामाण्यव्युत्पादनेन विद्याभेदत्वात् संक्षेपेण सूचने नायं दोषः—इति॥

ब्रह्मतर्कस्य विद्यास्थानत्वायोगः।

तत्र चतुर्दशविद्यास्थानानि, धर्मस्थानानि च, इति विद्या-धर्मरूपविषयभेदेन चतुर्दश धर्म-विद्यास्थानानीति स्वीकर्तव्यम्; अन्यथा—

"पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥"

इति धर्म-विद्योभयस्थानत्वव्यपदेशानुपपत्तेः। तत्र तेष्वेवांशभेदेन धर्मव्युत्पादने केषांचनोपयोगः, केषांन तु विद्याव्युत्पादने, इति धर्म-ब्रह्मजिज्ञासाभेदेन जिज्ञासाभेदः, मीमांसाभेदो वाऽर्थसिद्धः॥

उभयत्रोपजीव्यं वेदप्रामाण्यम्। अत एव "चोदनालक्षणोऽर्थो धर्मः" "शास्त्रयोनित्वात्" इति सूत्रद्वयम्। एवं विषयभेदोऽप्यपेक्षित इति कृत्वा लक्षणपरेणैव सूत्रेण पूर्वमीमांसायां विषयोऽपि सूत्रितः, ब्रह्मजिज्ञासायां तु "आनन्दो ब्रह्मे"ति वक्ष्यमाणस्वरूपलक्षणार्थं स्थूलारुन्धतीन्यायेन जगत्कारणत्वं लक्षणमुपक्षिप्तम्। तत्तु तटस्थलक्षणविधया, प्रकारान्तरेण वेतित्वन्यदेतत्। सर्वथा तु लक्षण-प्रमाणभेदेन लक्ष्यभेदः। प्रमेयभेदश्चार्थसिद्धः, इत्यभिप्रेत्यैव "स्थानानि विद्यानां धर्मस्य च चतुर्दशे" ति स्मृतम्॥

तत्र चोदनापदव्यतिरेकेण प्रयुक्तमेकं शास्त्रपदं पर्याप्तम्, ब्रह्मप्रमाणं शास्त्रम्, न चोदनामात्रम्, किन्तु सिद्धार्थोपदेशपरमपीति पूर्वोत्तरयोर्मीमांसयोर्विषयभेदे। तत्र च न केवलं वेदवाक्यो प्रमाणम्, किन्तु तदङ्गान्यपि स्मृति-पुराणेतिहासादीनीत्यभिप्रेत्य विधिपराणां स्मृत्यादीनामपि प्रामाण्यं वेदमूलकत्वेन पूर्वस्यां मीमांसायां परीक्षितम्, उत्तरमीमांसायां तु सिद्धार्थपराणां वाक्यानामुपपत्तिसापेक्षाणां मनन-

सापेक्षाणामेव प्रामाण्यमिति श्रवणाङ्गतया मननादिविधीनाम्, यत्र सिद्धार्थपरसाङ्ख्यादिस्मृतियुक्तिविरोधपरिहारार्थं साक्षात्, परम्परया वा शास्त्रान्तरविरोधपरिहारार्थमपि समुद्यमः ॥

अत एवावगम्यते-ब्रह्म नोपास्यतयैव शास्त्रगम्यम्, किन्तु ज्ञेयतामात्रेणेति। तत्र ब्रह्मतर्कस्य केन वा पदेन ग्रहणम्। यदि न्यायपदेन, तर्हि प्रमाणस्य न्यायविस्तराख्यस्य तस्य प्रमेयसंशोधनं न कृत्यम्। कर्म-ब्रह्मोभयमीमांसोपयोगिप्रमाण-न्यायानां विस्तरस्तत्र, ब्रह्ममीमांसामात्रं ब्रह्मतर्कार्थसंग्रह इति न युक्तम्। सर्वथा तु प्रमेयसंशोधनं ब्रह्मसूत्राणां कृत्यम्, इति ब्रह्मसूत्रस्वारस्यानुसारेणैव प्रमेयशोधनम् ॥

### ब्रह्मतर्कस्य स्वतन्त्रविद्यास्थानत्वायोगः।

तत्र यदि प्रमाणव्युत्पादनमात्रं तर्कशास्त्रस्य लक्ष्यम्, तर्हि ब्रह्मव्युत्पादन उपमानप्रमाणस्य नापेक्षा, न तु धर्मव्युत्पादन इति वक्तव्यम्। धर्मव्युत्पादने सप्तमाध्यायार्थसंकलन उपमानप्रमाणमेव मुख्योऽवलम्बः, इति नोपमानाप्रामाण्यवर्णनमेकान्ततो योग्यम्। ब्रह्मविद्यामात्रविषयत्वे तु तर्कस्य, कर्म-काण्डार्थनिर्णयो न ब्रह्मतर्कस्य विषयः, इति तस्यापि विष्णुपरत्वेन परविद्यात्वव्युत्पादनं न ब्रह्मतर्कस्य गोचरः स्यात् ॥

तत्र "सर्वाङ्गानी"त्यनेन षडङ्गातिरिक्तेष्वङ्गेषु कुत्र वा ब्रह्मतर्कस्य प्रवेशः? स्मृति-पुराणे तु न वेदाङ्गे। ते हि वेदमूलकत्वेनैव प्रमेयांशे प्रमाणम्, न तु षडङ्गानीव वेदशरीरान्तर्गतवर्णस्वराभिव्यक्ति-पदस्वरूप-कालादिपदार्थ-विशेष-वेदार्थानुष्ठानक्रमविशेषनिर्णायकत्वेन, इति "वेदाः" इत्यनेन न ब्रह्मतर्कस्य ग्रहणम्। ब्रह्मतर्कस्तु प्रमाणविशेषादिव्यवस्थापरम्, प्रमेयानुसन्धानपरं कुत्रान्तर्भवति?

यदि मीमांसायामेव तस्यान्तर्भावः, तर्हि कथं चतुर्दशत्वं तर्कशास्त्रस्यापि विद्यास्थानत्वे। वेदप्रामाण्यं हि स्मृति-पुराणेतिहास-मीमांसावगम्यमपि, न तर्कशास्त्रमात्रगम्यम् ॥

### व्यासस्य ब्रह्मतर्ककर्तृत्वे न प्रमाणम्।

न्यायपदमप्युपपत्त्युपपादकाङ्गव्याप्त्यादिनिरूपणपरं गौतमाक्षपाद-प्रणीतं शास्त्रमेव, न तु संप्रदायविशेषमात्रप्रसिद्धब्रह्मतर्कपरम्, प्रमाण-

स्वरूपादिनिरूपणप्रधानस्य ब्रह्मतर्कस्य विस्तरात्मकस्य संग्रहात्मकत्वे ब्रह्ममीमांसायाः, तयैव गतार्थत्वात् किं वा भाष्यविरचनेन ?

न हि जैमिनि-बादरायणादयः सूत्रकाराः प्रथमं विस्तृतं सूत्रार्थं ग्रन्थरूपेण विलिख्य तत्संग्रहरूपाणि सूत्राण्यरचयन् अपराणि, इत्यत्रास्ति किमपि प्रमाणम्। ब्रह्मतर्कप्रामाण्यवादे सर्वेषु शास्त्रेषु प्रमाणनिरूपणं व्यर्थं स्यात्। न चेष्टापत्तिः; संप्रदायपरम्परया परिपाल्यमानस्य प्रमाणस्यापि निरूपणपरस्मृति-पुराणेतिहासादीनां वैयर्थ्ये तेनैव गतार्थत्वात् कुतो वा ब्रह्मतर्कस्य प्रामाणनिरूपणपरस्यैव सम्प्रदायविशेषपरिपाल्यमानस्य, तत्रापीदन्तया विना द्वैतभाष्यकारेण संग्रहमात्रम्, कुत्रापि निबन्धरूपेणानुपलभ्यमानस्यैव प्रामाण्यम्, सार्थक्यं च ?

का वा गतिर्जैमिनीयमीमांसायामुपमानप्रमाणोपजीव्यकस्यातिदेशविचारस्य ? गौतमादिप्रणीतानि प्रमाणशास्त्राण्येव ब्रह्मतर्कस्य संग्रह इत्यङ्गीकारे का वा हानिः ? इति न्यायपदेन ग्रहणयोग्यमपि तर्कशास्त्रं तदेव भवितुमर्हति ; तथैव विज्ञानेश्वरादिभिर्व्याख्यानात्। सर्वेषां महर्षिप्रणीतानां स्मृत्यादिनां वैयर्थ्यफलेन ब्रह्मतर्कमात्रप्रामाण्येन किं वा कृत्यम् ?

ब्रह्मतर्कप्रामाण्यं न क्षोदक्षमम्।

सौत्रातःपदव्याख्यानेऽपि तस्य तात्पर्यकल्पनं तु प्रमाणनिरूपणनिर्भरस्य ब्रह्मतर्कस्यास्थाने। सर्वथा तु सर्वदार्शनिकसम्मतप्रमाणानुसारिलोकसिद्धप्रमाणान्तराविरुद्धसूत्रान्तरभाष्यव्यवस्थामनुसृत्य स्वतन्त्रसूत्रार्थविवरणमेव प्रमाणम्, नान्यदिति तु न साम्प्रतम्। लोकसिद्धप्रमाणाद्यनुसारेण न्यायविशेषाणां प्रसिद्धानामावापोद्वापाभ्यां भाष्यकाराणां विप्रतिपत्तिस्तु सत्यं विचारमन्तरा न निरवकाशा भवति, इति तेषां तेषां भाष्यकाराणां न्यायविचारपरम्परा तेषां तेषां तत्त्वविनिर्णयार्थमपेक्ष्यते ॥

अयमेवाशयः सर्वेषां भाष्यकाराणामपि तत्तत्सम्मतविचारपरम्परामादधानानाम्; अन्यथा द्वितीयाध्याये गौतमादितर्कस्यापि ब्रह्मतर्कवत् तर्कत्वाविशेषात् तदप्रमाण्यव्यवस्थाऽप्रमाणं स्यात्। तर्कप्रामाण्यं हि तदर्थस्य, तस्य वा विकल्पासहत्वनिबन्धनम्, न तु कर्तृगौरवप्रयुक्तम्; वेदार्थोपबृंहकत्वेनैव तत्प्रामाण्यात् ॥

अत एव जैमिनीये शास्त्रे वेदार्थनिर्णयेऽपि—“विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्” “हेतुदर्शनाच्चे”ति मन्वादिस्मृतीनामप्यप्रामाण्यं सूत्रितम्। ब्रह्ममीमांसाकारा हि “तर्काप्रतिष्ठानादि”ति तर्कस्याप्रामाण्यं वदन्तो ब्रह्मतर्कमपि वेदार्थानुपबृंहकमप्रमाणं सूत्रयति, इति व्यासकृतित्वमात्रेण न्यायविरुद्धोऽपि वेदार्थो न वेदार्थः; अन्यथा सूत्रेषु पूर्वोत्तरपक्षमुखेन व्यवस्था व्यर्था ॥

श्रीमदानन्दतीर्थानामणुभाष्यवदणुसूत्रैरेव सर्वनिर्वाहाद् न ब्रह्ममीमांसा तद्भाष्यम्, अणुभाष्यम्, तस्याप्यनुव्याख्यानम्, वेदान्तार्थस्येव वेदार्थस्यापि स्मृति-पुराणेतिहासादिभिरप्युपबृंहणं च बादरायणेनैवय ब्रह्मतर्कद्वारा सर्ववेदार्थस्य निर्धारितत्वे वितथमापद्येत। न्यायनिर्णयेषु सन्दिग्धेषु स्थलेषु खलु मीमांसाशास्त्रम्, इति न्यायस्वरूपमात्रचर्चैवर्ण तत्तन्नियमाविरोधेनात्र मीमांसाकृत्यम्, न तु स्मृति-पुराणेतिहासादिविरुद्धमपि तदाशयव्यवस्थापनम् ॥

### ब्रह्मतर्कस्य कर्तृगौरवेण प्रामाण्यायोगः।

अत्र ब्रह्मतर्को भगवता व्यासेन कृतो वा भवतु, विष्णुना कृतो वा यदि पौरुषेयः, तर्हि वेदवद् न प्रतिज्ञामात्रेण प्रमाणम्; अन्यथा ब्रह्मतर्कोऽपि वितथः, तथा ब्रह्ममीमांसादिकमपि; अन्यथा भगवदवतारबौद्धवाक्यान्यपि कथं न प्रमाणानि ? तान्यपि कथं व्यामोहनार्थानि ? कथं च भगवदवतारव्यासवाक्यमपि बुद्धवाक्यविरुद्धं प्रमाणं स्यात् ?

यदि वेदार्थविरोधित्वेन, तर्हि वेदोपबृंहकन्यायाविरोध एव प्रामाण्यम्, न व्यासकृतित्वेन केवलेन ॥

### ब्रह्मतर्कमात्रस्य न व्यासकृतविस्तरसंग्रहत्वम्।

तत्र पञ्चाशत्कोटिविस्तीर्णे बादरायणीयशास्त्रे पुराणेतिहासादीनामप्यन्तर्भावोऽस्ति वा, न वा। यद्योम्, तर्हि तैः संगृहीतैः प्रमाणादिभिर्निर्धारणं भविष्यति, इति धर्ममीमांसाशास्त्राणि, धर्मशास्त्राणि, प्रत्यक्षानुमानादिप्रमाणनिरूपणपरगौतमादिशास्त्राण्यधिकारिभेदेन तत एवोद्धृतानि व्यासानुगृहीतैरन्यैरपि महर्षिभिर्जैमिन्यादिभिरिति न कथम्। न्यायानुसन्धानस्यैव शास्त्रार्थनिर्णयोपयोगितयाऽत्र विवक्षणात् व्याससूत्रितन्यायानुसारिवेदान्तार्थः क इति विचारमात्रमत्र प्रस्तूयते ॥

जिज्ञासासूत्रे ब्रह्मशब्दार्थो न ब्रह्मतर्कनिर्णीतः ।

तत्र "अथातो ब्रह्मजिज्ञासे"ति प्रस्तुतविचारविषयो ब्रह्म यदि ब्रह्मतर्केण विष्णुरित्युपदिष्टं स्वयं व्यासेन, तर्हि तत्सूत्रार्थे संशय एवानुपपन्नः; व्यासेन स्वयं व्याख्याते सूत्रे तदर्थसंशयस्याप्रसरात्, एवमन्येष्वपि सूत्रेषु, इति ब्रह्मतर्कप्रामाण्ये ब्रह्मजिज्ञासाशास्त्रं वितथम्। ब्रह्मतर्कस्यैव विस्तृतस्य संग्रहेऽपि ब्रह्मजिज्ञासायां कथं सूत्रार्थे संशयः स्यात् ?

तत्र यदि ब्रह्मतर्कगतिमनुरुध्यैव संशयपूर्वपक्षादिकम्, तर्हि ब्रह्मतर्कीयपूर्वपक्षसंग्रहः कथं न ब्रह्ममीमांसायाम्, कथं वा ब्रह्मशब्दस्य कोशाद्यनुसारेण जीवपूर्वपक्षस्योत्थितिः ? यदि सोऽपि ब्रह्मतर्कमनुसृत्य, तर्हि कथं च ब्रह्मसूत्रभाष्ये, अनुव्याख्याने वोक्तविधः पूर्वपक्षो नोपक्षिप्यते ?

द्वैताभिमतजीवपूर्वपक्षानुपपत्त्युपसंहारः ।

यदि ब्रह्मजिज्ञासाप्रतिज्ञान्यथानुपपत्त्याऽब्रह्मजिज्ञासा पूर्वपक्षतया कल्प्यते तर्हि, जीवपूर्वपक्ष-ब्रह्मसिद्धान्तयोः केवलं ब्रह्मशब्दमात्रसाम्येन पूर्वपक्षकल्पनापेक्षया "आत्मा च ब्रह्म"ति श्रुत्यर्थमादाय जीवब्रह्मैक्यमाश्रित्यैव ब्रह्मण एव जीवैक्याद् जीवस्य चाहमर्थस्य ब्रह्माभिन्नत्वान्न विचारः कर्तव्य इति पूर्वपक्षेऽहमर्थो जीवो न ब्रह्म, किन्तु विगलिताहङ्कारसंविन्मात्रमेव ब्रह्मेति तस्याज्ञातत्वाद्विचारः कर्तव्य इति पूर्वोत्तरपक्षयोरेकविषयत्वं प्रतिषेध्य-प्रतिषेधकभावेनोपपद्यते ॥

द्वैतवादे जन्माधिकरणानुत्थितिः ।

वस्तुतस्तु—अतश्शब्दव्याख्यानमिषेणैव ब्रह्मतर्कानुसारेण जीवब्रह्मैक्यस्य, बन्धमिथ्यात्वाभावस्यान्यान्यस्य च पूर्वोक्तस्य विषयजातस्येश्वरप्रसादादेव मोक्षसिद्धेश्च व्याख्याने तदनन्तरेण ब्रह्मशब्देन जीवविवक्षापक्षस्योत्थितिरेव बाधिता । न हीश्वरप्रसादाद् जीवजिज्ञासेति लगति ॥

"सर्वज्ञादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः ।"

इति ब्रह्मणो गुणपूर्णस्यैव जिज्ञास्यत्वं मत्वा खल्वतश्शब्देनेश्वरप्रसादस्य हेतुत्वम्, फलत्वं वा विवक्ष्यते फलस्यापि हेतुत्वं मत्वा ॥

सति चैवम्—

"स्वयं च भगवान् विष्णुर्ब्रह्मे त्येतत् पुरोदितम् ।"

इत्यपि—व्याख्यातम् । तत्र भगवता ब्रह्मशब्दार्थो विष्णुरेवेति यदुदीरितम्, तर्हि जीवपूर्वपक्षस्य नोत्थितिः। न च वेदान्तप्रामाण्यवादिनां केषामपि जीवातिरिक्तब्रह्माभावो ब्रह्मजिज्ञासातः पूर्वं विना जैमिनीयान्, ये वेदान्तानां जीवस्तावकत्वेनार्थवादत्वं मन्यन्ते, तेषां दृष्ट्या जीवातिरिक्तब्रह्मानङ्गीकारेण पूर्वपक्षः सम्भवति, अद्वैतदृष्ट्या तु जीवब्रह्मैक्यश्रुतेस्तत्त्वार्थज्ञानविधुराणां संशय-पूर्वपक्षौ प्रसरं लभेते इति युक्तम् ॥

एतेन—

"स्वयं भगवता विष्णुर्ब्रह्मेत्येतत् पुरोदितम् ।
स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥
आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ।
मध्यं तदाज्ञया शेष-पैलाभ्यां कृतमञ्जसा ॥
अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूत्रयत् ॥"

इति—व्याख्यातम् ।

अयं भावः—"अथातो ब्रह्मजिज्ञासे"ति सूत्रे ब्रह्मपदं विष्णुपरम्, न तु जाति-जीव-कमलासन-शब्दराशिषु वृद्धप्रयोगसिद्धत्वेऽपि तत्परम् । देवमीमांसाया ह्यन्ते "स विष्णुराह हि तं ब्रह्मेत्याचक्षते"इति स्वयं सूत्रकारो ब्रह्मशब्दस्य विष्णौ प्रकृतत्वमाह इति, भगवतो विष्णोरेव जिज्ञासाऽत्र श्रूयत इति ॥

तत्र यदि दैवमीमांसायामेव परमाराध्यदेवतास्वरूपं ब्रह्मैव, स च विष्णुरेवेति निर्धारितम्, तर्हि तस्य जीवपरत्वशंकाया अप्रसरात्—"अथातो ब्रह्मजिज्ञासा" इति प्रतिज्ञासूत्रम्, तस्य जगत्कारणत्वादिना लक्षणं च वितथम् । अद्वैतमते तु विष्णोरेव देवतामीमांसायां ब्रह्मत्वे निर्धारितेऽपि तस्यापि पारमार्थिकं प्रत्यगभिन्नमेव स्वरूपम् । तच्च शास्त्रगम्यं भवति वा, न वेति जिज्ञासा सफला । "जन्मादिसूत्रं तु विष्णोरपि ब्रह्मणो जगत्कारणत्वमप्यौपाधिकम्, न तु स्वरूपत इति सूचनार्थम् । तेन च जीवब्रह्माभेद एव वेदान्तार्थ इति फलति, इति तत्रैव शास्त्रस्य प्रामाण्यम् । शास्त्रैकगम्यमेव मुख्यं प्रत्यगात्मस्वरूपम्, विष्णुस्वरूपं च, ययोरभेदस्तत्त्वमस्यादिमहावाक्यतात्पर्यविषयः; तत्रैवोपक्रमोपसंहारादीनां समन्वयादिति

चतुःसूत्री सफला । न च ब्रह्मशब्दस्य दैवमीमांसान्तिमसूत्रद्वयेन विष्णुपरत्वे निर्णीते जीवपरत्वशङ्कोदेति । तत्र जीवोऽपि यद्यहमर्थ एव ब्रह्मशब्दार्थः, तर्हि तस्याहमिति सर्वसाक्षिकस्य प्रत्यक्षसिद्धस्यासन्दिग्धत्वात् कथं पूर्वपक्षस्योत्थितिरपि ॥

जीवात्मनमादायाद्वैत एव पूर्वपक्षसंभवः ।

अद्वैतमते तु "आत्मा च ब्रह्मे"ति जीव-ब्रह्मणोरैक्यमवगतं किं संसारिणम्, अहमर्थं वा जीवमभिप्रेत्य ब्रह्मणैक्यं विवक्ष्यते, उतान्यमज्ञातं मुक्तात्मानमभिप्रेत्य तदैक्यमिति जीवस्वरूपस्यानिर्णीतस्य निर्णयमुखेन ब्रह्ममीमांसा, इति भामतीप्रस्थाने तयोरैक्यासंभवाद् ब्रह्मजिज्ञासा नोपपद्यत इति शङ्का—तत्समाधानाभ्यां तदु-पपादनम् ॥

तत्र जगत्कारणत्वमपि ब्रह्मणोऽज्ञानविषयत्वेनैव, न तु स्वतः इति तदुपधानप्रयुक्तभेदस्य पारमार्थिकत्वे तयोरैक्यासंभवः , तस्याध्यस्तत्वेन मिथ्यात्वे तु जिज्ञासा संभवति। जगत्कारणत्वमपि विष्णोरुपहितस्य, तदुपधाननिबन्धना कथम्? अविद्याश्रयत्वाद् जीवस्य जीवेश्वरैक्यमप्यसम्भवीति शङ्कानिरासार्थं सूत्र्यते। एतदर्थमेवाध्यासभाष्यम्। यत्र संविन्मात्रस्य प्रपञ्चाध्यासे वर्णनीयेऽन्तःकरणाध्यासमात्रं समर्थ्यते । तेन च जीवेश्वरयोः स्वरूपैक्यमेवाभिप्रेयते, इति न तयोर्भिन्नवाक्यता, वैयधिकरण्यं वा । सति चैवं निर्णीतस्यैव निर्णयप्रतिज्ञानात् परमते व्यर्थमिदं प्रथमं सूत्रम् ॥

परमते दैवमीमांसयागतार्थत्वात् पृथक्जिज्ञासा वैयर्थ्यम् ।

वेदान्तमीमांसायामस्यां ब्रह्मपदस्य विष्णुपरत्वे निर्णीते तस्य जगत्कारणत्वेनैव वेदान्तेपूपस्थापनात् किमर्थं वा जन्माद्यधिकरणमपि? अद्वैतमते तु तत्रापि न परमं तात्पर्यमिति सूचनद्वारा तत्पदवाच्यार्थसमर्पण एव कारणवाक्यानां तात्पर्यात् तन्मुखेन निर्विशेषब्रह्मज्ञापनमेव लक्ष्यमिति न तद्वैयर्थ्यम्। अत एव शास्त्रयोनित्वादिसूत्राण्यपि ।

तत्र दैवीमीमांसासंपूर्णा काशकृत्स्नेन वा कृता स्यात्, केवलामाद्यन्तौ भगवता सूत्रकृता व्यासेन, तदाज्ञया मध्यसूत्राणि शेष-पैलाभ्यां वा कृतानि, नात्र निर्भरः। दैवमीमांसानिर्णीते संशयाभावात्—"तस्यैवाऽनुषङ्गेण ब्रह्मजिज्ञासा किंप्रयोजनेत्येव जिज्ञास्यते। तत्र—"अथातो दैवी" इति दैवसम्ब-

न्धिनी जिज्ञासा "स विष्णुराह हि तद्ब्रह्मेत्याचक्षते" इत्युपसंहारात् विष्णुजिज्ञासा ब्रह्मजिज्ञासैव, इति किं वा "कृत्यमथातो ब्रह्मजिज्ञासे"ति प्रतिज्ञान्तरस्य। "अथातोदैवी"ति, प्रक्रान्ता दैवीमीमांसाऽऽद्यन्तसूत्राभ्यां वैयासिकाभ्यां प्रस्तुत्योपसंहृता कथमन्या ब्रह्मजिज्ञासातः स्यात्? स्वयं सूत्रकारसूत्रितस्यैवार्थस्य तेनैव पुनः सूत्रणमत्र वितथम्। अत्र "स विष्णुराह हि" इत्यनेन विष्णोरेव ब्रह्मत्वनिर्णयेन सूत्रकृत् स्वयं स्पष्टं पाशुपताद्यागमाप्रामाण्यमसूत्रयदिति स्थिते किमर्थं वा पाशुपतादिमतनिरसनार्थं शास्त्रयोनित्वादिसूत्रमपि। अधिकमुत्तरत्र विशदीभविष्यति॥

तत्र दैवी मीमांसाऽपि सकलवेदतात्पर्यविषयं विष्णुमेव ब्रह्मेति निश्चिकाय, इति तदीयाद्यन्तसूत्राभ्यामेवावगन्तुं शक्यमिति न तत्सूचनार्थमिदं प्रतिज्ञान्तरम्। न चात्र सूत्रे तत्सूचकं किमपि पदं वर्तते, येनावान्तरतात्पर्यविषयो दैवमीमांसा, अत्र तु सकलवेदार्थसम्बन्धिनी जिज्ञासेत्यवगम्यते।

विषयश्च ब्रह्मैव मुख्यो देवः। स च विष्णुरेवेति निर्णीते, कथमवान्तरजिज्ञासा दैवी जिज्ञासा स्यात्। यथा च विष्णुशब्दः, नारायणशब्दो वा सृष्टिस्थिति-संहारत्रितयकारणतुरीयपरः; निर्दोषवेदैक्यगम्यत्वात्, प्रलयावस्थस्य, सृष्टृत्वस्य, संहर्तृत्वस्य च श्रुतौ प्रतिपादनेन सर्वेषामपि नारायणशब्दव्युत्पत्तिप्रकाराणां तत्रैव स्वारस्यात्, तथाऽन्यत्र व्यक्तम्॥

तथा च ब्रह्मशब्दस्य विष्णौ मुख्यत्वव्यवस्थाऽपि व्याख्याता; तस्य अपि पूर्वोक्तार्थविरोधित्वात्॥

व्यापकत्वं हि व्यापकप्रकृत्यविद्यादिपदवाच्यमायोपहितत्वेनापि, स्वरूपेणापि वा सर्वनियामकस्य सच्चिदानन्दरूपस्य ब्रह्मणोऽप्यवगम्यते एव। इदं तु न केवलं जन्मादिसूत्रेण, किन्तु दैवमीमांसाद्यन्तासूत्रभ्याम्। इदमेवाभिप्रेत्योक्तम्—श्रौतस्य "अथातो ब्रह्मजिज्ञासे"ति सूत्रागतस्य ब्रह्मशब्दस्य प्रकृतविष्णुपरत्वस्यैव संभवात् जात्यादिपरतया पूर्वपक्षस्य नात्रोत्थितिरपि॥

एतेन—सौत्रब्रह्मशब्दश्रवणे जात्यादिप्रतिभास एव न भवतीति तन्निराकरणमकर्तव्यम्, उत जातोऽपि तत्प्रतिभासो लक्षणसूत्रपर्यालोचनया निवर्तत इति वा। नाद्यः; गृहीतसङ्गतेरर्थान्तरप्रतिभासस्यावर्जनीयत्वात्। द्वितीयेऽप्यर्थान्तरप्रतिभासः, तन्निराकरणं च कृतमेव; तथाप्युत्तरवाक्य-

पर्यालोचनां विहाय युक्त्यन्तरान्वेषणं तु "स विष्णुराह ही"ति वाक्यं विहाय किमुत्तरान्वेषणेनेत्यपि वक्तुं शक्यत्वादकिञ्चित्करम् ॥

वस्तुतस्तूत्तरसूत्रान्वेषणेन सिद्धान्तव्यवस्थाऽपि सभाष्या संमतेति—परास्तम् । यदि "स विष्णुराह ही"ति पूर्वसूत्रपर्यालोचनया सिद्धान्तः, तर्हि कथं वा पूर्वपक्षस्योत्थितिः ? पूर्वसूत्रपर्यालोचनं विहायोत्तरसूत्रपर्यालोचनेन पक्ष एव तु न समञ्जसः । अद्वैतमते तु "आत्मा वा अरे द्रष्टव्यः" "तद्विजिज्ञासस्व तद् ब्रह्म" "अयमात्मा ब्रह्म" इत्यादिविषयवाक्येष्वात्म-ब्रह्मशब्दयोः, "अयमात्मा ब्रह्म" "तत्त्वमसि" "अहं ब्रह्मास्मी"त्यादिवाक्यैर्जीव-ब्रह्माभेदस्योपदेशात् कीदृशं वा जीवस्वरूपं ब्रह्मस्वरूपं वाऽभिप्रेत्य तयोरभेदो विवक्ष्यते—किमहमर्थजीवम्, जगत्कारणं ब्रह्म च, उतान्यदेव तयोः स्वरूपम् ? आद्ये नैक्यम् । द्वितीये नाहमर्थत्वम्, जगत्कारणत्वं वा, इति कथं श्रुतिप्रत्यक्षयोर्विरोधपरिहार इतिशङ्कावारणार्थमहमर्थो जीव औपाधिको मिथ्या, एवं जगत्कारणेश्वरोप्यविद्योपाधिकत्वात् मिथ्या । मिथ्यात्वं चोभयत्रौपाधिकमेवेति सूत्रयितुमहमर्थस्याध्यस्तरूपत्वम्, ईश्वरस्यापि तथात्वमेव विवक्षितम् । "स विष्णुराह ही"ति शास्त्रान्तरावगतेश्वरस्वरूप एव वेदान्तानां न पर्यवसानमिति सूत्रयितुं च—जिज्ञासासूत्रम्, जन्मादिसूत्रं च सुष्ठु संगच्छते ॥

इदमेवाभिप्रेत्य भाष्यम्—"तत्पुनर्ब्रह्म प्रसिद्धं वा स्यात्, अप्रसिद्धं वा । यदि प्रसिद्धम्, न जिज्ञासितव्यम्, अथाप्रसिद्धम् न तरामित्यशङ्क्य" सर्वस्यात्मत्वाद् ब्रह्म प्रसिद्धमेव; तथाप्यात्मस्वरूप एव श्रुति-प्रत्यक्षयोर्व्याहतार्थत्वात् श्रुतिप्राबल्यमङ्गीकृत्यैवात्मस्वरूपं निर्णेयम्, तत्तु प्रत्यक्षसिद्धं न जीवात्मस्वरूपमत्र, विवक्ष्यते, तस्य ब्रह्मत्वासंभवात्, ब्रह्मणो जगत्कारणत्वेन श्रुतौ निर्देशात्, तस्य चाहमर्थे जीवेऽसंभवात् नाहमर्थोऽनात्मा-भवितुमर्हति; तस्यैव जगत्कारणत्वस्याप्युत्तरसूत्रेण विवक्षायां तु निरीश्वरवादापत्ति । ईश्वरोऽपि हि स्वीकर्त्तव्यः, इति निरीश्वरवादेन पूर्वपक्षायोगं मनसि निधाय तदुपयोगितया मुख्यं शोधितं त्वंपदार्थमादायैव ब्रह्मजिज्ञासा प्रस्तुतेति सूचनार्थमेवाध्यासभाष्यम् ॥

तर्हि जगत्कारणं किमिति चेत्, तदपि ब्रह्मैव, इति ब्रह्मणो जगत्कारणत्वोपक्षेपेण जीवात्मपरता ब्रह्मशब्दस्य वारिता भवति । तर्हि कथम् "अयमात्मा ब्रह्मे"त्यादि वाक्यमिति शङ्कायां तु जीवस्य किञ्चिज्ज्ञत्वा-

दिकमिव जगत्कारणत्वं तदतिरिक्तस्य ब्रह्मणोऽप्यौपाधिकम् । परमार्थतस्तु जगत्कारणमपि संशोधितं जीवस्वरूपवद् निर्विशेषमेवेत्येव जन्मादिसूत्रतात्पर्यमिति भाष्य एव व्यक्तम् ॥

निर्विशेष ब्रह्मजिज्ञासायमेव सूत्रस्वारस्यम्

तथाच सकलजगत्कारणत्वं भगवतो नारायणस्य, सदाशिवस्य, यस्य कस्य वा सर्वाभिन्नस्य सर्वशब्दवाच्यस्य भवतु, जिज्ञास्यं तु ब्रह्मस्वरूपं निर्विशेषं प्रत्यगभिन्नं शोधिततत्त्वंपदलक्ष्यं सर्वोपाधिविरहितं संविन्मात्रमेवेति भगवत्पादानामाशयः । न हि भगवतो नारायणस्यैवात्र जिज्ञास्यत्वे तस्य "स विष्णुराह हि" इति निर्णीतस्य, अहमर्थस्य जीवस्येव सन्दिग्धत्वम्; पूर्वमेवोपास्यस्य भगवतो नारायणस्य ब्रह्मशब्दवाच्यस्य निर्णीतत्वात् तद्विचारस्य विशिष्टमपरं प्रयोजनं वा, येनासन्दिग्धत्वादप्रयोजनत्वाच्च न ब्रह्मजिज्ञासा कर्तव्या स्यात् । देवमीमांसयैव वोपास्यब्रह्मस्वरूपम् , उपासनाप्राप्यं निर्णीतमेव । वाक्यविशेषमादाय विचारपरम्परा, परसमयनिरासो वा कामं क्रियताम् , तदुभयं तु विनाऽपि चतुस्सूत्रीं निर्वहत्येव, इति व्यर्था चतुस्सूत्री परमत इति तु निष्कर्षः ॥

तत्र सूत्रकारो ब्रह्मपदमात्रं प्रयुञ्जानोऽपि तत्तच्छास्त्रावगतं जीवब्रह्मैक्यमादायैव ब्रह्मशब्दं प्रयुयुजे; सन्दिग्धवेदान्तवाक्यार्थनिर्णयमात्रार्थत्वात् ब्रह्मसूत्राणाम् , इति जीव-ब्रह्मैक्यसंभवासंभवाभ्यामेव पूर्वोत्तरपक्षौ, इति न विषयभेदः । परमते तु जीवे ब्रह्मशब्दार्थमादाय पूर्वपक्षः, विष्णुं ब्रह्मशब्दार्थमादाय सिद्धान्तः, इति पूर्वोत्तरपक्षयोर्विषयभेदः, भिन्नप्रस्थानत्वं च तयोः, नैवमद्वैतमते सति चैवं "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इत्यादिना हि जीवजगत्कारणत्वनिषेधोऽपि संगच्छते ।

स हि यदि निर्विशेषमेवाविद्योपाधिवशादौपाधिकमुपादानम् , स्वरूपं तु पारमार्थिकमीश्वरस्यापि निर्विशेषमेव, तर्हि जीवस्यापि स्वरूपतो निर्विशेषत्वेन ब्रह्मस्वरूपवत् स्वरूपमात्रेणेश्वरेणैक्यात् कथं न जगत्कारणत्वमौपाधिकं न भवितुमर्हतीति शङ्कावारणार्थं हि तत्सूत्रम् । शङ्कानिरासस्तु—औपाधिको भेद उभयोरप्युपाधिभेदात् वर्तते इति शारीरत्वेनोपाधिना, तदुपहितरूपेण वा, जीवेश्वरयोर्भेदात् , ईश्वरस्यैव जगत्कारणता न शारीरस्य वा । अधिकमुत्तरत्र विशदीभविष्यति ॥

इति जिज्ञासाधिकरणम् ।

—:०:—

श्री

अथ जन्माधिकरणम् ॥

॥ जन्माद्यस्य यतः ॥ २ ॥

जन्मादिसूत्रस्य तटस्थलक्षणद्वारनिर्विशेषज्ञापकत्वम् ।

जन्मस्थितिभङ्गं यतः—सर्वज्ञात् कारणात् भवति, तद् ब्रह्मेति सूत्रार्थः । जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमिति संप्रतिपन्नम् । तत्तु स्वरूपान्तर्गतत्वात् न स्वरूपलक्षणम्, किन्तु शाखाचन्द्रस्येवोपलक्षणतया ज्ञापकमात्रम् । तत्र प्रसिद्धमितरव्यावर्तकत्वरूपं लक्षणत्वं पूर्वाधिकरणोपसंहारोक्तरीत्या स्वरूपतो जीवब्रह्मणः संविन्मात्रतयैक्येऽपि जीवत्वेश्वरत्वयोरौपाधिकत्वात् उपाधिभेदेनोपहितयोर्घटाकाश-मठाकाशादिन्यायेन भिन्नत्वात् कार्य-कारणयोरपि कार्यात्मना भेदात् कारणत्वं मायोपहितरूपेणैव, न त्वन्तःकरणोपहितरूपेण, इति जीव-ब्रह्मणोरुपहितरूपेण भेदमादाय मायोपहितचैतन्यमेवोपादानकारणम्, न तु जीवोऽप्यन्तःकरणोपहितमिति व्यवस्थाप्यते । तत्र चान्तःकरणमिवाविद्याऽपि ब्रह्मण्यध्यस्तरूपेणैवोपाधिः । तत्त्वसाक्षात्कारेण चोपाधिद्वयविगमे प्रत्यग्ब्रह्मैक्यं मुख्यः शास्त्रार्थः तत्त्वमस्यादिमहावाक्यमूलो दृढीभवति ॥

मायाविशिष्टब्रह्मकारणत्वमायापेक्षमेव, ब्रह्मणः ।

तत्र 'यदिदं रजतमभात् सा शुक्तिरि'त्यत्र शुक्त्युपादेयत्वेन रजतं यथा शुक्तेरुपलक्षणम्, एवमत्रापि कारणत्वेन ब्रह्मण ईश्वरस्य जीवव्यावृत्ततायां सिद्धायाम्, तदधिष्ठितजगद्द्वारेणोपलक्षितमायाद्वारा जगद् ब्रह्मण उपलक्षणम् । तथाचाज्ञानमावरकमुपादानं चापेक्ष्य कारणत्वव्यपदेशः, तेनाज्ञानकार्योपाधिकजीवव्यावृत्तिः, तादृशजडव्यावृत्तिश्चार्थसिद्धा भवति । इदमेवाभिप्रेत्य वार्तिकम्—

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥"

इति । लोकव्यवहारसिद्ध कार्यश्च-कारणभावो मृद्घटयोरिव परिणामिपरिणामभावो माया-जगतोरेव, न तु जगद्ब्रह्मणोः, ब्रह्मणस्तु मायापरिणामात्मनाभानमात्रेण विनापि परिणामं केवलमज्ञान इव तत्कार्येष्वप्यनुवेः

धेनाधिष्ठानस्यैव सतो विवर्तोपादानता व्यवहारमात्रेण लोकप्रसिद्धः कार्यकारणभावः। संमतं चेदमीश्वरस्वरूपम्, तस्य जगत्कारणत्वं जीवस्वरूपमिव न लोकसिद्धमिति। अन्यथा "जन्माद्यस्य यतः" इतिसूत्रेण "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिमुपजीव्यैव ब्रह्मलक्षणाभिधानं प्रसङ्गे न स्यात्॥

ब्रह्मयोगुणपूर्णत्वायोगकारणत्वे।

यद्यपि जगत्कारणत्वमिव सकलगुणपूर्णताऽपि श्रुत्याऽवगम्यते, इति तदेव लक्षणं वक्तुं शक्यम्; तथापि तस्य लक्षणत्वे दोषकारणत्वमपि ब्रह्मणो निरूपितं स्यात्। सकलगुणा अपि त्रिगुणातीता अप्रसिद्धाः। दोषा सर्वकारणत्वमपि श्रुत्या न साधयितुं शक्यते। न च सत्त्वादिहेयगुणराहित्यपरतया नयनं संभवति; तेषामपि भगवत्कार्यतया तद्वत्त्वस्यावश्यं स्वीकर्तव्यत्वात्॥

अध्यारोपणैव सगुणत्वं ब्रह्मणः अतो निर्गुणत्वानिरोधः।

अन्यथा—

"ये चैव सात्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥"

इति त्रिगुणवत्त्वमपि भगवतो गीयमानमनुपपन्नं स्यात्। अत्र हि यद्यपि भगवान् न गुणेषु वर्तते, तथापि गुणा भगवति वर्तन्त इति स्पष्टमभिधीयते। अत इदमवगम्यते सगुणत्वम्, निर्गुणत्वं च भगवतो यथाश्रुतमध्यारोपापवादविधयैव, इति सर्वेऽपि गुणा भगवत्यपि श्रुतिसिद्धत्वादुपादेया एव। सगुणत्वं च सर्वकारणतयैवेति तु संप्रतिपन्नम्, इति गुणपूर्णत्वम्, जगत्कारणत्वं च भगवतस्तटस्थलक्षणविधयैव लक्षणम्। तत्तु यावन्मायोपधानमेव। निवृत्तायां च तस्यां निर्विशेषचिन्मात्रतैव मुख्यो ब्रह्मशब्दार्थः, इति जीव-ब्रह्मैक्योपपादनार्थमेवात्र जगत्कारणत्वं लक्षणमभिहितम्॥

ब्रह्मणः कारणत्वे प्रकारभेदाः।

तत्र कारणब्रह्मस्वरूपेऽस्ति द्विविधा प्रक्रिया। मायाविशिष्टं ब्रह्म कारणम्। माया, ब्रह्म चोभयं कारणमात्रमिति। तत्र माया परिणामिकारणम्,

विशेष्यांशस्तु विवर्तोपादानकारणमिति प्रथमा प्रक्रिया। द्वितीया तु ब्रह्म-मात्रमुपादानकारणम्, माया तु निमित्तकारणमिति। तृतीयस्यां प्रक्रियायां तु माया सहकारिकारणम्, ब्रह्मैवोपादानकारणमिति। मायाशक्तिमद् ब्रह्मोपादानकारणमिति तु पदार्थतत्त्वनिर्णयकारमतम्। मायैव जगत्कारणम्, यत्र माया परिणामिकारणम्, ब्रह्म त्वधिष्ठानमात्रतया विवर्तोपादानमिति ॥

तत्र कारणत्वं ब्रह्मणो न बाह्यम्, किन्तु स्वरूपान्तर्गतमेव, परन्तु तन्न स्वाभाविकम्, किन्तूपाधिसापेक्षमौपाधिकमेव; परिणाममानावि-द्याविषयत्वस्यैव ब्रह्मोपादानत्वरूपत्वात्, तस्य मायाव्यावृतत्वात्, तत्साधारण्याभावाच्च। स्वरूपस्यापि तस्य यावत्मायोपधानमेव, तदुपहितमात्रस्वरूपलक्षणत्वात् कारणस्य निर्विशेषं स्वयंप्रकाशं सर्वो-पाधिविरहितानावृतसंविन्मात्रस्वरूपलक्षणत्वं सत्य-ज्ञानानन्त्यादीनामिव न संभवतीति मत्वैव तटस्थलक्षणव्यपदेशो जगत्कारणत्वे। सत्यादिलक्षण एव स्वरूपलक्षणव्यपदेशश्च। औपाधिकस्वरूप लक्षणत्वम्, तटस्थलक्षणत्वं चेति त्वनर्थान्तरम् ॥

विप्रपत्तिस्त्वनुपहिते निर्विशेषेऽतीतमायादिसम्बन्धब्रह्मस्वरूप न तु जगत्कारणत्वस्य ब्रह्मस्वरूपलक्षणत्वे ॥

### चित्कारणत्वे विवरणभामतीप्रस्थानव्यवस्था।

तत्र ब्रह्मणो जगत्कारणत्वं जगदात्मना परिणममानमायापेक्षमित्यत्र न विप्रतिपत्तिर्विवरणप्रस्थाने, यत्र ब्रह्मणोऽपि निमित्तकारणस्यैव सत उपादानत्वमपीति स्वीक्रियते। तत्र प्रकृतेरपि मायापरपर्यायाः कारणत्व-स्वीकारात्। तत्र ब्रह्मोपादानतामात्रे विप्रतिपत्तिरिति त्वन्यदेतत् ॥ भामती-प्रस्थाने तु प्रकृतिर्न परिणामिकारणतयोपादानमिति यत्रोरीक्रियते, तत्रोपादानत्वेप्यस्ति विप्रतिपत्तिः ॥

### मायाकारणत्वे द्वैतमताद्विशेषः।

तत्र विवरणमताद्विशेषो द्वैतसिद्धान्तस्य मायांऽशे तस्या अनादेर्विनाश्यत्व-मात्रे। तत्र परिणामिकारणस्य भङ्गुरस्वभावस्यार्हतमतपरीक्षायां द्वैत सिद्धान्तेऽपि स्वीकाराद् मायाभङ्गुरत्वं दुर्निवारम्। सति चैवं यदा तन्नाशः तदा ब्रह्म कथं जगतः कारणमिति विवेक्तव्यम्। यावन्माया-सत्त्वं जगत्कारणत्वं ब्रह्मणः स्वरूपानन्तर्गतमित्यत्र न विसंवादः। तत्र

मायाब्रह्मसम्बन्धस्यानादेः संप्रतिपन्नत्वेऽपि मायायाः, सर्वेषां तत्कार्याणां च सार्वदिकसम्बन्धो न भवति ; नैमित्तिक-प्राकृतप्रलययोः—सर्वकार्य-सम्बन्धः सर्वकारणत्वेऽपि न भवति। आत्यन्तिकप्रलये तु न माया-सम्बन्धोऽपि, इति व्यावहारिकं सत्त्वमेव सर्वेषां ब्रह्मव्यतिरिक्तानामिति स्वीकर्तव्यमित्यद्वैतराद्धान्तः। अतो नात्र तटस्थलक्षणाभिधानं सूत्रा-शयानबोधनिबन्धनम् ॥

भागवतस्याप्यद्वैतएतस्त्रारस्यम्।

तदुक्तम्—

यत्तत्परं ज्योतिरनन्तमद्वय
स्वसंस्थया नित्य निरस्तकल्मषम्।
ब्रह्माख्यमस्योद्भवानादिहेतुभिः
स्वलक्षणैर्लक्षितभावनिर्वृतिम् ॥

इति। इदं हि—

"ब्राह्मे मुहूर्ते उत्थाय वार्युपस्पृश्य माधवः।
दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥"

इति भगवतः श्रीकृष्णस्य ध्यानं प्रकृत्य प्रवृत्तम्। अत्रानन्याद्वय-स्वयंज्योतिःस्वभावनिर्विशेषात्मनैव भगवताऽपि यदि ध्यातं ब्रह्म, तर्हि सविशेषातीतं निर्विशेषमेव भगवतः पारमार्थिकं स्वरूपमित्यवगम्यते। अत्रोद्भावनादिहेतुभिः, स्वालक्षणैरित्यत्रादिपदप्रयोगात् कारणत्वादिक-मुपहितस्वरूपान्तर्गतं वस्तुगत्या तटस्थलक्षणम्, स्वयंज्योतिष्ट्वाद्वितीय-त्वादि पारमार्थिकं स्वरूपलक्षणं च भगवता ध्यातमिति प्रतीयते। तेन च—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इत्युक्तरीत्या सविशेषस्वरूपध्यानमुखेन निर्विशेषज्ञानधारावाप्तिर्भगवतः श्रीकृष्णस्य ततः सूचयति ॥

न चेदं परप्रतीत्यनुवादः, इति तदेकवाक्यतया सूत्राशयोऽपि निर्वि-शेषब्रह्मजिज्ञासामुख्यतायां प्रमाणम् ; अन्यथा भगवतो वासुदेवस्यापि ध्येयमपरं किं वा तत्त्वं तत्रानूद्येत ॥

लक्षणं हि तटस्थलक्षणं सजातीय-विजातीयव्यावर्तकम्, स्वरूपलक्षणं तु संकीर्णतयाऽवगतस्य लक्ष्यस्यासंकीर्णरूपेण ज्ञापनम्। तत्रोपहितं तटस्थलक्षणलक्षितमेवानुपहितस्वरूपेण बोध्यते। स्वरूपस्य हि लक्षणत्वोपचारमात्रम्। अधिकमद्वैतसिद्धौ॥

तटस्थस्वरूपलक्षणद्वयकृत्यम्।

तत्र तटस्थलक्षणं जीवब्रह्मभेदं सिद्धवत्कृत्य; जीवस्याहमर्थस्य, शुद्धप्रत्यगात्मनो वाऽद्वैतमते कारणैक्यस्य द्वैतमत इवानङ्गीकारस्य पूर्वं विशदीकरणात्, तटस्थलक्षणमुखेन स्वरूपलक्षणलक्षितेन ब्रह्मणैव जीवस्यैक्यस्याद्वैतमतसिद्धान्तत्वात्, इति न जीवैक्यवादिनां कारणवाक्येषु जीवनिराकरणमयुक्तम्। तेन च न केवलं जीवानाम्, किन्तु जडानामपि व्यावृत्तिरर्थसिद्धा। न ह्यद्वैतसिद्धान्तेऽपि मायोपहितमीश्वरचैतन्यमिवान्तःकरणोपहितो जीवोऽपि कारणम्, जडा वा ब्रह्मवत्, इति न स्वेतरसजातीय-विजातीय-व्यावृत्तिविरोधः, इति नेदं लक्षणं जीवेऽतिव्याप्तम्। अत एव भाष्यम्—"न च यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वाऽन्यतः प्रधानादचेतनात् संसारिणो वोत्पत्त्यादि संभावयितुं शक्यम्"—इति॥

जीवेश्वरैक्यं नाद्वैतवादे, किन्तु संविन्मात्राभेदवाद एव।

इदमनेन ज्ञायते न जीवस्योपहितस्यापि मायोपहितब्रह्मण इवेश्वरपदानभिधेयस्य कारणत्वम्, न वा तेनैक्यम्, किन्त्वनुपहितरूपेण, इति ब्रह्मापि न कारणमिति। जीव-ब्रह्माभेदो ह्युभयोरप्यनुपहितावस्थामभिप्रेत्यैव। अत एव "तत्त्वमसी"त्यादौ भागत्यागलक्षणयाऽद्वैतनिर्वाहः, इति कारणस्यैव सर्वज्ञत्वादिगुणैः संसर्गः, नाकारणस्येति सूचनाद् निर्विशेषं न कारणम्, इति तस्यापि व्यावृत्तिरपि न दुष्टा। न चानेन निर्विशेषस्य निषेधः संभावयितुं शक्यते। यद्यनेन न निर्विशेषं तत्त्वं कारणवाक्याप्रतिपाद्यत्वादित्यापाद्यते, तर्हीष्टापत्तिः। कारणवाक्यद्वारेण निर्विशेषस्वरूपमात्रबोधकं हि—"सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"ति वाक्यम्। यत् परमं व्योमैव "यतो वा" इत्यादिवाक्यानां मुख्यं लक्ष्यम्, यदेव तु आनन्दमयस्यापि प्रतिष्ठात्वेन "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्येन सर्वप्रतिष्ठात्वेन वा पूर्वस्यां वल्ल्यामुपसंहृतम्, अत्रापि प्रतिष्ठतेतिपदेन प्रत्यभिज्ञाप्य पुनरप्युपसंह्रियते, इति

"स्वलक्षणैरुद्भवनादिहेतुभिरि"त्यस्य तटस्थ-स्वरूपोभयलक्षणपरत्वमेवोद्भवनादिहेतुभिरित्यादिपदप्रयोगात् स्वलक्षणपदप्रयोगाच्चावगम्यते। तत्र स्वलक्षणपदं स्वस्य लक्षणम्, स्वमेव लक्षणमिति द्वेधाऽर्थं गमयति। तत्राद्यं तटस्थलक्षणाभिप्रायम्, द्वितीयं स्वरूपलक्षणाभिप्रायम्। आद्यं स्वरूपान्तर्गतम्, द्वितीयं तु स्वरूपमेवेति निष्कर्षः। उभयथा तु—जन्माद्यस्य' इति नानुपपन्नम्॥

यतो वेतिवाक्यस्याभिन्ननिमित्तोपादानपरत्वम्।

तत्र यत इति पञ्चमी ब्रह्मण उपादानत्वं विवर्तमानतयैव विवक्षति। न ह्यन्यथा पञ्चमीनिर्देशस्य निमित्तोपादानहेतुसाधारणस्य निर्देश उपपद्यते, श्रुतौ सूत्रे च; अन्यथा "जन्माद्यस्य येने"त्येव सूत्रणं स्यात्, इति निमित्तकारणतामात्रे नोक्तसूत्रस्य तात्पर्यम्। विवर्तोपादानत्वं च जगतस्तत्राध्यस्तत्वं विना नोपपद्यते, इति निर्विशेषोपपादकतायामेव स्वरसम्। तेन च ब्रह्म सगुणमपि, निर्गुणमपि। सगुणत्वमविद्ययाऽवृतत्वमपेक्ष्य विशेषाधिष्ठानतया, निर्विशेषत्वमानन्दादिनारूपेणाज्ञानेऽनाद्यविद्यानिवृत्त्युपलक्षितनिर्विशेषसन्मात्रतयेति सर्वासां श्रुतीनां स्वरससमन्वयः॥

अक्षरविद्याया अप्यद्वैत एव स्वारस्यम्।

"अक्षरात् परतः परः" इति परमात्मनोऽक्षरस्य त्वद्रेश्यत्वादिकं मायोपाधितो विनिर्मुक्तस्यैव, भूतयोनित्वं तु तदुपहितरूपेणेति ज्ञापयति। अतो ज्ञायते विशेषणविधया तटस्थलक्षणम्, उपलक्षणविधया तु स्वरूपलक्षणमिति। काकस्य गृहोपलक्षणत्वं हि काकमपेक्ष्यैव, न तु तद्वर्तमानताम्, इति जगद्वर्तमानत्वमनपेक्ष्य सप्रपञ्चत्वम्, सगुणत्वं च। तन्निवृत्तिमपेक्ष्य तु निर्विशेषत्वम्॥

तत्र सगुणत्वावस्थायामेव कारणत्वात् तस्य च मायोपहितमात्रानुबन्धित्वाद् जीवव्यावृत्तिरबाधा। अनुपहितावस्थकारणत्वोपलक्षितानावृतसंविन्मात्रता विगलितोपाधित्वाद् जीवब्रह्मैक्यमेवोपपादयति, इति न तदा जीवः, न वेश्वरोऽज्ञानोपहितावस्थः, न तदा व्यावर्तनीयम्, व्यावर्तकं वा किमपि। सर्वथा तु प्रपञ्चविवर्ततामभिप्रेत्यैव ब्रह्मणो जन्मादिलक्षणं जन्मादिसूत्रार्थः। समर्थयिष्यते च विवर्तवादस्तदाक्षेपनिरासपूर्वकं प्रकृत्यधिकरणादावपि। तावताऽपि हि "जन्माद्यस्य यतः" इति सूत्रं

मुख्यार्थमेव, इति नात्रामुख्यार्थताशंकाया अवसरलेशोऽपि । न चात्र मायागतं लक्षणं ब्रह्मणो लक्षणम्; मायायाः परिणामिकारणत्वात्, ब्रह्मणश्च विवर्तोपादानत्वात्, तयोर्भेदाच्च ॥

जन्मादिसूत्रे न लक्षणा ।

न चात्र सूत्रे लक्षणा जीव-ब्रह्मैक्यनिर्वाहाय; कारणस्यैव सतो ब्रह्मणो जीवेनोपहितेन, अनुपहितेन शुद्धेन वैक्यस्य शास्त्रार्थत्वात् । न हि जन्मादिसूत्रं जीव-ब्रह्मणोरभेदमभिप्रेत्य, येन तत्र लक्षणा स्यात् । न च तेन कारणत्वमविवक्षितम्, किन्तु विवर्तमानत्वरूपमेव तद् ब्रह्मण आवृतस्य वर्तत इत्येवोक्तं सूत्रं साधयति । तत्तु निर्विशेषताया उपपादकमिति त्वन्यदेतत् । जीव-ब्रह्मैक्यं तु "तत्त्वमसी"तिवाक्यस्यैवार्थः, न तु कारणवाक्यस्य । तच्च "सदेवेदमि"ति सामानाधिकरण्यम्, अद्वितीयत्वं च कारणस्य प्रकृत्य "तत्त्वमसी"ति सदृष्टान्तमद्वैतमेव गमयतीति व्यक्तमुपोद्घात एव, व्यक्तीकरिष्यते च ॥

"तत्त्वमसी"त्यत्र न गौणं सामानाधिकरण्यं सिंहो देवदत्त इत्यादिवत्, न वा तत्रातत्त्वमसीति वाक्यपरिवृत्तिर्द्वैतभाष्याऽनुव्याख्यानानुपष्टब्धाऽपि तद्गुणसारत्वसूत्रदृष्ट्या । अत एव "तत्त्वमसी"त्यत्र गौणं सामानाधिकरण्यं तद्भाष्यादौ । तत्त्वमसिमहावाक्यस्याखण्डार्थत्व एव स्वारस्यमिति तु व्यक्तं तत्र तत्र, इति नात्र प्रसङ्गे तद्विस्तरार्थं प्रयत्यते ॥

स्वप्रकाशस्य सद्वितीयत्वानित्यत्वोभयव्यवस्था ।

संविन्मात्रमावृतावस्थं कारणम्, अनावृतावस्थमद्वितीयम्, इति तदावृतावस्थामपेक्ष्य सगुणवाक्यानि, अनावृताखण्डात्मतामपेक्ष्य तत्त्वमस्यादिवाक्यानि जीवब्रह्मैक्यपराणीति हि विषयविवेकः । तत्र संविन्मात्रस्य स्वप्रकाशस्याप्यविद्ययाऽऽवरणम्, तदाश्रयत्वम्, तस्याखण्डाकारेण ज्ञानेन निवृत्तिरित्यादिकं तत्र तत्र विशदमेव, इति नैक्ये, प्रकाशमात्रे वा भेदभ्रमः, किन्त्वनाद्यविद्यायोगेन कल्पितानादिसदादिभेदस्य ब्रह्मण आनन्दात्मनाऽज्ञानदशायाम् । अखण्डं हि स्वरूपं ब्रह्मणस्तत्त्वम्, न त्वनाद्यविद्यासम्बन्धनिबन्धनानादि खण्डं रूपम्, इति यावदखण्डाकारवृत्ति तत्त्वाप्रतिपत्तिनिबन्धनो भ्रमो न निर्वोढुं न पार्यते । यावदविद्यासम्बन्धं स्वप्रकाशचैतन्यरूपमप्यावृतमेव । अत एव हि भ्रमोऽपि ॥

अज्ञानेनावरणादानन्दांशस्य बन्धकारणत्वम् ।

तत्रावरकमप्यज्ञानं नियमेनानन्दांशमावृणोति, चिदंशं सदंशं च तदा तदा, यदा तदिव तदध्यस्त उपाधिरपि अस्तीति भातीति वा प्रकाशते, आनन्दांशस्तु तदा तदा तत्तदाकारवृत्तौ बिन्दुमात्रेण प्रतिफलित एव भासते, येनोपाधिषु प्रेमाविर्भावः । सोऽप्युपाधीनां सत्त्वांशविकासावस्थायामेव; अन्यथा त्वप्रकाशः । तमोगुणाधिक्ये तूपाधिधर्मस्य दुःखस्यैवोपाधेरिव प्रकाशः, इति नाविद्यानिबन्धनत्वेऽप्यावरणस्य सर्वदाऽनवभासप्रसङ्गः ॥

यथा चाखण्डार्थत्वेऽपि तत्त्वमसिवाक्ये न सर्वपदवैयर्थ्यादिकम्, तथाऽन्यत्र व्यक्तम् ॥

निर्विशेषस्य वेदप्रतिपाद्यत्वाविरोधः ।

ब्रह्मस्वरूपं हि तत् सगुणं निर्विशेषं च श्रुतिरेव बोधयति । न ह्यपौरुषेयो वेदः शब्दत्वाद् मूको नाम; अन्यथा सगुणमपि ब्रह्म कथं श्रुतिबोध्यं स्यात् ? निर्विशेषस्य वाच्यत्वं तु सविशेषगतविशेषाणां दोषाणां संशोधनेन, "नेति नेति" इत्यादिवाक्यविशेषैः निर्दोषशुद्धात्मबोधनेन वा न विरुद्धम्; अन्यथा ब्रह्मणो निर्दोषत्वप्रतिपादकानां वाक्यानामपि कथं न मूकता ? इति निर्विशेषं ब्रह्मेति न स्वक्रियाविरुद्धम् । प्रतिपाद्यत्वं हि ब्रह्मण आवरकाविद्यानिवर्तकवृत्त्युत्पादनमात्रेण । न च वृत्तिः प्रमाणजन्या प्रमाणानिर्वाह्या, आवरणनिरासो वा न वृत्तिनिर्वाह्यः, इत्यर्थसिद्धं निर्विशेषत्वं स्वनिर्वाहार्थं स्वक्रियामपेक्षते; स्वप्रकाशनिर्विशेषस्वरूपस्य, विशेषनिरासमात्र एव प्रमाणानां व्यापारात् । तदुक्तम्—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति । निर्विशेषपदेन सर्वेषां विशेषाणां निरासात् प्रतिपाद्यत्वमपि निरस्यत एव । अत एव ब्रह्मणो वृत्तिव्याप्यत्वमात्रम्, न फलव्याप्यत्वमिति सिद्धान्तः । आवरणनिरासार्थवृत्तिजनकत्वमात्रेण प्रकाशकत्वाविशेषात् कथं नाम मूकत्वं वेदान्तानां निर्विशेषब्रह्मप्रतिपादने ? वाग्मित्वं तु प्रकाशकत्वमात्रेण, वेदान्तवाक्यानामपि समानम् ॥

अभेदेऽपि भेदव्यपदेशोपपत्तिरद्वैतमतेऽपि ।

तत्र वस्तुगत्या निर्विशेषेऽपि सविशेषत्वमविद्यावशात्, न तु स्वतः । तत्र सच्चिदानन्दादिरूपाणामभेदेऽप्यभिन्नेऽपि भेदव्यवहारस्य द्वैतमते

"अनन्योऽप्यन्यशब्देने'तिवद् न विरुद्ध्यते। इयान् विशेषः—यद् द्वैतमतेऽप्रामाणिकविशेषाधीनाऽभिन्ने भेदव्यवस्था, अद्वैतसिद्धान्ते तु प्रत्यक्षानुमानार्थापत्त्यागमसिद्धाविद्याधीनाऽभिन्ने ब्रह्मणि सदादिभेदव्यवस्था यावदखण्डाकारसाक्षात्कारम्। सर्वथा तु यावदविद्योपधानमेव जगत्कारणत्वं ब्रह्मणः, इति जगत्कारणत्वं ब्रह्मणो न स्वभावः, येन तदपि सच्चिदादिकमिव ब्रह्मणः स्वरूपं स्यात्, इति जगज्जन्मादिकारणत्वेन ब्रह्मलक्षणमिदं न परमार्थतो निर्विशेषतायाः प्रतिबन्धि॥

जन्मादित्रयलक्षणोपपत्तिः।

एतेन—

"अन्तः समुद्रगं विश्वप्रसूतेः कारणं तु यत्।
सूक्तोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते॥
सृष्टिः, स्थितिश्च, संहारः, नियतिः, ज्ञानमावृतिः।
बन्ध-मोक्षावपि ह्यासु श्रुतिषूक्ता हरेः सदा॥"

इति—व्याख्यातम्। अत्र यद्यपि जन्माष्टकं ब्रह्मलक्षणमिति बहुतरतत्तच्छ्रुतिवाक्यानामपि गुणोपसंहारन्यायेन जन्मादिसूत्रार्थ इति प्रतिपाद्यते; तथापि मुख्यः सूत्रार्थः जन्म-स्थिति-भङ्गमेव, न तु जन्माद्यष्टकं ब्रह्मलक्षणमिति—

जन्मादित्रयस्य सर्वलक्षणोपलक्षणत्वं तत्र सर्वेषामन्तर्भावात्।

"जन्माद्यस्य यतः" इति प्रत्यभिज्ञातं "यतो वा इमानि भूतानि जायन्ते" इति विषयवाक्यमभिप्रेत्यैव, इदं चोपलक्षणं सर्वेषां सृष्टिवाक्यानां तत्तच्छ्रुति-स्मृत्यादिगतानां गुणोपसंहारन्यायेन, एवं सत्यादिस्वरूपलक्षणवाक्यानामप्युपलक्षणम्। इदमेवाभिप्रेत्य "अन्यान्यप्येवंजातीयकानि वाक्यानि नित्य-शुद्ध-बुद्ध-मुक्त-सर्वज्ञ-स्वरूपकारणविषयाण्युदाहर्तव्यानि' इति भाष्यं सर्वेष्वपि सिद्धान्तेषु, इति पुरुषसूक्तादिविषयवाक्यताऽपि न विप्रतिपन्ना; सर्वेषामपि कारणवाक्यानां गुणोपसंहारन्यायेन निर्विशेषतात्पर्यकत्वमात्रे तात्पर्यमिति तु विशेषः। तेन च—

सृष्टिः, स्थितिश्च, संहारो नियतिर्ज्ञानमावृतिः।
बन्ध-मोक्षावपि ह्यासु श्रुतिषूक्ताः हरेः सदा॥"

इति लक्षणाष्टकविवक्षाऽपि न वार्यते । तत्र सृष्टौ नियतेः, स्थितौ ज्ञानावरण-बन्धानम् संहारे मोक्षस्य, चान्तर्भावाज्जन्मादित्रितयमात्रविवक्षा, यथा षण्णां भावविकाराणां त्रिष्वेवान्तर्भावादिति भाष्यतोऽवसीयते, इति पृथक्त्वमाश्रित्य लक्षणाष्टकविवक्षापि न सूत्राशयविरुद्धाऽद्वैतसिद्धान्तेऽपि ॥

जन्मादीनां मिलितानां प्रत्येकं वा लक्षणत्वे न निर्भरः ।

तच्च जन्मादिकारणत्वं प्रत्येकं वा मिलितं वेत्यत्र तु न निर्भरः, इति क्वचनैकैकलक्षणस्यैव श्रवणेऽपि ब्रह्मण एव ग्रहणम्, यथा अत्ताधिकरणे संहर्तृत्वमात्रेण ब्रह्मलिङ्गेन ब्रह्मग्रहणम् । तत्र ब्रह्मण उपादानत्वमात्रे जन्मकारणत्वं भङ्गकारणत्वञ्च प्रत्येकलक्षणम्, निमित्तकारणतामात्रे तु स्थितिकारणत्वमपि प्रत्येकलक्षणम्, उभयविवक्षायां तु जन्म-स्थिती, जन्मभङ्गौ द्वौ प्रत्येकं लक्षणमित्यपि मन्तव्यम् । स्थितिरपि तदात्मनाऽनुवेधमात्रेण, इति तस्या अपि प्रत्येकलक्षणत्वमुपादानत्वेऽपि, इति मिलितामिलितलक्षणत्वपक्षविवेकः ॥

जीवपूर्वपक्षोपपत्तिरद्वैतवादे ।

अत्र पूर्वपक्षे जीवः; सिद्धान्ते ब्रह्म; जीवस्यापि कारणत्वात्, ईश्वरस्यापि तथात्वात् । तत्र यद्यप्युपहितो जीवः पूर्वपक्षे, अनुपहितस्तु सिद्धान्ते विवक्षितो निर्विशेष एव; तथापि निर्विशेषस्य तस्य तत्त्वमस्यादिवाक्यैरैक्याभिधानाद् ईश्वरवत् तस्यापि कारणत्वं भवत्विति शङ्कावारणार्थमिदमधिकरणम् ॥

इदं चाज्ञानस्य जीवाश्रयत्वपक्षमादाय । ब्रह्माश्रयत्वपक्षेऽपि तत्पदार्थस्य स्वरूपतो निर्विशेषेणैक्याद् जगत्कारणत्वस्य तटस्थलक्षणत्वमभिप्रेत्य । तेन सविशेषद्वारा निर्विशेषलक्षणं न विरुध्यते, इत्यभिप्रेत्यैव जगत्कारणत्वस्य लक्षणत्वम् । इदं सर्वप्रस्थानसाधारणम् ॥

तत्राज्ञातस्य जीवत्वं निर्विशेषवाक्येऽपि सामानाधिकरण्यनिर्वाहमाश्रित्य, ब्रह्मवदीश्वरस्यापि जीवत्वोपहितचैतन्यस्य तदुपधानमात्रनिबन्धनम्, न तु जीवत्वविशिष्टाश्रयत्वेनेति ब्रह्मसिद्ध्यादौ व्यक्तम् । अतो जीवकारणताया न संभवः । ब्रह्माश्रयत्वपक्षे तु जीवब्रह्मैक्यं न जगत्कारणत्वविशिष्टं ब्रह्माश्रित्य, किन्तु पूर्वोक्तविधया तटस्थलक्षणलक्षितनिर्विशेषचैतन्याभिप्रायेण, इत्युभयथापि जीवकारणत्वं न सम्भवतीति सिद्धान्ताशयः । इदमेवाभिप्रेत्य कल्पतरुर्वदति—

"जीवाज्ञानाद् जगत् सर्वं सकारणमिति ब्रुवन् ।
क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम् ।।"

इति ।।

इदमुपलक्षणं ब्रह्माश्रयत्वपक्षस्यापि । तथाच ब्रह्मणोऽपि निर्विशेषत्वं जीववत् प्रतिपादयितुं त्वंपदार्थस्य निर्विशेषाधिष्ठितस्य न कारणत्वम्, किन्तु तत्पदार्थस्यैव निर्विशेषाधिष्ठितस्येति निरूपणात् तत्त्वमसिमहावाक्यार्थत्वस्योभयोरपि निर्विशेषत्वबोधनेनेदमधिकरणं सफलम् ।।

स्वरूपलक्षणेऽपि तात्पर्यं जन्मादिसूत्रस्य ।

"किंलक्षणं पुनस्तद् ब्रह्मे"तिभाष्यस्य किंस्वरूपं तद् ब्रह्मेत्येवार्थः, न तु तत्र व्यावर्तकधर्मबोधनार्थत्वमात्रं लक्षणपदस्य. इति स्वरूपलक्षणस्यापि परम्परयोपलक्षणं जन्मादिसूत्रम् । व्यक्तं चैतद् भाष्ये । तत्र स्वरूपमसंकीर्णतया, अनुपहितरूपेण वा केवलं ज्ञाप्यते । तच्च वाक्येन निर्धर्मकस्यापि बोधसंभवादबाधम् ।।

तेन च स्वरूपेणैव धर्मवत्त्वाद् निर्धर्मकत्वविरोध इति शङ्का नोत्तिष्ठति । व्यावर्तकधर्म-स्वरूपान्यतरस्य लक्षणपदार्थत्वेऽपि कृत्वाचिन्तया तत्र तत्र व्यावर्तकधर्माभिप्रायेण, व्यावर्तकाभिप्रायेण वा लक्षणपदप्रयोगः, इति तत्पदार्थब्रह्मनिर्विशेषस्वरूपद्वारा जीवब्रह्मैक्यं न चिद्रूपत्वेन, इति त्वम्पदार्थमात्रलक्षणामङ्गीकृत्य तत्त्वमस्यादिवाक्येऽप्यभेदप्रतिपादनपरमिति शङ्काया नावसरः, इत्युभयोरपि प्रकरणवशात् संविन्मात्रेणैक्यमभिप्रेत्यैव पदत्रयलक्षणयैवैक्यबोध इति सर्वमनवद्यम् ।।

तत्त्वमसीत्यत्राभेदविवक्षायामसिपदोपपत्तिः ।

सामानाधिकरण्यस्थलेऽस्ति-भवत्योरप्रयोगेऽप्यध्याहारो वाक्यस्य क्रियापदघटितत्वनियममादाय, इत्यसिपदं समानाधिकरणपदद्वयावगतैक्यानुवादमात्रम् । अत एवाभिहितान्वयवादः केषाञ्चनाद्वैतिनाम् । वक्तव्यं चात्र सर्वं पूर्वमेवोक्तम् ।।

द्वैतसिद्धान्ते तु देवतामीमांसासिद्धस्यैव ब्रह्ममीमांसाप्रथमसूत्रेण, तस्यैव द्वितीयसूत्रेणेत्येकस्यैव चर्वितचर्वणं निष्प्रयोजनम् । तत्र यदि सृष्ट्यादयो विश्वस्य बहुषु श्रुतिषु भाष्योदाहृतासु हरेरेव, इति देवतामीमांसायामपि तासामनुसारेणैव विष्णुपरता निर्णीता, तर्हि कथं वा ब्रह्म-

पदस्य श्रुतौ प्रयुक्तस्य जीवपरत्वशङ्का ब्रह्ममीमांसाप्रथमसूत्रे, द्वितीयसूत्रे च ? किं वा प्रयोजनमाम्रेडनस्य ?

द्वैतमते जीवपूर्वपक्षताऽयोगोपसंहारः ।

यदि निर्विशेषपरता त्वम्पदार्थशोधनमुखेन प्रवृत्तप्रकरणगतब्रह्मशब्दस्य, तत्पदार्थशोधनमुखेन प्रवृत्तस्य तत्पदस्य च. तर्हि अद्वैतसिद्धान्तदृष्ट्या पूर्वपक्षः, तयैव दृष्ट्या सिद्धान्त इत्यद्वैतवाद एव युज्यते । द्वैतिनां तु जिज्ञासासूत्रघटकब्रह्मपदेन सविशेषस्य ब्रह्मणो जिज्ञास्यत्वे निर्णीते, तत्रैवाद्वैतसिद्धान्ते निरस्ते च कथमद्वैतसिद्धान्तानुसारेण पूर्वपक्षस्योत्थितिः ? अतःशब्देन प्रसक्तस्य दोषनिरसनेन सविशेषब्रह्मजिज्ञासाया निर्णीतत्वात्, अहमर्थकिंचिज्ज्ञजीवपूर्वपक्षता तु नावसरत्यपि ॥

जन्मादिसूत्रस्य रुद्रादिकारणत्वनिरासे तात्पर्यायोगः ।

एतेन—हिरण्यगर्भ-रुद्रादिव्यावर्तनार्थं जन्मादिसूत्रमिति—प्रत्युक्तम् । तत्र हिरण्यगर्भस्य, रुद्रस्य च यथाक्रमं सृष्टिकारणत्वम्, संहारकारणत्वं च प्रसिद्धं सर्वेषु पुराणेषु, विष्णोस्तु पालकत्वमात्रम् ? ब्रह्म-विष्णु-शिवात्मकस्य तुरीयस्यैव तु त्रितयकारणत्वं विष्णुपुराणादितोऽवगम्यते, इति विष्णोः सर्वकारणत्वाभावेन, त्रिषु विष्णुप्राधान्ये कारणाभावेन च तत्र विष्णोरेकस्यैवांशित्वम्, अपरयोरंशत्वम्, उत ब्रह्मणः, रुद्रस्य वांऽशित्वम्, अपरयोर्यथायोगमंशत्वमित्यत्र विनिगमकाभावेन. अधिकतरश्रुतिषु रुद्रस्यैवांशित्वेन विष्ण्वादिकारणताया आम्नानेन तस्यैव प्राधान्यावश्यकत्वेनांशांशिनोरैक्याभिप्रायत्वे मायोपहितस्य तुरीयस्यैव सर्वशब्दवाच्यत्वे च विष्णोरेव सृष्ट्यादिकारणत्वे न किमपि संप्रतिपन्नं प्रमाणमस्ति ॥

मायोपहितस्य तुरीयस्य सविशेषब्रह्मण एव तदुपाधेर्मायायाः सत्त्वादिगुणाधिक्यापेक्षया विष्ण्वादिपदवाच्यत्वं तत्तत्कार्यवशेन, एवं ब्रह्मरुद्रयोरपि तच्छब्दवाच्यत्वम्, मूलतत्त्वरूपेण सर्वस्य ब्रह्मशब्दबोध्यत्वम्, इति न केवलं जीवत्वोपलक्षितसंविन्मात्ररूपेण जीवानाम्, किन्तु विष्णुत्वाद्युपलक्षितसंविन्मात्रेण मायोपाधिककारणत्वोपलक्षितसंविन्मात्रेण वोक्तसर्वाभेद एव श्रुति-स्मृति-पुराणेतिहासादिचतुर्दशविद्यास्थानपर्यवसानमिति निष्कर्षः ॥

रुचिभेदेन सगुणस्य ब्रह्म-रुद्रादेरप्युपास्यत्वम्, इति न कस्याप्युत्कर्षः ।

अत एवोपास्यत्वं रुचिभेदेन यस्याः कस्या अपि, सर्वासां वा देव-

तानाम्, ज्ञेयत्वं तु तत्तदुपासनापाटवाधीनाविर्भावः सर्वाभिन्नसंविन्मात्रस्यैवेति न लेशतोऽपि व्याघातः ॥

तत्र वैषम्यदृष्टिस्तूपाधिभेदमात्रप्रयुक्ता न किंचित्करी। पुराणभेदेन, उपनिषद्विशेषेण च शिव-विष्णवाद्युपासनोत्कर्षापकर्षादिश्रवणं तु 'न हि निन्दा'न्यायेनैव। महाभारतादौ, अन्यत्र च शिव-विष्णवाद्यभेदश्रवणमप्यत एवोपपद्यते। तद्धि तत्तदुपाध्युपलक्षितस्वरूपमादाय, न तद्विशिष्टस्वरूपमादाय, इत्येकव्यासकर्तृकविविधपुराणानां परस्परविरुद्धार्थतया प्रतीयमानानामप्यत एवैककण्ठ्यम् ॥

पुराणानामैककण्ठ्यम्।

तत्र कुत्रचन विष्णो रुद्राद्युत्पत्तिराम्नायते, क्वचिद्रुद्राद्विष्णोरिति विरोधस्तु "व्याख्यानतो विशेषप्रतिपत्तिरि"ति न्यायेन व्याख्यानेन परिहरणीयः। तच्च व्याख्यानं तुरीयं मायोपहितरूपमादाय ब्रह्म-रुद्र-विष्णूनामपि तत उपाधिमात्रेण, कार्यभेदमात्रेण वाऽऽविर्भावं स्वीकृत्य सम्भवति। विष्णूत्कर्षे, शिवोत्कर्षे, तदपेक्षयाऽद्वैततत्त्वस्यैव पारमार्थिकत्वे च भूयस्यः श्रुतयः प्रसिद्धा नृसिंहतापिन्युपनिषदादयः; निर्विशेषमुख्यपरमात्मस्वरूपस्योपहितस्वरूपांशत्वाद्वा, तत एवाविर्भावं मत्वा वा विष्णवादीनां जन्मश्रुतिर्नेया ॥

सर्वेषां दर्शनानामधिकारिभेदेन प्रामाण्यव्यवस्था।

तत्र विष्णुजन्मनिषेधपराणि, तस्यैव कारणत्वनिरूपणपराणि च वाक्यानि, रुद्रादिकारणतापराणीव चालिनीन्यायेन तटस्थलक्षणविधया निर्विशेषपर्यवसायीनीति सर्वेषां दर्शनानामधिकारिभेदेन, रुचिभेदेन वा प्रवृत्तानामद्वैततत्त्वपरमार्थतायामेव स्वारस्यम्; अन्यथा पाशुपतपाञ्चरात्राद्येकैकमात्रप्रामाण्ये विनिगमनाविरहः ॥

पाञ्चरात्रस्यापि वेदाविरुद्धांश एव प्रामाण्यम्।

पाञ्चरात्रस्य वेदारण्यकशब्देन ग्रहणेन तस्यैव वैदिकत्वम्, न तु पाशुपतादेरिति तु गुणसौरभे पाञ्चरात्रस्य वेदबाह्यत्वस्य श्रीवादिराजतीर्थैरुपपादनाद् न युक्तम्। वेदमूलकत्वेन प्रामाण्यं तु पाशुपतस्यापि समानम्। वेदविरोधस्त्वंशविशेष उभयत्र समानः ॥

अत एव द्वितीयाध्याये द्वितीयपाद उभयोरप्यप्रामाण्यमंशविशेषे साध्यते। द्वैतसिद्धान्ते यद्यपि शास्त्रयोनित्वाधिकरणे पाञ्चरात्रप्रामाण्यं साध्यते, तदधिकरणं तु शाक्तमतनिरासपरतया योज्यते; तथापि तत्र सर्वभाष्याक्षुण्णोऽपूर्व एव पन्थाः श्रीमध्वाचार्याणाम्। भारतं तु पाञ्चरात्रसिद्धान्तं पिष्टपशुयागादिविषये यद्यपि समर्थयति; तथापि कूर्मपुराणे वैदिकानां पश्वालम्भः, पाञ्चरात्राद्यागमानुयायिनां पिष्टपश्वालम्भ इति विवेचनादवैदिकत्वं पाञ्चरात्रस्य साधयति। अत एव—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।"

इत्यानुशासनिकवाक्यं वेदात् पृथक् पाञ्चरात्रं परिगणयति, इति यथासम्भवमधिकारिभेदेन व्यवस्थैव सर्वत्र युक्ता, इति सर्वासां श्रुतीनां विष्णुपरत्वमेवेति न वैयासिकस्सिद्धान्तः। पाशुपतस्य मोहनार्थं भगवता बुद्धावतारं गृहीत्वा प्रवर्तनमिति वादस्तु 'न हि निन्दा'न्यायेन वैष्णवानां स्तुत्यर्थमेव; अन्यथा पाञ्चरात्रमपि भगवता नारायणेन स्वयं मोहार्थं भगवदवतारबुद्धप्रवर्तितमित्यप्रमाणं स्यात्। वैखानसागमप्रामाण्यवादकथा तुच्छत्वमेवाधिगच्छेत्। न हि कर्तृगौरवेण वैदिकसिद्धान्तस्य, गौरवम्; अन्यथा हि मन्वादिस्मृतीनाम् किमिति वा श्रुतिमूलं प्रामाण्यं साधनीयम्॥

"धर्मव्यतिक्रमो दृष्टो महतामपि साहसम्।"

इत्युक्त्या भगवतो विष्णोर्बृन्दालीलादिकमपि कथमधर्मः स्यात्? कुमारिलपादा हि वेदविरोधे स्रष्टारमीश्वरमपि निषेधन्ति, इति नारायणकर्तृकत्वेन पाञ्चरात्रसमादरातिशयः, रुद्रकर्तृकत्वेन पाशुपतस्य निकर्षातिशयो वा न प्रामाणिकः॥

पुराणानां तामसादिविभागो न तदप्रामाण्याशयेन।

पुराणानां तामसत्व-राजसत्वविभागोऽपि 'न हि निन्दा'न्यायेन, तमोगुणप्रधानमायोपाधिकरुद्रोत्कर्षप्रतिपादनपरत्वेन वेति सर्वमनवद्यम्। सर्वथा तु जगज्जन्मादिकारणत्वं सविशेषस्य ब्रह्मणः स्वरूपान्तर्गतम्, मुख्यं लक्ष्यं तु सविशेषान्तर्गतविशेषाणां "नेति नेति" इति न्यायेन बाधेनाबाधितनिर्विशेषस्वरूपमेव जगत्कारणतापराणां वाक्यानाम्॥

कारणस्वरूपेऽद्वैतनिष्कर्षः ।

इयमेवाद्वैतिनां मर्यादा—मायाविशिष्टं ब्रह्म कारणम् । तत्र माया परिणामिकारणम्, निमित्तकारणं वा । उभयत्र ब्रह्म विवर्तोपादानम् । तटस्थलक्षणत्वव्यपदेशस्तु ॥

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥"

इति वार्तिकात् मायागतस्य परिणामित्वस्य ब्रह्मण्युपचारेण, वस्तुगत्या तु ब्रह्मणः कारणत्वमेव नेत्येकं मतं लोकदृष्ट्या परिणामिकारणत्वमेव ब्रह्मण इत्यभ्युपगमवादेन ॥

वस्तुगत्या तु ब्रह्माश्रिता माया परिणामिकारणम् । मायाविषयो ब्रह्म विवर्तोपादानम्, जीवाश्रिताविद्याविषयो वेति । तत्र च ब्रह्मव्यतिरेकेणेतराभाव एव जगतः, इति कार्यस्य यावल्लक्ष्यकालमनवस्थितस्य तटस्थलक्षणत्वम् ॥

"यत्तत् परं ज्योतिरनन्यमद्वयं
स्वसंस्थया नित्यनिरस्तकल्मषम् ।
ब्रह्माख्यमस्योद्भवनादिहेतुभिः
स्वलक्षणैर्लक्षितभावनिर्वृतम् ॥

इति भागवतमपि "अनन्यमद्वयमि"ति पदाभ्यां "एकमेवाद्वितीयमि"ति श्रुत्यर्थं निरस्तसमस्तविशेषे ब्रह्मणि द्वितीयाभावम्, द्वितीयस्य सर्वस्याज्ञानप्रयुक्तत्वेन कल्मषत्वेन ब्रह्मणि सम्बन्धायोगम्, अज्ञानप्रयुक्तानां कार्याणां दोषाणां तत्र प्रसञ्जकमुद्भवनादिहेतुत्वं तटस्थलक्षणम्, मुख्यलक्षणं तु ब्रह्मणः सत्य-ज्ञानादिस्वरूपं बोधयच्च भगवत्पादप्रदर्शितदिशा तटस्थलक्षणविधयाऽऽनन्दस्वरूपलक्षितं स्वरूपमेव भृगुवल्लीप्रतिपाद्यमनुवदति ॥

अत्र 'उद्भवनादिहेतुभिः' 'स्वलक्षणैरि'ति न सामानाधिकरण्येन; किन्तु वैयधिकरण्येन; अन्यथा "लक्षितभावनिर्वृतम्" इत्यनन्वितं स्यात् । न ह्यानन्दस्वरूपमुद्भवनादिहेतुभिर्लक्ष्यते । इदं हि श्रीकृष्णानुष्ठानं प्रस्तुत्य प्रवृत्तम् । परमात्मनः श्रीकृष्णस्याप्यात्माऽनन्यः, अद्वयः, आनन्द-

त्वरूप एव, परन्तु स तटस्थलक्षणविधयैव लक्ष्यत इत्यपि प्रकरणमिदं गमयति ॥

अत्र श्रीकृष्णस्याप्यात्मा निर्विशेषसत्यज्ञानानन्दस्वरूपोऽनन्योऽद्वय इति लगति। अत एव श्रुतिगीतायां—

"ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे॥"

इति प्रश्नस्योत्तरम्—

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः॥"

इति सृष्टिविधया तटस्थलक्षणेन लक्ष्यता निर्विशेषस्य ब्रह्मणः प्रतिपाद्यते। तत्र "यत्तत्परञ्ज्योतिरि" ति प्रकृतानुवादो ब्रह्मणि विशेषनिराकरणार्थम्, एवं शिष्टैरनुष्ठितत्वाद् अन्यैरप्यनुष्ठेयमिति विधानार्थं वा। तत्राद्यः कल्पो भगवतोऽद्वितीयत्वादिना द्वितीयनिराकरणमुखेनैव प्रवृत्तत्वाद् न विरुध्यते; उद्भवनादिहेतुभिः परम्परया लक्षितभावनिर्वृतस्वरूपस्य समस्तदोषनिरासमुखेन, अनन्यत्वेन, अद्वयत्वेन चात्र श्री कृष्णस्य भगवतोऽपि ध्येयनिर्विशेषस्वरूपस्य प्रतिपादनात्, अन्यथा उद्भवनादिहेतुभिर्यदि सकलगुणपूर्णत्वमुपपाद्यते, तर्हि तस्यैवात्र वर्णनीयतया "निरस्तसमस्तदोषम्" "अनन्यमद्वयमि"ति चात्र कथं सङ्गतम्? जगत्कारणत्वस्य दोषानापादकत्वे निरस्तसमस्तदोषमिति कथं नाप्रसक्तप्रतिषेधोऽत्र ॥

अनेन चेदमपि सूच्यते—यद् जगत्कारणत्वेन न सकलगुणपूर्णत्वम्, किन्तु बहुविधदोषग्रस्तत्वमेव ब्रह्मण आपतति, परं तु तेषां सर्वेषामारोपितत्वाद् न तेन ब्रह्मणो निर्विशेषस्य दोषगन्धः, गुणगन्धोऽपि वेति। इदमेवाभिप्रेत्याध्यासभाष्येऽध्याससमर्थनानन्तरं भाष्यम्—"न च तत्कृतेन गुणेन, दोषेण वाऽणुमात्रेणापि स न सम्बध्यते"—इति। श्रीकृष्णस्य ध्यानमिदं न केवलं ब्रह्मणि तत्कारणत्वप्रयुक्तसमस्तप्रपञ्चनिराकरणार्थम्। अतो मया यथा ध्यातम्, एवमेव परैरपि परमात्मस्वरूपमनुसन्धेयम्, ध्येयं वा, न त्वहं सविशेष एव मुख्यं परमात्मस्वरूपमित्येव श्रीभागवतस्याशयः ॥

पद्मपुराणगतगीताप्रथमाध्यायमाहात्म्यप्रकाशपराध्यायोऽपि विष्णुना निराकारस्वरूपध्याननिरूपणपरोऽत्रानुसन्धेयः, येन विष्णोरपि ध्येयं निर्विशेषं तत्त्वमेकमस्तीत्यवसीयते। न चात्र श्रीकृष्णप्रतिपत्तिर्नि-

राक्रियते, किन्तु तदीयप्रतिपत्तिमनुसृत्यैव निर्विशेषपरमात्मता प्रतिपाद्यते। इदं हि ध्यानं श्रीकृष्णस्याभ्यस्यमानात्मसाक्षात्कारसन्ततिरूपं निदिध्यासनम्, न तु ध्यानमात्रम्, येन विषयतथात्वे प्रमाणं न स्यात्। अतः सूत्रकारस्य व्यासस्यापि निर्विशेषपरमात्मतावाद एव तात्पर्यम्। श्रीमद्भागवतगतप्रथमादि-द्वादशस्कन्धान्तेषु प्रकरणेषूपक्रमोपसंहारादयोऽद्वैत एव स्वरसा इति व्यक्तमन्यत्राद्वैततत्त्वशुद्ध्यादौ ॥

तटस्थलक्षणलक्षितं यद्यपि न निर्विशेषस्वरूपतया ध्येयम्; तथापि साक्षात् तल्लक्ष्यसविशेषस्वरूपतया ध्येयमित्यत्र न विप्रतिपत्तिः, इति परकृतानुवादाप्रामाण्यवादो नाद्वैतिनाम्, इति श्वेतकेतूद्दालकाख्यायिकाया एकविज्ञानेन सर्वविज्ञानं प्रस्तुत्य "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्यादेः "तत्त्वमसी"त्यन्ताया इव "यत्तत्परञ्ज्योतिरि"त्यस्यापि चिन्मात्रानन्याद्वितीय-निरस्तसमस्तनिर्विशेषस्य तटस्थलक्षणविधयाऽऽनन्दस्वरूपनिरूपणपरमेव श्रीकृष्णध्यानमपीति निगदव्याख्यातम् ॥

जन्माद्यस्येति सूत्रस्याद्वैतमत एव साफल्यम्।

तथा च "जन्माद्यस्य यतः" इति सूत्रकारस्य पूर्वोक्तदिशा सविशेषस्वरूपान्तर्गतं तटस्थलक्षणम्, मुख्यं तल्लक्ष्यं त्वनावृतमद्वितीयं निरस्तसमस्तदोषञ्च निर्विशेषमेवेति सिद्धम्; अन्यथा यदि सूत्रकारस्य सविशेषब्रह्ममात्रमत्र लक्ष्यतयाऽभिप्रेतं स्यात्, तर्हि निष्प्रयोजनम्। अद्वैतसिद्धान्ते तु पूर्वोक्तविधयैतत्सूत्रारम्भः सप्रयोजनः ॥

तटस्थ-स्वरूपलक्षणद्वयसार्थक्यम्।

एतेन—यत एवं जगज्जन्मकारणत्वं स्वरूपलक्षणमत्र सूत्रेऽभिधीयते, ततः परमतेऽस्य सूत्रस्यारम्भो न स्यादिति—परास्तम्; दत्तोत्तरत्वात्। तत्र द्रव्यत्वादिना सामान्यरूपेण ज्ञातस्येतरव्यावृत्तरूपेण ज्ञानार्थं या स्वरूपलक्षणापेक्षा, साऽप्यनुमानादिना ज्ञेयस्य ॥

"सम्भावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ॥"

इति लक्षणस्य सम्भावनामात्रोपयोगित्वात्। न च प्रत्यक्षम्, श्रुतिर्वा स्वार्थनिश्चयार्थं लक्षणमपेक्षतेऽनुमानमिव। श्रुत्यवगतस्वरूपत्वमेव हि श्रुत्यर्थस्य लक्षणम्। न हि यागादीनाम्, ब्रह्मणो वा श्रुतिप्रमितं रूपमतिरिच्यास्ति किमपि स्वरूपम्। श्रुतिर्हि स्वार्थमितरव्यावृत्तमेव बोधयति, इति

जगज्जन्मादिकारणत्वमिव निर्विशेषत्वमपि ब्रह्मस्वरूपमेव, तत्रैकं द्वारम्, अपरं द्वारीति विशेषः ॥

श्रुतीनां मुख्यावान्तरतात्पर्यविषयत्वं सविशेष-निर्विशेषयोः।

तत्र सविशेषं ब्रह्म सकलगुणपूर्णं स्वल्पगुणाद् दुष्टाद्वा व्यावृत्तं बोधयति, निर्विशेषं तु सगुणात्। व्यवस्था तु तत्रोपास्यतया, प्रतिपत्तिविधिशेषतया, प्रमाणतन्त्रतया चाशेषतया। अनुमानादीनामपि तदुपबृंहणमेव कृत्यम्, न तु तन्निर्णेयार्थसाधनम्। अत एव वैशेषिकादीनामीश्वरानुमानं केवलं निमित्तकारणमात्रसाधनं न प्रमाणमिति जन्मादिसूत्रे भाष्यम्॥

श्रुत्यापि निमित्तकारणमेव ब्रह्म बोध्यत इति तु न युक्तम्। "सर्वं खल्विदं ब्रह्मे"ति सामानाधिकरण्यम्, "यतो वा" इति पञ्चमी च ब्रह्मोपादानतावादं द्रढयति। सा हि हेतुसामान्यमपि बोधयति, उपादानत्वमपि। "सर्वं खल्विदम्" इति सामानाधिकरण्योपोद्बलिता सोपादानत्वमपि गोचरयति। अत एव शैवाद्यागमानामपि श्रुतिविरोधेनाप्रामाण्यम्। "शास्त्रयोनित्वात्" इत्युत्तरसूत्रमपि लोकसिद्धं जीवब्रह्मभेदम्, निमित्तकारणत्वं च प्रमाणान्तरसिद्धं शास्त्रतात्पर्यविषयाद् व्यावर्तयति। शास्त्रं त्वत्र—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा॥"

इति वचननिर्दिष्टवेदमात्रम्, न तु स्वतन्त्रम्, वेदविरुद्धं वा पाञ्चरात्रम्, पाशुपतं वा ब्रह्मणः केवलनिमित्तकारणतामात्रपरम्। पाञ्चरात्रं तु ब्रह्मणः प्रकृतिगतेनोपादानकारणत्वेनौपचारिकमुपादानत्वमभिप्रैति। सति चैवं सविशेषं ब्रह्म, तदुपासनादिकं वा नैकान्ततः शास्त्रतात्पर्याविषयः; अवान्तरतात्पर्यविषयत्वात्। उपासना त्वारोपित-व्यावहारिकस्वरूपेणापि सम्भवति कर्मयोग इव। अत एव देवतामीमांसायामेव "स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इति व्यासस्यैव सूत्रम्। "अथाऽतो ब्रह्मजिज्ञासे"त्यत्र तस्यैवानुषङ्गस्त्वन्यार्थ एव गोदोहनन्यायेनेति न्यायरत्नामणौ व्यक्तम्॥

निर्विशेषवाद एव मुख्यफलनिर्वाहः।

यद्यपि निर्विशेषमात्रमुख्यतात्पर्यविषयत्वं प्रतीयमानार्थत्यागमपेक्षते, तथाप्युपक्रमोपसंहाराभ्यासापूर्वता-फलादिषडविधतात्पर्यलिङ्गानुसारित्वात्,

तदर्थपरित्यागस्तत्र न दोषाय। अत एव फलमप्यन्यतममत्र तात्पर्यलिङ्गम्। उद्दिष्टं तु फलं "तस्य तावदेव चिरं यावन्न विमोक्ष्ये। अथ संपत्स्ये" इति वचनाद् ज्ञानमात्रेण प्रारब्धान्तसर्वबन्धनिवृत्तिरेव। सा च निर्विशेषपरत्व एवोपपद्यते, न त्वीश्वरप्रसादसाध्यत्वे। ज्ञानेन दृष्टे बन्धनिवृत्तौ फले जननीये नादृष्टापेक्षा, इति नास्य प्रकरणस्य सविशेषपर्यवसायित्वम्। एवं सत्येव याथार्थ्यमपि वाक्यस्य सिद्ध्यति, फलवत्वं च निर्विशेषपरत्वेऽपि। फलाविरोधितया तु याथार्थ्यं न विरुद्धम्। न चापौरुषेये वेदे पर्यनुयोगः सम्भवति ॥

अद्वैतमते जीव-ब्रह्मैक्यानुपपत्तिः, पूर्वपक्ष-सिद्धान्तोभयानुपपत्तिश्च।

यत्तु—जगत्कारणत्वं लक्षणं सजातीय-विजातीयव्यावर्तकं यदि सजातीयाद् जीवाद् विजातीयाद् जडाच्च व्यावर्तकम्, तर्हि जीवैक्यवादिनां शास्त्रारम्भोऽनुपपन्नः। जीवस्यापि लक्ष्यत्व इतरव्यपदेशाधिकरणे ब्रह्मणो व्यावृत्तिप्रतिपादनं कथम्? जन्माधिकरणे "सर्वज्ञं सर्वशक्तिं विहायान्यत उपर्युपरि कल्पितात् प्रधानादेरचेतनात् चेतनादपि परिच्छिन्नशक्तितः संसारिणो हिरण्यगर्भादुत्पत्त्यादि न सम्भावयितुं शक्यमिति स्वयं परकीयं भाष्यमपि जीवव्यावृत्तिमत्र विवक्षति" इति पूर्वपक्षस्यैव तन्मतेऽनुपपन्नत्वाद् जन्मादिसूत्रारम्भो न केवलमनुपपन्नः, प्रत्युत तदीयैक्यसिद्धान्तव्याहतिरपि ॥

वस्तुतस्त्वितरव्यावृत्तं ब्रह्मणो जगत्कारणत्वं लक्षणमभिप्रेत्य सूत्रकारो लक्ष्यस्य निर्विशेषत्वं दण्डेन वारयति। न चेदं तटस्थलक्षणम्; अन्यथा तत्र जीवव्यावृत्तेरविरोधाद् कथं तत्पूर्वपक्षस्योत्थितिः? स्वरूपलक्ष्यत्वं श्रीभागवतोक्तं स्वस्य लक्षणानि स्वरूपान्तर्गतानि वेति मत्वा—इति ॥

अद्वैतिनां जन्मादिसूत्रावैयर्थ्यम्।

नेयमद्वैतिनां व्यवस्था, यद् विशिष्टजीवव्यावर्तनमत्र विवक्ष्यते—इति। ब्रह्मणो निर्गुणत्वस्याद्य यावदसाधितत्वात्, पूर्वाधिकरणेन जीवनिर्विशेषताया एव निर्णयाच्च। सति चैवं जीवब्रह्मैक्याद् जीवस्यापि कारणत्वं भवत्विति शङ्काव्यावर्तनार्थत्वादस्य सूत्रस्य, त्वम्पदार्थमात्रे लक्षणामूरीकृत्य लोकविरोधेन तत्त्वमसिमहावाक्यार्थो मा भूदिति ब्रह्मणोऽपि

निर्गुणत्वं बोधनीयमिति कृत्वैवेदमधिकरणम्, इत्यनेनाधिकरणेन निर्विशेषत्वे ब्रह्मण्यपि प्रकरणानुसारेण बोधिते संविन्मात्रैक्यस्यैव विवक्षितत्वाद् जीवव्यावृत्तिरर्थसिद्धा, संविन्मात्रेणैक्यसिद्धिश्चाविरुद्धा, इति न जीवव्यावर्तनस्यैक्यसिद्धान्तस्य च व्याहतिः ॥

### इतरव्यपदेशाधिकरणस्याद्वैतमत उपपत्तिः ।

इतरव्यपदेशाधिकरणेऽप्येवम् । अत एव "अधिकोपदेशादि"त्यत्र अधिकशब्देन निर्विशेषप्रत्यङ्मात्रस्य विवक्षणादित्येवार्थः, न सविशेषेश्वराभेदात्, निर्विशेषब्रह्माभेदादिति वा । व्यक्तं चैतद् भाष्ये जीवब्रह्मैक्यं जीवत्वेश्वरत्वोपलक्षितयोरेव, न तु विशिष्टयोः, इति विशिष्टेश्वरेण संविन्मात्रस्य जीवस्यैक्यं नाद्वैतसिद्धान्ते, इति तदैक्यवादस्य जीवव्यावर्तनस्य च न व्याहतिः ॥

### जीवव्यावर्तनानुपपत्तिर्द्वैतमते एव ।

द्वैतसिद्धान्त एव हि नाचेतनं जीवो वा जगत्कारणमिति जीवव्यावर्तनमभिप्रेतम्, इति पूर्वाधिकरण्येन गतार्थत्वाद् वितथमिदमधिकरणम् । न च तत्र जीवैक्यवादः, इति तद्भेदवादे न जीवकारणताशङ्कोदेति, इति जीवब्रह्मैक्यमादाय पूर्वपक्ष इति वक्तव्यम् ॥

तत्र तदैक्यं यदि प्रमितम्, तर्हि निषेधानुपपत्तिः, अप्रमितत्वे तु नितरां न तन्निषेधः । पूर्वपक्षिप्रमितत्वशङ्कया पूर्वपक्षस्तु विना नियामकं न भवितुमर्हति । तत्त्वमसिवाक्याद् आपातप्रतीतिमादाय पूर्वपक्षश्चेत्, तस्याभेदपरतया नयनं किं वा निमित्तमाश्रित्य ? यद्यनेन व्यावर्तनात्, तर्हि तत्त्वमसिवाक्यं विशिष्टयोरभेदं बोधयतीति मत्वा पूर्वपक्ष इति वक्तव्यम् । न च विशिष्टयोस्तयोरभेद इति कोऽपि वादः प्रसिद्धः, यस्य निराकरणायायमारम्भः । देवताकाण्डान्तिम-ब्रह्ममीमांसाप्रथमसूत्राभ्यां सविशेषब्रह्मपराभ्यां सिद्धस्यार्थस्य किं चर्वणेन ? ॥

### जन्मादिसूत्रेण नाद्वैतस्य विरोधः ।

अत एव परपरिकल्पितात् प्रधानादचेतनात्, चेतनाच्च परिच्छिन्नात् संसारिणो हिरण्यगर्भादुत्पत्त्यादिर्न सम्भावयितुं शक्य इति भाष्यमपि व्याख्यातम्; तेन संविन्मात्रजीवव्यावर्तनस्यानधिगमात् । अनेन हि प्राथमिकतटस्थलक्षणमादाय सविशेषकारणतावादमेवाश्रित्य जीवव्यावृत्ति-

रभिप्रेयते । इदमुपलक्षणं निर्विशेषकारणताव्यावर्तनस्यापि, इति जीवेश्वरयोर्विशिष्टयोः, संविन्मात्रजीव-सविशेषब्रह्मणोः, सविशेषजीव-निर्विशेषब्रह्मणोर्वा भेदस्य व्यावहारिकस्यैवाद्वैतमते स्वीकारात्, तद्भेदस्य व्यावहारिकस्य निर्विशेषैक्याविरोधात्, पूर्वोक्तरीत्या भृगुवल्लीप्रकरणमधिकृत्य प्रवृत्तस्यास्य सूत्रस्य सविशेषद्वारा तटस्थलक्षणविधया निर्विशेषस्वरूपनिर्धारण एव तात्पर्याच्च नास्य सूत्रस्याद्वैतेन विरोधः, इति संविन्मात्रजीवेश्वरस्वरूपाभेदबोधन एवास्य तात्पर्यम् । सविशेषेश्वर-सविशेषजीवभेदस्तु नाद्वैतिनामनिष्टः, न वा तत्र सूत्रस्यापि तात्पर्यम्, द्वैतमते तु जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वाद् विरुद्धधर्मकत्वेनानुमानिकत्वाच्च किं प्रयोजनं जीवेश्वरभेदप्रतिपादनस्य ?

### भागवतस्य स्वरूपलक्षण एव तात्पर्यम् ।

अत्र श्रीभागवते जगज्जन्मादिकारणत्वलक्षितस्वभावनिर्वृतमित्यनेनैव गतार्थत्वात् स्वलक्षणैरिति किमर्थम् ? न ब्रह्मलक्षणस्यान्यद् लक्ष्यं भवति । न च श्रुतिप्रतिपन्नेऽभेदेऽसम्यक्त्वाबुद्धिरुदेति, इति जगत्कारणत्वद्वारा स्वरूपलक्षणविधया लक्षितानन्दस्वरूपमित्येवार्थो वक्तव्यः, अन्यथा तद्वितथम् ॥

इदं तु संप्रतिपन्नम्—चैतन्यात्मना जीव-ब्रह्मणोरभेदो वर्तते—इति, इदमेवात्र विप्रतिपन्नम्—सच्चिदानन्दस्वरूपातिरिक्तो विशेषः कोऽपि प्रमाणसिद्धो वा, न वेति । तत्राद्वैतिनोऽभिप्रयन्ति—श्रुतयस्सर्वं विशेषं ततः परास्य चिन्मात्रतयैवैतस्य प्रमाणिकीति गमयन्ति–इति । अधिकं तु सत्यवसरेऽवसरान्तरे प्रकृत्यधिकरणे ॥

### जन्मादिसूत्रे न स्वरूपलक्षणं लक्षणया ।

तत्र तटस्थलक्षणतापत्ते कारणत्वं सविशेषान्तर्गतमेवेति न तत्र लक्षणा, किन्तु तस्य वाक्यस्य क्रमेण स्वरूपलक्षणपर्यवसायित्वात् "आनन्दो ब्रह्मे"ति वाक्यस्यैव स्वरूपलक्षणपरत्वम्, न तु "यतो वे"ति-वाक्यस्य । तस्य तत्त्वं त्वानन्दवाक्यैकवाक्यतया केवलं पर्यवसानेन । आनन्दवाक्यस्यापि जन्मादिसूत्रमुपलक्षणमिति तु निष्कर्षः । अत एव "सत्यादी"ति कुतो न सूत्रितमिति न शङ्कावसरः ॥

कारणत्वं हि सविशेषे लौकिकपारमार्थिकम्, आनन्दवाक्यार्थता-

दशायां तु निर्विशेषे बाधितम्; सविशेषस्य केवलात्मताया अयोगात्। तेन च स्वरूपेऽप्यखण्डात्मना ज्ञातेऽज्ञाननिवृत्त्या कारणत्वस्यार्थतो बाधः, न तु साक्षात्; जन्मादिवाक्येनैव तस्य बाधितत्वम्। सविशेषवाक्यावगतो हि विशेषो निर्विशेषवाक्येन बाध्यते। श्रुत्यवगतस्यापि श्रुत्या बाधः पूर्वमेवोपपादितः। आनन्दस्वरूपमात्रब्रह्मताबोधकवाक्यजन्याखण्डाकारवृत्त्या तत्प्रयुक्तानां विशेषाणां सत्यकामत्व-जगत्कारणत्वादीनां बाधः। सर्वथा तु "जन्माद्यस्य यतः" इति सूत्रेऽपि लक्षणेति नाद्वैतिनोऽभिमन्यन्ते॥

एतेन—

"भेदेनैव तु मुख्यार्थसम्भवे लक्षणा कुतः?
कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः॥"

इति—व्याख्यातम्। न हि जन्मादिसूत्रं जीवब्रह्मैक्यपरम्, न वा तदैक्यपरतत्त्वमस्यादिवाक्यार्थव्यवस्थापकम्, येन तदैक्यानुपपत्त्या लक्षणाऽत्र स्यात्॥

तटस्थलक्षणलक्षितं मायामयं सगुणमेव ब्रह्म। तच्च विशिष्टं विशिष्टात् जीवादद्वैतमते भिन्नमेव, न त्वेकम्, इति तटस्थलक्षणपक्षोऽपि जीवब्रह्मणोर्भेदमादायैव। तटस्थलक्षणत्वं हि शाखाया इव ज्ञापकत्वमात्रेण, न तु लक्षणया, तेन वाक्येनैव बोधनेन, इति तटस्थलक्षणत्वं वस्तुगत्या ब्रह्माद्वितीयत्वं च वाक्यान्तरसिद्धं निर्विशेषत्वमादायैव; जीव-ब्रह्मणोरैक्यस्य प्रामाणिकत्वात्॥

तत्त्वमस्यादिवाक्येषु न गौणं सामानाधिकरण्यम्।

न च "तत्त्वमसी"त्यत्र सिंहो देवदत्त इत्यादाविव गौणोऽभेदः। स्वरूपसन्मात्रयोर्भेदस्य देवदत्त-सिंहयोरिव भेदस्य वक्तृप्रतिपन्नोभयासिद्धत्वात्। न च वेदस्य विशिष्टयोर्जीवेश्वरयोर्गौणाभेदविवक्षायाम्, "आदित्यो यूपः"—इत्यादाविवार्थवादत्वे, मुख्यतात्पर्याभावे वा किमपि गमकमस्ति, प्रत्युत तयोरभेदस्य—"एकमेवाद्वितीयमि"ति प्रस्तुत्य निर्विशेषरूपेणैवावगमात्, संविन्मात्रभेदस्यासिद्धत्वात्, चैतन्यधातुनाऽभेदविवक्षायाः परैरपि स्वीकाराच्च न गौणार्थत्वं युक्तम्, न वा तद्विवक्षयाऽत्र किमपि प्रयोजनम्; कस्याप्यत्र प्रशंसाया अविवक्षितत्वात्, इति गौणार्थसामानाधिकरण्ये प्रयोजनाभावाद् मुख्यार्थसामानाधिकरण्यस्याबाधाच्चोपाधिपरित्यागेन मुख्यार्थसामानाधिकरण्यमेव युक्तम्॥

ब्रह्मसगुणत्व-निर्गुणत्वयोरविरोधः ।

मुख्यत्वं हि पदार्थस्य न वाच्यत्वमात्रेण, किन्तु तात्पर्येण । सत्यपि चैवं भेदवाक्यानामप्यवान्तरतात्पर्यविषयत्वस्वीकाराद् , मुख्यतात्पर्याविरोधेन वाक्यार्थवर्णनमेव युक्तम् । यथाच विरोध्याकारपरित्यागस्तस्य बाधाभिप्रायेणैव, तथा पूर्वमेवोक्तम् । न च निर्गुणेन ब्रह्मणा निर्गुणस्य जीवस्यैक्ये किमपि बाधकम् । न चेदमैक्यं निर्गुणस्य सगुणाद् भेदं बाधते ॥

अयमाशयः—सगुणत्वं गुणानां मिथ्यात्वेन । मिथ्यात्वं त्वनिर्वचनीयत्वं पूर्वमेव समर्थितम् । तेन च सगुणत्वं व्यावहारिकम्, निर्गुणत्वं पारमार्थिकमिति फलति, इति तयोर्न विरोधः । गुणशब्देनात्र धर्ममात्रं विवक्ष्यते, न तु पारिभाषिको गुणः, इति निर्विशेषत्वमेव निर्गुणत्वम् । इदमेवाभिप्रेत्य-"साक्षी चेता केवलो निर्गुणश्चे"ति । साक्षित्वं तूपहितस्यैव धर्मः, निर्गुणत्वं साक्षिस्वरूपमात्रस्य, न तु साक्षित्वविशिष्टस्य ॥

न च साक्षि संविन्मात्रम्, किन्तु तत् साक्ष्यन्तर्गतचिन्मात्रम्, न तु साक्षित्वप्रयोजकान्तःकरणादीनामपि साक्षिता; उपाधिमात्रत्वादविद्यान्तःकरणादेः द्रष्टृत्वं हि साक्षात् साक्षित्वविशिष्टस्य, न तु संविन्मात्रस्य तदविनाभूतस्य ॥

एतेन—निर्गुणे युक्त्या निराकृतेऽपि निर्गुणत्वमेव परस्मै रुचितं स्यात् । तच्च गुणशब्दोदितसकलशुभराहित्यलक्षणया मुख्यमेव स्यात् । तेन चैक्यं मायावादिनामनुमन्यामह इति—परास्तम् ॥

ब्रह्मणो निर्गुणत्वं सर्वधर्मशून्यत्वमेव ।

प्रमाणान्तरागोचरश्रुतिमात्रतात्पर्यविषयस्य निर्गुणस्य युक्त्या निराकरणमाकाशस्य मुष्ट्या हननमेव । निर्विशेषत्वं हि निर्गुणत्वम् गुणशब्दोऽत्र धर्ममात्रपरः, न तु शुभपरः । को वा शुभपदार्थ ईश्वरमात्रधर्मपरैर्निर्धर्मके ब्रह्मणि प्रत्यक्षीकृतः, समस्तजगत्कारणे ब्रह्मणि वा ॥

"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥"

इति सर्वेऽपि राजसास्तामसाः, अन्ये च भावा वर्तन्ते ब्रह्मणि शुभान्यशुभान्यपि, परं त्वध्यारोपेणेति स्वयं भगवान् वदति । अत एव "न त्वहं

तेष्वि"ति। तत्र यथाऽसङ्गत्वं न सविशेषस्य ब्रह्मणः, तथा जीवस्यापि, इति सगुणेऽपि कल्पितः सम्बन्धोऽशुभस्य तामसस्य, राजसस्य, मनुष्यत्वस्य, असुरत्वस्य, बहुनाऽत्र किमुक्तेन, सर्वस्यापि वर्तते, निर्गुणे तु न कस्यापि शुभस्याशुभस्य, मनुष्यत्वस्य, अन्यस्य वा सम्बन्धो वर्तते, इति निखिलशुभस्येवासुरत्वस्यापि न सम्बन्ध इति कथमासुरत्वं मायावादिवादे, निर्विशेषब्रह्मवादे वा ?

सर्वथा त्वौपाधिकमेव प्रपञ्चकारणत्वम्, न तु निरुपाधिकस्वरूपान्तर्गतमिति न कोऽपि दोषः ॥

### अविद्ययाऽऽवरणेन चैतन्यस्यैवाधिष्ठानत्वम् ।

अविद्या हि स्वकल्पितमंशभेदमेवावृणोति, नाखण्डम्; अन्यथा सविशेषकारणस्वरूपस्याप्यसिद्धिप्रसङ्गात् सर्वविप्लवः स्यात्, इति सर्वथाऽनभासप्रसङ्गः, इति नाधिष्ठानत्वाभावः, न वाऽधिष्ठानस्य प्रकाश एव। शुक्तिरजतादावंशतः शुक्तित्वस्याऽऽवरणेन सामान्यतोऽवभासेन च खल्वधिष्ठानत्वं शुक्त्यादेः। तत्राविद्यावशादेवाखण्डेऽपि भेदः। जडेऽपि तद्वशादधिष्ठानत्वापत्तिस्तु तस्याप्रकाशस्वभावस्य तदर्थमविद्याया अनपेक्षणान्नापतति ॥

### तत्त्वमसिवाक्येऽनेकपदावैयर्थ्यम् ।

यथा चैक्यपरत्वे न पदत्रयवैयर्थ्यम्, तथाऽन्यत्र व्यक्तम्। इदमत्र विविच्यताम्—कस्य वा पदस्य वैयर्थ्यमत्र? यदि त्वम्पदस्य, तर्हि ईश्वरत्वोपलक्षितचैतन्यमात्रप्रतीतिः स्यात्, विशिष्टेश्वरप्रतीतिर्वा, न जीवब्रह्मैक्यम्, इति तावन्मात्रेण न जीवोपाधिनिवृत्तिनिर्वाहः। एवमेव न तत्पदवैयर्थ्यमपि। उभयोरैक्यप्रतिपादनं हि पदद्वयं विना न सम्भवति। तदपि न भिन्नविभक्त्यन्तेन ॥

### घटः पट इति वाक्यस्य नाखण्डार्थत्वापत्तिः ।

एतेन—घटादीनामपि चैतन्याभिन्नत्वाद् घटः पट इति वाक्यमपि चैतन्यैक्यात् घटत्वपटत्वादिविरुद्धाकारपरित्यागेन घटपटाभेदे प्रमाणं स्यादिति—परास्तम्। अत्र घट-पटयोः कार्यात्मनाऽभेद एव विरुद्धः, न तु कारणात्मना, इतीष्टापत्तिरेवेत्यद्वैततत्त्वशुध्यादौ व्यक्तम् ॥

अज्ञाननिवर्तकस्तु केवलं वृत्त्युपहितचैतन्यप्रकाश एव। तत्त्वमस्यादिवाक्येषु पदत्रयवैयर्थ्यशङ्काऽप्यनया दिशा परिहरणीया; अन्तःकरणाद्युपाधिसम्बन्धप्रयुक्तत्वाद् बन्धस्य, तदुपहितज्ञानस्य बन्धानिवर्तकत्वाद् न कोऽपि दोषः ॥

अयं भावः—"तत्त्वमसी"त्यत्र त्वम्पदाभावे तदस्तीति तत्पदार्थमात्रस्य परोक्षत्वमेव प्रतीतं स्यात्, जीवस्वरूपं तु यथाप्रतीत्येव स्वीकर्तव्यमिति च। तथाच सर्वेषामपि तदस्तीति ज्ञानाद् बन्धनिवृत्तिः स्यात्। एवं त्वमसीत्युक्ते ब्रह्मस्वरूपत्वं न जीवस्योपदिष्टं स्यात्, इति सत्येकस्मिन् पदे कथमैक्यप्रतीतिर्जीवेश्वरयोः स्यात्? ऐक्यविवक्षागमकस्याभावेनैक्यबोधकत्वस्य बाधात् ॥

अद्वैतेनाद्वैताव्याघातः।

एतेन—अद्वैतेनैवाद्वैतव्याघात इत्यपि-परास्तम्; अनावृतसंविन्मात्रस्याद्वैतस्वरूपस्य सद्वितीयत्वाभावात्। न चात्र द्वयोरैक्यं पारमार्थिकम्; भेदप्रयोजकोपाधिनिवृत्त्या नित्यसिद्धस्वरूपप्रकाशस्यैवात्र विवक्षणात् ॥

सत्यादिवाक्याखण्डार्थत्वम्।

अयमेव न्यायः—सत्य-ज्ञानाद्यवान्तरवाक्येऽपि। तत्र हि असत्यादिव्यावृत्त्युपलक्षितस्वरूपैक्यमेवानाद्यविद्याकल्पितोपाधि-तत्सम्बन्ध-तत्प्रयुक्तभेदनिवृत्तिमात्रेणाखण्डस्य ब्रह्मणः सदादिभेदमात्रं भ्रान्तिप्राप्तं निरस्यते। खण्डरूपेण भिन्नतया प्रतीयमानं हि ब्रह्माखण्डरूपतया शास्त्रं बोधयति, इति लोकदृष्ट्या प्राप्तासत्यादिभेदभ्रमनिवृत्तिपरत्वादस्य, इति सत्यज्ञानादीनां परस्परं ब्रह्मणाऽनाद्यविद्याकल्पितभेदभ्रम एवात्र निवर्त्यते ॥

यत्तु—सत्यज्ञानादिकं परस्परं ब्रह्मणा चाभिन्नं वा, भिन्नं वा, भिन्ना-भिन्नं वा। नाद्यः; स्वप्रकाशब्रह्मात्मकसत्यस्य सत्य-ज्ञानादिशास्त्राप्रतिपाद्यत्वात्, सत्यज्ञानादिपदानां पर्यायत्वापत्त्या सह प्रयोगायोगाच्च। न द्वितीयः; अपसिद्धान्तात्, मिथ्यात्वापत्त्या शास्त्रस्यातत्त्वावेदकत्वापत्तेः, अज्ञानत्वादेः सत्यत्वापत्तेश्च। न तृतीयः; अनवस्थाप्रसङ्गात्—इति ॥

तत्र जीवेश्वरादेरविद्याकल्पितभेदनिवृत्तिपरत्वादस्य वाक्यस्य व्यावहारिकभेदाङ्गीकारात् तद्व्यावर्तनार्थमेवाभेदस्यात्र प्रतिपादनाद्वा-

द्यन्तकल्पयोर्न दोषः; व्यावहारिकभेदनिवृत्तेरेवैतद्वाक्यप्रतिपाद्यतयाऽभेद-पारमार्थिकतापर्यवसानमिति विवेकात्। न च तत्पदार्थज्ञानमात्रेण बन्ध-निवृत्तिरिति महावाक्यार्थ इति पूर्वमेवोक्तम्॥

यत्तु तत्र सत्यपदेनासत्यव्यावृत्तिर्विवक्ष्यते इत्युच्यते, तत्र "सन् घटः" इत्यादौ घटाद्यात्मना प्रतीयमानस्य सद्रूपस्य तद्व्यतिरेकेण घटाद्यभावाद् घटादितादात्म्यमात्रं सदादिखण्डावस्थायां बोध्यते, तेन च खण्डावस्थायां घटादिनाऽस्य तादात्म्यमात्रं सिद्धं भवति। अयमेव न्यायो ज्ञानपदेऽपि, येन न केवलं घटः, किन्तु तदुपादान-मूलाविद्यातादात्म्यस्याप्यत्राभावबोधनात् सत्याखण्डाकारज्ञानेऽज्ञान-स्याप्यभावः प्रतिपाद्यते। एवमनन्तपदेऽपि मन्तव्यम्। तेन च न केवलम-ज्ञान-तत्कार्याणाम्, किन्त्वज्ञाननिवर्तकवृत्तेः, अज्ञाननिवृत्तेरपि वा ब्रह्म-व्यतिरिक्ताया अभावो बोध्यते, इति ब्रह्मणोऽखण्डस्य स्वरूपं वस्तुग-त्याऽज्ञान-तत्प्रयुक्त-तन्निवर्तक-तन्निवृत्त्यादिसर्वविरहितमद्वितीयम्, इत्ये-कमेवाद्वितीयमि"ति वाक्यार्थ एवात्र सङ्गृहीतः॥

न चात्र परस्परसामानाधिकरण्यमभेदेन विवक्ष्यते, किन्तु सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्मेति सत्यादिनां ब्रह्मण एवासत्यादिव्यावृत्ति-रूपोऽभेदो बोध्यते। न च वाक्यभेदः; स्वतन्त्रवाक्यभेदे हि वाक्यभेदः, नावान्तरवाक्यभेदे, इति नयमादाय; परैरप्येवमेव विवरणात्॥

वस्तुतस्तु–अवान्तरवाक्यभेदस्यादूषणत्वात् सत्यं ज्ञानम्, सत्यमनन्तम्, ज्ञानमनन्तम्, सत्यं ब्रह्म, ज्ञानमनन्तं ब्रह्मेति वाक्यभेदविवक्षणे सत्य-ज्ञानादीनां परस्पराभेदपक्षोऽपि ब्रह्माभेदपक्ष इव न दुष्टः। सदात्मना चिदनन्तात्मना चाभेदः, इति उभयोस्त्रयाणां ब्रह्मणाऽभेदश्च सिद्ध्यति। अत्र सच्चिदनन्तानां परस्परं ब्रह्मणा चाभेदवत् "आनन्दो ब्रह्मेति व्यजानात्," इत्यानन्दात्मनाऽपि ज्ञातं सर्वेषां परस्परं ब्रह्मणा सदादि-भेदरहिताखण्डस्वरूपमेव तत्पदलक्ष्यार्थ इति पर्यवस्यति॥

तत्र प्रथमं सत्य-ज्ञानादिस्वरूपत्वं प्रतिपाद्य, भृगुवल्ल्यामन्त एव "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"ति केवलामा-नन्दात्मन्येव पर्यवसानोक्त्याशयो हि—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति प्रतिपादयिष्यमाणे ब्रह्मणि न केवलं सच्चिदात्मना विकार्याणां बहूनां तादात्म्यम्, किन्तु भेदस्यापि; तस्यापि कल्पितत्वाविशे-

पात् । आनन्दात्मतायामपि ज्ञातायां तु सर्वेषामप्यभाव एव । वस्तुतस्तु—तत्तदुपाधिविरहितस्यैव शास्त्रार्थत्वे वल्लीद्वयतात्पर्यम् ।।

सत्यादिपदपर्यायत्वाभावात् सत्यादिवाक्येऽपि न पदत्रयवैयर्थ्यम् ।

एतेन—तत्त्वम्पदयोरिव सत्यादिपदानां पर्यायत्वमपि–परास्तम् ; रूपभेदेन ब्रह्मणि प्रवृत्तेः, वाच्यार्थभेदाच्च । सर्वत्र परस्परं ब्रह्मणा वाऽसत्यादिव्यावृत्तिस्तूपलक्षणविधयैव, न तु विशेषणतया, इति न तत्रापि सविशेषत्वापत्तिः । यत्र परस्परं ब्रह्मणा वाऽसत्यादिव्यावृत्त्या ब्रह्म इदम्, सत्त्वेन प्रतीयमानं घटादि ब्रह्म, ततश्च नेदं रजतमितिवद् ब्रह्म नेदमसत्यमिति बाधस्वरूपमुपपादितं भवति, एवं भाति, भासमानं घटादिकमित्यस्य ब्रह्म नाज्ञातघटादिरूपमित्यादिप्रकारेणानुसन्धेयम् , इति निर्विशेषवस्तुप्रतिपादनमेवापौरुषेयस्य वेदस्य विवक्षितम् ।।

वेदस्य निर्विशेषबोधकत्वोपपत्तिः ।

अपौरुषेयत्वाच्च वेदस्य स्वरूपप्रतिपादनपरस्य निर्विशेषोक्तिर्न मूकोऽहमित्युक्तितुल्या । न हि निर्विशेषमिति यथार्थबोधनं वेदस्य व्याहतम् । अभेदेऽपि सत्य-ज्ञानादीनां परस्परं "सत्यम् ," "ज्ञान"मित्यादिरूपेण भेदप्रतीतिस्त्वाविद्यकभेदमादाय, यथा द्वैतमते तत्सम्प्रदायसिद्धविशेषेणेति पूर्वमेवोक्तम् । विशेष-विशेषिणोर्भेदोऽपि यथा तत्र विशेषकृतः, एवमत्रापि भेदभिन्नयोर्भेदोऽपि तेनैवाविद्यकेन भेदेन, अविद्यया वा निर्वहणीयः; इत्यलमत्र विस्तरेण विशेषविषयेण । सर्वस्य विशेषकार्यस्य, अविद्यया, परशक्त्या वा निर्वाहसम्भवेन तदतिरिक्तविशेषकल्पना न प्रामाणिकी ॥

भेदे शास्त्रातात्पर्यम् ।

वस्तुतस्तु—सर्वत्र धर्म-धर्मिभावस्थले भेदाभेदवादिनां द्वैतमते भेदस्यैव, तद्व्यवहारस्यैव वा कुतो विशेषकृतत्वम् ? कुतो वा नाभेदः, तद्व्यवहारो वा न विशेषकृतः । यद्यभेदस्य स्वाभाविकत्वात् , तर्हि तत्रैव मुख्यं तात्पर्यमूरीकर्तव्यम् , न तु भेदे विशेषकृते, इति द्वैतमतेऽपि जीवेश्वरादीनां भेदाभेदस्वीकारात् कुतो वा भेदपरत्वमेव शास्त्राणाम् ?

यदि भेदस्य प्रत्यक्षादिप्रमाणगम्यत्वात् , तर्हि सोपाधिके तत्र न

मुख्यं प्रामाण्यम्, किन्तु स्वाभाविकेऽभेद एव तदित्येव स्वीकर्तव्यम्। सर्वथा तु प्रत्यक्षादिसिद्धभेदे न परमं तात्पर्यम्, किन्त्वभेद एव। स च संविन्मात्राभेदो वा, अन्यो वेति त्वन्यदेतत्। समर्थितश्च तत्त्वमस्यादिवाक्यमहिम्ना संविन्मात्राभेद एव मुख्यश्शास्त्रार्थ इति॥

इति जन्माद्यधिकरणम्॥

अथ शास्त्रयोनित्वाधिकरणम्॥

शास्त्रयोनित्वात्॥

शास्त्रयोनित्वसूत्रनिवर्तनीयं शङ्काद्वयम्।

प्रथमद्वितीयसूत्राभ्यां त्वम्पदार्थशोधनद्वारा, तत्पदार्थशोधनद्वारा च तत्त्वमसिवाक्यार्थो जीवब्रह्मैक्यं निरधारि। तदिदं प्रत्यक्षादिप्रमाणविरुद्धम्, पञ्चरात्राद्यागमविरुद्धम्, सविशेषश्रुतिविरुद्धञ्चेति काचन शङ्का॥

अपरा तु यदि जगत्कारणत्वं ब्रह्मणः पूर्वोक्तविधया जगतः सर्वस्य ब्रह्मण्यारोपेण, इति प्रत्यक्षादीनां भेदपराणामागमादीञ्चाविद्यकभेदविषयकत्वेन व्यावहारिकमेव प्रामाण्यम्, तर्हि तत्त्वमस्यादिवाक्यानामपि जगत्त्वाविशेषात् तद्विषयस्याप्याविद्यकत्वेन जीव-ब्रह्मैक्यस्यापि मिथ्यात्वापत्तिरिति तुल्यं प्रामाण्यम्, अप्रामाण्यं वा प्रमाणान्तराणामिव तत्त्वमस्यादिमहावाक्यानामपि। तथा चागमादिप्रणेतॄणामिवेश्वरस्यापि न सत्यत्वम्; किञ्चनत्वाविशेषात्, इति पाञ्चरात्राद्यप्रामाण्यवादोऽपि न युक्तः; अन्यथा पाञ्चरात्रस्येव पाशुपतस्यापीश्वरकर्तृत्वात् कथमप्रामाण्यम्—इति तदिदं शङ्काद्वयं निरसितुसूत्रम्—"शास्त्रयोनित्वादिति॥"

वेदाविरोध एवागमप्रामाण्यम्, न तु विपर्यये।

तत्र भगवत्पादा द्वितीयवर्णके शास्त्रपदेन तत्त्वमसिमहावाक्यमेवाभिप्रयन्तस्तस्य, तत्सदृशस्य वा महावाक्यस्यैव मुख्यं प्रमाण्यम्, अपरेषां तु तदविरोधेनैव प्रमाणम्, आगमा अपि पाशुपतादिकम्, पाञ्चरात्रम्, साङ्ख्य-योगौ वा तदविरुद्धांश एव प्रमाणम्, न विरुद्धांशे, इति तन्मात्रमुख्यप्रामाण्येन जीव-ब्रह्मैक्यस्यैवौपनिषदत्वं मुख्यमिति वर्णयन्ति। अप्रामाण्यं हि बाधितविषयकत्वेन, न तु स्वरूपतः प्रमाणमिथ्यात्वेन॥

अविद्याकार्यस्यापि वेदस्य प्रामाण्यनिर्वाहः।

"उपायाः शिक्षमाणानां बालानामुपलालनाः।

असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥”

इति हि हरिकारिका। उक्तं हि “न हि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरम्, तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः” इति। प्रत्यक्षं च रेखागवयतः सत्यगवयज्ञानम्, इति विषयबाधाबाधाभ्यामेव प्रामाण्याप्रामाण्यनिर्णयः। न च निर्विशेषं चैतन्यं प्रत्यक्षादिप्रमाणान्तरगम्यम्, न वा बाधितम्, येन तद्विषयस्य शास्त्रस्याप्रामाण्यं स्यात्। विषयस्याविद्या-तत्कार्यान्यतरत्वं ब्रह्मविवर्तत्वं वा खलु बाध्यताप्रयोजकम्। न च ब्रह्मेतरवद् ब्रह्माप्यविद्या-तत्कार्यान्यतरत्, तद्विवर्तो वा, इति तत्त्वमस्यादिमहावाक्याप्रामाण्यशङ्काया नावसर इति द्वितीयवर्णकार्थनिष्कर्षः॥

निर्विशेषवाक्यस्यैव मुख्यं प्रामाण्यम्।

इदमेव सूत्रमवष्टभ्य तत्परत्वात्, परत्वाच्च सविशेषवाक्यादपि तत्त्वमस्यादिवाक्यस्य प्राबल्यमभिप्रेयते; अन्यथा त्विदं सूत्रं वितथम्। इदं हि सूत्रं ब्रह्मणः शास्त्रप्रमाणकत्वं प्रत्यक्षादिप्रमाणाविषयत्वेऽपि तद्विरोधेऽपि वा प्रतिपादयति; तस्यैव प्रकृतत्वात्, न त्विदन्तया प्रमाणभूतं शास्त्रं तत् प्रतिपादयति; वेदार्थविचाररूपत्वाद् धर्म-देवतामीमांसयोर्नात्र प्रमाणेदन्तायाः सङ्गतिः॥

शास्त्रपदं न पाञ्चरात्रपरमपि
आगमाप्रामाण्यचर्चाया अनवसरात्।

तत्राप्रमाणानां शास्त्राणां चर्चा हि द्वितीयाध्यायद्वितीयपादे, यत्र पाशुपतस्य, अन्यस्य वा ब्रह्मणि न प्रामाण्यमिति निश्चीयते, इत्यत्र पाशुपताप्रामाण्यचर्चाया नावसरः॥

शास्त्रपदमात्रं पाञ्चरात्रप्रामाण्यम्, पाशुपताद्यप्रामाण्यञ्च निर्णेतुं न पर्याप्तं कारणम्, पाशुपतशास्त्रतायाः सर्वांशे विप्रतिपन्नत्वात्। अयमेव न्यायः पाञ्चरात्रेऽपि; तत्रापि सर्वांशे प्रामाण्यस्य पाशुपतैः, अन्यैर्वाऽस्वीकारेण विप्रतिपत्तिः समाना। न हि शास्त्रपदं तत्रैव मुख्यम्; अन्यथा वेदस्याप्यशास्त्रत्वापत्त्या वैदिकस्सम्प्रदायमार्गोऽसांप्रदायिकः, अनादरणीयश्च स्यात्॥

सर्वेषामागमानां पुराणादीनां च परमात्मस्वरूप-
एव प्रामाण्यम्, पुराणतामसत्वादिकथायोगश्च ।

कूर्मपुराणे–पिष्टपशुयाग-पश्वालम्भयोर्वैदिक-पाञ्चरात्रविषयत्वेन विवेक-व्यवस्था ह्यन्यथाऽप्रमाणं स्यात् । तत्र शास्त्रपदेन प्राधान्येन श्रुति-तदविरुद्धस्मृतीतिहास-पुराणादीनि यदि गृह्यन्ते, तर्हि पाञ्चरात्रप्रामाण्यम्, विष्णूत्कर्षादिकं चैव ततः पाशुपतप्रामाण्यम्, शिवोत्कर्षादिकं चावगम्यते, इति तुल्यं प्रामाण्यमुभयोरपि वेदाविरुद्धांशे । शिवोत्कर्षप्रतिपादनपराः, किं बहुना ? विष्णूत्कर्षप्रतिपादकश्रुत्यपेक्षयाऽपि भूयस्य उपनिषद उपलभ्यन्ते, यत्र विष्णोरपि शिवादुत्पत्तिः, प्रादुर्भावो वाऽवगम्यते । तदभेद-प्रतिपादकोपनिषदोऽपि काश्चनोपलभ्यन्ते--स्कन्दोपनिषदादयः, श्रीरामतापन्युपनिषदादयश्च, इति सर्वाविरोधाय तन्मूलतत्त्वप्रकृत्युपहिततुरीयब्रह्म-स्वरूपशास्त्रयोनितापन्नमेव सर्वा उपनिषदः प्रतिपादयन्ति । सर्वेषां पुराणानां श्रुत्यविरुद्धपरमात्मस्वरूपप्रतिपादन एव तात्पर्यमिति वायुपुराणमपि श्रावयति । न च शिवोत्कर्षप्रतिपादकानि वैयासिकत्वेऽपि तामसान्यप्रमाणमिति वैयासिकं मतम् । तामसत्वं यदि तत्कर्तुस्तमोगुणेनाभिभवेन, तर्हि व्यासो नारायणावतारोऽपि तमोगुणाभिभूतः प्रमादालस्यादिग्रस्त एव पुराणानि व्यरचयदिति कथामात्रं न श्रद्धेयं कस्यापि । तमोगुणप्रधानमायाशरीरकत्वेन संहर्तृत्वादिकं परमात्मनोऽभिप्रेत्य तामसत्वं तु नाप्रामाण्यप्रयोजकम् ॥

पाशुपत-पाञ्चरात्रप्रामाण्यविवेकः

भगवत्पादा अपि "पत्युरसामञ्जस्यात्" इत्यसामञ्जस्यपदस्वारस्यं मनसि निधाय श्रुतिविरुद्धांश एवाप्रामाण्यं पाशुपतस्य । स एव न्यायः पाञ्चरात्रेऽपीत्युभयत्रैकरूप्यमेवाभिप्रयन्ति । न हि पशुपतिदृष्टार्थतद्वाक्यघटितत्वेन दृष्टार्थविधया तदागमवाक्यप्रामाण्यम्, किन्तु शिववाक्यत्वेनैव । वेदेऽपि हि दृष्टार्थान्यपि वाक्यानि "व्रीहीनवहन्ती"त्यादीनि दृश्यन्ते, अदृष्टार्थान्यपि । न च कुत्राप्येकस्य वाक्यस्य दृष्टार्थत्वमात्रेण सर्वं वाक्यम्-प्रमाणमित्यनुमानम्; अन्यथा विप्रलम्भकवाक्यानामपि कस्यचनाबाधितार्थकत्वेन सर्वाण्यपि वाक्यानि तदीयानि प्रामाण्यमश्नुवीरन् ॥

अनाप्ताप्रणीतत्वमेव प्रामाण्यकारणम्
न तु तत् कर्तृगौरवप्रयुक्तम् ।

तत्तद्वाक्यानामनाप्ताप्रणीतत्वमेव तत्तत्प्रामाण्यप्रयोजकम् । अनाप्त-

त्वनिर्णयस्तु प्रमाणान्तरैर्विरोधैकावसेयः पाञ्चरात्रे, पाशुपते, अन्यत्र वा सत्यपि कर्तृगौरवे वाक्यविशेषे तदीये सति प्रमाणान्तरविरोधे समानः न हि सर्वमदृष्टार्थमेवोपदिश्यते । अवैदिकवाक्यमप्यदृष्टार्थत्वे न प्रमाणं भवति, किन्तु वेदाविरोध एवादृष्टार्थांशेऽपि प्रमाणम् । सर्वथा तु शास्त्रयोनित्वसूत्रं न शैवागमाप्रामाण्यनिरूपणपरम् ; ज्ञेयब्रह्मस्वरूपप्रसङ्गे तस्यासङ्गतत्वात्, शास्त्रपदेन पाञ्चरात्रमात्र ग्रहणायोगात्, अन्यथा वेदस्य, स्मृति-पुराणेतिहासादीनामशास्त्रत्वप्रसङ्गाच्च ॥

पाशुपताप्रामाण्यं शास्त्रयोनित्वाधिकरणविषयः ।

एतेन—

"शैवाद्यागमसंप्राप्तदृष्टगेन फलेन तु ।
तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयते ॥
ईशवाक्यत्वत इति चेत्तद्गव्यभिचारिणा ।
अप्रामाण्यानुमा च स्याद् न पृथक्त्वानुमेश्वरे ॥
पुंस्त्वहेतुबलादेव पूर्वोक्तेनैव वर्त्मना ।
शास्त्रयोनित्वमेतेन कारणस्य बलाद् भवेत् ॥
नावेदविन्न तर्केण मतिरित्यादिवाक्यतः ।
तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ॥
वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः ।
किञ्चिज्ज्ञत्वं हि पुंस्त्वेन साध्यं साधयितुं सुखम् ॥
वृत्तकृन्नाखिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत् ।
इत्याद्यनुमया स्पर्धि नाऽनुमानं परेशितुः ॥
शक्तं विज्ञापने चाति प्रसङ्गोऽनुमयेदृशा ।
वस्तुत्वात् तुरगः शृङ्गी पुष्पवत् खं सुतैर्युता ॥
चित्रिणी च रसः षष्ठो रसत्वात् सोत्तरो भवेत् ।
उपक्रमादिलिङ्गेभ्यो नाऽन्या स्यादनुमा ततः ॥

इत्यनुव्याख्यानम्—व्याख्यातम् ; अनुक्तोपालम्भनत्वात्, दोषसाम्याच्च ॥

शैवाद्यागमानां प्रामाण्यं वेदाविरोधेन, न त्वदृष्टार्थत्वेन ।

तथाहि—न ह्येकत्राद्दष्टार्थत्वेन शैवागमानामदृष्टार्थे प्रामाण्यवादं

शैवागमानां शैवा मन्यन्ते, किन्तु वेदाविरुद्धशिववाक्यत्वेन, यथा पाञ्चरात्रस्य, नापि फलसंवादेन; तस्यादृष्टार्थे प्रामाण्याप्रयोजकत्वात्, अन्यथा पाञ्चरात्रवाक्यानाम्, किं बहुना? वेदवाक्यानामप्यप्रामाण्यापत्तेः। व्यक्तञ्चैतत् शाबरभाष्यादौ॥

एकतमागमविरोधेनागमान्तरस्य
नाप्रामाण्यम्; नियामकाभावात्।

यदि शिवागमः पाञ्चरात्रविरुद्धत्वादप्रमाणम्, तर्हि पाञ्चरात्रमपि शिवागम-हिरण्यगर्भाद्यागमविरुद्धत्वात्, शिवोत्कर्षप्रतिपादकपुराण-महाभारतादिविरुद्धत्वात्, ब्रह्म-रुद्रयोरपि परमात्मपदार्थत्वप्रतिपादकविष्णुपुराणवचनविरुद्धत्वाच्चाप्रमाणं स्यात्, इति पाञ्चरात्रस्येव नानुमानाधीनं शिवागममात्रस्य प्रामाण्यम्, न वाऽनुमानगम्यं जगत्कारणत्वं वैशेषिकनैयायिकसिद्धान्तयोरिव, इति वितथमत्राप्रसक्तमेव पाञ्चरात्रबाधितत्वानुमानप्रदर्शनम्॥

शैवागमाप्रामाण्यकारणसाम्यं पाञ्चरात्रेऽपि।

न च पुंस्त्वेन कारणत्वं शिवस्य शैवा मन्यन्ते, किन्तु शक्तत्वेन। पुंस्त्वं शक्तत्वं चेत्यनर्थान्तरम्। न हि नारायणोऽप्यशक्तः सर्वं प्रपञ्चं सृजति, रक्षति, संहरति, नियच्छति, आवृणोति, मोचयति वा। किं विष्णुरप्यनुमानेन जगत्कारणम्? पुरुषसूक्तं कथमन्यथा विष्णुपरम्। पुरुषसूक्तमपि शिवपरमेवेति शिवार्कमणिदीपिका विशदयतीति। यदि पुरुषपदप्रतिपाद्यत्वं शिवस्यैव, तर्हि कामम्, पाशुपतस्य पुरुषसूक्तमेव मूलं भवतु। तथाच यदि शिवे जगत्कारणत्वं पुंस्त्वात्, पुरुषत्वाद्वा, तर्हि नारायणोऽपि तत एव जगत्कारणं भवितुमर्हति। न च विष्णुरिव शिवोऽपि केवलानुमानगम्यः; अन्यथा पाञ्चरात्रसिद्धस्येव, पाशुपताद्यागमसिद्धस्यापि न जगत्कारणत्वं पाशुपताद्यागमबोध्यत्वमात्रेण। वेदाविरुद्धता त्वंशविशेष उभयत्र समाना, आगमानां सर्वेषां तत्तत्प्रतिपाद्यदेवताविशेषाराधनविधानमात्रे तात्पर्यात्॥

आगमविशेषेणागमान्तरनिन्दा 'न हि निन्दा'न्यायेन।

निमित्तकारणत्वे, निमित्तोपादानोभयकारणत्वे एव वा न निर्भरः; आराध्यतया नियामकत्वमात्रेण सिद्धेः, इति आराध्यस्य शिवत्व-विष्णुत्वा-

दिना न व्याहतिः, इत्युपादानकारणतापरत्वविरोधः सर्वेषामपि वैदिकसमादृतानामागमानाम्। तत्र शिवोत्कर्ष-विष्णूत्कर्षादिकम्, अपरापकर्षादिकञ्च 'न हि निन्दा' न्यायेन, यथा पाञ्चरात्रपूजाविधानेन वैखानसपूजाविधाननिन्देति पाञ्चरात्ररक्षोक्ता रीतिरेवात्र शरणम् ॥

ज्ञेयतत्त्वविषये पाञ्चरात्रस्याप्यप्रामाण्यम् ।

ज्ञेयतत्त्वविषये तु परस्परविरोधादुभयाप्रामाण्यम्; निर्विशेषस्यैव शास्त्रयोनित्वात्। अत एव द्वितीयाध्याये पातञ्जल-पाशुपत-पाञ्चरात्राणां सर्वेषां ज्ञेयतत्त्वविषये विरोधादप्रमाणता, तद्दृष्ट्या शाक्तागमाप्रामाण्यमपि नाद्वैतसिद्धान्तानिष्टम्। न हि पशुपतिः, सदाशिवो वा केवलं वृत्तकृत्, किन्तु सर्वकारणमिति न तस्य सर्वज्ञत्वं विरुध्यते ॥

द्वितीयवर्णके मतद्वयाविसंवादः ।

न चात्र न्यायसुधा भगवत्पादानां भाष्यं निरस्यति, प्रत्युत छिद्रान्वेषिण्यपि सा द्वितीयवर्णकं भगवत्पादानां हृदयेन समाद्रियते ॥

न्यायसुधायाः प्रथमवर्णकनिरासप्रकारः ।

तत्र प्रथमं वर्णकमधिकृत्य तु सा एवं वर्णयति—अत्र केचित् शास्त्रस्य योनिरिति व्याकुर्वते; तदनुपपन्नम्; प्रकृतानुपयोगात्। न हि शास्त्रकारणत्वं जगत्कारणत्वे हेतुः; व्याप्त्यदर्शनात्। वेदस्यापि सकलजगदन्तःपातित्वेन सर्वकारणत्वेन सिद्धस्य सार्वज्ञस्य तदेकदेशकारणत्वेन स्फुटीकरणासम्भवात् स्फुटीकरणार्थं शास्त्रयोनित्वसूत्रमपि न युक्तम् ॥

प्रधानकारणतानिरासस्य नोपयोगः ।

प्रधानादिव्युदासस्तु सर्वस्याचेतनकारणत्ववादिनं साङ्ख्यं प्रति चेतनकारणताया असिद्धत्वाद् नावसरति। न हि ब्रह्मणस्तन्मते जगत्कारणत्वं शास्त्रयोनित्वसिद्धम्। प्रधानवादव्युदासो हीक्षत्यधिकरणस्य कृत्यम्, न त्वस्य सूत्रस्य; अन्यथेक्षत्यधिकरणवैयर्थ्यापत्तिः, तस्य पौनरुक्त्यं वा ॥

वेदकर्तृत्वस्य सर्वज्ञत्वासाधकत्वम् ।

न च वेदकर्तृत्वेन सार्वज्ञम्। यो यस्य कर्ता, स ततोऽप्यधिक-

तरविज्ञानवानिति व्याप्तिः पाणिन्यादीनामिव स्वतन्त्रकर्तृत्वे । न चापौरुषेये वेद ईश्वरस्य स्वातन्त्र्यम्; पौरुषेयत्वापातात् । यथा-पूर्वमुपदेशमात्रेण तु वेदोपाध्यायत्वमेव स्यात्, न वेदकर्तृत्वम् ॥

वेदस्य ब्रह्मविवर्तत्वं न सर्वज्ञताहेतुः ।

तस्यैव विज्ञानशक्तिविवर्तत्वात् शास्त्रस्य सर्वविषयज्ञानात्मत्व-मीश्वरस्येति तु वियदादीनामपि ब्रह्मविवर्तत्वाविशेषात् प्रकाश-शक्त्यापत्त्या न सम्भवति, इति रज्जौ भुजङ्गवद् ब्रह्मण्यारोपितो वेद इति दिशाऽपि न सर्वज्ञत्वं ब्रह्मणोऽत्र साधयितुं शक्यम् । न ह्यत्र पक्षे पाणिन्यादिदृष्टान्तोपपत्तिः । न हि पाणिनौ व्याक-रणमारोपितम् । आरोप्यगता शक्तिरधिष्ठानेऽपि कुत्र वा दृष्टा ? येन वेददृष्टान्तेन ब्रह्मणः सार्वज्ञं साधयितुं शक्येत । तस्मादपव्या-ख्यानमिदम्—इति ॥

प्रधानाद्यचेतनकारणतानिरासः प्रथमवर्णकफलम् ।

सत्यम्, वेदहेतुत्वेन ब्रह्मणः सार्वज्ञं साध्यते पाणिन्यादिदृष्टान्तेन, तेन च प्रधानादिव्यावृत्तिः । यद्यपि साङ्ख्यस्य चेतनकारणत्वमसिद्धम्; तथापि जन्मादिसूत्रेण चेतनकारणत्वसमर्थनात् तदाक्षेपस्तस्य न विरुध्यते । सम्प्रतिपन्नञ्चेदमचेतनमात्रकारणत्वं न श्रौतमिति कृत्वैव हि शास्त्रयोनित्वा-धिकरणमिति ॥

प्रधानकारणतानिरासार्थत्वेऽपीक्षत्यधिकरणावैयर्थ्यम् ।

ईक्षत्यधिकरणं श्रौतं जगत्कारणत्वमपि प्रधानस्यैवेति कृत्वैव प्रवृत्तं तद्वादं निरस्यति, इति शास्त्रयोनित्वम्, जगत्कर्तृत्वं वा सांप्रतं नासिद्धम्, इति प्रधानाद्यचेतनकारणव्युदासस्य जन्माधिकरणसिद्धत्वेऽपि न हानिः । अधिकाशङ्कया पूर्वोक्तविधयेक्षत्यधिकरणस्य प्रवृत्तत्वात्, इति न जन्मा-दिसूत्रेणेक्षत्यधिकरणगतार्थता, येनाचेतनतावादनिरासादीक्षत्यधिकरणस्य पुनरुक्तता ॥

अपौरुषेयत्वेऽपि वेदस्येश्वरकर्तृकता तत्प्रवर्तितत्वमात्रेण ।

तत्र वेदकर्तृत्वं ब्रह्मण इतरानपेक्षं सार्थसर्ववेदप्रवर्तकत्वमात्रम्, न तु तत्कर्तृत्वम् । तच्च न विना वेदार्थज्ञानं स्वतन्त्रस्यापि, इति नोपाध्यायसाम्य-

मीश्वरस्य। न हि सार्थसर्ववेदप्रवर्तकत्वमप्यध्यापकानाम्, इति नोपाध्यायोऽपि तादृशस्ततोऽप्यधिकतरविज्ञानवानेवेति व्याप्तिसिद्धिः, न वा वेदपौरुषेयत्वापत्तिः, सर्वज्ञासिद्धिर्वा ॥

तदिदं वेदकर्तृत्वमादायेश्वरसार्वज्ञमुपपादितम्—केवलनिमित्तकारणतापत्तेऽपि सार्वज्ञं साधनीयमिति। तेन च "वाचा विरूपनित्यया" इति वचनावगतं नित्यत्वमपि वेदस्य वार्यते ॥

वेदस्य ब्रह्मविवर्तत्वेऽपि तत्कर्तृत्वेन सार्वज्ञसाधनम्।

एवमप्यविद्याविषयविवर्तोपादानत्वं कर्त्रन्तरशङ्कावारणपूर्वकमपि कर्तृत्वमित्यभिन्ननिमित्तोपादानत्वमपि साधनीयमिति मत्वा वा सर्वज्ञत्वं ब्रह्मणोऽत्र साधयितुं शास्त्रयोनित्वसूत्रम्। इदं च ब्रह्मणः सर्वज्ञत्वं ब्रह्मणस्तदुपाधिमायापरिणामात्मकवृत्तिमत्त्वेन, साक्षिस्वरूपस्य तस्य सम्बन्धमात्रेण वा, न तु घटादिज्ञाने जीवस्येवान्तःकरणवृत्त्याश्रयत्वेनेति प्रस्थाने तु सार्वज्ञं सर्वप्रपञ्चतादात्म्यवत्त्वमेव ॥

तच्च तादात्म्यं "सन् घटः" इत्यादौ सदंशतादात्म्येन, सच्चिदंशद्वयतादात्म्येन वा, न चिदंशमात्रतादात्म्येन; अन्यथा नित्यपरोक्षाणां चिदात्मनाऽपि प्रतीत्यापत्तिः, इति नित्यापरोक्षाणाम्, अनित्यापरोक्षाणां च भातिप्रतीतिनिर्वाहार्थं ब्रह्म चिदात्मनाऽपि ज्ञातमुपादानमिति साधनार्थं शास्त्रयोनित्वसूत्रमित्यपि केचन ॥

व्यक्तं चैतत् न्यायरक्षामण्यादौ। तेन च शास्त्रम्, चिदुपादानकम्, नित्यप्रकाशनशक्तिमत्त्वात्, यन्नित्यप्रकाशनशक्तिमत्, तत् तत्प्रकाशनशक्तिमदुपादानकम्, यथा दीपप्रभा, इत्यनुमानविधया ब्रह्मोपादानत्वमप्यनेन सूत्रेण साध्यते। भाष्यं तु ब्रह्मणोऽभिन्ननिमित्तोपादानत्वसिद्धान्तपरमस्यापि न्यायस्योपलक्षणम्। तेन च न केवलं सदात्मना, किन्तु चिदात्मनाऽपि ब्रह्मणः केषुचन कार्येष्वनुवेधो ज्ञाप्यते ॥

शास्त्रविवर्ततायामपि साङ्ख्यमतनिराससिद्धिः।

तत्राऽऽकाशादेः कार्यविशेषस्य विवर्तता सत्तांशाधिक्येन, इति तस्याविशदप्रकाशमानत्वेऽपि न चिदुपादानताविरोधः। सदात्मना विवर्तमानानां जगतां सन्मात्रत्वम्, सत्तादात्म्यं वा जडत्वेऽप्युपपद्यते, इत्युपादा-

नगतां चिच्छक्तिं नापेक्षते, इति शङ्कायां ब्रह्मणः चिच्छक्त्या आधिक्येन विवर्तमानता वेदादिषु प्रकाशकेषु दृष्टेति निरूपणव्याजेन सर्वज्ञत्वं साधयितुं शास्त्रयोनित्वसूत्रम्। अत एव श्रुतिः—"तमेव भान्तमनुभाति सर्वमि"ति ॥

तेन च कारणं ब्रह्म न सन्मात्रमचेतनसाधारणम्, किन्तु चिद्रूपमपीत्यनेनाऽपि प्रकारेण साङ्ख्यपक्षानुत्थितिरत्र साध्यते ॥

एतेन—रज्जुसर्पदृष्टान्तोऽपि–व्याख्यातः। उपादानधर्माणाम्, अधिष्ठानधर्माणां वाऽऽरोप्ये संसर्गारोपः सत्तादात्म्यमात्रम्, प्रकाशनशक्तिमत्कारणाधिष्ठानधर्मसंसर्गमात्रेण चित्तादात्म्यमपीति फलतीति सूचनार्थं प्रथमं वर्णक्रम्। न चैतत् प्रकृतानुपयुक्तम्; उक्तरीत्योपयोगात्। पाणिन्यादिदृष्टान्तः कर्तृत्वोपपादनदृष्ट्या, इति न तेनात्र विरोधः, इति जन्मादिसूत्रमिव शास्त्रयोनित्वसूत्रप्यमद्वैतसिद्धान्तानुगुणमेव स्वरसम्, द्वैतसिद्धान्ते तु पाशुपतमतनिरसनं देवतामीमांसान्तिमसूत्रसिद्धस्यैवात्र सूत्रणात् ब्रह्मस्वरूपनिर्णये साक्षादेवागमप्रामाण्यवादस्य द्वितीयाध्यायद्वितीयपादसङ्गतस्यात्र सूत्रणस्यानुपयुक्तत्वात्, असङ्गत्या च शास्त्रयोनित्वसूत्रं न स्वरसमिति सर्वमनवद्यम्—इति ॥

इति शास्त्रयोनित्वाधिकरणम् ॥

अथ समन्वयाधिकरणम् ॥

॥ तत्तु समन्वयात् ॥

समन्वयाधिकरणप्रयोजननिष्कर्षः।

तत्त्वम्पदार्थशोधनमुखेनाद्य-द्वितीयसूत्राभ्यां प्रत्यगभिन्नब्रह्मस्वरूपं जिज्ञास्यं निष्कृष्य भेदप्रत्यक्षविरोधात्, सत्त्वप्रत्यक्षविरोधाच्च भेदमिथ्यात्वस्य, जीवब्रह्मैक्यस्य चायोग इति शङ्कां शास्त्रयोनित्वसूत्रेण निरस्य, सर्वेषां वेदवाक्यानां साक्षात्, परम्परया वाऽद्वैत एव तात्पर्ये कर्मकाण्डप्रतिपाद्यत्वम्पदार्थानुवादेनोपासनाकाण्डार्थसंग्रहेण च विशेषणांशत्यागेनाखण्डाकारवृत्त्युपहितमनावृतं चित्तत्त्वमेव मुख्यतात्पर्यविषय इति प्रतिपादनार्थं सूत्रम्—"तत्तु समन्वयादिति" ॥

समन्वयाधिकरणविषयः तत्त्वमस्यादिवाक्यम्।

अनेन जीवातिरिक्ततत्पदवाच्यार्थ एव तात्पर्यमुपनिषदामर्थवादत्वं विना

वाक्यार्थः, इति तत्पदवाच्यार्थे सिद्धेऽपि तत्पदलक्ष्यार्थासम्भवः, इति तत्त्वमस्यादिवाक्यं नाखण्डार्थपरमिति शङ्काया निवर्तनेन "शास्त्रयोनित्वघटकशास्त्रपदेनोपक्रमोपसंहारादितात्पर्यग्राहकलिङ्गोपबृंहितकर्मोपासनाकाण्डार्थतत्त्वंपदवाच्यार्थानुवादकपूर्वकम् "स आत्मे"ति तत्पदार्थस्य त्वम्पदलक्ष्यार्थाभेदमुपदिश्य प्रवृत्तं तत्त्वमसिवाक्यमेव विवक्ष्यत इति ज्ञापयितुं "तत्तु समन्वयादि"तिसूत्रम्। तेन हि न कर्मकाण्डमात्रस्य, कर्मोपासनाकाण्डद्वयस्य वा, किन्तु निर्विशेषवाक्यानामेव मुख्यं तात्पर्यम्, तदविरोधेनैव सर्वेषां वेदानां प्रामाण्यम्। तथाच श्रुतिः—सर्वे वेदा यत्पदमामनन्ती'ति। व्यक्तञ्चैतद् भगवत्पादभाष्ये "तत्तु समन्वयादि" त्यत्र, यत्र शास्त्रपदेन तत्त्वमस्यादिमहावाक्यमेवानुसन्धीयते। तेन च 'यो होता सोऽध्वर्युः' "औदुम्बरो यूपो भवति" इत्यादाविवोद्देश्यसमर्पकस्य कर्मोपासनाकाण्डद्वयस्योपजीव्यत्वेऽप्येतादृशे स्थल उपजीवकस्यैव प्राबल्यात्, अपच्छेदन्यायाच्च भेदपराणि सर्वाणि यावदखण्डाकारवृत्त्येव प्रमाणानि, ततः परं तु न शास्त्रम्, न वा कर्म, नापि वा विशिष्टं जीवस्वरूपम्, ईश्वरस्वरूपं वौपाधिकमिति ज्ञाप्यते। व्यक्तं चैतदाकरे–यत्र नोपासनाविधिशेषत्वं ब्रह्मणः, तस्य ज्ञानमात्रेण मुक्तिः, तच्च निर्विशेषमेव, न तु सविशेषमेवेत्यादि निरूप्यते ॥

अत एव सिद्धार्थेऽपि वेदान्तानां प्रामाण्यनिरूपणपरस्य द्वैताद्वैतभाष्यसिद्धान्तस्य सार्थक्यम्। प्रतिपत्तिविधिशेषतयैव शास्त्रस्य ब्रह्मसमर्पकत्वे तद्व्यवस्थापनं वितथम् ॥

द्वैतरीत्या समन्वयाधिकरणार्थनिष्कर्षः।

एतेन—

"त एवान्वयनामानस्तैः सम्यक् प्रविचारिते।
मुख्यार्थो भगवान् विष्णुः सर्वशास्त्रस्य, नापरः॥"

इत्यनुव्याख्यानम्—व्याख्यातम् ॥

अत्रान्वयपदमुपक्रमादितात्पर्यग्राहकपरम्। तेन च विष्णोरेव सर्वशास्त्रप्रतिपाद्यत्वम्, न रुद्रादेरिति पूर्वसूत्रार्थ एवोपसंह्रियते। अत्र पाञ्चरात्रप्रामाण्यं पूर्वाधिकरणे निर्धारितम्, अत्र तु सर्वशास्त्रप्रतिपाद्यत्वव्यवस्थापनेन सर्वेषामपि शास्त्राणां प्रामाण्यम्, किं बहुना ? वेदानामपि

पाञ्चरात्रप्रमाणाद् न्यूनमेव प्रामाण्यमिति ज्ञाप्यते। तदाशयस्तु—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ॥"

इति निर्दिष्टेषु पाञ्चरात्रस्य नारायण एव कर्ता, इति पाञ्चरात्रप्रामाण्यस्यैव समर्थनाद् वेदस्यापि तदन्तर्गमात् तत्प्रामाण्याधीनमेव प्रामाण्यम्, तदनुसारेणापौरुषेयो ऽपि वेदो ज्ञेयः ॥

तत्रोपक्रमादिकमेव तत्त्वार्थनिर्णायकम्, न त्वापाततः प्रतीतिः। यस्य कस्यापि यथा कथञ्चित् व्याख्यानमुपक्रमाद्यनुसार्येव प्रमाणम्, नान्यथा। अत्र 'समन्वयादि'ति संशब्दादुपक्रमादिकमपि सम्यग् विचार्य निर्णीतमेव कार्यकारि, न तु यथा कथञ्चिदनुसन्धीयमानमिति सूच्यते ॥

तथा चैवमत्र सूत्रयोजना—सम्यग् विचारितोपक्रमादिलिङ्गक-शक्तिलक्षणान्यतरसम्बन्धावगतसर्वशास्त्रप्रतिपाद्यो भगवान् विष्णुरेव—इति। अत्र तत्पदं पूर्वसूत्रार्थशास्त्रयोनिपरम्, आवृत्त्या ब्रह्मपरमपि—इति ॥

पाञ्चरात्रप्राधान्यवादस्य गुणसौरभेन विरोधः।

अत्र समन्वयपदस्योपक्रमादितात्पर्यग्राहकलिङ्गपरत्वे, तत्पदस्य शास्त्रयोन्यर्थकत्वे, प्रथमसूत्रप्रस्तुतब्रह्मानुषङ्गेण तत्पदावृत्त्या ब्रह्मण एवान्वये च न विप्रतिपत्तिः। शास्त्रपदार्थमात्रे त्वस्ति विप्रतिपत्तिः। तत्रापि वेदान्तवाक्यानामेव विषयत्वाद् न वेदप्रामाण्ये, वेदान्तप्रामाण्येऽपि वा विप्रतिपत्तिः। पाञ्चरात्रप्रामाण्याधीनमेव वेदस्यापि प्रामाण्यम्, तदनुसारेणैव वेदेऽप्युपक्रमोपसंहारादिलिङ्गनिर्णय इति तु गुणसौरभे वेदविरुद्धेंऽशे पाञ्चरात्रस्याप्यप्रामाण्यमित्युक्तिस्तूदरशूलम् ॥

न चेदं सूत्रम्, भाष्यम्, अनुव्याख्यानं वा किमपि तदविरोधि। पाञ्चरात्रविरुद्धशैवाद्यागमाप्रामाण्यं हि शास्त्रयोनित्वप्रस्तुतम्। भाष्येऽपि शास्त्रयोनित्वाधिकरणे—

"ऋग्यजुस्सामाथर्वाश्च भारतं पाञ्चरात्रकम्।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥

यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्मवत् ॥"

इति स्कान्दवचनेनेदमवगम्यते—सर्वापेक्षया पाञ्चरात्रं प्रबलमिति।

तत्र पाञ्चरात्रस्य साङ्ख्यादिभ्यः कर्तृगौरवश्रवणं तु तत्प्रशंसामात्रेण, न तु तदपौरुषेयवेदापेक्षयाऽपि तस्य प्राबल्ये निर्णायकम्। तद्धि पौरुषेयेषु साङ्ख्यादिषु 'पाञ्चरात्रस्य कर्ता नारायणः स्वयम्'' इति स्वतन्त्रकर्तृकत्वेन पौरुषेयत्वेऽपि 'न हि निन्दा'न्यायेन स्तुतिमात्रम्। अत एव साङ्ख्यादिष्वपि कपिलादिकर्तृकत्वं तत्र वर्ण्यते, पाशुपतस्यापि शिवकर्तृकत्वमिव।

न चैतावता पाशुपताद्यप्रामाण्यं स्यात्; अन्यथा वेदे कर्तुरस्मरणात्, वेदस्याप्रामाण्यं स्यात्, अपौरुषेयवेदविरोधेन पौरुषेयाणां सर्वेषामप्रामाण्यं वा स्यात्। तत्र तु द्वितीयः कल्प एव साधुः। सर्वथा तु वेदार्थोऽपि पाञ्चरात्रानुसारेणैवानुसन्धेय इति तु न युक्तम्॥

पाञ्चरात्रप्राधान्यस्य पूर्वाधिकरणेनावधारणाद् द्वैतवादे समन्वयसूत्रवैयर्थ्यम्।

तत्र पाञ्चरात्रतुल्ययोगक्षेमं प्रामाण्यं भारतस्यापि पौरुषेयस्य स्यात्। तत्र च शिवाराधनं भगवता श्रीकृष्णेनापि कृतमिति विशदम्। विष्णुसहस्रनाम्नामिव शिवसहस्रनाम्नामपि वेदाविरोधः शिवप्राधान्यपक्षस्य दशोपनिषत्स्वीश्वरेशान-परमेश्वर-शिव-शक्तिप्रयोगादगम्यत आधिक्येन॥

वस्तुतस्तु—पाञ्चरात्रमात्रं शास्त्रमवलम्ब्य शास्त्रयोनित्वे पूर्वाधिकरणेन निर्धारिते, तद्विरुद्धानां प्रामाण्यस्य निषेधमात्रेण सौगताद्यागमानामिव शैवागमावसेयं न प्रमेयम्, न वा तत्त्वमिति स्थिते, पूर्वसूत्रोपात्तशास्त्रयोनित्वस्य पाशुपतादिप्रभेदेषु प्रतिवादिभिरप्यनङ्गीकारात् किंप्रयोजनमिदमपि सूत्रम्?

परमार्थतस्तु—सर्वेषां कर्मकाण्डगतानामपि पदानां विष्णुपरत्ववादिनां द्वैतिनां दृष्ट्या शैवागमानाम्, किं बहुना? सौगतागमानामपि विष्णुपरत्वेन परविद्यात्वात् किमनेन शैवाद्यागमाप्रामाण्यस्थापनेन? यदि तेषामवान्तरतात्पर्यस्यापि निरसनं कर्तव्यमिति तदप्रामाण्यव्यवस्था, तर्ह्यवान्तरतात्पर्यविधयाऽऽराधनस्यापि तदनुगुणफलदातृत्वस्य—

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।

तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥"
"देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः ।"

इत्यादिना "येऽप्यन्यदेवताभक्ताः" इत्यादिना चावगतत्वाद् देवतान्तराराधनस्य तत्तत्परिच्छिन्नफलमात्रं विहायापरिच्छिन्नफलपरमात्मभावनयाऽऽराधनेनैव मुक्तत्वस्याप्यवगमात्, श्रीमदानन्दतीर्थैरपि चन्द्रेश्वरादिशिवाराधनस्य, स्वयं शिवक्षेत्राणां च कृतत्वात् शैवागमाप्रमाणीकरणं न क्षोदक्षमम् । विष्णुभक्ततया तदाऽऽराधनमेव यदि शिवाराधनमपि भगवदाराधनम्, तर्हि शैवागमदृष्ट्या शिवभक्तस्य विष्णोराराधनमपि न दुष्टम् । सर्वथा तु—

"मद्भक्तः शङ्करद्रोही मद्द्रोही शङ्करप्रियः ।
तावुभौ नरकं यातो यावच्चन्द्रदिवाकरम् ॥"

इत्युक्तरीत्या शिवनिन्दा, विष्णुनिन्दा वा, सर्वाऽप्यनर्थकरी, इति शरीरभेदमात्रं जीवात्मनामिव परमात्मांशानां विष्णु-शिवादीनामपि । स्वरूपं तु सर्वेषामेकमेव । तदुक्तम्—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः"

इत्युक्तरीत्या न जीवानां परस्परम्, न वा जीव-परमात्मनोर्भेददर्शनं श्रेयसे ॥

इति समन्वयाधिकरणम् ॥

॥ अथेक्षत्यधिकरणम् ॥

॥ ईक्षतेर्नाशब्दम् ॥

अद्वैतदृष्ट्येक्षत्यधिकरणार्थसंग्रहः ।

प्रथम-द्वितीयाधिकरणाभ्यां तत्त्वंपदार्थमुखेन जीव-ब्रह्मैक्यप्रतिपादनपरतैत्तिरीयक-बृहदारण्यकविषयवाक्यानि विचारितानि प्रत्यक्षादिप्राबल्यनिरासेन ॥

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्"

इति वचनावगतश्रुतिप्राबल्येन निर्णीतस्य तदर्थस्योपबृंहणं तृतीयेनाधिकरणेन, यत्र द्वितीयवर्णके तत्त्वमस्यादिमहावाक्यान्येव शास्त्रमिति निरणायि, यथा द्वैतमते ऋगादिवेदः, भारतम् मूलरामायणम्, पाञ्चरात्रञ्च मुख्यशास्त्रपदार्थः, अन्येषां तदविरोधेन शास्त्रत्वम्, एवं तत्त्वमस्यादिमहावाक्याविरोधेनैवाऽन्येषां प्रमाणानां नयनमिति ॥

तुरीयाधिकरणं तु न केवलं तैत्तिरीयक-बृहदारण्यकादि, किन्तु तत्पदार्थशोधनमुखेन जीवब्रह्मैक्यं साक्षात् तत्त्वमसिवाक्यमादायापि निरूपयितुम्। ततः सद्विद्यायाश्चिद्रूपमुखेनोपक्रमात् तस्याचेतनप्रधानपरत्वे विवक्षितजीवब्रह्मैक्यबाधाशङ्कां पूर्वोत्तरपक्षमुखेन निराचिकीर्षुः सूत्रकार ईक्षत्यधिकरणमारभते—ईक्षतेर्नाशब्दमिति । तेन च जगत्कारणं ब्रह्म न केवलं सद्रूपम्, किन्तु चिद्रूपमपि; याभ्यामविद्याकल्पिताभ्यां भानम्, आनन्दात्मना चाविद्याकल्पितेनाज्ञानमधिष्टानताप्रयोजकम् ॥

तत्र—"अनेन जीवेनात्मनाऽनुप्रविश्ये"ति जीवस्यापि परमात्मस्वरूपेणाप्रकाशमानस्यैव बन्धः, न तु स्वरूपेणेति ज्ञायते। उभयोरप्यखण्डात्मना ज्ञानमेवाज्ञाननिवर्तकं महावाक्येन जन्यत इति तु निष्कर्षः। तत्र साङ्ख्यप्रक्रियानुसारेण सद्विद्याया योजनं न संभवतीति बहुभिः सूत्रैर्निरूप्य सत्पदार्थश्चिद्रूपोऽपि व्यवस्थाप्यत इति भगवत्पादानुयायी पन्थाः ॥

द्वैतिदृष्ट्येक्षत्यधिकरणार्थसंग्रहः ।

श्रीमदानन्दतीर्थपादप्रवर्तितसम्प्रदायानुसारी निर्णयस्त्वत्र चतुर्भिरधिकरणैः सविशेषस्य ब्रह्मण एव, तत्रापि विष्णोरेव, न रुद्रादेः पाशुपताद्यागमानुसारेण पाञ्चरात्रसिद्धान्तविरोधिनेति निर्धार्य, निर्विशेषब्रह्ममुख्यतावादमपि निरसितुमीक्षत्यधिकरणमिति ॥

द्वैतिमतेनाद्वैतनिराकरणायोगः ।

अत्र निर्विशेषब्रह्मवादः किमागमविरुद्ध इति कृत्वा बादरायणेन निरस्यते, उतौपनिषद इति मत्वा, आहो सौगतादिमतवत् स्वबुद्धिमात्रकल्पित इति वा। आद्येऽपि तदागमस्य पाञ्चरात्रानुयायित्वं वा, न वा। तत्रान्त्ये शास्त्रयोनित्वाधिकरणेनैव गतार्थत्वाद् वितथमीक्षत्यधिकरणम्। आद्ये तु कथमप्रामाण्यम्? अस्ति चाद्वैतसिद्धान्तस्य पाञ्चरात्रेणाप्युपबृंह-

णम्। व्यक्तं चैतत् पाञ्चरात्राधिकरणे, शाक्ताधिकरणे वा अन्यथा "तत्तु समन्वयादि"त्यनेनैवाद्वैतवादनिरासस्य सिद्धत्वात् ततोऽपीक्षत्यधिकरणवैयर्थ्यम् ॥

अद्वैतवादस्यैवौपनिषदत्वम्।

एतेन—औपनिषदोऽद्वैतवाद इति मत्वा तन्निराकरणमत्रेत्यपि—परास्तम्। यदीदमौपनिषदत्वं तत्प्रमितत्वम्, तर्हि निषेधस्यायोगः। न च प्रमितं कुत्रापि निरस्यते। भेदवाक्यानि तु तत्त्वम्पदार्थोपस्थापकानुवादापेक्षितपुरोवादरूपाण्यनूद्य प्रवृत्तविध्यन्तराविरोधेन प्रमाणानि। यथा—"औदुम्बरो यूपो भवती"ति वैकृतविधौ नात्यन्तं यूपस्य खादिरत्वादेर्बाधः, न वा "यो होता सोऽध्वर्युरि"त्यत्रापि होतुर्होतृत्वस्य, एवमेव सविशेषवाक्यानि सर्वाण्युपासनाप्रकरणे पठितान्युपासनापेक्षितसत्यतापरतया चरितार्थानि, नात्यन्तिकसत्यतायां प्रमाणानि, इति यथा प्रमितमुभयमपि प्रमाणम्, इत्युपजीवकेनापि निर्विशेषवाक्येन भेदवाक्यानां बाधो न व्याहन्यते। इदमेवाभिप्रेत्य दीक्षितेन्द्रा लिखन्ति—

> "आत्मा ब्रह्मेत्यधीतः श्रुतिशिखरशतैर्निर्विशेषश्च सर्वै-
> रित्याद्येपो गुरूणां नतिनुतिविषये स्वाप्रणाम्यत्ववादः।"

इति। यदि—ब्रह्माद्वैतवादोऽयं केषाञ्चन प्रच्छन्नसौगतानामापाततः प्रतीतिमात्रमवलम्ब्य व्याख्यानमात्रम्, नोपक्रमादिलिङ्गकपाञ्चरात्रादितात्पर्यविषय इति मत्वाऽत्र तन्निरासः, तदाऽपि—"तत्तु समन्वयादि"त्यत्र समन्वयपदलब्धद्वैताभिमतन्यायेनैव चारितार्थ्येनास्याधिकरणस्य वैयर्थ्यात् घट्टकुट्यां प्रभातम् ॥

अद्वैतवादस्य न सौगतसाम्यम्।

एतेन—स्वबुद्धिकल्पितत्वपक्षोऽपि—परास्तः; तस्य सौगतादिवादस्येवाप्रमाणत्वे श्रुतिसमन्वयपादे विचारस्यासङ्गतेः, द्वितीयाध्यायद्वितीयपाद एव सङ्गतेश्च। न च द्वितीयाध्यायद्वितीये द्वैतमतदृष्ट्यैकमप्यधिकरणमद्वैतमतमवलम्ब्य तन्निरासनपरतया व्याख्यातम्। न च विज्ञानवादः, शून्यवादो वाऽद्वैतसिद्धान्तः, न वा लेशतोऽपि साम्यमस्त्यपि। केषाञ्चन शब्दानां पारिभाषिकाणाम्, अर्थस्य वा साम्यमकिञ्चित्करम्, अन्यथा—असत्पदेन सर्वस्य प्रपञ्चस्य तैः स्वीकारात्, असत्ख्यातिशब्दस्य तत्र प्रसिद्धत्वाच्च द्वैत-

सिद्धान्तः कथं न सौगतवादः स्यादिति सौगतनिराकरणेन द्वैतमतमपि न्यायसाम्यात् कथं न निरस्तं स्यात् ?

आस्तामियं प्रासङ्गिकी कथा। यदि सौगतनिरासन्यायेनैवाद्वैतवादस्य निरासः, तर्हीदमत्र विविच्यताम्—का वा सङ्गतिरत्राद्वैतवादनिरासस्य ? अन्यथा सौगतादिमतनिरसनार्थमपि समन्वयपादेऽपि कुतो न किमप्यधिकरणम् ? यद्यद्वैतिनां वेदप्रामाण्यात् ततो विशेषः, तर्हि वैदिकत्वादेव न तन्निरासनं युक्तं पूर्वोक्तविधया प्रमितत्वे, अप्रमितत्वे वोभयथापि ॥

स्यादेतत्—कथं वेक्षत्यधिकरणगानि सूत्राणि निर्विशेषब्रह्मवादं प्रतिक्षिपन्ति ॥

ब्रह्मणोऽवाच्यत्वेनानौपनिषदत्वशङ्का।

तत्र श्रीमदानन्दतीर्थपादानामनुव्याख्यानं प्रथमस्य सूत्रस्य—

"ईक्षणीयत्वतो विष्णुर्वाच्य एव न चान्यथा ॥
लक्ष्यत्वं क्वापि दृष्टं हि किं तदित्यनवस्थितिः।
माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा ॥
वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत्।
नावाच्यं तेन किञ्चित् स्यात् यत इत्यादिकैर्वदन् ॥
अवाच्यत्वं कथं ब्रूयाद् मूकोऽहमितिवत् सुधीः।
येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत् ॥
एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम्।
महती जायते लज्जा यत्र तत्राखिला रवाः ॥
अमुख्यार्था इति वदन् यस्तन्मार्गानुवर्तिनाम्।
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥

इति ॥

सूत्रभाष्यं तु—"स एतस्माद् जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" "आत्मन्येवात्मानं पश्येत्" "विज्ञाय प्रज्ञां कुर्वीत" इत्यादिवचनैरीक्षणीयत्वाद् वाच्यमेव। "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्" "इत्यादि श्रुति-स्मृतिभिश्च। अवाच्यत्वं त्वप्रसिद्धत्वात् ॥

"न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते।

पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः ॥
अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ।
अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेव परं स्मृतम् ॥"
इति गारुडे—न चाशब्दत्वमितरसिद्धमिति इति ।

ब्रह्मणोऽवाच्यत्वेऽप्यौपनिषदत्वात् तत्परतया सूत्रयोजनाऽयोगः ।

अत्र—ईक्षणीयत्वेनाशब्दत्वाभावः साध्यत इति भाष्याशयो वा, सविशेषं ब्रह्मैव वेदान्तप्रतिपाद्यम्, वाच्यत्वादिति वाऽशब्दत्वनिषेधेन तद्द्वारा वाच्यत्वसमर्थनेन च वक्तव्यम् । तत्र निर्विशेषं ब्रह्म, न शब्दप्रमाणप्रतिपाद्यम्, अशब्दत्वादित्यनुमाने हेत्वसिद्धिः, निर्विशेषब्रह्मण एव सर्ववेदप्रतिपाद्यत्वेनाशब्दत्वहेतोरसिद्धेः वाचकविधया शक्त्याऽप्रतिपाद्यत्वादिति विवक्षायां "विषं भुङ्क्ष्वे"त्यादि वाक्यगम्यशत्रुगृहभोजननिवृत्तौ, "वायुर्वै क्षेपिष्ठा देवते"ति वाक्यार्थे प्रशंसायां च व्यभिचारः ॥

अवाच्यस्यापि लक्ष्यत्वेनि दर्शनानि ।

प्रशंसादिपदवाच्यत्वस्य तल्लक्ष्ये सत्त्वेनाव्यभिचारे त्विक्षु-क्षीर-गुडादिमाधुर्ये सरस्वत्याऽप्याख्यातुमशक्ये व्यभिचारः । तस्यापि रसविशेषशब्दवाच्यत्वं वर्तत इति न युक्तम् । रसविशेषाणां बहुत्वेन तत्तद्रसविशेषशब्दवाच्यत्वं न तत्र प्रसिद्धम् । आकृतिशब्दार्थतायां घटविशेषे लक्षणामात्रगम्ये,

"सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति नः स्थितम् ।"

इति वचनसिद्धे, अभिहितान्वयवादे पदार्थगतशक्तिविशेषगम्ये, अन्विताभिधानवादेऽप्यन्वयसामान्ये पदानां शक्तावपि तद्विशेषे तत्तद्वाक्यगम्ये चाशाब्दे व्यभिचारः ॥

ईक्षणीयत्वेनाशाब्दत्वानुमानदूषणम् ।

न चेक्षणीयत्वेन वाच्यत्वसाधनमपि । तत्रेक्षणीयत्वपदेन साक्षात्कारविषयत्वमात्रस्य, अपरोक्षतया प्रतीयमानत्वस्य वा विवक्षायां वाच्यत्वपदेन वाच्यतावच्छेदकविशिष्टतया बोध्यत्वं विवक्ष्यते, उत तत्तद्धर्माविशेषितेन रूपेण । आद्ये घटत्वादिजातौ व्यभिचारः; वाच्यत्वस्य सोऽयं देवदत्तः

इत्याद्यपरोक्षसाक्षात्कारविषये स्वरूपमात्रे शक्तिविधया वाच्यत्वस्याभावात् तत्रापि व्यभिचारः ॥

एवमेवासत्ख्यातिवादिनां द्वैतिनां मतेऽसतोऽप्यपरोक्षतया प्रतीतेः स्वीकारात् तत्रापरोक्ष उक्तविधवाच्यत्वस्याभावात् तत्रापि व्यभिचारः। धर्माविशेषितेन स्वरूपविशेषेण वाच्यत्वविवक्षायामाकृतिशब्दार्थतावादिनां परेषां दृष्ट्याऽशाब्दव्यक्तिविशेषादौ व्यभिचारतादवस्थ्यम्। ब्रह्मादि-पदस्यापि—

"अत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मशब्दितम् ॥"

इति सङ्केतविशेषेण वाचकविधयोक्तवाच्यार्थस्यापि वाच्यत्वात् सिद्धसाधनम् ॥

वस्तुतस्तु—वाच्यत्वं तात्पर्यानुसारात् पदार्थज्ञानदशायाम्, न तु वाक्यार्थदशायाम्। तत्राभिहितान्वयवादे, अन्विताभिधानवादे वा पद-तद-र्थान्यतरगताज्ञातस्वरूपसच्छक्तिविशेषाधीनानुभवविषयत्वं निर्विशेषस्यापि न विरुद्धम्। न चोक्तानुभवविषयत्वेन सविशेषत्वम्; तत्र घटादीनामिव फलव्याप्यात्वाभावेन वृत्तिव्याप्यताया एव स्वीकारेण, वृत्तेश्चाज्ञाननिवृत्ति-मात्रेण चारितार्थ्येन तदधीनप्रकाशस्य संविद्रूपे मुख्येऽसम्भवेन वाच्यत्वेन, लक्ष्यत्वेन वाऽखण्डाकारसाक्षात्कारजन्याज्ञाननिवृत्त्युपलक्षितस्य स्वरूपस्य सविशेषत्वं न सम्भवति ॥

निर्विशेषस्य साक्षादवाच्यत्वेऽपि शाब्दबोधोपपत्तिः।

सति चैवं विशिष्टवाच्यतायामपि तात्पर्यवशात् प्रसिद्धस्य विशेष्यां-शमात्रस्य वृत्त्युपहितात्मना वाच्यार्थत्वं न व्याहतम्। अत एव विशिष्ट-वाचकस्य शब्दस्य विशेषणांशस्य बाध्यस्य त्यागेन तत्त्वमस्यादिवाक्य-जन्यसाक्षात्कारविषयत्वं निर्विशेषस्य, इति निर्विशेषस्य साक्षात्कारोत्पत्तेः पूर्वमेव वाच्यत्वम्, न तु तदुत्पत्त्यनन्तरमपीक्षणीयत्वेन वाच्यत्व-समर्थनम्। ईक्षणीयतादशायां तत्र वाच्यत्वानुमाने बाधः। ततः पूर्वं वाच्यत्वसाधनं तु विशिष्टरूपेण तस्य सिद्धम्। स्वरूपमात्रस्य द्वैतमतेऽ-पीक्षणीयतादशायां न वाच्यत्वेन भानम्। उपासनाविषयत्वं यदीक्षणीय-त्वम्, तर्हि तस्याः कल्पितस्वरूपमात्रापेक्षिण्या वाच्यत्वानपेक्षा। शब्द-वाच्यस्यैवोपास्यत्वं तु नाद्वैतिनोऽपि वारयन्ति ॥

तथाचेक्षणीयत्वमात्रं हेतुतया विवक्षितं यद्यखण्डाकारवृत्तिविषयत्वम्, तर्हि तस्य वाच्यत्वस्य च व्याहतत्वात् तदिदं कार्यत्वेन शब्दनित्यत्वानुमानमेव। यदि दर्शनसमानाकारनिदिध्यासनविषयत्वम्, तत्प्रयुक्तसविशेषसाक्षारविषयत्वम्, तर्हि सिद्धसाधनम्। "परात् परं पुरिशयं पुरुषमीक्षते" इति त्वखण्डात्मपरम्, न पराभिमतसविशेषपरम्। अतो न कोऽपि दोषः॥

यदि वाच्यत्वयोग्यत्वमात्रं साक्षात्कारविषयत्वयोग्यत्वमात्रेण साध्यते, तर्ह्यावृतावस्थायामेव वाच्यत्व-लक्ष्यत्वादेर्विवक्षणात् तदोपाधेरविवक्षायामपि तेषां बाध्यत्वस्य भाविबाधमाश्रित्यैव विवक्षणाद् निर्विशेषताया वाक्यजन्यसाक्षात्कारानन्तरमेवानावृतसंविमात्र एव स्वीकाराच्च, वेदान्तविषयत्वमात्रेण ब्रह्मणो न निर्विशेषत्वं बाधितुं शक्यते विचारावस्थायाम्, साधनावस्थायां वा॥

ईक्षणीयत्वेनावाच्यत्वनिषेधानुमानस्य निरासोपसंहारः।

एतेन—पूर्वानूदितानि सर्वाण्यनुव्याख्यानवचनानि—पराहतानि; ईक्षणीयतया सविशेषवाच्यताया इष्टत्वात्, निर्विशेषस्यापि साक्षात्कारप्राक्तनावस्थायां विशिष्टरूपेण, स्वरूपमात्रेण वा सङ्केतवशाद् वाच्यतायाः लक्ष्यताया वाऽखण्डाकारसाक्षात्कारात् प्रागिष्टत्वात्, विनापि शक्यतां लक्ष्यताया माधुर्यादिरसविशेषस्य, आकृतिशब्दार्थतायां घटादिव्यक्तिविशेषस्याशाब्दस्य च लक्षणया वाक्यान्वयानुभावकत्वस्य सम्प्रतिपन्नत्वात्, माधुर्यविशेषाणामपि बहुत्वेन रसविशेषशब्देनापि तस्यैव रसविशेषस्य विवक्षायाः केवललक्षणयैव निर्वाह्यत्वात्, अभिहितान्वयवादेऽन्विताभिधाने वा तात्पर्यविषयस्य वाक्यार्थस्यान्वयविशेषरूपस्य वा लक्ष्यस्य विना शक्तिं वाक्येनानुभवदर्शनात्, वाक्यार्थस्य वाक्यजन्याखण्डाकारसाक्षात्काराधीनाज्ञाननिवृत्त्युपलक्षितसंविन्मात्रस्य वाच्यत्वस्य, लक्ष्यत्वस्य, तदतिरिक्तानुभवादेश्चायोगेन वाच्यत्व-साक्षात्कारविषयत्वयोर्व्याघातात्, वस्तुगत्या येन केनापि प्रमाणेन साक्षिणा वा भानमात्रेण लक्षणया पदार्थस्मरणमात्रेण सत्य-ज्ञानाद्यवान्तरवाक्यस्य, तत्त्वमस्यादिमहावाक्यस्य वा बोधकत्वाविरोधात्, विनापि शक्तिं वाक्यार्थविशेषस्य, वाक्यार्थशब्दवाच्यत्वस्य वाऽप्यनपेक्षितत्वाच्च नास्याधिकरणस्य ब्रह्मवाच्यत्वसमर्थने, निर्विशेषवादनिरसने वाऽसङ्गते, अनुपयुक्ते वा तात्पर्यम्॥

पदविशेषवाच्यस्यैव लक्ष्यत्वानियमः ।

कस्यचन शब्दस्य वाच्यमेव पदान्तरस्य लक्ष्यमित्युत्सर्गः, न तु नियमः; इक्षु-क्षीरादिरसविशेषे केवलं लक्ष्ये व्यभिचारात्, यथाकथञ्चित् प्रसिद्धिमात्रेण शब्दार्थसंम्बन्धमात्रेण लक्षणाया निर्वाहाच्च । अस्ति च निर्विशेषस्यापि सविशेषस्य, विशेषाणां वाऽधिष्ठानारोप्यभावसम्बन्धः, इति विशिष्टवाचकेन विशेष्यमात्रलक्षणा न दुष्यति । अत एवाध्यारोपापवाद-नयेन निर्विशेषस्वरूपबोधनमुपनिषत्सु परविद्यासु, सद्विद्यादिषु च पूर्वोक्तविधया, जन्मादितटस्थलक्षणमुखेन वा स्थूलारुन्धतीनयेन । अस्ति च प्रसिद्धिरात्मस्वरूपानन्दस्य साक्षिणा सुषुप्तौ, असंप्रज्ञातसमाधौ च लौकिकानामपि । अधिकं न्यायरत्नदीपावल्याम्, न्यायचन्द्रिकायां च ॥

एतेन—अवाच्यत्वेन, अवाच्यशब्दवाच्यत्वे, वाक्यार्थत्वेन वा सविशेषत्वाद् न निर्विशेषसिद्धिरिति—परास्तम् ॥

वाच्यत्वाभावस्य ब्रह्मरूपत्वाद् न तेन सविशेषत्वम् । अवाच्यशब्दवाच्यत्वं तु बाधात् पूर्वम्, न तु तदनन्तरम्, इति न तेनापि सधर्मताऽनावृतसंविन्मात्रस्य । एवमेव वाच्यार्थत्वमपीति पूर्वमेवोक्तम् । न चानावृतसंविन्मात्रस्य प्रमाणप्रवृत्तेः पूर्वमिव वाक्यार्थत्वमपि; यावदखण्डाकारवृत्त्येव वाक्यार्थत्वात्, स्वयं वृत्त्युपरमे तस्याप्युपरमाच्च ॥

ब्रह्मणोऽवाच्यत्वे श्रुतिः प्रमाणम् ।

इदमेवाश्रित्य श्रुतिः—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"—इति । अनेन शब्दादिप्रमाणजन्यवृत्तिविषयत्वेऽपि ब्रह्मणः, तस्या अज्ञाननिवृत्तिमात्रप्रयोजनत्वाद् न घटादीनामिव फलव्याप्यत्वं विवक्ष्यते, नावाऽक्यार्थत्वम् । वाक्शब्देनात्र शब्दप्रमाणस्य वाक्यस्यैव विवक्षणेन वाचकाविषयत्वस्याविवक्षणात् । एवं हि वस्तुतत्त्वप्रतिपादनपराऽपौरुषेयी श्रुतिरिति ज्ञाप्यते । न च श्रुतेस्तत्त्वावेदकत्वं बाधितम्, येन निर्विशेषवाक्यं मूकोऽहमिति वाक्यसमं स्यात् । स्वक्रियाव्याघातो वा ॥

ईक्षतेरिति सूत्रस्याद्वैतनिरासायोगः ।

अत्राशब्दपदेन प्राधान्येन शब्दप्रमाणागम्यम्, अनुमानेन प्राधान्येन गम्यं वा प्रधानं विवक्ष्यते । तद्धि न प्राधान्येन शब्दगम्यमिति प्रसक्तस्यैव

हि विषयस्यानुकर्षणेनास्ति पूर्वाधिकरणेनास्य सङ्गतिरद्वैतमते, द्वैतमते तु शब्दपदं न प्रमाणपरम्, किन्तु वाचकपरम्। न च लक्षकपदमपि न शब्दः, येनाशब्दपदेन लक्ष्यं व्यावर्त्येत। अतोऽशब्दपदस्यावाचकपरत्वे सङ्कोच एको दोषः। द्वितीयस्तु द्वैतमते प्राचीनेषु चतुर्ष्वध्यधिकरणेषु निर्विशेषवादस्याप्रस्तुतत्वात्, शास्त्रयोनित्वसूत्रेणापि पाशुपताद्यभिमतशिवादिकारणत्वनिषेधवदद्वैतप्रामाण्यस्यासमर्थनादत्र तन्निरसनमप्रासङ्गिकम्, अनुपयुक्तं चेति पूर्वमेवोपपादितम्, इति तन्निरसनायोगः॥

तृतीयस्तु—ईक्षणीयत्वेन वाच्यत्वे समर्थनीयेऽवाच्यत्वनिषेधः शिरोवेष्टनेन नासिकास्पर्शः। शब्दावाच्यत्वमात्रसमर्थनेऽत्र क्रियमाणे लक्ष्यत्वमादाय सिद्धसाधनं तुरीयं दूषणम्। पञ्चमस्तु दोषः—केवललक्ष्याणामिक्षु-क्षीररसादिमाधुर्यादीनामपीक्षणीयत्वात् तत्र व्यभिचारः। निर्विशेषस्यापि पूर्वोक्तरीत्या संकेतेन वाच्यत्वम्, ईक्षणीयत्वं च वर्तते, इति नानेन निर्विशेषवादनिरासोऽपि। तावता हि सविशेषवाच्यतामात्रमादाय सिद्धसाधनं तु षष्ठो दोषः॥

अस्तु वेक्षणीयत्वेन वाच्यत्वसाधनम्, तेन च सविशेषस्य वाच्यत्वं च, कथं तावता निर्विशेषवादनिरासोऽत्र? तावता हि सविशेषवाच्यतामादाय सिद्धसाधनं सप्तमं दूषणम्॥

निर्विशेषम्, न वेदान्तप्रतिपाद्यम्, अवाच्यत्वादिति तु नोक्तसूत्रार्थः। यद्यनेनेक्षणीयत्वेन वाच्यत्वेसाधिते ऽवाच्यस्यानीक्षणीयत्वं सिद्ध्यति, इति परम्परया ब्रह्मणः 'परात्परं पुरिशयमीक्षते' इति वाक्यविषयत्वं वार्यते, तर्हि केवलमयं तर्कः, न प्रमाणम्। न च सूत्रस्य साक्षादुपपत्तिरूपन्यायनिरूपणपरस्य तर्कमात्रे तात्पर्यं कुत्रापि॥

### अवाच्यस्यानीक्षणीयत्वे निदर्शनाभावः।

अवाच्यस्यानीक्षणीयत्वे निदर्शनं च किम्? न च निर्विशेषं ब्रह्म घटादिवत्, सविशेषवद्वा फलव्याप्यतयेक्षणीयम्। "परात्परं पुरिशयमि"ति तु पूर्वोक्तरीत्या तदावरणनिवृत्तिमात्राभिप्रायम्, नेक्षणीयत्वपरम्। तावतैव स्वयं भानादीक्षणव्यवहारमात्रं तस्य। पुरिशयमिति तु विशेषणादात्मस्वरूपसाक्षात्कार एवात्र विवक्ष्यते, इति प्रत्यगभिन्नपरमात्मस्वरूपप्रकाश एव वाक्यार्थः, इति घटादाविव न मुख्यः कर्तृकर्मभावः। तत्तु स्वरूपं "यत् साक्षादपरोक्षाद् ब्रह्म" इति स्वप्रकाशचैतन्यमात्रमावरणनिवृ-

त्तिमात्रमपेक्षत इति खल्वद्वैतिनां मर्यादा। ईक्षणीयत्वमुक्तविधयैवात्र यदि विवक्ष्यते, तर्हीक्षणीयत्वेन वाच्यत्वसाधने दृष्टान्तासिद्धिः; निर्विशेषव्यतिरिक्तस्योक्तविधेक्षणीयत्वाभावात्। यदि सविशेषपरमिदं वाक्यम्, तर्हि सविशेषस्यैव वाच्यत्वमनेन समर्थ्यत इति घट्टकुट्यां प्रभातम्॥

निर्विशेषलक्ष्यत्वोपपत्तिः।

यत्तु—ब्रह्म लक्ष्यमित्युच्यते, तेनापि लक्षणावृत्तिद्वारकवृत्तिव्याप्यत्वमेव, न घटादीनामिव फलव्याप्यत्वं विवक्ष्यते, न वा लक्ष्यशब्दावाच्यत्वम्, तीरादिवहुधर्मिसाधारणस्य लक्ष्यपदस्येतरव्यावृत्त्युपलक्षितस्वरूपबोधकत्वमात्रपरस्य वाच्यपदेनाव्यवहारात्। लक्षणाप्रतीतिस्तु शक्यसम्बन्धमात्रेण। प्रसिद्धिमात्रं तु लक्ष्यस्यापेक्ष्यत इत्यसकृदावेदितम्। निर्विशेषपरत्वं सविशेषाणामपि पदानां तात्पर्यविषयमुख्यार्थनिर्वाहार्थमेव। स एव मुख्योऽर्थः; तात्पर्यविषयार्थस्यैव मुख्यार्थत्वात्, अन्यथा 'गङ्गायां घोषः' इत्यत्रापि तीरपरत्वं मुख्यार्थबाधेन न युक्तम्॥

ईक्षतेरिति सूत्रस्याद्वैतवादाविरोधित्वम्।

सर्वथा तु "ईक्षतेर्नाशब्दमि"ति सूत्रं न निर्विशेषपरतायां बाधकन्यायपरम्। ब्रह्मणि निर्गुण ईक्षणीयत्वहेतोरभावाद् न वाच्यत्वानुमानम्। यदीक्षणीयत्वं फलव्याप्यत्वस्वरूपम्, तर्हि सगुणे तत्र सिद्धसाधनम्। "परात्परं पुरिशयं पुरुषमीक्षते" इति तु न सगुणपरम्, न वेक्षणमपि घटादिज्ञानसदृशमिति तेनेक्षणीयत्वेन वाच्यत्वसाधने दृष्टान्तासिद्धिरुक्तैव॥

गौणश्चेदिति द्वितीयसूत्रस्याप्यद्वैताविरोधित्वम्।

एतेन—"गौणश्चेन्नात्मशब्दात्" इति सूत्रस्य सगुणपरत्वमाशङ्क्य निरासोऽनुक्तोपालम्भनम्; मुख्यात्मन एव प्रत्यगभिन्नस्यात्र विवक्षणात्, ईक्षणस्य चोक्तरूपस्यैवात्र विवक्षणाच्च न कोऽपि दोषः। एतेन—"यस्यानुवित्तः प्रतिबुद्ध आत्मा" "तरति शोकमात्मवित्" इत्याद्युपष्टम्भनेन "तन्निष्ठस्य मोक्षोपदेशादि"ति सूत्रमपि-व्याख्यातम्; अस्य प्रकरणस्य परमात्मपरताया एव स्वीकारात्॥

तदयं निष्कर्षः—यदीक्षणीयत्वेन सविशेषस्य वाच्यत्वं समर्थ्यते, तर्हि तस्य मायोपहितस्य कल्पितस्योपाधिमिथ्यात्वेन मिथ्याभूतस्याद्वैतसिद्धा-

न्तेऽपि स्वीकारात् तस्य वाच्यत्वे साध्यमाने सिद्धसाधनम् । मायातीतशुद्ध-ब्रह्मणस्तु नेक्षणीयत्वं प्रमेयत्वरूपम् , न वा वाच्यत्वमपि ॥

आत्म-ब्रह्मादिशब्दानामप्यद्वैताविरोधित्वम् ।

अनेन आत्म-ब्रह्मादिशब्दा अपि—व्याख्याताः; तेषामपि तात्पर्यानुसारेण यथाप्रकरणं तत्तदर्थपरत्वे बाधकाभावात् , इति कुत्रापि न श्रुतार्थपरित्यागः, अश्रुतकल्पना वा विना तात्पर्यग्राहकप्रमाणानुग्रहणम् । मायाशक्तिमत् जगत्कारणमिति सम्प्रतिपन्नम् । विप्रतिपत्तिस्तु मायाया ज्ञानेन निवृत्तौ । तत्र "भूयश्चान्ते सर्वमायानिवृत्तिरि"ति श्रुतिमहिम्ना मायाया अपि ज्ञाननाश्यत्वात् मायाऽतीतं ब्रह्माखण्डाकारसाक्षात्कारदशायामिति तु तत्त्वम् । निर्गुणब्रह्मवादनिन्दा तु परेषामकिञ्चित्करी । सर्वथा तु निर्विशेषाप्रामाणिकतापरतयोक्तसूत्राणां नयनं न क्षोदक्षमम् ॥

इदमेवाभिप्रेत्य भगवत्पादानां सद्विद्याया अपि चित्स्वरूपब्रह्मपरत्वमेव, न त्वचिन्मात्रकारणपरत्वम् , येन जीवब्रह्मैक्यं बाधितं स्यादिति साङ्ख्यमतनिरासार्थतयेदमधिकरणव्याख्यानम् ॥

ईक्षत्यधिकरणस्य साङ्ख्यमतनिराकरणपरतया योजनाऽयोगः ।

एतेन—

"न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत् ।
भगवान् न ह्यशब्दत्वं प्रधानेऽङ्गीकारोत्यसौ ॥
समन्वये प्रतिज्ञाते शब्दगोचरतैव हि ।
प्रथमप्रतिपाद्या स्यात् तदभावे कुतोऽन्वयः ॥
कथं च लक्षणावादी ब्रूयात् ब्रह्मसमन्वयम् ।
यो ऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात् समन्वयः ॥
जन्मादिकारणे साक्षादाह वेदः समन्वयम् ।
उक्तं तदेव जिज्ञास्यं कावकाशोऽत्र निर्गुणे ॥
कथं चासम्भवस्तस्य मुख्यार्थस्य निराकृतौ ।
मानेन केन विज्ञेयमवाच्याज्ञेयनिर्गुणम् ॥
अमेयं चेद् न शास्त्रस्य तत्र वृत्तिः कथञ्चन ।
तस्माच्छास्त्रेण विज्ञेयमस्मदीयं गुणार्णवम् ॥
वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम् ।

विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥"

इत्याद्यनुव्याख्यानानि—व्याख्यातानि ॥

अयं भावः—इदमत्राद्वैतिनो मन्यन्ते "ईक्षतेर्नाशब्दमि"ति साङ्ख्याभिमतप्रधानवादनिराकरणार्थं प्रधानं सूत्रम्। अन्यानि "आनन्दमयोऽभ्यासादि"त्यतः प्राक्तनानि "गौणश्चेन्नात्मशब्दात्" "तन्निष्ठस्य मोक्षोपदेशात्" "हेयत्वावचनाच्च" "गतिसामान्यात्" "श्रुतत्वाच्चे" तिसूत्राणि तद्गुणसूत्राणीति। इदञ्च न सूत्राक्षरानुगुणम्। "अशब्दं हि तत्" इति हेतूक्तमशब्दत्वं शब्दागोचरत्वं वा, शब्दावाच्यत्वं वा, अवैदिकत्वं वा, कारणतयाऽवैदिकत्वं वा। सर्वत्रासिद्धिः; साङ्ख्येन प्रधानस्याशब्दत्वानङ्गीकरात्, सूत्रकारेणापि प्रधानेऽशब्दत्वस्यानङ्गीकारात्। अत्र सर्वेषु प्रधानस्यासत्त्वं वा, प्रमाणान्तरावेद्यत्वं वा। आद्ये तदुपपादानायेक्षतेरुपन्यासोऽनुपपन्नः। अत एव नेतरः; प्रधानस्याशब्दत्वे तस्याचेतनस्येक्षितृत्वानुपपत्तेः। शब्दावाच्यत्वं तु ब्रह्मणि व्यभिचारि। तृतीय-तुरीययोः साध्याविशिष्टयम्; प्रधानस्य जगत्कारणतया वेदान्ताप्रतिपाद्यस्यावैदिकत्वाविशेषात्, कारणतयाऽवैदिकत्वाविशेषाच्च ॥

किञ्चेक्षणेनैवाशब्दत्वसाधनसम्भवे मध्ये हेत्वन्तरकल्पनं वितथम्। ईक्षितृत्वमीक्षणगुणवत्त्वं ब्रह्मण्यपि गौणमेव निर्गुणवादिनोऽपि। तत्तु प्रधानस्यापि समानम्। "आत्मशब्दा"दिति चासङ्गतम्; गौणत्वे बाधकाभावात्, आत्मशब्दस्यो ह्युभयत्र गौणत्वात्, निर्विशेषस्याप्यत्मशब्दवाच्यत्वस्याभावेन तस्यापि गौणत्वात्, "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति प्रायपाठस्य बाधकस्योपन्यासात्। तदविरोधाय वैषम्योक्तिरपि वितथा; तेजोऽवन्नादिस्थलेऽपि तदधिष्ठानदेवतानामेव विवक्षणेन प्रायपाठाविरोधात् ॥

तन्निष्ठमोक्षोपदेशानुपपत्तिर्निर्विशेषब्रह्मवादेऽपि समाना; जीवब्रह्मैक्योपदेशायोगस्य पूर्वमेवोपपादितत्वात्। आत्मानात्मविवेकार्थमनात्मनोऽपि वैदिकत्वस्यावश्यकतया प्रधानस्यापि वैदिकत्वेनावैदिकत्वं तस्य बाधितम्। साङ्ख्येनाद्वैतज्ञानार्थं

प्रधानोपदेशानङ्गीकाराद् न हेयत्ववचनमत्रापेक्ष्यते । अन्नमयादीनामब्रह्मत्वमपि हेयत्ववचनात्, इति हेयत्वावचनं तस्य न कारणतयोपदेशविरुद्धम् ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिर्ब्रह्मवाद एव, न प्रधानवादे; ब्रह्मणोऽसर्वात्मकत्वात्, प्रधानस्य कारणस्य सर्वात्मकत्वाच्च । स्वाप्ययस्तु यद्येकीभावः, तर्हि न ब्रह्मणोऽपि । तादात्म्यमात्रं प्रधानेऽपि नासम्भवि । ब्रह्मण्यपि गतिसामान्यं परस्यासिद्धम् । ईक्षणेन तत्साधनं प्रथमसूत्रेणैव गतार्थम्—इति ॥

सद्विद्यायाः साङ्ख्यमतनिरसने स्वारस्यम् ।

अत्र प्रधानम्, जगत्कारणस्वरूपोपपादकसदेवेत्यादिवाक्याप्रतिपाद्यम्, अशब्दत्वात् । कथमशब्दत्वम्? कारणस्येक्षितृत्वश्रवणादिति भगवत्पादीयं भाष्यम् । तत्राशब्दत्वं न परविकल्पितं किमपि; "सदेवेत्यादिवाक्यघटकसदादिपदाप्रतिपाद्यत्वस्यैवाशब्दत्वरूपत्वात् । तत्र तस्यापि तत्रासिद्धिशङ्कावारणार्थम्—ईक्षतेरिति सूत्रावयवः । तेन प्रधानस्येक्षितृत्वं नास्तीति विवक्षणात् प्रधानपरतायां सौत्रनञ्पदस्य साध्येनेव हेत्ववयवेनाप्यन्वयात् "अनीक्षतेरि"त्यर्थपर्यवसानेन—प्रधानम्, न सदेवेतिवाक्यघटकसत्पदार्थः, तदन्वयितदैक्षतवाक्यघटकेक्षणानन्वयित्वात्, तस्यापि गौणत्वविवक्षायाम्—"अनेन जीवेनात्मनेति" सच्छब्दार्थस्य जीवाभेदेनोपक्रम्य 'स आत्मे'ति परामृश्य "तत्त्वमसी"त्युपसंहारेण चोक्तप्रकरणार्थत्वात्, "तस्य तावदेव चिरमि"त्यादिना तद्भावस्य मोक्षत्वोपदेशात्, एकविज्ञानेन सर्वविज्ञानस्य वाचारम्भणश्रुत्युपबृंहितस्य प्रधानवादेऽसम्भवात्, श्रुत्यन्तरेष्वप्यात्मादिशब्दैरेव कारणस्वरूपस्य परामर्शेन कारणस्य चेतनत्वावगमेनाचेतनकारणताया अयोगाच्च सर्वं सद्विद्याप्रकरणं न प्रधानकारणतावादानुकूलमितीक्षत्यधिकरणार्थनिष्कर्षः ।

अशब्दपदस्वारस्यमद्वैतवाद एव ।

तत्राशब्दपदेन प्रधानं गृहीत्वा सदेवेत्यादिवाक्यार्थानुषङ्गेण—प्रधानम्, न जगत्कारणम्, ईक्षितृत्वादित्येतावन्मात्रेण प्रधानकारणवादनिरासे परोक्तरीत्याऽत्र यद्यपि हेत्वसिद्धिः; तथापि भगवत्पादाभिमतानीक्षितृत्वस्य हेतूकरणे न साऽऽपादयितुं शक्यते । न चात्र समन्व-

यपादे ब्रह्मपदार्थविचारावसरे कारणस्यावैदिकत्वमेकान्ततो मत्वा प्रत्यवस्थानस्य शास्त्रयोनित्वसूत्रप्रवृत्त्यनन्तरं सम्भावनाऽपि ॥

श्रौतं प्रधानवादं मत्वा साङ्ख्यप्रत्यव-
स्थानस्यैव पाशुपतादिनिरासस्यात्र न सङ्गतिः ।

आगमादिप्राधान्यावलम्बेनाशङ्कायाः, तन्निरासस्य च स्थानं द्वितीयाध्यायद्वितीयपाद एव । प्रधानवादस्यापि वैदिकत्वं कृत्वाचिन्तयोरीकृत्य "सद्विद्यायां सत्पदमात्रेण कारणोपदेशमात्रं छिद्रं लब्ध्वा प्रधानकारणवादस्य वैदिकत्वमपीति प्रत्यवस्थानपरिहारो हि तस्यावैदिकत्वसाधनेनैव वर्णनीयः, इत्यशब्दत्वमत्र प्रधानो हेतुः, तदसिद्धिपरिहारस्तु—ईक्षतेरिति योजनेनेत्येव युक्तम् ॥

सद्विद्याप्रकरणस्यैवैतदधिकरणविषयत्वाद् न
तस्य साङ्ख्यमतानुसरियोजनं युक्तम् ।

कारणस्येक्षितृत्वश्रवणादिति श्रवणशब्दप्रयोगेन हि भगवत्पादाः— "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" इत्येतदन्तवाक्यं नात्र प्रस्तुततत्त्वनिरूपणपरम्, किन्तु सर्वं सद्विद्याप्रकरणमिति सूचनेन पूर्वोक्तं सर्वं व्यञ्जयन्ति, इति नात्र हेतुसाध्याविशेषादिदूषणानामवसरः । "तन्निष्ठे"-त्यनेन 'सदि'ति प्रस्तुतपरामृष्टोपसंहृतचिद्रूपपरमात्माभिन्नसदर्थैक्यमेव मोक्ष इति विवक्ष्यते । तच्च प्रधानभावे नोपपादयितुं साङ्ख्येनापि स्वीक्रियते, इति साङ्ख्यप्रक्रियामादायैव प्रधानवादस्य वैदिकत्वं स्थापयितुं न शक्यत इत्येव सूत्रकाराशयः ॥

ईक्षतेरिति हेतुनिर्देशो नेक्षणीयत्वाभिप्रायः ।

'ईक्षतेरि'ति धातुमात्रस्यात्र निर्देशेनेक्षतिकर्तृत्वेनाऽऽम्नानमेव विवक्ष्यते, इति नेक्षणीयत्वमत्रेक्षतिपदार्थः । अत एव—"ईक्षतिकर्मव्यपदेशात्" इतीक्षणीयत्वाभिप्रायं कर्मपदस्याप्यधिकस्य प्रयोगेण स्वयं सूत्रकारो व्यञ्जयति, इति सूत्रस्वारस्यमतत्रेक्षतिपदमात्रप्रयोगेण न द्वैतपक्षे, यत्रेक्षणीयत्वं हेतुतयाऽत्र विवक्ष्यते । तत्र "कर्मव्यपदेशात्" इति व्यपदेशपदमीक्षतिकर्मत्वमपि पूर्वोक्तविधयाऽज्ञाननिवृत्तिमात्रेण गौणं वृत्तिव्याप्यत्वमात्रम्, न तु फलव्याप्यत्वमिति सूचयतीति दृष्टान्तासिद्धिरपि पूर्वोक्ता व्याख्याता ॥

परमते पञ्चाधिकरणवैयर्थ्यम् , न चैवमद्वैतमते ।

न चेदं सर्वं प्रथमसूत्रेणैव गतार्थम् । तत्र प्रतिज्ञातौपनिषदब्रह्मस्वरूपस्यैव सद्रूपेण, चिद्रूपेण च विवर्तोपादानत्वमपि, न केवलं निमित्तकारणत्वम् , प्रकारान्तरेण वोपादानत्वमपीति निष्कृष्य सङ्ग्रहेणोपनिषदर्थनिर्णयार्थत्वाद् आनन्दमयाधिकरणान्तस्य संदर्भस्याद्वैतसिद्धान्त एव स्वारस्यम् । परमते तु 'स विष्णुराहही'त्यनेनैव विष्णोः सविशेषस्यैव ब्रह्मस्वरूपत्वस्य निर्णीतत्वात् किमेभिः पञ्चभिरप्यधिकरणैः, इति महानेवानाश्वासः ॥

सर्वेषु वेदवाक्येषु कारणपरेषु सच्चिदात्मना ज्ञातस्यैव कारणत्वमिति निरूपणं ह्यत्र विवक्षितं नान्यतो लब्धम् , इति न कस्याप्यधिकरणस्यात्र वैयर्थ्यम् , न वा कस्यापि सूत्रार्थस्य प्रकारान्तरेण सिद्धिः, असिद्धिर्वा श्रुतत्वादेरपि। तदेवं सूत्रगमनिकास्वरस्यमद्वैतवाद एव, न द्वैतवादे; अशब्दत्वस्य, ईक्षतेश्चेति सूत्रघटकस्य तत्रान्वयानुपपत्तेः, ब्रह्मवाच्यत्वसमर्थनस्य प्रकृतानुपयोगात् । वाक्यार्थनिष्कर्षस्य, नियमेन तत्तद्वाक्यघटकपदवाच्यत्वापेक्षत्वाभावात् , ईक्षणीयत्वस्य पूर्वोक्तरीत्याऽसाधकत्वाच्च ॥

समन्वयाधिकरणेन सङ्गतिरप्यद्वैतवाद एव ।

"तत्तु समन्वयादि"ति सर्वेषां शास्त्राणां महावाक्यानां जीवैक्यपरत्वे पूर्वं प्राधान्येन तैत्तिरीयादिश्रुतिविशेषमनुसृत्य साधिते, सद्विद्यायाः प्रधानसाधारणसत्पदेनोपक्रमात् तस्या अपि 'तत्त्वमसी'ति महावाक्यघटितत्वेन तद्घटकमहावाक्यस्यैव मुख्यशास्त्रत्वात् तस्य न जीवब्रह्मैक्यपरत्वमिति शङ्कानिवर्तनं हि प्रधानतमं कृत्यमत्रेति समन्वयसूत्रानन्तरं तस्यैव विचारस्य मुख्या सङ्गतिः, न त्वीक्षणीयत्वेन पूर्वोक्तरीत्या निर्विशेषतात्पर्याविषयतासाधनस्य । व्यक्तीकृतश्चादावेवानुपपन्नस्याप्यस्य विचारस्य पूर्वसूत्रेण, प्रथमादिसूत्रेण वा न समन्वयपादेऽत्र सङ्गतिलेशोऽपीति ॥

अशब्दत्वहेतोरद्वैतवाद एव सार्थक्यम् ।

अत्राद्वैतमतरीत्या विवरणेऽशब्दत्वम , तेन च साङ्ख्यमतनिराकरणमुभयं प्रतिपाद्यते, इत्यशब्दत्वनिषेधेन शाब्दत्वमात्रनिराकरणं वितथम्; प्रकृतानुपयोगात् ; पूर्वोक्तरीत्येक्षतिकर्मत्वस्य सविशेषमात्रविषयत्वेन तस्यैव वाच्यत्वसमर्थने सिद्धसाधनात् , तत्र शक्यतावच्छेदकपुरस्कारेण वाच्यत्वं शुक्तिरूप्यादौ द्वैतमतरीत्येक्षणीयेऽसति व्यभिचारि, सङ्केतमात्रेण वाच्यत्वं निर्विशेषस्यापि विष्णुपुराणोक्तरीत्येति पूर्वमेवोक्तम् ॥

ईक्षणीयत्वस्य वाच्यत्वासाधकत्वम् ।

वस्तुतस्तु—वाच्यस्यैव वाक्यगम्यत्वे वाक्यैकदेशस्य 'घटो नित्य,' इत्यादौ घटनित्यताभिप्रायेण प्रयुक्ते घटपदेऽवाच्यमपि घटत्वं व्यक्तिवाच्यतापक्षे शाब्दबोधे भाति, गङ्गापदेन लक्षणया तीरस्यान्वयानुभवः शाब्दबोधे दृश्यते, इतीक्षतिना वाच्यत्वसाधनमप्रयोजनम् ॥

समन्वयपदं पूर्वसूत्रगतमद्वैतवादमेव पोषयति ।

तत्र पूर्वं समन्वयः सूत्रकारेण सूत्रितः तात्पर्यानुसारेण वाच्यम्, लक्ष्यं वा शास्त्रवेद्यं ज्ञापयति। अत एव तात्पर्यग्राहक उपक्रमादिरेव समन्वयपदार्थ इत्यनुव्याख्यानमपि; अन्यथा "ईक्षतेर्नाशब्दमि"त्यनेनैव गतार्थत्वात्, "तत्तु समन्वया"दिति सूत्रमपि वितथम्; ईक्षतिसूत्रेणैव गतार्थत्वात्, अन्यथा रुद्रादीनामपीक्षणीयानां वाच्यत्वाभ्युपगमात् वेदान्तानां रुद्रपरत्वमेव न कुतः ?

वाच्यस्यैव लक्ष्यत्वे पाञ्चरात्रानुसारेण ब्रह्मस्वरूपनिर्णयासंभवः ।

यदि पाञ्चरात्रप्रामाण्यात् तस्यापि विष्णुवाचकत्वम्, तर्हि पाशुपतादिवशात् विष्णोरेव रुद्रादिपदवाच्यत्वमिति समानम्। पाञ्चरात्रं त्वद्वैततात्पर्यतायामेव स्वरसमिति पूर्वमेवोक्तम्। अस्तु वा पाञ्चरात्रानुसारेण व्यवस्था, एवमपि रुद्रादिपदानां रुद्रे गौणत्वं वा, मुख्यत्वं वा। आद्येऽवाच्ये रुद्रे कथं लक्षणा? द्वितीये कथं विष्णोरेव वाच्यत्वम्, न रुद्रादेः? इति का वा विनिगमना विष्णुपरत्व एव वेदान्तानाम् ॥

समन्वयपदं न वाच्यतामपेक्ष्य ।

एतेन—समन्वयपदेनापि वाच्यवाचकभाव एव विवक्ष्यत इति—परास्तम्; "अन्वयः" उपपत्त्यादिलिङ्गम्, उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यमिति तद्भाष्येण—

"त एवान्वयनामानस्तैः सम्यक् प्रविचारिते ॥
मुख्यार्थो भगवान् विष्णुः सर्वशास्त्रस्य नापरः ॥"

इत्यनुव्याख्यानेन च विरोधात्। उपक्रमादितात्पर्यग्राहकलिङ्गानि ब्रह्मण्येवेति हि समन्वयपदस्वारस्यं निर्गुणब्रह्मवाद एव। न च सविशेषब्रह्मवादे तानि वर्तन्ते, तेषां तत्परत्वे न तु विप्रतिपत्तिः। "तत्त्वमसी"त्यत्रापि सविशेषजीव-ब्रह्मोभयविवक्षायां न केवलमन्वयानुपपत्तिः, किन्तु तात्पर्यानुपपत्तिरपीति खल्वद्वैतिनां मर्यादा। तदुक्तम्—

"सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः ॥
पश्चादेव विशेषणेतरतया पश्चाद् विरोधोद्भवः ॥
उत्पन्ने च विरोध एकरसिके वस्तुन्यखण्डार्थधीः ॥"

इति ॥

जिज्ञासासूत्रे ब्रह्मपदस्य निर्विशेषपरत्वमेव ।

वस्तुतस्तु—"अथातो ब्रह्मजिज्ञासा" इत्यत्र ब्रह्मपदं निर्विशेषपरमेव; अन्यथोक्तसूत्रवैयर्थ्यात्, "तत्तु समन्वयात्" इत्यत्र तत्पदमपि तदेव परामृशति, न तु विष्णुम्। "जन्माद्यस्य यतः" इति सूत्रमपि स्थूलारुन्धतीन्यायेन "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"-ति "तपसा ब्रह्म विजिज्ञासस्वेति" च ब्रह्मपदसमभिव्याहारेण प्रस्तुता विचारपरम्परया परमव्योमपदार्थानावृतस्वरूपनिर्विशेष एव पर्यवसानं श्रुत्यैव विशदीकरोति; अन्यथा भार्गववारुणविद्याया वैयर्थ्यं स्यात्। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति प्रस्तुतजीवब्रह्मैक्यनिर्धारणार्थं खलु प्रस्तुता। साव्यक्तीकृतं चेदं पूर्वमेव यथाऽवसरम् तटस्थलक्षणपरत्वाद् जन्मादिवाक्यस्येति, इति जिज्ञासा-लक्षण-समन्वयसूत्राणां सर्वेषां निर्विशेषब्रह्मपरतैव ॥

सगुण-निर्गुणोभयप्रामाण्याददद्वैतवाद एव श्रौतः, सौत्रश्च ।

न च सगुणवाक्यवद् निर्गुणवाक्यमपि सगुणविषयमित्यत्र किमपि सूत्रम्, अन्यो न्यायः, श्रुतिर्वा प्रबलं प्रमाणमस्ति, येन तस्यान्यथा नयनं स्यात्; सम्भवत्युभयप्रामाण्येऽन्यतरमात्रप्रामाण्यायोगात्। न च निर्गुणब्रह्मवादे सगुणमपि यावद्बाधमप्रामाणिकम्। बाधानन्तरं तु श्रुतिरपि स्वरूपतो बाध्यैव; विषयमात्राबाध्यताया एव निर्गुणवाक्येषु स्वीकारात्। व्यक्तश्चैतदधस्तात् ॥

"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इत्वाच्यत्वस्यापि श्रौतत्वात् कथमवाच्यस्य शास्त्रतात्पर्यविषयत्वायोगः? आश्चर्यतमत्वं निर्विशेषवादेऽप्यवाच्यत्वोपपादकम्, इति तत्रोभयोपपत्तिः। वाच्यत्वपक्षे त्वेकतरस्य बाधापत्तिः ॥

अत एव गीतायां—"मत्स्थानि सर्वभूतानि" "न च मत्स्थानि" "पश्यमे योगमैश्वरम्" इति सप्रपञ्चत्वम्, अप्रपञ्चत्वं चोभयमसंकुचितं गीयते।

आश्चर्यतमत्वं तूपपादनासहत्व एव, न तूपपादनसहत्वे। तच्च वाच्यत्वावाच्यत्वयोरुभयोरप्यविरोधेनेति सम्प्रतिपन्नम्। तच्च यदि प्रकारभेदमात्रेण, तर्ह्यविरोधोऽपि विरुद्धवत् प्रतिभासेऽपि, इति पूर्वोक्ता रीतिरेवाऽबाधेनोपपन्ना॥

### इक्षत्यधिकरणस्वारस्यमद्वैतवाद एवेत्युपसंहारः।

अनन्तगुणपूर्णत्वेनावाच्यत्वम्, वाक्पदस्य परिच्छिन्नवाक्परतयाऽन्यथानयनेन, वाच्यत्वावाच्यत्वयो रूपभेदमात्रेणासङ्कोचेन च। सङ्कोचे हि मुख्यार्थत्यागः। न च तेन किमपि प्रयोजनं निर्विशेषवादस्य; सङ्कोचेन विवरणे तु श्रुत्यर्थस्य रक्षा प्रयोजनम्। यथाश्रुतमर्थमादायापि प्रधानवादनिराकरणमात्रेण सूत्रस्वारस्योपपत्तौ सूत्रव्याख्यानमनुसृत्य श्रुतेरन्यथानयनं हि न स्वरसम्। सर्वथा त्वीक्षत्यधिकरणमप्यद्वैतिनामेवानुकूलम्, न द्वैतिनामित्यलमतिविस्तरेण॥

### ब्रह्मणोऽपि गौणप्रमेयत्वमबाधम्।

निर्गुणं ब्रह्म यदीदन्तया न शास्त्रवेद्यम्; तस्य स्वयंप्रकाशस्यान्याधीनप्रकाशत्वाभावात्, किन्तु तदावरणनिवृत्त्यर्थं शास्त्रजन्यज्ञानमात्रमपेक्ष्यते वृत्तिव्याप्यत्वमात्रेण, तर्हि प्रमेयत्वोपचारमात्रमिति व्यक्तमन्यत्र। तस्य लक्ष्यत्वं तु "नेति नेति" विधया शास्त्रप्रसिद्धिमात्रेण॥

तत्र लाक्षणिकाः शब्दा लक्ष्यप्रमामुत्पादयन्तोऽपि विपरीताकारव्यावर्तनेनैव प्रयोजनवन्तो भविष्यन्ति। विशदीकृतं चेदं बहुशः॥

### ईक्षत्यधिकरणार्थनिष्कर्षः।

तदयं निष्कर्षः—वेदान्तवाक्यानि सगुणमपि ब्रह्म बोधयन्ति, परं त्ववान्तरतात्पर्यविषयतया, न तु महातात्पर्यविषयतया। स च सविशेषो ब्रह्म-विष्णु-शिवात्मको विष्णुपुराणोक्तविधया कार्यवशादुपाधिविशेषापेक्षया वा रुद्रो विष्णुर्वा ब्रह्मा वा मायोपहितमात्रः, इति न नामविशेषे निर्भरः, अन्यत्रानाश्वासात्। ब्रह्मणो निर्गुणत्वे हि—"एकमेवाद्वितीय" मित्यादिश्रुतयः प्रमाणमिति तत्र तत्र व्यक्तम्। अद्वितीयत्वं तु ब्रह्मणोऽखण्डाकारवृत्त्याऽऽवरणनिवृत्तिमात्रेण, इति साक्षात् प्रमाणगोचरत्वेऽनिर्वचनीयाज्ञानविषयत्वाद् न शशशृङ्गादिसाम्यम्, न वा ब्रह्मण उक्तविधया प्रमाणगोचरत्वेऽपि स्वप्रकाशताहानिः; आवरणनिवर्तनेनानावृतस्वयंप्रकाशस्वभावमात्रत्वं हि शास्त्राधीनम्, न तु प्रकाशान्तरेण प्रकाशेन॥

एतेन—प्रकाशान्तरव्यावृत्तिः स्वप्रकाशता मायावादिनामिति—परास्तम्, असदनुवादात्। इदमेवाभिप्रेत्योच्यते—स्वप्रकाशस्यापि ब्रह्मणो न शास्त्रविषयत्वं विरुद्धम्। वचनजन्यस्फुरणाश्रयतया वृत्तिव्याप्यत्वेनावरणनिवृत्तिमात्रेणानावृतसंविन्मात्रत्वस्यैव विवक्षणात्॥

भाष्यकाराणां सूत्रापव्याख्यानिराकरणौचित्यम्।

स्फुरणमत्राज्ञाननिवृत्तिप्रयुक्तप्रकाशैकस्वभावत्वम्, अनावृतसंविन्मात्रत्वं वा; अज्ञाननिवृत्तिमात्रं वा, इति सूत्रानुगुण्यमद्वैतमत एव। सूत्रापव्याख्यानिराकरणं भाष्यकारस्य मुख्यं कृत्यमित्यत्र न विप्रतिपत्तिः। अत एव आनन्दमयाधिकरणे भगवत्पादा अपि वृत्तिकारसम्मतव्याख्यानप्रकारं निरस्यन्ति। सूत्रापव्याख्या न भगवत्पादनां भाष्यम्, सूत्रानुगुण्यस्य तत्रास्वारस्यात्। ईक्षत्यधिकरणस्य प्रधानवादनिरास एव तात्पर्यमिति न केवलं भगवत्पादाः, किन्त्वन्येऽपि भाष्यकाराः इति द्वैतिनामेव पन्थाः सूत्रकारस्येति न प्रयुक्तम्॥

द्वैतिनामीक्षतिसूत्रव्याख्यानमेवापव्याख्यानम्।

नाशब्दमिति नञ्द्वयगर्भसाध्यनिर्देशः, ईक्षतिपदस्य "ईक्षतिकर्मव्यपदेशात्" इत्यत्रेव कर्मपदाघटितस्यापीक्षणीयतापरतया योजनम्, सविशेषमेव शास्त्रप्रतिपाद्यमिति विप्रतिपत्तावपि तत्पदेन विप्रतिपन्नपक्षग्रहणम्, इति सविशेषमात्रपक्षत्वे प्राक्तनसर्वाधिकरणवैयर्थ्यमित्यादिबहुदोषदुष्टं द्वैतिनां सूत्रव्याख्यानम्, इति तदेवापव्याख्यानम्, न भगवत्पादानाम्॥

अद्वैतिनां व्याख्यानस्यापख्यानत्वमादितोऽद्वैतमतमभिसन्धाय पूर्वपक्षत्वेन, तन्निरसनेन सिद्धान्तत्वेन च वक्तव्यम्। न चैवमद्वैतवादं पूर्वपक्षीकृत्यैव सर्वाण्यधिकरणानि द्वैतिनाम्, इत्येतत्सूत्रमात्रेऽद्वैतमतनिरासपरतया सूत्राणामार्थिकतात्पर्योन्नयनं न युक्तम्॥

साङ्ख्यमतनिरासार्थतैवात्रोचिता।

तत्र "तत्तु समन्वयादि"त्यत्र सविशेषं प्रस्तुतमभिप्रेत्य वाच्यत्वसमर्थनं तावतैव पर्याप्तम्, इति कथमर्थाद् निर्विशेषाविषयत्वं शास्त्रस्य साधयितुमलम्, न च तत्र वाच्यत्वे विप्रतिपत्तिः, इति कथं नोक्तसूत्रवैयर्थ्यम्, इति ब्रह्मण एव वाच्यत्वसमर्थनद्वारा प्रधानस्य वाक्यघटक-

सदादिपदाप्रतिपाद्यत्वविवक्षैव स्वरसा। सम्प्रतिपन्नं च साङ्ख्यमतनिरसनमुभयोः, इति सम्प्रतिपन्नार्थविषयतयैव सूत्रोपपत्तौ किमित्यर्थान्तरपरत्वमश्रौतं कल्पनीयम्॥

ब्रह्मणोऽवाच्यत्वमिथ्यात्वेऽपि न दोषः।

निर्विशेषं ब्रह्म न वाच्यम्; वाच्यत्वस्य तत्र कल्पितत्वेन मिथ्यात्वात्, नाप्यवाच्यम्; अवाच्यत्वस्यापि मिथ्यात्वात्। मिथ्यात्वमिथ्यात्वेऽपि प्रतियोगिसत्यतायाः कुत्राप्यदर्शनेन दृष्टान्तासम्प्रतिपत्तेः। आत्मा तु न दृष्टान्तः; तन्मिथ्यात्वस्य कल्पितस्याप्यभावेन मिथ्यात्वोपेतमिथ्याकत्वहेत्वसिद्धेः। अधिकमन्यत्र। कल्पितं तु प्रमाणजन्यवृत्तिव्याप्यत्वम्। वृत्तिर्हि ब्रह्मणोऽज्ञानविषयस्यावरणाभिभवार्था, न विना चैतन्यावच्छेदकत्वं विषयतां स्वसम्बद्धस्यादधाति॥

वृत्तिव्याप्यत्वमवाच्यत्वेऽपि युज्यते।

एतेन—वृत्तिव्याप्यत्वमपि न विषयत्वातिरिक्तं किमपीति शङ्कापि—परास्ता, फलाव्याप्यत्वेनावाच्यत्वस्य, वृत्तिव्याप्यत्वमात्रेण वाच्यत्वस्य चाव्याघातात् वाच्यत्वावाच्यत्वयोरुभयोरपि कल्पितत्वेनाप्यविरोधात्। दृष्टं हि प्रतियोगि-तदभावयोरुभयोर्मिथ्यात्वसामानाधिकरण्यम्, यथा-स्वप्नेरजत-तदभावयोः, एकत्र गव्यारोपितयोरश्व-महिषयोश्च॥

सूत्राणां निर्गुणपरत्व एव श्रुत्यैकवाक्यता।

अयं भावः—श्रुति-सूत्रयोस्तावदेकार्थत्वं युक्तम्; अन्यथा करणेतिकर्तव्यतात्वानुपपत्तेः। श्रुतयस्तूपक्रमादिवशाद् निर्विशेषमद्वितीयं संवित्तत्त्वमुपदिशन्ति, इति मीमांसाऽपि तदुपबृंहणार्थतयैवेतिकर्तव्यताभवितुमर्हति। तच्चोभयोरप्येकविषयत्वेनैव, न तु वध्य-घातकभावेन, इति निर्गुणविषयत्वमेव सूत्राणां वक्तव्यम्। आम्नायस्य गतिं वक्तुं प्रभवामः, न तु तं पर्यनुयोक्तुम्। यथा चावाच्यस्यापि स्वरूपमात्रस्य लक्ष्यत्वेन शास्त्रप्रतिपाद्यत्वम्, तथा पूर्वमेवोपपादितम्॥

इतीक्षत्यधिकरणम्॥

अथानन्दमयाधिकरणम् ॥

आनन्दमयोऽभ्यासात् ॥

द्वैतिनां दृष्ट्याऽनन्दमयाधिकरणनिष्कर्षः ।

"अथातो ब्रह्मजिज्ञासा" इति जिज्ञासितस्य ब्रह्मणः स्वरूपं "जन्माद्यस्य यतः" "शास्त्रयोनित्वादि"ति लक्षण-प्रमाणाभ्यां स्वेतरसर्वव्यावृत्ततया निर्धारितमुपक्रमादिभिरागमानुसारेण चान्यपरत्वशङ्कानिरसनेन। तदेवेक्षत्यधिकरणेन ब्रह्मणो वाच्यत्वसाधनद्वारा शास्त्रप्रमाणकत्वासम्भावनाशङ्कानिरसनेन स्थूणानिखननन्यायेन सिद्धान्तितम्। तेन च ब्रह्मस्वरूपनिरूपणेन न किमपि निर्णेयमवशिष्टम्, तथापि "तत्तु समन्वयात्" इति प्रतिज्ञामात्रेणोक्तस्यैव तत्तदुदाहरणपरीक्षणपूर्वकं तत्तन्न्यायविशेषद्वारा तत्समानन्यायविषयाणामप्यर्थतः, उपलक्षणतया वा प्रपञ्चनार्थमुपरितनग्रन्थसन्दर्भः ॥

तत्र प्रथमाध्याये समन्वयाध्यायनामनि प्रथमे पादेऽन्यत्र प्रसिद्धा वैदिकाः शब्दा विषयाः। तत्र प्रथममधिकरणमानन्दमयाधिकरणम्, यत्रानन्दमयशब्दस्योपलक्षणत्वेन तत्समानन्यायनिर्णेयान्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयशब्दाः सर्वेऽपि ब्रह्मेतरपरत्व-ब्रह्मपरत्व-संशय-पूर्वोत्तरपक्षमुखेन न्यायतो विचार्यन्ते, निर्धार्यन्ते च। तत्र सर्वेषां ब्रह्मपरत्वमिति पञ्चब्रह्मवादिनी ब्रह्मवल्ली, भृगुवल्ली चेति निष्कर्ष इति द्वैतिनः ॥

अद्वैतवाददृष्ट्याऽऽनन्दमयाधिकरणार्थनिष्कर्षः ।

अद्वैतसिद्धान्तस्तु—चतुःसूत्र्याऽऽत्मघटितानि, ब्रह्मशब्दघटितानि वा सर्वाणि वाक्यानि ब्रह्मणः सच्चिदात्मना ज्ञातस्य कारणत्वम्, आनन्दात्मनाऽप्युभयोरपि ज्ञाने त्वनावृतसंविन्मात्रता शुद्धा, इदमेव मुक्तात्मनः-स्वरूपम्, प्रत्यस्तमितभेदम् सत्तामात्रम्, अवाङ्मनसगोचरम्, स्वप्रकाशं पर्यवसितवेदार्थ इति निर्धारितं तत्रैव सर्वेषां वेदान्तानां समन्वयव्यवस्थापूर्वकम्। ततस्तु सत्पदेनोपक्रान्तसद्विद्ययाऽपि तेनैव नयेन पूर्वोक्तार्थपरतयैव निर्धारितयाऽपि श्रुत्यन्तरवद् आत्म-ब्रह्मशब्दाभ्यामनुपक्रमात्, सद्विद्यायास्तत्र तात्पर्यं न भवितुमर्हतीत्युपक्रमानुगृहीतप्रधानसाधारणसच्छब्दबलात् तस्यां न जीवब्रह्मैक्याम्नानमित्यधिकाशङ्कानिराकरणेन जीवब्रह्मैक्य एव समन्वयस्य प्रधानवादनिरसनेन दृढीकरणार्थम्—ईक्षत्यधिकरणम्। तेन चान्यत्र चिदात्मना प्रस्तुतमेवात्र सदात्मनोपदिश्यत इति सर्वासामात्मविद्यानामैकरूप्यं जीव-ब्रह्मैक्ये प्रतिष्ठापितम् ॥

तत्र च सच्चिदानन्दस्वरूपस्य ब्रह्मण आनन्दात्मताऽप्यनाद्यविद्याकल्पितभेदा सच्चिदात्मतेव वर्तते, यदात्मनाऽज्ञानेन ब्रह्मणो विवर्तोपादानता। आनन्दात्मनाऽपि विज्ञाने तु तदाश्रय-तद्विषयानाद्यविद्या-तत्प्रयुक्ताः सर्वे भेदाः, तत्प्रतियोग्यादिभिस्सह बाध्यन्ते, इति निर्विशेषेऽनावृते संविन्मात्रे शास्त्राणाम्, विद्यानां च प्रतिष्ठा, इत्यानन्दरूपतापि ब्रह्मण एवेति निरूपणार्थमिदमानन्दमयाधिकरणम् ॥

तत्र द्वैताद्वैतसिद्धान्तविभागः।

अत्र त्वन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः परमात्मनोऽन्नाद्युपाधिसम्बन्धमात्रेण भिन्ना अपि स्वरूपतस्तत्तदुपाधिविलये ब्रह्मणैक्यमेवार्हन्ति। सर्वेषामेषामुपाधीनाम्, उपहितानां चाधिष्ठानम्, प्रतिष्ठा वा निर्विशेषं ब्रह्मैव, तदात्मनैव तेषां नित्य-शुद्ध-बुद्ध-मुक्तस्वभावता, औपाधिकरूपेण तूपाधिबाध्यतानिबन्धनबाध्यतया विषया अन्नमयादयो न प्रतिष्ठेति व्यवस्थापितं भवति ॥

पञ्चब्रह्मवाद एकब्रह्मविषयत्वानुपपत्तिः।

तत्र ब्रह्मवल्ली-भृगुवल्ल्योरेकार्थतायां न विप्रतिपत्तिः। विप्रतिपत्तिस्तु पञ्चानामप्यन्नमयादीनां ब्रह्मत्वे, अब्रह्मतायां च। तत्र प्रथमकल्पावलम्बिनो द्वैतिनः, द्वितीयकल्पावलम्बिनोऽद्वैतिन इति विवेकः ॥

तत्र "ब्रह्मविदाप्नोति परम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" "अधीहि भगवो ब्रह्म" इत्यादावेकस्यैव ब्रह्मणः प्रस्तुतिः-"ब्रह्म पुच्छं प्रतिष्ठा" "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता" इति चैकस्यैव ब्रह्मणः सर्वप्रतिष्ठास्थानस्योपसंहारश्च, इति पञ्चब्रह्मतावाद उपक्रमोपसंहारोभयविषयत्वाभावात् तद्विरोधः प्रबल एको दोषः ॥

मतद्वयेऽप्यभेदेऽपि भेदबुद्धि-बन्धादिकारणविवेकः।

गुण-गुणिनोरिव ब्रह्मणामप्येषामभेदेऽपि विशेषकृतो वा, अन्यकृतो वा भेदोऽपि वर्तते, यथाऽविद्याकृतः सदात्मना, चिदात्मना, आनन्दात्मना च भेदः, तेन च यावत्तदभेदबुद्धि बन्धः ॥

इयान् विशेषः--यदद्वैतमतेऽविद्याकल्पितभेदावस्थायां बन्धः, बन्धनिवृत्तिस्तु ब्रह्मणोऽखण्डात्मना ज्ञान इति सिद्धान्तः। द्वैतमते तु बन्ध-

मोक्षयोरुभयोः परमात्मस्वरूपभेदाभेदावुभावपि सत्यौ परमात्म-तद्गुणानन्दादीनामिव। तत्र--"नेह नानाऽस्ति किञ्चन" इति भेद-तद्बुद्ध्युभयनिषेधोऽद्वैतमते, द्वैतमते तु भेदमात्रनिषेधः--इति ॥

तत्रेदमेव पृच्छ्यते--स एष न्यायो ब्रह्मसजातीयभेदेऽपि कथं न प्रसरति, यत्रानन्दादिगुणानां ब्रह्मणा च भेदनिषेधेनाभेदसमर्थनमपि? तद् ब्रह्मणो यद्यानन्दस्वरूपतामात्रेण, तर्हि विशेषकृतस्यापि भेदस्य निषेधेऽविद्याकृतानन्दस्वरूपभेदनिषेध इव ब्रह्मनिर्विशेषतायां पर्यवसानम्, इति तेनैव न्यायेन विशेषकृतान्नमयादिब्रह्मभेदनिषेधे निर्भेदमेकमेव ब्रह्मतत्त्वम् ॥

पुच्छब्रह्मवादप्राधान्ये कारणानि।

तत्रापि पञ्चब्रह्मवादपरतया योजनं यदि तथोपास्यतामात्राभिप्रायेण, तर्ह्यद्वैतमतेऽप्यमन्नमयादीनां जागराद्यवस्थाविशेषविशिष्टानां पक्षिरूपेण ब्रह्मात्मतयोपासनविवक्षायामुपास्यतत्तद्रूपेण भेदस्याऽऽविद्यकस्य स्वीकाराद् न विरोधः। सत्यप्येवमानन्दमयपर्यायमात्रे विशेषस्तु पक्षिरूपेणोपास्यमानानन्दमयाधिष्ठानस्य पुच्छत्वकल्पनम्, तत्र शिरः-पक्ष-पुच्छादिविशिष्टतयोपास्यत्वेऽपि ज्ञेयस्य "ब्रह्मविदाप्नोती"ति प्रस्तुतस्योपासनोपयोगिनः पुच्छस्य स्वप्राधान्यमपि विवक्ष्यत इति कृत्वैवान्नमयादिस्थले श्लोकेनाप्रतिपादनेऽपि पुच्छस्यैव श्लोकेन प्रतिपादनम्, तेन 'चैका क्रिया द्व्यर्थकरी बभूवे'ति न्यायेन ब्रह्मणोऽप्राधान्यमुपास्यतया, प्राधान्यं च प्रकरणोपसंहारेण, इत्यानन्दमयान्तपञ्चपर्यायाणां तत्तच्छिरः-पक्ष-पुच्छादिविशिष्टतयोपास्तिविवक्षायां न विसंवादः ॥

पञ्चब्रह्मतावादे सूत्रास्वारस्यादि।

विप्रतिपत्तिस्तु "ब्रह्म पुच्छं प्रतिष्ठे"तिवाक्यमात्रे स्वप्राधान्येन मान्त्रवर्णिकस्य ब्रह्मणो विवक्षा वर्तते वा, न वेति। इदमेवाभिप्रेत्य--"आनन्दमयोऽभ्यासादि"त्येव सूत्रम्", इति नानन्दमयपदमन्नमयादीनामप्युपलक्षणम्। सति चैवं स्थूलारुन्धतीन्यायेनान्यान्यस्योपास्यस्य निर्देशोऽप्युपपद्यते; अन्यथा तदुपदेशो वितथः। अनेन हि यावदेकाग्रतं तस्य तस्य तथा तथोपासनम्, अन्ततस्तु बुद्धेरपि प्रतिष्ठा, यदा ब्रह्मणि निर्विशेषे, तर्हि सर्वाः प्राक्तना बुद्धयो यदोपशान्ताः, तदैकविषयतया मुख्यार्थपर्यवसानं भवतीति प्रतीयते ॥

पञ्चब्रह्मवादेऽनुपपत्तयः ।

पञ्चब्रह्मवादे तूपासनासमुच्चयो वा विकल्पो वा न सम्भवति; भिन्नविषयस्य सर्वस्य पर्यायस्य प्रधानत्वात् सर्वासामुपासनानाम्, विना समुदायरूपेणापि फलसधानतानिरूपणपरवाक्यान्तरम् "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" "दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजते" इत्यादिवत् समुच्चित्य फलसाधनताज्ञानासम्भवात् । विकल्पपक्षे तु विशेषकृते भेदे सति सर्वगुणोदीर्णप्रथमोपक्रान्तब्रह्मज्ञानानुपदेशः, एकस्य ब्रह्मण उपक्रमः, पञ्चब्रह्मणामुपसंहार इत्युपक्रमोपसंहारयोर्वैरूप्यम् ।।

न चेदमद्वैतसिद्धान्ते । आनन्दमयस्यावयविनः पुच्छत्वं तु नोपास्यतामात्रतया, किन्तु स्वप्रधान्येनाप्युपदेशेन, इति जीवब्रह्मैक्यपर्यवसानम्; आनन्दमयस्य जीवत्वात् , तत्प्रतिष्ठात्वाच्च ब्रह्मणः ।।

उत्पत्तिश्रवणान्नान्नमयस्य ब्रह्मत्वम् ।

न चान्नमयादिषु चतुर्षु पर्यायेषु ब्रह्मैव कुत्राप्यवयवेऽपि पुच्छरूपेण निर्दिश्य श्लोकेन श्लोक्यते । तत्राकाशादीनामिवान्नमयस्य पुरुषस्यापि शरीरस्योत्पत्तिवर्णनानन्तरम् "स वा एष पुरुषोऽन्नरसमयः" इति तदुपाधिकत्वेन जागरावस्थस्य जीवस्यैवोपदेशोऽत्र विशदः । न च परमात्मन उत्पत्तिसम्भवः ।।

अन्नमयशब्दस्य जीवपरत्वम् , नान्तर्यामिपरत्वम् ।

यद्यपि सर्वेषां पदानां भूत-तदभिमानि-तज्जीव-तदन्तर्यामिरूपार्थचतुष्टयपरत्वं द्वैतिनो मन्यन्ते; तथाप्याकाश-वाय्वग्नि-जल-पृथिव्योषध्यन्न-पुरुषशब्दाः साक्षादुत्पद्यमानतया निर्दिष्टा नात्र भूतमपहायार्थान्तरपरा भवितुमर्हन्ति, इत्युत्पत्तिर्भूतादिरूपेण साक्षात्, तदुपाधिकत्वेनोपचाराद्वाऽन्तर्यामिणोऽपि यदि विवक्ष्यते, तर्हि तत्र तद्देहस्य जीवस्यापि वा विवक्षा नात्र दण्डेन वारयितुं शक्यते ।।

पुच्छब्रह्मवाद एव प्रकरणस्वारस्यम् ।

तत्रान्नरसस्तु पुरुष एव; "अन्नात् पुरुषः" इति श्रुतेः, इति पुरुषशब्दोऽत्रान्नरसमयपदवाच्यशरीराभिमानिजीवपर एव भवितुमर्हति; "स वा

एष पुरुषोऽन्नरसमयः" इति तदेतच्छब्दाभ्यां "तस्येदमेव शिरः" इत्यादि-प्रत्यक्षशिरआदीनां शरीरत्वकल्पनात्, पूर्ववाक्यप्रस्तुतान्नरसमयत्वस्यान्यत्रासम्भवात्, "तस्माद्वा एतस्मादात्मनः" इति जीवब्रह्मैक्यं वास्तवमनुपज्यैव परमात्मोपदेशस्यात्र प्रवृत्तत्वात्, जागरितजीवादीनां तदैक्यमसम्भवं मत्वा तथोपासनां विधाय क्रमेण तत्तदुपाधिविगमेन सौषुप्तावस्थान्तातीतप्रत्यङ्मात्रसंविद्रूपेणैव जीव-ब्रह्मैक्यमिति बोधयितुमेव वल्लीद्वयस्यापि प्रवृत्तत्वात्, पञ्चस्वपि प्रधानब्रह्मोपदेशस्याप्राप्तकालत्वात्, निष्प्रयोजनत्वात्, आनन्दमयस्य सौषुप्तस्याधिष्ठानं विविधशरीररहितं तत्त्वमेव पुच्छं ब्रह्मेत्यत्र वक्तव्यम् ॥

तेन च—"तस्माद्वा एतस्मादात्मनः" इत्युपक्रमः स्वरसो भवति, इति त्वंपदार्थस्यौपाधिकजनन-मरण-जागराद्यवस्थाशालिनो न "तस्माद्वा एतस्मादात्मनः," इत्यत्रात्मपदार्थता, तेनैक्यं वा ब्रह्मणा विवक्ष्यते, इत्यौपनिषदं रहस्यमत्र स्वयं श्रुत्यैव व्याख्यायते ॥

एवं त्वम्पदार्थं संशोध्य—"तस्मादि"ति प्रस्तुतकारणस्वरूपं जीवाभेदयोग्यं किम्? कथं च कारणत्वं जीवस्येति शङ्कायाम्—आनन्दमयाधिष्ठानतया विवक्षितसंविन्मात्रानन्दरूपत्वमेव जीव-ब्रह्मसाधारणं वस्तुसत् कारणस्यापि स्वरूपम्, न तु कारणत्वादि। तदपि जीवस्योपाधिसम्बन्धेनैव जननमरणादीव, स्वोपाधिमायासम्बन्धाधीनमेव, न तु स्वरूपत इत्युपपादयितुमेव तत्पदार्थशोधनविधयाऽपि "तस्माद्वा एतस्मादात्मनः" इति प्रस्तुतजीवब्रह्मैक्यमुपपादयितुमेव भृगुवल्ली, इति वल्लीभ्यां मिलित्वा निर्विशेषब्रह्मस्वरूपं "ब्रह्मविदाप्नोती"ति प्रस्तुतं "यो वेद निहितं गुहायाम्" "तस्माद्वा एतस्मादि"ति च परामृष्टं विविच्यते; अन्यथा त्वन्नमयादिक्रमेण ब्रह्मवल्ल्याम्, मयट्परित्यागेनान्नादिक्रमेण भृगुवल्ल्यां च कारणसविशेषब्रह्मस्वरूपमात्रपरत्वोपदेशो वितथः ॥

अत्र ब्रह्मवल्ल्यां कार्यतया प्रस्तुतस्य भृगुवल्ल्यामस्यां कारणतयोल्लेखस्तु

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥"

इति नयेन लक्ष्यब्रह्मकार्यत्वं तद्विवर्तत्वेन, ततश्च तद्रूपत्वमपि, इत्यन्नादेः कार्यस्यापि कारणरूपेण जीवस्य कारणत्वमौपाधिकम्, मायाद्युपाधिविलये जीव-ब्रह्मैक्यम्, अन्यथा तूभयोरपि पूर्वोक्तविधया कारणत्वम्, जीवस्य त्वौपाधिकं स्वरूपं तत्तच्छरीरादिकार्यरूपेण कार्यमेवेति फलति ॥

आनन्दमयशब्दस्य मयटः प्राचुर्यार्थत्वेऽपि न परमात्मपरत्वम् ।

अत एव—अन्नमयः प्राणमय इत्यादिमयडन्तपदेन तस्योपदेशः। तत्र मयटः प्राचुर्यार्थत्वमपि सौषुप्तानन्दस्य प्राज्ञेनात्मना संपरिष्वक्तस्य जीवस्यानन्दमयशब्देन विवक्षायामप्यप्रतिहतम्। जागरिक-स्वाप्नावस्थापेक्षया सौषुप्तस्यानन्दप्राचुर्यं प्राचुर्यस्य स्वव्यधिकरणविजातीयाल्पतानिरूपकत्वेऽपि न छिन्नम्। परमात्मनोऽपि प्रचुरानन्दत्वं तस्यापि समष्टिसौषुप्तस्वरूपत्वेनैव, न तु कारणस्वरूपमात्रेण। केवलं सच्चिदात्मना प्रकाशमानस्य आनन्दात्मनाऽप्रकाशमानस्याविद्योपहितस्यैव कारणत्वात् कारणस्वरूपस्यानन्दात्मतयाऽऽवृतस्यानाद्यविद्याकल्पितभेदस्यानन्दप्राचुर्यं न सम्भवति; अन्यथाऽखण्डात्मना भानात् न कारणताऽपि। तदंशानां ब्रह्मविष्ण्वादिभेदभिन्नानामानन्दप्राचुर्येऽपि न तेन रूपेण तेषां परमात्मस्वरूपत्वम्, इति न प्रकृतोपयोगः॥

आनन्दमयस्याकामहतश्रोत्रियावस्थपर्यन्तस्य
जीवत्वाद् जीव-ब्रह्मैक्याभिप्रायेणैवात्रान्नमयादिक्रमेण ब्रह्मोपदेशः।

अन्नमय-प्राणमय-मनोमया जडोपाधिकाः, सदात्मताऽधिक्येन, सिद्धावस्थजीवात्मानः, स्वप्रकाशस्वस्वरूपाः, तुरीयभूमिकागता विज्ञानमयाः; विज्ञानांशाधिक्यात्, सौषुप्तावस्थ इव पञ्चम-षष्ठ-सप्तमभूमिकागताश्चानन्दमया इति विभागः। पञ्चमाद्यवस्थागताः सिद्धाः स्थितप्रज्ञास्तु जागरावस्थायामेव निरुद्धान्तःकरणवृत्त्यैवानन्दप्रचुर्यानुभवात् ततोऽपि प्रचुरानन्दा इति तु विशेषः। अधिकं वासिष्ठतोऽधिगन्तव्यम्। तेन च जीवन्मुक्त्यतीतमपि स्वरूपमेव जीवब्रह्मैक्ययोग्यम्, इति जीवन्मुक्तानां दृष्ट्याऽपि न जीव-ब्रह्मैक्यम्, इति जीवन्मुक्तनां निवृत्ताज्ञानानामपि बाधिताज्ञानसंस्कारवशात् व्यवहारवतां शुकवामदेवादीनां तत्त्वदर्शिनामुपदेष्टृत्वमप्यबाधम्, इति नोपदेशानुपपत्तिरप्यद्वैतसिद्धान्ते, इत्यानन्दमय इत्यादौ प्राचुर्यार्थत्वेऽपि मयटो न ब्रह्मविवक्षैव, किन्तु अबाद्युत्पत्तिक्रमेण तत्तदुपाधिकजीवानां कार्यरूपेण, कारणरूपेण ब्रह्मणैक्यविवक्षामभिप्रेत्यैव वल्लीद्वयेऽपि जीव-ब्रह्मोभयोपदेशेनोभयैक्यबोधनम्, इत्यानन्दमयपर्यायमात्रमत्र विषयवाक्यम्, नान्नमयादिवाक्यमपि। समानन्यायेनार्थनिर्णयस्तु न्यायैकनिर्णेये सन्दिग्धे विषये, न तु निश्चिते। अन्यथा अन्नमयोऽभ्यासादित्येव सूत्ररचनापत्तेः, इत्यधिकरणं व्यर्थं स्यात्। अतो ज्ञायते अन्नमयादिवाक्ये न संशयलेशोऽपि॥

अत एव ब्रह्मण्येव प्रसिद्धेषु, अन्यत्र प्रसिद्धेषु, अन्यत्रैव प्रसिद्धेषु च चतुर्विधेषु ब्रह्मण्येव प्रसिद्धानां निर्णयार्थं नाधिकरणापेक्षेति द्वैतिनामपि घण्टाघोषः। तथा चानन्दमयपदस्य सूत्रे तत्पदार्थपरस्य निर्देशो द्वैतमताभिमतामधिकरणरचनां विरुणद्धि ॥

पुच्छवाक्यस्यैव विषयत्वे स्वारस्यम् ।

एतेन–"अभ्यासादि"ति हेतुनिर्देशोऽपि—व्याख्यातः। सत्यम्, सन्दिग्धं पक्षं निर्दिश्य तद्गत एव धर्मो हेतुतया विवक्ष्यते सर्वत्र, यथा–"आकाशस्तल्लिङ्गात्" इत्यादौ । न चानन्दमयपदे, तत्पर्याये वा सावयवे पक्षिरूपेऽस्ति सन्देहः, किन्तु तत्पर्यायगते ब्रह्मशब्द एव । कारणतात्मना प्रस्तुत आत्मा यदि "ब्रह्मविदाप्नोति" "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यप्रस्तुतं तत्पदार्थमात्रम् "यो वेद निहितं गुहाया" मित्यत्रापि विवक्षितम्, तर्हि "तस्मादि"त्यनेनैव पर्याप्तम्, इति वितथमात्मनःपदस्याधिकस्याम्नानम्। अतः "सत्यं ज्ञानमि"ति प्रस्तुतस्य, "यो वेद निहितं गुहायामि"त्यन्नमयाद्यानन्दमयान्त गुहायां निहितस्य च प्रत्यगात्मस्वरूपस्याभेदोऽप्यत्र प्रतीयते, इति प्रत्यग्ब्रह्मैक्यविवक्षायामेव पदत्रयसार्थक्यम् ॥

अभ्यासादिति हेतुरपि पुच्छवाक्यप्राधान्य एव युज्यते ।

तत्र गुहापदार्थः पञ्च कोशाः, तन्निहितं शुद्धं प्रत्यगात्मस्वरूपं ब्रह्मेति "ब्रह्म पुच्छं प्रतिष्ठा" इति प्रथमप्रस्तुतब्रह्मशब्देन प्रस्तुतब्रह्मणोऽभ्यासः स्वप्राधान्येन, "असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरि"ति ब्रह्मशब्देन प्राधान्येनानन्दमयपर्यायगतस्य प्रथमप्रस्तुतस्य ब्रह्मणो ज्ञेयस्यैव ज्ञानाज्ञानयोः फलनिर्देशश्च ब्रह्मशब्दपक्षीकरण एवोपपद्यते। तथाच ज्ञेयतया प्रस्तुतब्रह्मस्वरूपनिरूपणपरं पुच्छब्रह्मवाक्यमेव ब्रह्मपदेनैव पुनःपुनरभ्यासयुक्तेन वाक्यशेषेणोपदिश्यमानत्वाद् विषयः, इत्यभ्यासो हेतुरत्रैव स्वरसः ॥

अन्नमयादिविज्ञानमयान्तेषु पर्यायेषूपासनाविधिपरेषु कुत्रापि न ब्रह्मशब्दोऽभ्यस्यते। न चानन्दमयपर्यायगतानन्दमयपदस्य, 'ब्रह्मविदाप्नोति परमि"त्यारभ्यैतदन्तेषु कुत्राप्यन्नमयादिशब्दस्य वाऽभ्यासो दृश्यते। "अन्नं ब्रह्मेति व्यजानात्" इत्यत्राप्यन्नस्य कारणात्मताज्ञानमेव परम्परया जीवब्रह्मैक्यज्ञानोपायः, न तु कार्यात्मना ज्ञानमिति प्रतीत्या सर्वेषां कारणात्मैव ब्रह्मेति विवेचनाद् नान्नादिब्रह्मतायां तस्य तात्पर्यम् ॥

न हि कुत्राप्यन्नमयादीनां ब्रह्मणा सामानाधिकरण्यमाम्नायते। "येऽन्नं ब्रह्मोपासते"त्यादि त्वन्नमयादीनां ब्रह्मत्वं कारणात्मना, न तु स्वरूपेणेत्यभिप्रायं कारणस्यान्नादेरपि ब्रह्मत्वं नान्नाद्यात्मना, किन्तु तत्तत्कारणक्रमेण पर्यवसन्नकार्य-कारणभावप्रतिष्ठास्थानब्रह्मात्मनैवेति विवेचनार्थमेव भृगुवल्ली ॥

आनन्दमयाधिकरणस्याद्वैत एव स्वारस्यम् ।

अत एव—आनन्दमयपर्यायान्तभृगुवल्ल्यामपि "परमे व्योमन् प्रतिष्ठिते"ति ब्रह्मण एव कार्य-कारणभावप्रतिष्ठात्वमाम्नायते। न चान्नमयादिपर्यायेष्विवानन्दमयपर्याये "येऽन्नं ब्रह्मोपासते" "ये प्राणं ब्रह्मोपासते" "विज्ञानं देवास्सर्वे। ब्रह्म ज्येष्ठमुपासते" इतिवत् "य आनन्दं ब्रह्मोपासते" इति साक्षाद् आनन्देन ब्रह्मणः सामानाधिकरण्येनोपासनविधिराम्नायते, किन्तु "असन्नेव स भवती"ति पुच्छब्रह्मणो ज्ञानस्यैव प्रशंसाऽम्नायते ॥

भृगुवल्ल्यां कारणात्मनोपदेशस्याद्वैत एव स्वारस्यम् ।

न चात्रोपास्तिरपि। तेन च ज्ञायते-उपासनस्य विधिः सर्वाधिष्ठानब्रह्मस्वरूपज्ञानपर्यन्तमेव, आनन्दमयावयवतया, तदधिष्ठानतया वा ब्रह्मस्वरूपज्ञानमेवान्नमयादिभावेन ब्रह्मोपासनस्य फलमिति च, इत्यन्नमयाद्युपासनस्य न मुख्यब्रह्मविषयत्वम्, किन्तु सर्वोपासनफलब्रह्मज्ञानस्यैव मुख्यब्रह्मविषयत्वम्, इति सौत्रोऽभ्यासहेतुरन्नमयादिमुख्यब्रह्मतायां नानुगुणः, इत्यानन्दमयाधिकरणमद्वैतिनामेवानुगुणम् ॥

अन्नमयादावभ्यासहेत्वनन्वयः ।

तत्रानन्दमयस्यान्नमयाद्युपलक्षणत्वायोगः; तेषां ब्रह्मत्वशङ्काया अप्रसरादिकं च चानुपदमेव व्यक्तीकृतम्। न ह्यन्नमयादिसामानाधिकरण्येन ब्रह्मशब्दाम्नानम्, येन तेषामपि विषयवाक्यता स्यात्। 'येऽन्नं ब्रह्मोपासते" इति ब्रह्मपदमात्रं नान्नमयस्यापि ब्रह्मतानिर्णयाय प्रभवति; विषयवाक्ये ब्रह्मशब्दस्याभावे श्लोकमुखेन ब्रह्मत्वनिर्णयासंभवात् ॥

न च ब्रह्मशब्दस्यात्राभ्यासोऽपि; एकविषयासकृदुक्तिर्ह्यभ्यासो नाम। न चान्नमयविषया, ब्रह्मविषया वाऽसकृदुक्तिरन्नमय-प्राणमय-मनोमय-विज्ञानमयपर्यायेषु। आनन्दमयपर्यायमात्रे हि—"ब्रह्म पुच्छं प्रतिष्ठे"ति

प्रस्तुतब्रह्मविषयैवासकृदुक्तिः "ब्रह्मविदाप्नोति परम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "असन्नेव स भवति असद् ब्रह्मेति वेद चेदि"ति ब्रह्मविषयाऽसकृदुक्तिर्वर्तते ॥

आनन्दमयपदस्य सौत्रस्यान्नमयाद्यनुपलक्षणत्वम् ।

न च सूत्रकारस्यानन्दमयपदमात्रमाकाश-प्राण-ज्योतिरादिवाक्यगताकाशादिपदमात्रं प्रयुञ्जानस्य तदतिरिक्तनिर्णयोपलक्षणेऽपि तात्पर्योन्नयनं सम्भवति। अधिकाशङ्कानिवर्तनार्थं तन्मात्रस्य निर्देश इति तु परास्तमेव ॥

आनन्दमयपदे मयटः प्राचुर्यार्थत्वमकिञ्चित्करं सिद्धान्ते ।

न च प्राचुर्यार्थत्वमात्रमानन्दमयपदघटकस्य मयटो ब्रह्मताविरोधि, सौषुप्तादिसाधारणत्वादानन्दप्राचुर्यस्य। निरतिशयप्राचुर्यमेवात्र प्राचुर्यमिति विवक्षा तु "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इतिप्रतिपर्यायम् श्रवणादकामहतश्रोत्रियजीवन्मुक्तादिसाधारणी, इति न जीवपक्षव्यावर्तने सा प्रभवति, इति पूर्वोत्तरपक्षयोरुभयोरपि प्राचुर्यार्थत्वं साधारणम् ॥

"विकारशब्दाद् नेति चेन्न प्राचुर्यादिति सूत्रं तु परमात्मपक्षाविरोधमपि यद्यपि सूचयति; आनन्दमयपर्यायगततन्मात्रविषयतामादायोक्ताधिकरणप्रवृत्तिरिति त्वभ्यासादिति हेतुः साधयतीति व्यक्तीकृतं पूर्वमेव न चाभ्यासो ब्रह्मणोऽन्नमयादीनां ब्रह्मत्वमभिप्रेत्यैव-"येऽन्नं ब्रह्मोपासते" इत्यादौ ॥

मनोमयादिपर्यायस्योक्ताधिकरणाविषयता ।

न च मनोमयपर्याये—"ये मनो ब्रह्मोपासते" इति मनोमयश्लोके ब्रह्मशब्दोऽपि। आनन्दं ब्रह्मणो विद्वानिति ह्यानन्दस्वरूपब्रह्मविज्ञानस्यैव ब्रह्मत्वं श्रावयति। तेन चावगम्यते नात्र मनोमयादीनामनुसन्धानं तेषामेव ब्रह्मत्वाभिप्रायेण, किन्त्वानन्दस्वरूपब्रह्मावगमोपायत्वेनैव तस्योपदेशः, इति सर्वं प्रकरणमानन्दमयपर्यायमात्रब्रह्मसमर्पकतयैव योजयितुं शक्यम् ॥

आनन्दमयाधिकरणे पुच्छवाक्यस्यैव प्राधान्यम् ।

यथा च पक्षिरूपेणान्यत्रोपासनविधिः, आनन्दमयपर्यायमात्रे तु तेनैव क्रमेण ब्रह्मस्वरूपज्ञानमेव लक्ष्यम्, अथवा तत्रापि तेन रूपेणोपासना-

विवक्षायामपि प्राधान्येन ब्रह्मस्वरूपसमर्पणेऽपि तात्पर्यम्, तथा पूर्वमेवोक्तम्, इति ब्रह्मणः पुच्छत्वेन निर्देशोऽत्राकिञ्चित्करः। "ब्रह्माधिपतिरि"त्यादिवाक्यान्तरस्य तूपरितनसूत्राणां तत्रानन्वयात्, सविशेषस्य नारायणत्वे, सदाशिवत्वेऽन्यथा वा तत्राद्वैतिनामविरोधात्, तात्पर्यग्राहकाभ्यासहेतुत्वविवक्षया ज्ञेयस्वरूपमात्रनिर्णयार्थत्वस्यावगमाच्च तत्परत्वं न प्रकृतोपयोगि ॥

यथा चान्नरसमयशब्देऽन्नपदम्, तद्रसपदम्, "ओषधीभ्योऽन्नपदं च अन्नात् पुरुषः" इति प्रस्तुतान्न-तत्कार्यशरीरपरं न प्रस्तुतभोक्तृत्वादिपरम्, तथा पूर्वमेवोक्तम्, इति परमात्मनोऽन्नमय-प्राणमयादिशब्देन नात्रोपस्थापनं संभवति। अन्नमयत्व-प्राणमयत्वादिधर्माः जीवधर्माः, न तु विष्णुधर्माः, न वा नामविधया विष्णुपराः, इति न तेषां ब्रह्मत्वमपि। नामात्मकान्यत्रप्रसिद्धशब्दघटितं तु वाक्यं पुच्छपदसमभिव्याहृतं ब्रह्मवाक्यमेव ॥

आनन्दमयपदविषयत्वे मयटो विकारार्थत्वशङ्कानुत्थितिः।

मयटो विकारार्थत्वशङ्का-तत्परिहारौ नानन्दमयशब्दमधिकृत्य, किन्तु पुच्छशब्दमधिकृत्यैव। "द्व्यचश्छन्दसि" इति द्व्यच एव छन्दसि विकारार्थमयट्प्रत्ययनियमनेन आनन्दमयशब्दे मयटो विकारार्थत्वशङ्काया अप्रसरात् ॥

एतेन—अन्नरसमय-विज्ञानमय-शब्दावपि—व्याख्यातौ; तत्राप्युक्तशङ्काया अप्रसरात्। प्राणमय-मनोमयशब्दयोः प्राचुर्यार्थत्व-विकारार्थत्वकल्पावुभावपि जीवपक्षस्याप्यविरोधिनौ, इति "विकारशब्दादि"ति सूत्रमेकमेव पर्याप्तं कारणम्—अत्रान्नरसमय-विज्ञानमयानन्दमयशब्दानां ब्रह्मपरत्वशङ्काया अनुदये ॥

"अन्योऽन्तर आत्मे"त्यन्यत्वोपन्यासस्य द्वैतमतेऽयोगः।

"अन्योऽन्तर आत्मा" "अन्योऽन्तर आत्मे"ति भेदनिर्देशस्तु परमात्मनो गुणतः, स्वरूपतो वा भेदस्य "नेह नानास्ति किञ्चने"त्यादिना द्वैतमतेऽपि विशेषकृतस्यापि निषेधाद् नोपपद्यते। न ह्यभिन्नस्य विशेषकृतः सत्यो भेदः, भेदनिषेधश्चोपपद्यते। न चाभेदबोधने तस्य तात्पर्यम्। अभेदाविरोधित्वे तु भेदस्य विशेषकृतस्य निषेधासंभवेन तन्निषेधद्वाराऽभेदबोधनासंभवः ॥

पञ्चब्रह्मतावादे भृगुवल्लीविरोधः ।

एतेन—भृगुवल्ल्यपि—व्याख्याता । न हि साऽप्यन्नमयादिब्रह्मतामनुवदति, उपास्यतां वा तत्रान्नमयादेः, किन्त्वन्नमयस्येवान्नस्यापि कार्यस्य ब्रह्मात्मताम्, क्रमेण वाऽज्ञानोपहितात्मताम्, तेन क्रमेणानुपहितब्रह्मज्ञानपर्यवसानं च । न चान्नशब्दोऽत्रान्नमयपरः न च "वसन्ते ज्योतिषा यजेते"त्यत्रेवाधिकारबलात्, प्रकरणबलाद्वैकदेशकीर्तन-प्रकृतपरामर्शादन्नादिशब्देनाधिकृतान्नमयादेर्ग्रहणम्, पक्षिरूपेणोपास्यस्वरूपसमर्पणमुखेन कार्यमुखेन प्रत्यगात्मस्वरूपपरत्वेन त्वंपदार्थशोधनपरत्वादन्नमयाद्यधिकारस्य, जगत्कारणत्वमुखेन निर्विशेषाखण्डतत्पदार्थशोधनपरत्वाच्च भृगुवल्ल्याः । जीवस्वरूपं हि कार्योपाधिकं कार्यमुखेनोपदिष्टम्, तत्पदार्थस्तु कारणोपहितं कारणमुखेनात्रोपदिश्यते, इत्यधिकारभेदादुभयोर्न ज्योतिःशब्दन्यायोऽत्र प्रसरति ॥

"एतमन्नमयमात्मानमुपसङ्क्रामति" एतं "प्राणमयमात्मानमुपसङ्क्रामति" "एतमन्नमयमात्मानमुपसङ्क्रम्य" "एतं प्राणमयमात्मानमि"ति च ब्रह्मवल्ल्याम्, भृगुवल्ल्यां चोभयत्र "स यश्चायं पुरुषे । यश्चासावादित्ये स एकः स य एवंवित्" इत्युपक्रम्य प्रवृत्तानि वाक्यानि तत्त्वमसिज्ञानेन सर्वात्मज्ञानमुपदिशन्ति, त्वंपदलक्ष्यार्थव्यतिरेकेण ज्ञातव्यात्मान्तराभावं साधयन्ति, तत्पदलक्ष्यार्थस्वरूपस्य त्वंपदलक्ष्यार्थस्वरूपैक्ययोग्यस्य ज्ञानेन तद्व्यतिरिक्तकार्यसामान्यभावबोधनेनैकविज्ञानेन सर्वविज्ञानमुपपादयन्ति, अन्नमयादीनामौपाधिकानामुपाधिविगलनेन तत्पदार्थेन स्वरूपतोऽभेदम्, जडानां तत्पदलक्ष्यार्थव्यतिरेकेण बाधायां सामानाधिकरण्यविधया स्वरूपतोऽभावं ज्ञापयन्ति चन्नमयादीनां ब्रह्मत्वं वारयन्ति ॥

अन्नमयादीनां क्रमेण प्राप्यत्वानुपपत्तिर्द्वैतवादे ।

न ह्यन्नमयादीनां ब्रह्मत्वे क्रमेण प्राप्यत्वमुपपद्यते । न हि "ब्रह्मविदाप्नोति परमि"ति ब्रह्मणोऽनेकविधस्यैकैकप्राप्तिक्रमेण प्राप्तिक्रमः प्रस्तुतः । अद्वैतसिद्धान्ते त्वेकविधस्यैव ब्रह्मणः, प्राप्तिः. विज्ञानं वा, तद्विज्ञाने युगपदेव सर्वविज्ञानं स्वरूपैक्यज्ञानव्यतिरेकेणाभावश्चान्नरसमयादिरूपेण प्रस्तुतजागर-स्वाप्न-सौषुप्तभेदप्रयुक्तभेदमादाय भेदेनोपदिष्टस्यात्मनो जागरादिप्रयोजकोपाधिविलयनक्रमेणाभेदप्रयुक्तस्वरूपैक्यनिरूपणेन क्रम उपपद्यते ।

जीवब्रह्मैक्ये न जागरः, स्वप्नः, सुषुप्तिः, उपाधिभेदप्रयुक्तो भेदो वा मुक्तात्मनः, इति जागराद्यवस्थातिक्रमः, सर्वविधशरीरविलयेनाशरीरत्वं च ज्ञाप्यते, इति पूर्वोक्तक्रमोपपत्तिः, इति प्राप्यत्वश्रवणमात्रेण नान्नमयादीनां ब्रह्मत्वम्; अन्यथा पञ्चब्रह्मवादे "स यश्चायं पुरुषे। यश्चासावादित्ये स एकः" इत्युपदेशोऽसङ्गतः स्यात् ॥

पुच्छपदस्वारस्यमद्वैतवादे।

एतेन—"विकारशब्दान्नेति चेन्न प्राचुर्यादि"ति सूत्रमपि—व्याख्यातम्। प्राचुर्यशब्दो ह्यत्र पुच्छपदं प्राचीनपर्यायेष्ववयवविवक्षया प्रयुक्तं प्राचुर्येण, इत्यत्रापि किञ्चिन्निर्दिष्टव्यमित्यभिप्रायेण प्रयुक्तम्, परं तु नात्रावयवविवक्षा पूर्वत्रेवेति प्राचुर्यविवक्षा। तेन च पुच्छवत् पुच्छमधिष्ठानमेवात्र पुच्छपदार्थः। तच्च ब्रह्मस्वरूपम्, यत् "ब्रह्मविदाप्नोति" "सत्यं ज्ञानमनन्तं ब्रह्म" "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इति प्रकृतमन्नमयाद्युपादानमन्नाद्युपहिताऽत्मना "येऽन्नं ब्रह्मोपासते" इत्यादौ, अन्ते च स्वरूपेणाधिष्ठानं विवर्तोपादानं वा सौषुप्तोपाध्यज्ञानोपहितात्मना, अनुपहितरूपेण तु मुक्तात्मेति बोधनार्थमेव पुच्छब्रह्मवाक्यम्। "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यानन्दमयपर्यायपर्यन्तं पञ्चानां ब्रह्मणां शारीरत्वं पूर्वपूर्वान्तरात्मत्वं च नोपपद्यते। न हि ब्रह्मैव ब्रह्मणोऽन्तर्यामि, नियम्यं च भवितुमर्हति ॥

मान्त्रवर्णिकसूत्रे एकवचनम्, नपुंसकं च
पुच्छब्रह्मतावाद एव स्वरसम्।

"मान्त्रवर्णिकमेव च गीयते" इति नपुंसकशब्देन मान्त्रवर्णिकं ब्रह्म प्राधान्येन पुच्छवाक्य एव निर्दिष्टम्, न तु कस्याप्यवयवतया ब्रह्मोपात्तमिति विशदम्। अन्नमयादिपञ्चकब्रह्मतायामानन्दमयमात्रपुच्छतया ब्रह्मनिर्देशो नोपपद्यते। न चोपासनार्थं पुच्छत्वेन ब्रह्मणः कल्पनम्, किन्तु मान्त्रवर्णिकप्रधानस्वरूपेणैवेति ज्ञायते ॥

न चान्नमयादिपर्यायेषु कुत्रापि ब्रह्मावयवस्थाने निर्दिष्टम्, येनात्र मान्त्रवर्णिकपदं श्लोकगतं विवक्षितुं शक्येत। न च "येऽन्नं ब्रह्मोपासते" इत्यत्रान्नमयब्रह्मस्वरूपोपासनाविधिः, येनोपास्यकोटौ ब्रह्मस्वरूपस्याप्यन्नमयादौ प्रवेशः स्यात्; अन्यथा पञ्चावयवातिरिक्तावयवरूपस्य कल्पनापत्तिः, कल्पितोऽप्यवयवः षष्ठः को वा स्यात्?

प्रत्यगभिन्नैकब्रह्मतावाद एव प्रकरणान्वयः ।

आनन्दमयवाक्ये पक्षिणोऽवयवविशेषरूपेण निर्देशोऽप्यत एव स्वरसः । तत्र "सत्यं ज्ञानमनन्तं ब्रह्मे"ति प्रस्तुतं ब्रह्मैवोत्तरत्र प्रस्तूयते । न केवलं तत्पदार्थस्वरूपेण, किन्तु "यो वेद निहितं गुहायाम्" "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति प्रत्यगभिन्नतयाऽपि, इति प्रत्यगभेदः सर्वोपाधिविलयनेनैव, नान्यथा, इत्यनुपहितं प्रमातृचैतन्यं तत्पदार्थाभिन्नं मुक्त्यवस्थायां शुद्धप्रत्यक्स्वरूपस्याप्यज्ञानोपहितरूपेण कारणमपि न विरुद्धम् ॥

वाचस्पतिमतेऽज्ञानस्य संविन्मात्रोपाधित्वेनैव जीवाश्रयत्वव्यपदेशः, इति ब्रह्मसूत्रभाष्यवार्तिकादौ व्यक्तम् । न चाज्ञानोपहितत्वेन जीवत्वोपहितस्याधिष्ठानत्वम् । स्वोपाध्यज्ञानधर्माश्रयत्वेन जीवाश्रयत्वव्यपदेश इति हि वस्तुस्थितिः । तदेवाज्ञानोपहितं तद्व्यावृत्तावस्थायामभिन्ननिमित्तोपादानं तत्पदवाक्यार्थः, इत्यभिप्रेत्यैव "तस्माद्वा एतस्मादात्मनः" इति कारणत्वोल्लेखः । अतः कारणत्वेन प्रकृतं प्रत्यगेव तत्पदवाक्यार्थो यावदुपाधिसत्त्वम्, अनन्तरं तूपाधिधर्मानाक्रान्तत्वाद् न जीवोऽज्ञानावच्छिन्नः, न वाऽज्ञानविषयः तत्पदार्थः इति मान्त्रवर्णिकं ब्रह्म नान्नमयाद्यधिष्ठानं भवितुमर्हति, तत्प्रतिष्ठास्थानं वा । न च तथाऽऽम्नातमपि ॥

सत्य-गुहा-तन्निहिताभेदपरत्वं सर्वस्या ब्रह्मवल्ल्याः ।

तत्र सत्यत्वविवरणम्—"तस्माद्वा एतस्मादात्मनः" इति सृष्टिवाक्येन, गुहास्वरूपविवेचनमन्नमयाद्यानन्दमयान्तकोशैः, तन्निहितप्रत्यगभिन्नं ब्रह्मस्वरूपं "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्येन, जीवब्रह्मैक्यं तु "स यश्चायं पुरुषे यश्चासावादित्ये । स एकः" इति वाक्येनः, "स य एवंविदि"ति "यो वेदे"ति वाक्येन, ब्रह्मप्राप्तिश्चाऽऽनन्दमीमांसया निष्कृष्यत इत्यद्वैतमर्यादा । तत्रान्नमयो जागरितावस्थः, प्राणमय-मनोमय-विज्ञानमयात्मकः स्वप्नावस्थः, सौषुप्तस्त्वानन्दमयः, मुक्तावस्थस्तुरीयस्तु पुच्छं ब्रह्मेति माण्डूक्योपनिषदर्थसारसङ्कलनमपि ॥

ज्ञेयस्य पुरुषपदेन निर्देशस्वारस्यमद्वैतवादे ।

तत्रान्नमयादौ सर्वत्र पुरुषपदनिर्देशाद् यद्यपि पुरुषसूक्तप्रतिपाद्यो मुख्यः पुरुषः परमात्मैव भवितुमर्हति; तथापि "अन्नात् पुरुषः" इत्युत्पत्तिः

श्रूयमाणा यथाश्रुता शरीरमेवात्र बोधयति, न तु शरीरिणं जीवात्मानम्। वल्लीद्वयेऽपि हि "स यश्चायं पुरुषे। यश्चासावादित्ये" इत्युपसंहारोऽन्तरादित्यपुरुषाद् नारायणादनतिरिक्तं जीवात्मानं विवक्षति ॥

एतेन—पुरुषपदेन प्रत्यभिज्ञानात् पुरुषसूक्तप्रतिपादितं परमात्मस्वरूपं प्रतिपुरुषमाम्नायमानमत्र विवक्षणीयमिति शङ्कापि—परास्ता। न केवलम्, अन्नमयः स्थूलशरीरावच्छिन्नः, किन्तु सूक्ष्मशरीरावच्छिन्नाः प्राणमय-मनोमय-विज्ञानमयाः, आनन्दमयश्च सूक्ष्मतरकारणशरीरावच्छिन्नः, इति जाग्रत्स्वप्न-सुषुप्त्यवस्थस्य जीवस्यावस्थात्रयवतः शरीराणि वर्तन्ते, इति पुरुषपदमत्र कोशचतुष्टयस्यापि साधारणम्। अन्तरात्मत्वं चान्यस्यान्यस्य ततः सर्वत्र ॥

वस्तुतस्तु—पुरुषपदं केवलम्, "अन्नात् पुरुषः"। स वा एष पुरुषोऽन्नरसमयः" इत्यत्रैव श्रूयते, प्राणमयादौ। "स वा एष पुरुषविध एव" इत्यादौ तु पुरुषविधशब्द एव वर्तते, इति पुरुषपदं नान्नमयादिपरमात्मत्वे लिङ्गम्। अन्नमयपर्याये हि जन्यतयैवाऽऽम्नायमानः, "स वा एष" इति तदेतच्छब्दाभ्यां परामृश्यमानत्वाद् न स परमात्मा भवितुमर्हति; पुरुषपदार्थस्य भूतशरीरातिरिक्तस्य तदभिमानिनः, तदन्तर्यामिणो वोत्पत्त्यसंभवेन तत्रापि परमात्मपरताया असंभवात् ॥

"तस्यैष एव शारीर आत्मे"ति
वाक्यचतुष्टयस्य द्वैतवादे नोपपत्तिः।

प्रतिपर्यायं "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति मनोमयपर्यायमारभ्य शारीरत्वप्रतिपादनमपि पुरुषशब्देन शारीरविवक्षां द्रढयति। आत्मत्वं तु मुख्यपरमात्माभिन्नत्वात् प्रत्यगात्मनोऽपि, न परमात्ममात्रस्य; अन्यथा पुरुषपदेनैव परमात्मनो लाभाद् आत्मपदं वितथम्, "स वा एष पुरुषोऽन्नरसमयः" इति परामर्शोऽप्यव्यवहितशारीरपरामर्शपरो विरुद्ध्यते ॥

"तस्माद्वा एतस्मादि"त्यस्य जीवब्रह्मैक्यपरत्वमेव।

न चात्र "तस्माद्वा एतस्मादि"ति व्यवहितस्यात्मनः परामर्शः, पुरुषपदमात्रेण परमात्मोपस्थितौ 'स वा एष'पदवैयर्थ्यात्, सन्निहितपरित्यागेन व्यवहितपरामर्शायोगाच्च ॥

यद्यपि परमप्रकृतत्वं परमात्मनः; तथापि तस्य गुहानिहितत्वेन, ज्ञेयत्वेन, प्राप्यत्वेन च मुख्यं प्रकरणम्। तदवान्तरप्रकरणं तु गुहापदार्थस्य, यस्यैवानुषङ्गेण "अन्नात् पुरुषः" "स वा एष पुरुषोऽन्नरसमयः" इत्यादयः पर्यायाः। न हि गुहाऽपि परमात्मा। कारणस्वरूपस्य पुरुषपदेन परामर्शस्तु पुरुषस्योत्पत्त्यैव कार्य-कारणभावोपसंहारात्, कारणस्य कार्यत्वासंभवाच्च नोपपद्यते; अन्यथा—"अन्नात् पुरुषः" इत्यनुपयुक्तं तदुत्पत्तिवर्णनमसङ्गतम्॥

"अन्नात् पुरुषः" इत्यत्र पुरुषपदं न परमात्मपरम्।

सत्यमीश्वरस्य प्रादुर्भावो भवति, न त्वन्नादेरिवाकाशादिक्रमेण कार्यतया प्रस्तुतात्; अन्यथा सर्वत्र कारणवाक्येषु तत्तत्कार्यवाचकशब्दानां तदन्तर्यामिपर्यन्तपरत्वाद् जगत्कारणत्वं ब्रह्मणो न लक्षणम्, न वाऽन्तर्यामित्वम्, नियामकत्वं वा तस्य भवितुं शक्यम्। अनेकार्थस्याप्येकस्मिन् वाक्य एकार्थत्वस्यैव युक्तत्वाद् आकाशादिभूताभिप्रायेणोत्पत्तिः, परमात्माभिप्रायेण प्रादुर्भावः, इत्येकेनैव वाक्येनार्थत्रयस्य, अर्थचतुष्टयस्य वा बोधासंभवात्॥

"अन्नात् पुरुषः" इत्यादौ प्रथम-
प्रतीतभूतार्थत्वत्यागानौचित्यम्।

एकार्थत्वस्यैव युक्तत्वेऽपि प्रथमप्रतीतलोकप्रसिद्धार्थपरताया अपि सम्मतत्वेन तावतैव वाक्यपर्यवसानात् परमात्मनोऽपि प्रादुर्भावबोधानुपपत्तिः। परमात्मनोऽन्तर्यामिण इव जीवस्यापि पुरुषपदार्थत्वेन तत्प्रादुर्भावपरताया अप्यापत्त्या "स वा एष पुरुषोऽन्नरसमयः" इत्यत्र पुरुषपदेन शारीरस्य ग्रहणमेवोपपन्नम्। "तस्यैष एव शारीर आत्मे"त्यपि तदा सुसंगतं भवति। पुरि शेते इति व्युत्पत्त्या पुरुषपदस्य शारीरपरत्वमपि नात्र विरुध्यते॥

मुख्यं पुरुषत्वं जीवात्मन एव, न परमात्मनः।

"नवद्वारे पुरे देही"इति पुरिः शयानत्वं जीवस्यैवावगम्यते। परमात्मा हि देहेऽपि वर्तते, अन्यत्रापि, 'इत्यसाधारणेन धर्मेण व्यपदेशः' इति न्यायादपि मुख्यं पुरुषत्वं जीवात्मन एव। प्राणमयादौ पुरुषविधत्वाम्नानं पुरुषसूक्तगतात् पुरुषादमुं पुरुषं व्यावर्तयितुम्। सति तात्पर्यग्राहके लिङ्गे

"आकाशस्तल्लिङ्गादि"ति न्यायाद् आकाश-प्राण-ज्योतिरादिशब्दानां गौण्या तत्तद्वाक्यमात्रे ब्रह्मपरत्वं न केनापि वार्यते ॥

न चाकाशाधिकरणन्यायेन पुरुष-
पदस्यात्र परमात्मपरत्वम् ।

न चात्र तस्य न्यायस्यावसर इति पूर्वमेवोक्तम्, इति ब्रह्मासाधारणलिङ्गानामत्राभावाद् "अन्नात् पुरुषः" इत्यत्र न पुरुषपदस्य परमात्मपरत्वम् ॥

एतेन—पुरुषसूक्तमपि—व्याख्यातम्; आकाशाधिकरणन्यायेन तस्य गौण्या वृत्त्या कथञ्चन परमात्मपरतायास्तावन्मात्र एवौचित्येन सर्वत्र तदर्थत्वकल्पनायोगात् ॥

एतेन—आकाशादिशब्दानां ब्रह्मण्येव मुख्यत्वमिति—परास्तम्। तदिदं यद्याकाशाधिकरणसिद्धम्, तर्हि तदधिकरणव्युत्पादितन्यायायोग्यविषय एव तत्। यदि तु कोशादिवशेन, सम्प्रदायविशेषेण वा तत्राकाश-प्राण ज्योतिरादिशब्दानां सर्वेषां परमात्मपरताया एव युक्तत्वाद् मुख्यार्थपरिग्रह एव युक्तः, तर्हि वितथानि सर्वाण्येतान्यधिकरणानि ॥

पुरुषपदस्य शरीरपरत्वाभावे वैयर्थ्यम् ।

"स वा एष पुरुषः" इत्यत्र पुरुषपदं तु शरीरस्य प्रकृतस्यात्मत्वेनानुसन्धीयमानस्य पक्षिरूपत्वकल्पनयाऽत्मत्वोपदेशार्थतया "स वा एष पुरुषविध एवे"त्युत्तरपर्यायेष्वपि शिरः-पक्ष-पुच्छादिरूपकल्पनया, पक्षिरूपकल्पनापेक्षायां वा; अन्यथा मनुष्यमृगादिशरीराणामपि शरीरत्वात् पक्ष-पुच्छादिविभागेनोपासनविधानमनुपपन्नं स्यात्। यथा च पुरुषपदेन परमात्मविवक्षया "स वा एषः" इत्यनेन गतार्थत्वात् पुरुषपदं वितथम्, तथा पूर्वमेवोक्तम् ॥

स एष इति शरीरगः परामृश्यते, न शरीरमात्रमिति सूचनार्थं वा 'स वा एष पदानि' इति न तत्पदवैयर्थ्यम्। परमते, न केवलम्, पुरुषपदवैयर्थ्यम्, किन्तु स वा एषपदानामपि। न च तत्रान्वयोऽपि। तत्र "स वा एषः" इति पुरुषपदार्थं परामृश्य तद्गतत्वं पुरुषस्य यदि बोध्यते, तर्हि पुरुषपदस्य चतुरर्थकत्वात् किं भूतगत्वम्, शरीरगत्वम्, जीवगत्वम्, अन्तर्यामित्वं वा विवक्ष्यत इति विकल्पे न जीवो विवक्ष्यत इत्यत्र न कापि विनिगमना ॥

अन्नरसमयत्वं तु जागरावस्थापन्नस्यैव मुख्यम्; स्थूल-सूक्ष्मशरीरयोरुभयोरप्यन्नरसमयत्वात्, स्थूल-सूक्ष्मशरीरयोरन्नरसत्वस्य "अन्नमशितं त्रेधा भवती"त्यादौ विशदीकरणात्, जाग्रदवस्थायामेव सर्वान्नरसमयत्वस्य साक्षिणाऽऽवेदनात् मन्दमतीनुद्दिश्य स्थूल-सूक्ष्मशरीरमात्मेत्युपदेशार्थं रसमयशब्दप्रयोगः। तेन स्थूलशरीराद् विविच्य प्राणमयादिना क्रमेण सूक्ष्मशरीरविवेकः सुलभो भवति। "नेति नेतिविधयैकैकांशस्य निषेधेन, तेन च बालाक्यजातशत्रुसंवादवद् न सुषुप्तमेवाऽऽदायाऽऽत्मतत्त्वोपदेशः किन्तु जागर-स्वप्नावस्थमप्यादाय तदुपदेश इति लगति। प्रकृतान्नमयपदे सूक्ष्मशरीरस्याप्युपलक्षणार्थम् रसपदमधिकमिति तु निष्कर्षः इति तेन च प्रेतशरीरस्य नात्मत्वेनोपदेशोऽत्रेत्यपि फलति ॥

परमात्मनोऽन्नमयादिशब्दावाच्यत्वम्।

"अन्नात् पुरुषः" इत्यत्रापि पुरुषशब्देन जागरशरीरं सूक्ष्मशरीरसहितमेव विवक्ष्यत इति सूचनार्थं रसपदमभिमत एव सार्थकम्। परमते तु न केवलमन्नमयपदार्थः न परमात्मा, किन्तु रसपदवैयर्थ्याद् नान्नरसमयोऽपि; परमात्मनोऽप्राकृतदिव्यमङ्गलविग्रहस्वरूपस्य ज्ञानमयेन्द्रियादिवतोऽपि तत्स्थूल-सूक्ष्मशरीरयोर्जीवशरीरवद् भौतिकत्वायोगेनान्नरसमयत्वस्य बाधात्। तत्र रसशब्दः सारवाची। अन्नरसश्च अन्नसारः अशितस्यान्नस्य त्रेधा विभक्तोंऽशः, तन्मयत्वं तु जागरावस्थजीवशरीरस्यैव ॥

एतेन—"अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते" इत्यपि—व्याख्यातम् तेन जागरावस्थस्यान्नरसमयत्वादेवात्तृत्वाद्यत्वादिकमिति ज्ञाप्यते। न चैतादृशमद्यत्वम्, अत्तृत्वम्, उभयं च परमात्मनः, येन सोऽप्यन्नमयः, अन्नरसमयः, अन्नं वा स्यात्। न केवलं शरीरं परमात्मकार्यत्वात् परमात्मरूपेण कारणात्मना तदभिन्नम्, किन्तु तत्कारणमन्नमपि तत्कारणमाकाशादिकमपीति तत्कारणपञ्चतन्मात्राणां व्यस्तानाम्, समस्तानां वा सात्त्विकराजस-तामसानामात्मत्वेनानुसन्धानं कर्तव्यम्। तेन च क्रमेण व्यष्टिसमष्ट्यज्ञानोपहितस्य, तेन च एकैकावस्थापरित्यागेन सुप्तान्तावस्थपरमात्मनोऽनुसन्धानक्रमेणाखण्डानन्दात्मना ज्ञानेन निर्विशेषसंविन्मात्रेणावस्थानं मुक्तिः फलिष्यतीति बोधयितुमेव भृगुवल्ल्यामन्नादीनामन्नमयादिकारणानामात्मत्वोपदेश आनन्दस्वरूपान्तेन ॥

न च परमतेऽन्नरसमयत्वं परमात्मनः, न चान्नशब्दार्थो भोक्तृत्वमपि;

"ओषधीभ्योऽन्नमि"ति कार्यतया प्रकृतस्यान्नस्य भोक्तृपरत्वायोगात् । न चान्नात् भोक्तुः पुरुषस्य शरीरस्योत्पत्तिः; अन्योन्याश्रयात्, अनवस्थापत्तेश्च । जागरावस्थान्नरसमयस्तुतिपरं वाक्यं "अद्यतेऽत्ति च भूतानि" इति तु शारीरस्य जीवस्याप्यौपाधिकं भोक्तृत्वमप्यन्नरसमयत्वनिबन्धनमिति ज्ञापयितुम्, न त्वन्नशब्दार्थविवेकार्थम्, येनात्तृत्वमन्नशब्दस्यार्थः, तत्सारो वा स्यात् ॥

आत्मनः पक्षिरूपकल्पनं द्वासुपर्णवाक्यैकवाक्यतार्थम् ।

"तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा" इति तु स्वयं पक्षिरूपेणोपासकेनाऽऽत्मस्वरूपावबोधपूर्वकं स्वस्यानुसन्धानं कर्तव्यम्, येनान्ततः स्वस्वमनुष्यशरीराभिमानविरहद्वारा सौषुप्तान्तात्माधिष्ठानं विनैवायासं बोद्धुं शक्यत इति सूचनार्थं जागरस्यैवाऽऽत्मतत्त्वजिज्ञासोः पक्षिरूपताकल्पनया शिरः-पक्षादिरूपेणावयवविशेषणामुपदेशः, येन जागरादिसुषुप्त्यन्तावस्थात्रयाद् विविच्याऽऽत्मस्वरूपोपदेशः सफलो भवति । पक्षिशरीररूपेणैव जिज्ञासुशरीरस्य कल्पनायां निमित्तं तु "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इति श्रुत्यर्थमनुसन्धायाऽऽत्मतत्त्वोपदेशः कर्तव्य इति दृष्टिरेव । तत्र च सौषुप्तान्तविविक्तः, तदतीतश्च मुक्त इत्येकैकशरीरात् क्षेत्रज्ञस्य विवेचनद्वारा, तदधीनफलभोक्तृत्वस्य निषेधद्वारा च मुक्तस्य परमार्थतोऽभोक्तुः प्रत्यगात्मतत्त्वस्योपदेशो मुण्डकाद्यभिमतोऽत्र विवक्ष्यत इत्येव हृदयं शिरः-पक्ष-पुच्छादिरूपेण मनुष्यशरीरस्यापि कल्पनयोपदेशस्य ॥

शरीरस्य वृक्ष-रथादिकल्पनयाऽऽत्मतत्त्वोपदेशोऽन्यत्रापि दृश्यते ।

शरीरं हि वृक्षरूपेण, रथरूपेण, पुररूपेण चान्यथाऽन्यथा पुरुषग्राह्यसुविज्ञेयरूपभेदेन तत्र तत्रोपदिश्यते । तत्र जीवात्मनः शुकत्वे वृक्षरूपमेव शरीरमिति ब्रह्मवल्लीतात्पर्यम् । इदं च शारीरस्य जीवत्व एवोपपद्यते, न परमात्मत्वे । तस्य शरीरभोगेनाभोक्तुः, अभोग्यस्य वा 'अद्यतेऽत्ति च भूतानी'त्यत्र न परामर्शयोग्यताऽपि, इत्यन्नरसमयपदे रसपदमन्नरसमयपदेन परमात्मपरिग्रहे न सङ्गच्छते, न वा परमात्मनः पक्षिरूपता, पक्ष-पुच्छादिरूपं वा कुत्रापि प्रसिद्धम् । नापि वा तदीयस्य शिरसः, पक्षादेः, पुच्छस्य चाप्रत्यक्षस्येदमिति प्रत्यक्षतया निर्देश उपपद्यते ॥

'इदमेव शिर' इत्यादिवाक्यं न परमात्मपरम् ।

वस्त्रप्रावृतप्रत्यक्षवदीश्वरशिरसोऽपीदमिति निर्देशो लक्षणया

परमते, अद्वैतमते तु नैवम्। लक्षणा हि तात्पर्यानुपपत्त्या, अन्वयानुपपत्त्या वाऽन्नमयादीश्वरत्वानिर्णयावस्थायां न विकल्पसहा। शारीरपरिग्रहे तु नायं दोषः, न वा तत्र वैयर्थ्यम् ॥

"सर्वमेव त आयुर्यन्ती"त्यादिफलवाक्यानि सर्वशब्दस्य शतायुः परत्वात्, प्राणमयस्यापि जीवत्वेऽप्युपपद्यते, परमात्मपरिग्रहेऽप्येकांशमात्रोपासनं न मोक्षायेति प्रशंसामात्रपरत्वमेव श्लोकस्य ॥

"नेतरोऽनुपपत्तेरि"ति सूत्रादिस्वारस्यमद्वैत एव।

एतेन—"नेतरोऽनुपपत्तेः" इति सूत्रमपि—व्याख्यातम्। तत्रानन्दमयपरमात्मतावादे "नेतरोऽनुपपत्तेरि"ति जीवादिव्यावर्तनार्थमिति संप्रतिपन्नम्, पुच्छब्रह्मवादे तु प्राधान्येन जीवादि-परत्वव्यावर्तनार्थमिति। अन्नमयादीनामपि जीवादिपरत्वव्यावर्तनार्थत्वं तु न सम्भवति; आनन्दमयस्येव सर्वान्तरत्वादिलिङ्गाभावेन परमात्मत्वशङ्काया अभावात्, पूर्वोक्तैः कारणैरन्नमयादेर्जीवपरत्वनिर्णयाच्च ॥

न चान्नमयपरमात्मत्वाभावे काप्यनुपपत्तिः, प्रत्युत तत्परत्व एव सा। "सर्वं वै तेऽन्नमाप्नुवन्ति" "सर्वमेव त आयुर्यन्ती"त्यादितत्तच्छ्लोकनिर्दिष्टानि फलानि हि परिच्छिन्नानि न निःश्रेयसरूपाणि, येन ब्रह्मप्राप्तिफलनिर्देशानुपपत्त्या तेषामपि परमात्मपरत्वं स्यात्। न चान्नमयादिज्ञानं मोक्षसाधनमात्मज्ञानम्। अत्रोपासनसमुच्चय-विकल्पपक्षायोगः प्रागेव समर्थितः। "तमेवं विद्वानमृत इह भवति" इति तु सर्वात्मसर्वाधिष्ठानब्रह्मज्ञानमोक्षसाधनपरम्, न तु विष्णुमात्रज्ञानतत्परम्, शिवार्कमणिदीपिकोक्तरीत्या सदाशिवज्ञानमोक्षसाधनपरं वा ॥

वस्तुतस्तु—पूर्वोक्तरीत्या पुरुषसूक्तान्नमयादिवाक्यानां भिन्नविषयत्वेन न तस्य प्रकृतोपयोगः। अन्यश्च पुरुषः पुरुषसूक्तप्रतिपाद्यः, अन्यश्चान्नमयः पुरुषः, प्राणमय-मनोमय-विज्ञानमयानन्दमयपदप्रतिपाद्या वा ॥

अन्नमयादीनां ब्रह्मपरत्वाभावनिष्कर्षः।

तदयं निष्कर्षः—अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः जाग्रत्स्वप्न-सुषुप्त्यवस्था यथायोगं जीवात्मानः; अन्नादिपरिच्छिन्नत्वेनान्नादिविकारत्वात्, तत्तदन्नादिप्राचुर्याद्वा। यथा चाऽऽनन्दप्राचुर्यमपि सोषुप्तस्य जीवस्य जाग्रदादेरप्यन्नादिप्राचुर्यतेव, तथाऽन्यत्र व्यक्तम् ॥

अत्र मयटो विकारार्थत्वं प्राचुर्यार्थत्वं वाऽकिञ्चित्करं पूर्वोत्तरयोः पक्षयोः। शिरःपक्षाद्यवयवयोगोऽप्यन्नमयादीनां सर्वेषामपि जीवत्व एव स्वरसः ॥

शारीरत्व-परिच्छिन्नप्रिय-मोद-प्रमोदादिसम्बन्धोऽप्यत एवोपपद्यते। पूर्वपूर्वान्यत्वान्यरत्वादिकमप्यन्तिमपुच्छब्रह्मपूर्ववर्तिनामब्रह्मत्वं व्यञ्जयति। अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयानां शोध्यत्वाम्नानमत्रैव पक्षे स्वरसम्। जीवे ब्रह्मशब्दोऽन्नमयादौ वस्तुगत्या मुक्तात्मतत्त्वसाक्षात्कारानन्तरभावेन स्वतः सिद्धेनोपपद्यते। ऐक्यं त्वनावृतावस्थायामैक्यश्रुत्यन्यथानुपपत्त्या। तथा सत्यपि संसारदशायां भेदेन घटाकाशमहाकाशयोरिव आकाश शब्दः। तथाच श्रुतिः—"यावान्वाऽयमाकाशस्तावानेवान्तर्हृदय आकाशः" इति ॥

"ब्रह्म पुच्छं प्रतिष्ठे"ति तु साक्षाद् ब्रह्मणोऽधिष्ठानत्वेन। तदप्यानन्दमयपदार्थस्यैव जीवस्य, अन्येषां तु परम्परया। अत एवान्नमयादावपि ब्रह्मण एव पुच्छत्वेन न निर्देशः। परमते तु पञ्चब्रह्मवादे सर्वेष्वपि ब्रह्म पुच्छं प्रतिष्ठेति स्यात्; ब्रह्मणः सर्वसाधारणप्रतिष्ठात्वात् ॥

भेदव्यपदेशसूत्रस्वारस्यमद्वैतवादे।

एतेन—"भेदव्यपदेशाच्चे"त्यपि—व्याख्यातम्। "स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः" इति मुक्तिसाधनं पुरुषगतसंविदंशस्य, आदित्यगतसंविदंशस्य च तत्त्वंपदलक्ष्यार्थस्याभेदज्ञानमुपदिश्यते। पञ्चब्रह्मवादे च सर्वेषां पुरुषाणाम्, पुरुषविधानाञ्च परमात्मत्वात् पुरुष इति सप्तम्यनुपपत्तिः; अन्यथा सर्वत्रापि पूर्वोक्तरीत्या ब्रह्मप्रतिष्ठात्वोपदेशः स्यात्। आदित्यगतश्च परमात्मा नान्नमयादिष्वन्यतमः। तयोरैक्योपदेशस्तु यदि भेदशङ्कावारणार्थम्, तर्हि नान्नमयादीनां ब्रह्मत्वम् ॥

"अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्" इति न्याये तु पञ्चानां परस्परमिवादित्याद्यन्तरात्मनापि भेदो विशेषकृतः, इति तदैक्योपदेशवैयर्थ्यम्, यत्रान्यत्वोपदेशोऽपि परमात्मैक्येऽकिञ्चित्करः। तदनुपदेशस्थलेऽप्यैक्योपदेशो वितथः। तत्र "स यश्चायं पुरुषे। यश्चासावादित्ये" इति सप्तमी त्वधिष्ठानतया सद्रूपेण ब्रह्मणोऽधिष्ठानत्वमपेक्ष्य ॥

"स यश्चायं पुरुषे" इति वाक्यानुपपत्तिर्द्वैतवादे।

न हि नियम्यं नियामकस्याधिकरणम्। "मत्स्थानि सर्व भूतानि" इति

नियामकनिष्ठत्वा ज्ञानान्नियम्यानाम् । श्रुतिरपि—"यस्मिन् द्यौः पृथिवी यान्तरिक्षञ्चोतं च प्रोतं च" "यस्मिन् सर्वाणि भूतानी"त्यधिष्ठानस्यैवाधिकरणत्वं गमयति, इति परस्पराध्यासेन परस्पराधिकरणत्वमेव परस्परस्येति वक्तव्यम् । सति चैवमारोप्यनिष्ठत्वमधिष्ठानस्य संसर्गमात्राध्यासेन सर्वत्र प्रत्ययेषु सदात्मनाऽनुवर्तमानेन, स्वरूपसंसर्गोभयाध्यासेन, अधिष्ठाननिष्ठतयाऽऽरोप्यस्याधिकरणत्वेन व्यपदेश इत्येव नीतिरादरणीया ॥

इमामेव नीतिमादृत्य पुरुषादित्ययोरधिकरणत्वेन व्यपदेशः, तत्रापि नियम्ययोरेव भेदः, न तूभयनियामकस्य, इति पुरुषनियामकस्य, आदित्यनियामकस्य च पुरुषादित्याभ्यां भेदे नियामकस्य परमात्मन एकस्यैवात्र ब्रह्मणः प्रक्रमात् पञ्चब्रह्मतावादस्य हृदयशूलमेव "स यश्चायं पुरुषे" इत्यादि ॥

"स यश्चायं पुरुषे" इत्यस्याद्वैतवादेऽनन्वयः ।

वस्तुतस्तु—नियामकत्वम्, अधिष्ठानत्वं चेत्यनर्थान्तरम् । नियम्यः, आरोप्यो वा पुरुषः, आदित्यश्च, इति ब्रह्मवल्ल्याम्, भृगुवल्ल्यां चैकेन रूपेणाभ्यस्यमानमिदं वाक्यं "ब्रह्मविदाप्नोति परमि"ति प्रस्तुतब्रह्मप्रत्यगभिन्नपरमात्मस्वरूपतां द्रढयति । पुरुषश्चात्रोभयत्र नैकान्तेन पुरुषसूक्तप्रतिपाद्यः, किन्तु शरीरमपीति नियतं स्वीकर्तव्यम् । न हि विष्णुरेव विष्णोर्नियम्योऽपि ॥

भेदाभेदव्यपदेशस्याद्वैतवादेऽविरोधः ।

को वा विप्रतिपद्यते—सर्वेषामपकृष्टोत्कृष्टानां जीवानां नियम्यतयाऽधिकरणत्वेन, आधेयत्वेन वा परमात्मनश्च नियामकतया, अधिष्ठातृत्वेन, अन्यथा वा तत्र तत्र व्यपदेशेन भेदे । जीवब्रह्मैक्यं हि न नियम्य-नियामकभावावस्थामौपाधिकीमाश्रित्य, इति भेदाभेदयोः, अविद्या-तत्प्रयुक्तयोर्भिन्नविषयत्वेनाविरोधात् , नियम्य-नियामकभावावस्थायां तयोर्भेदाभेदोभयात्मकतादात्म्यारोपस्य स्वीकाराच्च "नेतरः" "भेदव्यपदेशादि"त्यादिनाऽद्वैतसिद्धान्ते भेदव्यपदेशः, अभेदमादायानुपहितस्वरूपमात्रबोधकशब्देन घटाकाश इत्यादिवद् निर्देशश्च न व्याहन्यते । सर्वथा तु पञ्चब्रह्मवादे "स यश्चायं पुरुषे" "यश्चासावादित्ये" "स एकः" इति वल्लीद्वयगतमेकरूपमभ्यस्यमानं न ब्रह्मैकत्वमात्रमहातात्पर्यकं नोपपद्यते ॥

एतेन—"रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति," "अन्नमयं प्राणमयं मनोमयं विज्ञानमयमानन्दमयमुपसङ्क्रम्य" "भीषाऽस्माद्वातः पवते" इत्यादिभेदव्यपदेशोऽपि—व्याख्यातः ; संविन्मात्रावरणनिवृत्तिपर्यन्तावस्थायिभेदविषयत्वादस्य मुख्यतत्परत्वाभावात् ॥

तत्र यत्रोपासनाविधिः, तत्र वाक्यस्य शबलब्रह्मपरत्वाद् भेदव्यपदेशो न विरुद्ध्यते, यत्र तु निर्विशेषपरत्वम् , तत्र यावत्तत्साक्षात्कारं भेदानुवृत्तिः ॥

मुक्तात्मनोऽभेदमात्रत्वेऽपि आनन्दी-
भवतीति च्विप्रत्ययोपपत्तिः ।

मुक्तात्मनो भेदव्यपदेशस्तु न कुत्रापि । अत एव "रसं ह्येवायं लब्ध्वे"ति साक्षात्कारपर्यन्तं भेदव्यपदेशः । तदनन्तरं त्वावरणनिवृत्त्याऽऽनन्दभाव एवोच्यते । "आनन्दीभवती"ति च्विप्रत्ययोऽनावृतानन्दभावपरम् ; आवरणाभिभवस्यानानन्दतापादकाज्ञाननिवृत्तेः पूर्वमसिद्धायाः पश्चात्सिद्ध्याः । इदं हि वाक्यम्—"आनन्दो ब्रह्मे"ति वाक्यानन्तरं प्रवृत्तत्वात् ब्रह्मभाव एव ब्रह्मप्राप्तिरिति निरूपणपरं नानन्दविशिष्टपरम् । अत एव "ब्रह्मविद् ब्रह्मैव भवती"तिवाक्येनैकवाक्यता ॥

शरीरभेदेऽपि न कुत्राप्यात्मभेदः ।

वस्तुतस्तु—अन्नमयादीनि स्थूल-सूक्ष्म-कारणशरीराणि जागर-स्वप्न-सुषुप्त्युपाधिभूतानि, परमात्मपरत्वेऽपि तदीयशरीरभेदा इत्यवश्यं स्वीकर्तव्यम् । न च स्थूल-सूक्ष्म-कारणशरीरभेदमात्रेणात्मस्वरूपभेदः; अन्यथाऽन्यस्य जागरः, अन्यस्य स्वप्नः, अन्यस्य सुषुप्तिः, पुनरन्यस्य जागरः, तथा जीवतः, मृतस्य, जन्मान्तरं प्राप्तस्य च शरीरभेदः, एवं ह्यस्य लोकान्तरं गतस्य शरीरं भिन्नमिति कृतहानाकृताभ्यागमप्रसङ्ग इति शरीरभेदेप्यात्मनो वस्तुतो भेदाभावात् पञ्चब्रह्मवादो नोपपद्यते; अन्यथा "स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः" इति वाक्यविरोधः स्यात् । तथाच न केवलं जाग्रदाद्युपाधिशरीरभेदमात्रेण, किन्तु यावत्सर्वशरीरमपि स्वरूपतो नात्मभेदः । तत एवान्तःकरण-मायोपाधिकजीवेश्वरयोरपि शरीरभेदेनैव भेद इति पर्यवस्यति ॥

पञ्चब्रह्मतावाद उपपत्तिहीनोऽपि ।

तथा च पञ्चब्रह्मतावादेऽनुमानविरोधोऽपि । तथा च प्रयोगः—विमतानि शरीराणि, मद्भोगायतनानि, शरीरत्वात् ; मच्छरीरवदिति । तत्र

स्थूल-सूक्ष्म-कारणशरीराणामेकात्मवत्त्वमादाय सिद्धसाधनवारणार्थं विमतानीति विशेषणम् ॥

यस्तु देवदत्त-यज्ञदत्ताद्यात्मनां भेदप्रतिभासः, स शरीरभेदगोचरः, नात्मभेदाभिप्रायः। अत एव—

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥"

इति भेदप्रतीतिः शरीरभेदमात्रेणेति भगवत्पादाः। आत्मैक्यं हि तस्य संविन्मात्रतादृष्ट्या। अत एव योगवासिष्ठं "न त्वेनाहमि"ति श्लोकानुकरणरूपम्—

"संविदाकाशमेवाहं भवानपि जना अपि।
म्रियामहे नो कदाचित् कुतः संविद्विनश्यति ॥"

इति। इदमुपलक्षणं सूक्ष्म-कारणशरीरभेदेऽप्यात्मैक्यानुमानस्य। सर्वथात्वात्मस्वरूपैक्यस्यैवात्र विवक्षणाद् नात्र प्रत्यक्षादिविरोधोऽपि। अत एव—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"

इति भगवद्गीता। तेन चोक्तानुमानस्य योगिप्रत्यक्षेणानुग्रहोऽपि व्याख्यातः, इति जीवानामुपहितानां भेदस्य प्रत्यक्षेण सिद्धयोक्तानुमानस्य प्रत्यक्षेण कालात्ययापदेशापत्तिरपि नावसरति; अनुपहितात्मनैवाभेदस्य जीवानां परस्परम्, जीवपरमात्मनोश्चात्र सिसाधयिषितत्वेन प्रत्यक्षानुमानयोर्भिन्नविषयत्वेन च बाध्य-बाधकभावाभवात्। न हि निरुपाधिकात्मनामपि भेदः प्रत्यक्षप्रमाणसिद्धः, इति तदभेदानुमानमबाधम्। न चोपहितात्मनामभेदः सिसाधयिषितोऽपि। मद्भोगायतनत्वं भूतपूर्वगत्या, न तु वर्तमानतया, येनासकृज्जागरादिभोगायतनत्वं बाधितं स्यात्। तेन च तत्तच्छरीरानुपहितरूपेणैवाऽभेदे पर्यवसानम्, इति कथं प्रत्यक्षविरोधः ?

### शरीरभेदेऽप्यात्माभेदानुमानादेर्न प्रत्यक्षादिबाधः।

विमतानीति शरीरपक्षकमुक्तानुमानम्, अयथार्थम्, प्रत्यक्षबाधितत्वादित्यनुमानेन प्रकरणसमस्तु नात्र प्रसरति। अधिष्ठानतत्त्वसाक्षात्कार-

बाध्यत्वं विषयतः, स्वरूपतश्च ज्ञानस्य सोपादानस्य, तदज्ञानप्रयुक्तविषय-विषयकस्यायथार्थत्वप्रयोजकम्, न तु भावाभावरूपविरुद्धविषयकत्वमात्रम्॥

न चानुपहितात्मैक्यमधिष्ठानाज्ञानप्रयुक्तम्; बाधकत्वेनाभिमतमात्मा-भेदज्ञानं ह्यधिष्ठानतत्त्वसाक्षात्कारः; विरुद्धयोरपि गोत्वाश्वत्वयोरेकत्र भ्रमदर्शनेन विरुद्धैकदर्शनस्य विरुद्धान्तरबाधकत्वायोगात्॥

बाधकत्वं हि तत्रोभयाधिष्ठानतत्त्वसाक्षात्कारस्य। तथा चाधिष्ठान-साक्षात्कारबाध्यविषयकत्वमत्र प्रकरणसमः, उपाधिर्वा। तत्रैक्यं पारमार्थि-कम्, भेदस्तु व्यावहारिकः, इति व्यावहारिकभेदज्ञानेन नैक्यानुमानस्य बाधः। वह्न्यौष्ण्यानुष्ण्ययोर्मण्यादिप्रतिबन्धदशायां वह्न्यौष्ण्याज्ञानप्रयुक्त वह्न्यनौष्ण्यानुभवः वह्नितत्त्वसाक्षात्कारेण बाध्यते प्रतिबन्धविगमे व्यवहारदशायामेव शुक्तिरजतादिज्ञानवत्, इति वह्न्यनौष्ण्यज्ञानमयथा-र्थमिति युक्तम्, नैवमत्र संवित्स्वरूपज्ञानस्य बाधकत्वम्, प्रमाणजन्य-वृत्त्यात्मकाधिष्ठानसाक्षात्कारस्यैव सर्वबाधकत्वेन तस्य स्वभेदप्रत्यक्षादिना बाधामृतेन निर्विषेण सर्पेण भेकभक्षणमेव। तथाच प्रकरणसमेऽत्र प्रमाणविरुद्धत्वरूपहेत्वसिद्धिः॥

प्रत्यक्षानुमानाभ्यामागमबाधायोगः।

न हि शुक्तितत्त्वसाक्षात्कारो रजतप्रत्यक्षविरुद्धत्वेनाप्रमाणम्, इति शुक्तितत्त्वविरुद्धरजतप्रत्यक्षमेव प्रमाणम्, न तु शुक्तिरियमिति कोऽपि ज्ञानमिति वक्तुमीष्टे। न हि विरुद्धविषयकत्वमात्रं प्रत्यक्षस्य बाधकत्वप्रयोजकम्; रजतप्रत्यक्षेण शुक्तिप्रत्यक्षस्य बाधापत्तेः, किन्तु बाधकाधिष्ठानतत्त्वप्रत्यक्षत्वमेव बाधकत्वप्रयोजकम्, बाधकप्रमाणस्य प्राबल्यम् वा; अन्यथा देहात्मप्रत्यक्षेणापि तदनात्मत्वपरश्रुतेर्बाधापत्तेः, इति ब्राह्मणेन सुरा, पेया, द्रवद्रव्यत्वात्, क्षीरवत् इत्यनुमानमपि —व्याख्यातम्, अपौरुषेयत्वेन प्रबलागमविरुद्धत्वेन तस्य बाधात्॥

अत्र सुरापेयत्वानुमानं यदि पानयोग्यत्वमात्रेण, तर्हि तस्य न केनापि प्रमाणेन बाधः। यदि सुरापानम्, नाधर्मः, द्रवद्रव्यपानत्वात्; क्षीरपानवदिति, तर्हि धर्माधर्मयोः श्रुत्येकगम्यत्वात् श्रुतिविरुद्धमुक्तानुमानं न श्रुतिबाधनक्षमम्; केवलबुद्ध्यगोचरत्वाद् धर्माधर्मभावस्य, इति नाभा-ससाम्यम्॥

एतेन—घटः, चितिः, चेतनो वा प्रमेयत्वादित्यनुमानमपि—व्याख्यातम्; दृष्टान्तासंप्रतिपत्तेः, आत्मनो घटादिवदप्रमेयत्वेन दृष्टान्ते हेत्वसिद्धेश्च ॥

आत्मा, जडः, ज्ञानानाश्रयो वा; वस्तुत्वात्, घटवदित्यनुमाने वस्तुत्वं यद्यबाध्यत्वम्, तर्हि दृष्टान्ते हेत्वसिद्धिः। एवमात्मा पक्षोऽत्र विशिष्टजीवः, अनावृतसंविन्मात्रं वा। आद्येऽपि ज्ञानपदेन स्वरूपज्ञानं विवक्षितम्, आहो वृत्तिरूपम्। तत्रानावृतसंविन्मात्रे निर्धर्मके सर्वबाधोपलक्षितस्वरूपे वस्तुत्वरूपहेतोरभावेन हेत्वसिद्धिः, सधर्मकत्वेन सोपाधिकत्वं च। ज्ञानानाश्रयत्वमुभयविधज्ञानपक्षेऽपि व्याहतम्। अहमर्थपक्षतायां तु तत्रापि स्वरूपज्ञानधर्मित्वरूपज्ञानाश्रयत्वाभावात् सिद्धसाधनम्। वृत्तिरूपज्ञानाश्रयत्वमप्यन्तःकरणस्यैव नात्मनः, इति तत्रापि सिद्धसाधनमेव। जडत्वमपि जडैकस्वभावत्वं वा, जडत्वमात्रं वा। तत्र द्वितीये जडाजडस्वभावस्य जडत्वमपि वर्तत इति सिद्धसाधनम्। आद्ये त्वनात्मत्वमुपाधिः, अनौपाधिकस्य तस्य साध्यव्यापकत्वम्, दृष्टान्ते साधनाव्यापकत्वं च ॥

सर्वथा तु नान्नमयादयस्तत्तच्छरीरिभेदोपाधयो नानौपाधिकभेदवन्तः, जीवात्मनः, परमात्मनो वा तद्भेदस्य शरीरभेदोपाधिकस्यानौपाधिकत्वाभावात्। औपाधिकस्तु भेदस्तत्र सर्वेषामविवादास्पदम्, इत्यन्नमयशब्देन जीवात्मविवक्षायामनौपाधिकत्वम्, इति भेदरहितप्रत्यगात्मस्वरूप एवोपदेशपरम्परायाः पर्यवसानम् ॥

तथापि सर्वाधिष्ठानसंविन्मात्रस्वरूपेण तदेव वस्तुगत्वा शोधिततत्पदलक्ष्यार्थोऽपि, इति प्रत्यगात्मन्यनौपाधिके सर्वाधिष्ठानतया ब्रह्मपदप्रयोगः, संविन्मात्रस्य प्रत्यगात्मनोऽज्ञानाविषयतयाधिष्ठानत्वाविरोधात्, विशिष्टरूपेण जीवोपादानताया एव भामतीमतेऽपि कल्पतर्वादौ निरासात्। अन्नमयादिशब्देनोपाधितया तत्तत्कोशविवक्षायामप्युपास्यतया प्रत्यगात्मस्वरूपोपदेशद्वारोपदेशविषयतयाऽन्नमयादिवाक्यानां जीवात्मपरत्वमेव, न कोशमात्रपरत्वम्, प्रकृतिपरत्वम्, परमात्मपरत्वं वा। तत्तु पुच्छब्रह्मवाक्यस्यैव ॥

### अन्नमयाद्युपसंक्रमणस्य पञ्चब्रह्मवादेऽसम्भवः।

एतेन—"अन्नमयमात्मानमुपसंक्रामती"त्यन्नमयादेरात्मत्वनिर्देशोऽपि—

व्याख्यातः। अन्नमयादिशब्दैः तत्तत्कोशोपहितजागराद्यवस्थात्मस्वरूपस्यैव विवक्षणात्, तत्तत्कोशोपहितरूपेण क्षेत्रज्ञस्य विवेकविधया मुख्यात्मस्वरूपोपदेशद्वारतयौपाधिकभेदवदात्मस्वरूपस्यैवान्नमयादिपदार्थतायाः स्वीकाराच्च न मुख्यात्मस्वरूपत्वे, तत्रापि परमात्मस्वरूपत्वे वा न तात्पर्यम्॥

उपसङ्क्रमणं चात्र पूर्वपूर्वोपाधिविविक्ततयोत्तरोत्तरस्वरूपविज्ञानमेव, न तु प्राप्यत्वम्; "स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य" इति प्रकृत्य प्रवृत्तस्य "एतमन्नमयमात्मानमुपसङ्क्रामती"त्यादेरनुपदप्रस्तुतैक्यविरुद्धाप्राप्यपञ्चब्रह्मोपदेशपरताया अयोगात्॥

आत्मस्वरूपं हि बाह्यप्रपञ्चेऽहं-ममताद्यध्यासेन तदात्मतयाऽनुसन्धीयमानं बाह्यप्रपञ्चतः पुत्र-मित्र-कलत्र-वित्तादितः पृथग्विज्ञाय तत्राहंत्व-ममताभिमानं परित्यज्य क्रमेण स्थूल-सूक्ष्म-कारणशरीरात्मताबुद्धिमपि विहायऽनावृतसंविन्मात्रयाऽवस्थानमेव ब्रह्मप्राप्तिरिति ह्युक्तप्रकरणार्थः॥

उपहितस्वरूपस्य तत्तदुपाधिविरहितरूपात्मना ज्ञानमेव ह्युपसङ्क्रमणम्। अत्रोपसंक्रमणं फलतोऽतिक्रमणमेव; तत्तदुपाधिविरहितरूपेण विज्ञानात्। अतिक्रमे वक्तव्य उपक्रमप्रयोगस्तु तत्रोपाधित्यागमात्रं साध्यते, स्वरूपं तु सिद्धमेव सर्वदेति सूचनार्थम्। अतो नात्रातिशब्दाध्याहारादिदोषः॥

तत्तदभिमानत्यागमात्रं मरणम्।

"अस्माल्लोकात् प्रेत्ये"त्यप्याविद्यकसर्वविषयकप्रपञ्चतो विविच्याऽऽत्मस्वरूपज्ञानमेव विवक्षति। तदेव हि मुख्यं मरणं नाम। स्थूलशरीरवियोगः प्रसिद्धं मरणम्। लोकादेव वियोगोऽपि मरणमेव। वियोगश्चात्र तत्र तत्र ममताभिमानत्यागमात्रम्; अन्यात्मताबुद्धित्यागो वा। तेन च स्वरूपज्ञानस्य स्वयमन्यात्मना ज्ञातस्य तदात्मताबुद्धिवियोगस्यैव मरणपदार्थत्वात्, स्वशरीरेष्वात्मताबुद्धिर्विहेयेति फलति॥

इदञ्च मरणमभिमानत्यागमात्ररूपमपि पुनर्जन्मविरुद्धत्वाद् वस्तुगत्या मुक्तिरेव। अत एव "येयं प्रेते विचिकित्से"त्यत्र प्रेतशब्देन मुक्तात्मनो ग्रहणं सर्वेषु प्रस्थानेषु। तत्र ब्रह्मवल्ल्यामानन्दमयस्यावस्थात्रयविविक्तप्रत्यक्स्वरूपज्ञानमुपदिष्टम्। तावता तु न ब्रह्मात्मता, सर्वात्मता वा। तत्तु तत्पदार्थस्य संशोधनेन तदात्मतयाऽपि साक्षात्कारेणैवेति ब्रह्मवल्ल्यां तत्पदार्थशोधनं सिद्धवत्कृत्योपदिष्टस्यैव भृगुवल्ल्यां पुनरपि संशोध्य जीव-ब्रह्मैक्योपदेशः।

तत्फलं तु सार्वात्म्यं सामगानक्रमेणानुक्रम्यते । अवस्थात्रयातीतजीवतत्त्वज्ञानमात्रं पूर्वत्र, अतीतकारणभावानाघ्रतसंविद्रूपज्ञान-सार्वात्म्यनिरूपणपूर्वकमुत्तरत्रेति निष्कर्षः ॥

तत्तदुपाधिविरहेण जीवेश्वरस्वरूपज्ञानमेव ब्रह्मवेदनं नाम । तत्फलं च सर्वात्मब्रह्मभाव इति बोधयितुं ब्रह्मप्राप्त्युपदेश एवात्र । सर्वथा त्वन्नमयादयः केवलं कोशाः, न पञ्च परमात्मनः; अन्यथोभयत्र पञ्चपरमात्मनामेवोपदेशे विवक्षिते किमर्था भृगुवल्ली ? किमर्थं वाऽन्नमयाद्युपसङ्क्रमणं भृगुवल्ल्यामपीति पुनरुक्तिशङ्का दुष्परिहरा ॥

पञ्चब्रह्मतावादे श्रुतिविरोधः ।

"अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्तामि"ति श्रुत्यन्तरसिद्धो निर्गलितात्मस्वरूपविवेक एव कोशाभिधक्षेत्रेभ्य उपसङ्क्रमणम्, इति फलतोऽतिक्रमणमेवान्नमयादीनां कोशमतिक्रम्य विवेचनमुपसङ्क्रमणपदार्थः, इति तदा तदा तत्र तत्रोपपादितं त्वंपदार्थशोधनमेव ब्रह्मवल्ल्यर्थः, इति पञ्चब्रह्मवादोऽयं श्रुत्यन्तरविरुद्धः ॥

शब्दान्तरादन्नरसमयादिभेदायोगः ।

यत्तु—तेऽन्नमयादयः, एते त्वन्नरसमय इत्युपक्रमात्, "रसो वै सः" इति वाक्यशेषाच्चान्नरसमयादयः, इति शब्दान्तरन्यायेनाऽन्ये भविष्यन्ति, इति नात्र पञ्चब्रह्मवादविरोधः–इति, तदिदम्—"अन्नात् पुरुषः" इत्युपक्रम्यान्नरसमयस्याऽऽत्मत्वेनोपक्रमात्, शरीरमय इत्यर्थबोधनार्थत्वेन रसपदप्रयोगात्, प्राणमय-मनोमय-विज्ञानमयानन्दमयादौ तेषामपि कथञ्चन तन्मात्रपञ्चभूतकार्यत्वेऽपि प्राणादिकार्यस्यान्यस्यात्रानिर्देशात्, स्थूल-सूक्ष्म-सूक्ष्मतरोपाधिभेदेन प्राणाद्युपहितानामेव प्राणमयादिशब्दार्थत्वेन प्राणरसादीनामप्रसिद्धत्वेन रसपदानुषङ्गेन प्राणमयादीनां वक्तुमशक्यत्वात्, "रसो वै सः । रसं ह्येवायं लब्ध्वाऽनन्दीभवति" इति साक्षादानन्दमयाधिष्ठानमात्रपुच्छब्रह्मण एव—"आनन्दो ब्रह्मेति" वाक्यशेषगम्यत्वात्, मयडर्थपरित्यागेन तत्प्रकृतिमात्राम्नानेनैव प्रत्यग्ब्रह्मरूपत्वोपसंहारात्, "रसो वै सः" इति रसपदस्यान्नरसमयाद्युपलक्षणत्वे "रसं ह्येवायं लब्ध्वाऽनन्दीभवति" प्राणी भवति विज्ञानीभवतीति योजनायामन्नमयस्य, प्राणमयादेश्च तत्कारणात्मताभावः, भस्मसाद् भावः, अचेतनप्राणभावः,

तादृशमनोभावः, विज्ञानभावो वा फलमित्यापत्त्या ब्रह्मोपासनफलं भस्मसाद्भावादिकमित्यापत्तेः, उत्तरत्र वल्लीद्वयेऽप्यन्नमय-प्राणमयादीनामेवा"न्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्तामि"ति शोध्यत्वेन परामृष्टान्नमयादिपदसादृश्येनात्र प्रत्यभिज्ञानेनाशब्दान्तरत्वेन तत एतेषां भेदायोगाच्च न चोदक्षमम्, इति वल्लीद्वयस्यापि न पञ्चब्रह्मवादे तात्पर्यम् ॥

अन्नमयादीनां कोशानाम्, तद्विविक्तात्मस्वरूपस्य चोपदेशः ।

अन्नमयादिद्वारेण तत्तदधिष्ठानसंविन्मात्रस्य तत्त्वंपदार्थस्य क्षेत्र-क्षेत्रज्ञविवेकविधया, स्थूलारुन्धतीन्यायेन च तत्तदुपाधिविविक्तात्मना जीव-ब्रह्मैक्यस्य निर्विशेष-सच्चिदानन्दाखण्डस्वरूपबोधन एव तात्पर्यम्, न तु सविशेषमात्रबोधने, इत्यन्नमयादयः पञ्चापि तत्तत्कोशोपहितजीवपराः, प्राधान्येन प्रतिपाद्यत्वं तु पुच्छब्रह्मण एव ज्ञेयत्वेन "ब्रह्मविदाप्नोती"ति परमोपक्रान्तस्य, इति तत्परतयैव—"आनन्दमयोऽभ्यासादि"त्यादीनि सूत्राणि। पूर्वपूर्वान्यान्तरात्मतया, सर्वान्तरतया च "तस्यैष एव शारीर आत्मा" इत्यानन्दमयपर्यायान्तेऽपि श्रूयमाणस्य वाक्यस्यान्यथा स्वरसं गत्यनुपपत्तेरित्यद्वैतसिद्धान्त एव सूत्रस्वारस्यम् ॥

आनन्दमयसूत्राभिमतन्यायस्वरूपविवेकः ।

अत्राऽऽनन्दमयपदं सूत्रे तत्पर्यायपरम् । ततश्चानन्दमयपदघटितपर्यायः, ज्ञेयतया प्रस्तुतब्रह्मप्रधानः, परमोपक्रान्ताभ्यस्यमानब्रह्मशब्दघटितवाक्यशेषवत्त्वात्, यत् परमोपक्रान्तयच्छब्दघटिताभ्यस्यमानयच्छब्दवत्, तत् तत्प्रधानम्। यथा "उपांशुयाजमन्तरा यजत्यजामित्वाये"ति वाक्यं परमप्रस्तुताजामित्वशब्दघटिताभ्यस्यमानोपांशुयाजमन्तरा यजतीति वाक्यशेषवत्, तदुपांशुयाजविधिप्रधानम्, न तु विशदविधिवाक्यघटित विष्ण्वग्नीषोमीयादिप्रधानानेकयागानुवादमात्रम्, किन्तु स्वतन्त्रयागः ॥

अयमेव न्यायोऽत्रापि—परमप्रक्रान्तस्यैकस्य ब्रह्मणो मुख्यस्योपसंहृतस्याभ्यस्यमानस्य, "स यश्चायं पुरुषे" इत्यादिनोपपाद्यमानस्य च प्राधान्येन ज्ञेयब्रह्मत्वस्वीकारे ॥

निर्दुष्टं "विकारशब्दादि"तिसूत्राभिप्रेतन्यायस्वरूपम् ।

तथाहि—अन्नमयादयः, पञ्चकोशोपहिता जीवाः, विकारार्थमयडन्त-

पदप्रतिपाद्यत्वात् , "अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्तामि"ति वाक्यगतान्नमयादिवत् । न चास्य "योऽयं विज्ञानमयः प्राणेष्वि"ति वाक्यघटके विज्ञानमये परमात्मनि व्यभिचारः; तत्र मयटः प्राचुर्यार्थकमयडन्तप्रतिपाद्यत्वेन साध्य-हेत्वोरुभयोरप्यभावात् । न चात्रापि हेत्वसिद्धिः; विकारार्थमयडन्तप्रायपाठपतितस्यास्य तदर्थकमयडन्तशब्द-प्रतिपाद्यत्वस्यावश्यं स्वीकार्यत्वात् । "योऽयं विज्ञानमयः" इति तु परमात्म-प्रकरणगतम् , इति तद्वाक्यस्य नैवम् , इति न तत्र व्यभिचारः ॥

यथाच प्राचुर्यार्थत्वेऽपि सौषुप्त-जीवन्मुक्तसाधारण्यमानन्दप्राचुर्यस्य, तथा पूर्वमुपपादितम् , इति तदर्थत्वेऽपि न ब्रह्मत्वमन्नमयादीनामानन्द-मयान्तानाम् । अत एवाऽनन्दमीमांसा—"स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्ये"त्यकामहतश्रोत्रियसाधारण्यमानन्दप्राचुर्यस्येत्युपपादनपरोप-पद्यते ॥

निर्दुष्टं मान्त्रवर्णिकसूत्राभिप्रेतन्यायस्वरूपम् ।

मान्त्रवर्णिकब्रह्माधिकारस्तु यद्यप्यन्नमयादौ वर्तते; तथापि पुच्छब्रह्म-वद् न ज्ञेयकोटिप्रविष्टतया, किन्त्वन्नब्रह्मोपासनस्योक्तार्थवादविध्युन्नेयस्य प्रशंसार्थतयैव सः, इति न स किञ्चित्करः, अमान्त्रवर्णिकत्वाद-न्नादिब्रह्मताश्लोकानाम् । "ब्रह्म पुच्छं प्रतिष्ठे"त्यत्र तु मान्त्रवर्णिकब्रह्मश-ब्दः, श्लोकेऽपि तेनैवाभ्यस्यमानेन परामर्शश्चेति ततो विशेषः ॥

पुच्छब्रह्मण एव प्राधान्यम् , नान्नमयादेः ।

अयमेव न्यायो "योऽयं विज्ञानमयः" इति विज्ञानमयवाक्येऽपि; परमा-त्माधिकारस्य समानत्वात् । अन्नमयादिपर्याया हि सर्वे मान्त्रवर्णिकं ब्रह्म स्थूलारुन्धतीन्यायेन विज्ञापयितुमेव समनुक्रान्ताः , न स्वप्राधान्येन पुच्छ ब्रह्मवाक्यवत् । पुच्छत्वेनाम्नातमपि ब्रह्म स्वप्रधानम् ; तद्वेदनस्यैव मोक्षसाधनतया मन्त्र-ब्राह्मणयोः प्रवृत्तत्वात् ॥

आनन्दमयब्रह्मतायां तु ब्रह्मण एकस्यैवावयवावयविभावापत्तिः । न च सावयवं ब्रह्म । अन्नमयादौ तु न प्राधान्येनाप्राधान्येन वोपास्यकोटौ वा ब्रह्मण आम्नानमपि, इति तेषां चतुर्णां ब्रह्मत्वकथा हेयैव ॥

पुच्छब्रह्मवाद एवाभ्यासादीनामन्वयः ।

अभ्यासोऽपि ब्रह्मण इव न कुत्रापि पर्याये वाक्यशेषे । उक्तस्य पुन-

रुक्तिर्ह्यभ्यासः। साऽपि नान्यपरतया। न च सा कुत्रापि पुच्छब्रह्मैक्य-त-च्छेषतां विना। ब्रह्म चाधिष्ठानतयाऽत्रोपसंहृतं निर्विशेषं न सावयवमिति पुच्छब्रह्मवाद एवाभ्यासादिहेतूनामन्वयः, न तु पञ्चब्रह्मवादे। न ह्यन्नमयादिषु पुच्छतया, अवयवितया वा ब्रह्मणो निर्देशः, इति "येऽन्नं ब्रह्मोपासते" इति ब्रह्मशब्दाम्नानं न पुच्छब्रह्मण इवाभ्यासः, उक्तपुनरुक्ते-रन्नमयादिस्थलेऽभावात् ॥

अन्नादौ न ब्रह्मशब्दाभ्यासः।

एतेन वल्ल्यन्तरे "अन्नं ब्रह्मेति व्यजानादि"ति वाक्यमादायाभ्यासोऽपि पराहतः। तत्रापि नान्नमयादिब्रह्मत्वाम्नानं प्राधान्येनोभयत्रापि। भृगु-वल्ल्यामन्नस्य ब्रह्मत्वेन प्रशंसनं कारणस्तुत्या कार्यस्तुतिमात्रम्; अपां प्रशंसया वेतसशाखायाः "आपो वै शान्ताः" इति स्तुतिवत्, न स्वप्रा-धान्यं तत्र ॥

तत्र ब्रह्मवल्ल्यां कार्यद्वाराऽऽत्मोपदेशः, भृगुवल्ल्यां तु कारणद्वारा। अत एव तत्र कार्यद्वाराऽन्नमयस्योपस्थापनम्, अत्र तु "यतो वा इमानि भूतानि जायन्ते इति कारणक्रमेण, इति भिन्नविषयत्वाद् न वल्लीद्वयो-क्तयः पुनरुक्तयः, किन्तु स्वतन्त्रोक्तयः, इति वल्लीद्वयस्यैक्यमभिप्रेत्याभ्या-सोपपादनमत्रासम्भवि ॥

भृगुवल्ल्या अप्यन्नादिब्रह्मतायां न तात्पर्यम्।

तत्र भृगुवल्ल्यां ब्रह्मप्रश्नस्य कारणं ब्रह्मेत्युत्तरम्, अत्र तु न प्रश्नोत्तरे, न वा कारणस्य प्राधान्येनोपक्रमः, तेन मुखेन वाऽऽत्मतत्त्वोपदेशः, किन्तु सिद्धं देहात्मवादमपरिहाय तन्मुखेनैवात्मतत्त्वे बुद्धेरवतारणमिति तु विशेषः। न हि पुच्छं ब्रह्मेवान्नमयादय आनन्दमयान्ता ब्रह्मतयोपदिष्टाः, किन्तु तज्ज्ञानोपायतया, इति श्लोकेऽन्न-प्राण-विज्ञानमात्रस्य ब्रह्मसा-मानाधिकरण्यमात्रेणान्नमय-प्राणमय-विज्ञानमयानां न ब्रह्मत्वमवधारयितुं शक्यम् ॥

ब्रह्मवल्ली-भृगुवल्ल्योर्मुखभेदेन निर्विशेषब्रह्मपरत्वम्।

न चात्राप्यन्नमयादीनां ब्रह्मसामानाधिकरण्यम्, मनोमयानन्दमय-योस्तु न मयट्प्रकृतेरपि ब्रह्मसामानाधिकरणम्। भृगुवल्ल्यां तु सत्य-मस्ति, ज्ञेयतयैवान्नादि-ब्रह्मणोः सामानाधिकरणम्। परं तु नित्यानन्द-

स्वरूपस्य ज्ञानोपायतया । अत एव आनन्दपर्यन्तमेव "तपसा ब्रह्म विजिज्ञासस्व" इति पुनः पुनर्ब्रह्मज्ञानाय वरुणेन नियोगः। आनन्दस्वरूपावबोधनानन्तरं तु "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति श्रुत्यैव विज्ञानसमाप्तेरनुवचनम् ॥

भृगुवल्ल्यामेकस्यैव ब्रह्मणः, न तु पञ्चब्रह्मणामुपदेशः ।

तत्र "अधीहि भगवो ब्रह्मे"ति वरुणं प्रत्युपगम्य ब्रह्मस्वरूपस्यैव प्रश्नः, न तु पञ्चब्रह्मस्वरूपाणाम्, येन तेषामेव पूर्वं कार्यरूपेणोपदिष्टानां कारणरूपेणावगमार्थं प्रश्नः, उत्तरं च स्यात्, इत्येकैकस्वरूपज्ञानानन्तरमुत्तरोत्तरस्वरूपावधारणार्थमुपसर्पणम्, पुनः पुनर्विचारार्थं नियोगश्चेति कल्पना चोपपद्यते, इति भिन्नविषयत्वाद्वल्लीद्वयस्य, मुखभेदेन द्वारतया प्रवृत्तत्वाच्च ब्रह्मसामानाधिकरण्येन भृगुवल्ल्यामन्नब्रह्मसामानाधिकरण्येन ब्रह्मवल्ल्यामप्यन्नमयादीनां न ब्रह्मत्वोपपत्तिः ॥

ब्रह्मवल्ल्यामुपदिष्टा अन्नमयादय एव भृगुवल्ल्यां नोपदिष्टाः, न वा स एव प्रकारभेदोऽत्रापि, इति "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्" इत्यन्नमयादीनां पञ्चानां स्थाने प्रथमतः षण्णामुपदेशः, तथा पूर्वत्रान्नमयादिकार्यरूपेणोपदिष्टस्यान्नादिकारणरूपेण निर्देशश्चानुपपन्नः । तत्र षण्णामन्नशब्देनान्नमयप्रकृतिम्, मनश्चक्षुश्श्रोत्रैर्विज्ञानमयप्रकृतिं चोपदिश्यानन्दमयप्रकृतेरानन्दस्योपदेशेन ब्रह्मस्वरूपावगमे जगत्कारणत्वस्य द्वारस्य चोपदेशेन विशदमिदं प्रतीयते—जगत्कारणत्वमुखेनावगमो विज्ञानमयान्तस्य विराड्हिरण्यगर्भात्मकस्य व्यष्टिविश्व-तैजसदृष्टान्तेन भवितुमर्हति । अन्तर्यामिणस्तु मूलाविद्योपहितस्य प्राज्ञदृष्टान्तेन श्रवण-मनन-निदिध्यासनाभ्यासपाटवेनैव सः ॥

पुनरुपसर्पण-विचारसमाप्तिः परमव्योमन्येकत्रैव ।

तात्पर्यं तु कार्य-कारणभावपर्यवसानमन्नमयाद्यानन्दमयान्त-तत्प्रकृत्यन्नाद्यानन्दान्ते, तदप्यानन्दात्मनाऽऽवृतावस्थायामेव। तस्यैव पुनः पुनर्मनननिदिध्यासनाभ्यां त्वानन्दस्वरूपसाक्षात्कारे ब्रह्मतत्त्वस्याखण्डस्य ज्ञानम् । अन्नादीनां ब्रह्मतया ज्ञानानन्तरं पुनरुपसर्पणविचारनियोगवद् आनन्दस्वरूपस्यावगमानन्तरं पुनरुपसर्पण-विचारनियोगाभावाभ्यामवगम्यते, इति न कारणतयाऽविद्योपहितरूपेण ज्ञानमात्रेण ब्रह्मावगमसमाप्तिरिति ॥

तथा सौषुप्तानन्दमयात्मना ज्ञानमात्रेण न प्रत्यगात्मज्ञानसमाप्तिः, किन्तु तस्यैवानन्दस्याविद्यास्थाने तन्निवर्तकवृत्त्युपधानेनैव ब्रह्मस्वरूपसाक्षात्कारनिष्पत्तिः, अनावृतसंविन्मात्रता वा ब्रह्मण इत्यवगम्यते। इदं चानन्दमयाधिष्ठानतया निर्विशेषप्रत्यगात्मज्ञानमिव मूलाविद्योपहिताधिष्ठाननिर्विशेषपरमव्योमासङ्गाकाशपदवाच्यनिर्विशेषस्वरूपज्ञानमेवेति मत्वैव "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता" इति श्रुतिः स्वयं श्रावयति। तेन चावगम्यते--तथा स्वरूपावगमो न साधनावस्थायाम्, किन्तु सिद्धावस्थायामेव, इति तत्स्वरूपसाक्षात्कारपर्यन्तं तपश्शब्दवाच्यविचारस्य न समाप्तिः—इति। सर्वं चेदं "परमे व्योमन् प्रतिष्ठिते"ति प्रतिष्ठितपदश्रवणादवगम्यते। अधिकं तु वार्तिके—विशदम्॥

कारणत्वस्य तटस्थविधया लक्षणत्वम्।

"यतो वा इमानि भूतानि जायन्ते" इति कारणत्वेन ब्रह्मस्वरूपोपदेशस्तु तटस्थलक्षणविधया मूलाविद्योपहितपर्यन्तमेव विचारपर्यवसानम्, तन्निवर्तकज्ञानस्य श्रवण-मननाद्यभ्यासपाटवेन त्वानन्दाकारवृत्त्युदये तयाऽविद्यायां निवृत्तायां त्वनावृतसंविन्मात्रमवशेषितमेव ब्रह्मतत्त्वमखण्डमिति सूचनार्थम्, यथा शाखाद्वारा चन्द्रस्योपदेशो यथावच्चन्द्रस्वरूपविज्ञानार्थं शाखा लक्षणम्॥

शाखाचन्द्रन्यायो हि ज्ञानद्वाराऽज्ञातस्वरूपज्ञानं वस्तुतस्तद्रूपेणापि, इति वस्तुगत्याऽकारणस्यापि ब्रह्मणः कारणात्मना संनिकर्षात् कारणमुखेन ज्ञानमिति सत्यम्, उपसन्नाय ब्रह्मैव वक्तव्यं पुत्राय पित्रा वरुणेन; तथापि दुर्विज्ञेयं सूक्ष्मं तत्त्वं ज्ञातेन केनचन द्वारेणैवोपदिष्टं सुबोधं भवतीति द्वारेणासत्येनापि सत्यस्य बोधनम्। उक्तं च—

"उपायाः शिक्षमाणानां बालानामुपलालनाः॥<br>
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥"

इति॥

कारणत्वेनाकारणस्यापि लक्षणसंभवः।

एतेन – अकारणस्य कारणमुखेनोपदेशोऽसाम्प्रतमिति शङ्का-परास्ता। तत्र कारणस्याकारणेनात्यन्तसंनिकर्षस्त्वधिष्ठानत्वमात्रेणाज्ञानविषयत्वप्रयुक्तेन। अधिष्ठानस्य त्वारोप्येन संसर्गमात्रस्याध्यासः, आरोप्यस्याधिष्ठाने

स्वरूपसंसर्गोभयाध्यास इति व्यक्तमन्यत्रात्रैव। संनिकर्षमात्रं ज्ञाप्य-ज्ञापकयोरपेक्ष्यते, न तत्र सत्यत्वासत्यत्वविचारावसरः। अत एव प्रतिबिम्बेन बिम्बानुमानम्॥

तत्त्वजिज्ञासुं प्रति सोपानक्रमेण
तत्त्वोपदेशार्थमन्नादिक्रमेणोपदेशः।

न केवलं श्रवणमात्रेण, किन्तु मनन-निदिध्यासनाभ्यासपाटवेन समाधिगम्यपर्यायशब्दान्तरश्रवणमात्रमकिञ्चित्करम्, इति मत्वैव प्रथमसोपानारूढस्य सोपानान्तरारोहणार्थमिव विचारधारोपदेशो न विरुध्यते, इति पटुकरणस्यापि वरुणस्य स्वयं सर्वज्ञस्यात्मतत्त्वविज्ञानिनोऽज्ञानिनं प्रति कार्यद्वारोपदेश एव समुचितः। विचारशक्तिविरहिणं प्रति तत्त्वोपदेशो न युक्त इति मत्वा विचारशक्तिपरीक्षणार्थमेव—"अन्नं प्राणश्चक्षुः श्रोत्रमि"ति ज्ञेयब्रह्मतत्त्वज्ञानमात्रमुपदिष्टं विज्ञानमयकारणपर्यन्तोपदेशेन॥

तस्यापि स्वरूपेण ज्ञानं न ब्रह्मज्ञानद्वारमिति ब्रह्मलक्षणद्वारेणोपदेशः प्रवर्तितः। ततो विचारशक्तौ निर्णीतायां पुनः पुनः श्रुतस्य ब्रह्मतत्त्वस्य विचार एव तज्ज्ञानोपायः, न तु तदुपासनामात्रेण तदवगमः, इत्यभिप्रेत्यैव विचारकर्तव्यताया आम्रेडनम्। तथा च श्रुतिः—"तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति॥

उपासना हि कारणस्वरूपपर्यन्तमेव फलाय कल्प्यते, अतीतकारणभावनिर्विशेषस्वरूपावगमस्तु विचारैकसाध्यः। अत एव—"येऽन्नं ब्रह्मोपासते" इति कारणात्मनाऽन्नमयादेरुपासनमेवाभिप्रेतम्, न तु ज्ञापनमात्रम्। न च भृगुवल्ल्यामुपासनाविधिः कुत्रापि, किन्तु ज्ञानसाधनविचारमात्रोपदेशः। तेन चेदमवगम्यते—वस्तुतो ब्रह्मवल्ल्यां निर्विशेषाधिष्ठानरूपाभिन्नसविशेषकारणस्वरूपस्योपासनार्थमेवोपदेशः, न त्ववगमार्थम्। अतोऽपि वल्लीद्वयस्यैकब्रह्मविषयत्वमेव॥

यत्तु—"अन्नं प्राणं चक्षुः श्रोत्र"मित्यादिना कर्तुरेव ब्रह्मण उपदेशः—इति, तत्रान्नमयादिस्थलेऽव्यवहितपूर्वप्रस्तुतभोग्यपरत्वादन्नशब्दस्य तत्रात्तृत्वपरत्वाभाव इति पूर्वमेवोपपादितम्। तत्रान्नमयस्य सर्वभूतकारणत्वेन "यतो वा इमानि भूतानि जायन्ते" इति लक्षणसमन्वयात् प्रथममन्नं कारणतयाऽवगतम्, ततः प्राणमयादीनां सर्वेषां भूतानाम्, एवं सौषुप्तानन्दमयान्तानां कारणत्वेनाज्ञानोपहितस्वरूपं कारणतयाऽवगतम्। ततस्तस्याप्यधिष्ठानस्वरूपावगम इति सर्वमुपपन्नम्॥

जगत्कारणत्वं न देहादेः ।

न ह्यन्नशब्दोऽत्र देहपरः; तत्कार्यस्यैवान्नरसमयस्य देहत्वात्, तस्य च कार्यत्वस्यैव स्वीकारेण कारणत्वाविवक्षया जगत्कारणत्वस्य देहादावनन्वयो न दोषाय । न च स्वभावसिद्धतज्ज्ञानस्य विचारोपदेशः, किन्तु तत्कारणतन्मात्रसूक्ष्मभूतानामज्ञानान्तानां कारणानामेव विचारसाध्यं ज्ञानमत्रोपदिष्टम् ॥

सूत्राक्षरस्वारस्यमद्वैताभिप्रेतैकब्रह्मतावाद एव ।

सूत्राक्षरस्वारस्यं त्वानन्दमयपदस्यान्नमयाद्युपलक्षणताऽस्वीकारात्, अन्नमयादिपर्यायेषु ब्रह्मशब्दाश्रवणेऽपि तदभ्यासस्य श्लोकगतब्रह्मशब्दमेकमात्रमादायोपपादनात्, अन्नरसमय-विज्ञानमयानन्दमयपदेष्वन्नरसादिषु विकारार्थस्य मयटोऽसम्भवेऽपि मयडर्थमादाय "विकारशब्दादि"ति सौत्रहेतोरन्वयस्वीकारात्, "मान्त्रवर्णिकमि"ति सौत्रनपुंसकपदस्यैकवचनान्तस्यान्नमयादिपरतयापि योजनात्, भिन्नविषयत्वेऽपि वल्लीद्वयस्यैकविषयत्वे तद्वैयर्थ्यमविगणय्यैकार्थत्वकल्पनात्, अन्नमयान्नरसमयानामैकार्थ्यस्वीकारात्, अन्यान्यैश्च पूर्वोक्तैः कारणैरन्नमयाद्यानन्दमयान्ताब्रह्मत्वावधारणाच्च न द्वैतिनां पक्षेऽनुगुणम्, स्वमतानुसारेण विवरणे स्पष्टश्रुतिविरुद्धं सूत्राणामर्थवर्णनं न युक्तं तत्स्वारस्यं स्वमतानुगुणमपीति बोधनमात्रेण स्वयं सूत्राक्षरानानुगुण्यं भगवत्पादैः, तदनुयायिभिर्वा स्थिरीकृतमिति कल्पनाया अयोगात्, सन्दिग्धवाक्यनिर्णयार्थत्वात् सूत्राणामानन्दमये प्राधान्याप्राधान्ययोस्सन्देहे "ब्रह्म पुच्छं प्रतिष्ठे"तिवाक्यशेषस्यैतन्निराकरणार्थत्वस्यैव सूत्राणां युक्तत्वात्, आनन्दप्राचुर्यविवक्षायामप्यकामहतश्रोत्रियसाधारणस्य तस्याब्रह्मलिङ्गत्वेनानन्दमयपरमात्मतायास्तन्मात्रेण निर्णेतुमशक्यत्वात्, पूर्वोत्तरपक्षयोरुपस्थापकतयाऽऽनन्दमयपदस्य पक्षसमर्पकतया नयनसम्भवेनाभ्यासस्य हेतोरन्यत्र मतेषु बाधितत्वेन सूत्रव्याख्यानमानन्दमयपदप्रयोगमात्रमादाय वक्तुं शक्यमिति भगवत्पादानां सूत्रार्थवर्णनमेव स्वमतानुसारेणापि कर्तव्यमिति भाष्यते ॥

आनन्दमयपदस्वारस्यमद्वैतवादे, न द्वैतवादे ।

आनन्दमयपदं तत्पर्यायपरम्, न तु तत्पदमात्रपरम् । तत्र समन्वयाध्याय आद्यं पादत्रयं सन्दिग्धपदघटितवाक्यसमन्वयनिर्णयार्थम्, न तु

पदविशेषार्थनिर्णयमात्रार्थम्। पदविशेषमात्रार्थनिर्णयस्तु तुरीये पाद एव, इत्यानन्दमयपदस्य तत्पर्यायपरत्वे न कथमपि सूत्रानानुगुण्यम्। अन्तिमः पर्यायोऽयं प्राधान्येन ब्रह्म केनांशेन समर्पयतीति संशयप्रदर्शनमात्रेण सूत्राक्षरानानुगुण्यम् सूत्राक्षराणामन्यथानयनं वा कथम्? द्वैतिनां त्वत्रान्नमयाद्युपलक्षणत्वस्वीकारात् शिरः शूलमेव तत्। अधिकं तु पुच्छब्रह्मवादप्राधान्यपक्षमादाय सूत्राणां विवरणे, तत्रैव स्वारस्ये च न्यायरक्षामणितोऽवगन्तव्यम्॥

भेदमिथ्यात्वे भेदव्यपदेशपदस्वारस्यम्।

"भेदव्यपदेशादि"त्यत्र भेदस्य मिथ्यात्वमभिमतम्, न तु सत्यत्वमित्यत्र तु व्यपदेशपदमेकमेव पर्याप्तम्। तेन हि भेदस्य व्यपदेशमात्रम्, वाचारम्भणत्वमात्रं वा, न तूपदेशविषयत्वमिति ज्ञाप्यते॥

एतेन—

"भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत्।"

इति—परास्तम्॥

स्वल्पगुणवाचकानामपि
गुणपूर्णवाचकत्वशङ्कानिरासः।

यत्तु—समस्तगुणसामान्यवाचकैः, गुणवाचकैः, अध्यात्मविषयैश्च प्राणादिशेषवाचिभिः शब्दैर्भगवानेव मुख्यतयोदितः; गुणवाचकानां सर्वेषां स्वल्पगुणवद्वाचकत्वकल्पनापेक्षया सर्वगुणवाचकत्वस्यैवासङ्कोचेन स्वीकरणीयतया सर्वगुणपूर्णत्वस्य च भगवदेकविषयत्वात्, तत्रैव मुख्यवृत्त्युपपत्तेरिति प्रकृताधिकरणतात्पर्यमधिकरणसिद्धान्तन्यायेन—इति॥

तद् यदि सर्वस्य शब्दस्य ब्रह्मण्येव मुख्यवृत्तिर्योगरूढे, रूढे, यौगिके, केवलयौगिके चेति मत्वा, तर्हि अनेनैव न्यायेनाकाश-प्राण-ज्योतिरादिपदानामेव मुख्यया वृत्त्या ब्रह्मपरत्वादधिकरणसिद्धन्यायेनाकाशशब्दस्य सृष्ट्या भूताकाशपरत्वाभावात्, आकाशादिवाक्ये संशयस्यैवाभावाच्च तदधिकरणवैयर्थ्यमापद्येत॥

गुणवाचकानां धर्मपुरस्कारेण धर्मिबोधकानां लिङ्गात्मतयाऽस्मिन् पादे तदसङ्गतिः। आनन्दमयपदस्य गुणिसामान्यवाचकशब्दोपलक्षणत्वे "अभ्यासात्," "प्राचुर्यादि"त्यादिहेतूनां सर्वत्र गुणसामान्यवाचकेष्व-

न्वयायोगेनोक्ताधिकरणन्यायविषयत्वायोगः स्यात्। सर्वथा त्वानन्दमयाधिकरणमिदं नान्नमयादिपञ्चब्रह्मवादपक्षे स्वरसम्॥

"अथातो ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" "शास्त्रयोनित्वात्" "तत्तु समन्वयात्" "ईक्षतेर्नाशब्दम्" इत्यादि "श्रुतत्त्वाच्चे"त्यन्तसूत्रजातावगतस्य सच्चिदात्मना सर्वोपादानकारणस्य ब्रह्मण आनन्दात्मनाऽपि ज्ञानमेव शास्त्रस्य लक्ष्यम्॥

ब्रह्मोपसनाविधयस्तु कारणब्रह्मपर्यन्तमेव, नातीतकारणावस्थनिर्विशेषपर्यन्तमिति विवेचयितुमेवानन्दमयाधिकरणान्ता संग्रहात्मिका ब्रह्ममीमांसा॥

उपरितनविचारस्य सङ्गतिव्यवस्था,

ब्रह्मद्वैरूप्यस्य सप्रमाणता च।

इतः परं तु कारणात्मसविशेष-निर्विशेषवाक्यानि कोष्ठशोधनिकान्यायेन सन्दिग्धानि विचार्य निर्धारयितुमुपरितनं प्रकरणम्॥

तत्र सच्चिदात्मना ज्ञायमानकारणवाक्यानि तटस्थलक्षणविधया जन्माद्यधिकरणोपलक्षितमायोपहितसविशेषब्रह्मपराणि, यत्र ब्रह्मणो मायोपधानमनादिसिद्धमपि "भूयश्चान्ते विश्वमायानिवृत्तिः" इति वचनाद् मायाया निवृत्तौ स्वयं निवर्तते, अनावृतं त्वखण्डसच्चिदानन्दरूपं निर्विशेषमेव महावाक्यजातप्रतिपाद्यं तत्त्वम्, इति कल्पितोपाधिकसविशेषपराणि वाक्यानि, निरस्तसमस्तोपाधि-निर्विशेषब्रह्मस्वरूपप्रतिपादनपराणि च वाक्यानि निर्विशेषब्रह्मपराणि विचारयितुम्—"अन्तस्तद्धर्मोपदेशादि"त्यादिप्रपञ्चः॥

तत्र कानिचन सविशेषवाक्यान्यभ्युदयार्थब्रह्मोपासनविधिपराणि, कानिचित् क्रममुक्त्यर्थोपासनपराणि, कानिचित् कर्मसमृद्ध्यर्थोपासनपराणि, निरस्तोपाधिस्वरूपज्ञानमात्रपराणि त्वपराणि वाक्यानि॥

न चेदं द्वैरूप्यमप्रामाणिकम्; "सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्" "यत्तदद्रेश्यमग्राह्यम्," "यः सर्वज्ञः सर्ववित्" इत्यादिसद्विद्यापरविद्यादिप्रकरणेषु तत्र तत्रोभयविधस्यापि ब्रह्मण उपदेशात्। तत्रैकं मायोपधानेन, अपरन्तु स्वत इति द्वैरूप्यम्। परमार्थतस्त्वेकमेव स्वरूपम्॥

अध्यारोपापवादन्यायेन द्वैरूप्यं

ब्रह्मणः, न तु सविशेषत्वमात्रम्।

न च सर्वाणि वेदान्तवाक्यान्यसङ्ख्येयकल्याणगुणाकरसविशेषपराण्येव,

किन्त्वध्यारोपापवादन्यायेन तत्पराण्यपि, अतत्पराण्यपि। न च तावता ब्रह्मणि विरोधः; एकत्र गुणानामारोपितत्वात्, स्वरूपस्य चोभयत्रैकरूप्यात्। गुणारोप-तन्निवृत्तिमात्रेण हि द्वैरूप्यम्, न तु स्वरूपतः। तत एव ह्यत्रैव प्रकरणे—"सदेव सोम्येदमि"ति सर्वतादात्म्यम्, "अद्वितीयमि"ति सजातीय-विजातीय-स्वगतभेदराहित्यं च प्रतिपाद्यते। इदं रजतमित्यादौ हीदमो रजतरूपेण, नेदं रजतमिति रजतनिषेधरूपेण चानुभवः, स्वरूपैक्येऽप्यारोपितरजतरूपमात्रेण, तदभावरूपेण च प्रत्यक्षः, इति द्वैरूप्येऽप्यविरोधेन, असंकोचेन तात्पर्ये सम्भवति, संकोचेन वाक्यविशेषस्यान्यथा नयनम्, रूपभेदाप्रामाणिकत्वकल्पनं च निरालम्बम्; अन्यथा द्वैतमतेऽपि सर्वज्ञत्व-सर्वेश्वरत्व-सर्वान्तर्यामित्व-सौन्दर्यौदार्यविशिष्टतया, निर्दुष्टतया च ब्रह्मबोधनमात्रेण कथं न द्वैरूप्यम्?

असङ्कुचितनिर्दुष्टत्वमद्वैत एव।

इयान् विशेषः—निर्गुणत्वम्, सगुणत्वं च रूपद्वयमद्वैतमते, निर्दुष्टत्वं सगुणत्वं च द्वैतमते। तत्र मायादीनामपि शक्तीनाम्, तत्सम्बन्धप्रयुक्तानां धर्माणां च गुणत्वं यद्यबाधेन, तर्हि यावदबाधं तेषां गुणशब्देन व्यपदेशे नाद्वैतिनामपि विप्रतिपत्तिः। दोषत्वं हि मायाशक्तीनामपि श्रौतबाधानुपपत्त्या। सति तु बाधे तत्र सर्वेषां तत्स्वरूपातिरिक्तानां न गुणत्वमित्यभिप्रेत्य निर्गुणत्वमप्यद्वैतमते। बाधिताश्च गुणा वस्तुगत्या दोषा एव, इति द्वैतिनां निर्दोषत्वमेवाद्वैतिनां निरस्तोपाधिसम्बन्धस्वरूपत्वम्। यावत्तत्त्वसाक्षात्कारं सगुणम्, उत्पन्ने तु तत्त्वसाक्षात्कारे निर्गुणमिति तु विभागः, इत्युभयरूपत्वं नाद्वैतिनां विप्रतिपन्नम्—यदि भाविबाधमादाय वस्तुगत्याऽभावोऽपि शास्त्रदृष्ट्या स्वीक्रियते। निर्दोषत्वं तु ब्रह्मणो दोषाणां तत्राप्रसक्त्याऽप्रसक्तप्रतिषेधापत्त्या च दुरुपपादम्, आरोपप्रसक्त्या तन्निषेधे तु तत् सूपपादम्॥

अद्वैताभिप्रेतद्वैरूप्यनिष्कर्षः।

तत्र केषामारोपः, केषां तु नेत्यत्र विनिगमकाभावाद् ब्रह्मसम्बन्धिनां सर्वेषां तत्रारोप इत्यद्वैतम्, यत्र ब्रह्मसम्बन्धिनां सर्वेषामपि निरासेन निरस्तसमस्तोपाधिस्वरूपमेव पारमार्थिकं स्वरूपमिति सिद्धान्तः,। स्वरूपभेदस्तु नोभयत्र, इति नः द्वैरूप्यमप्रामाणिकम्। निष्कर्षस्त्वद्वैतिमते द्वैरूप्यम्, द्वैतमते तु बाहुरूप्यम्, इति—आनन्दमयस्त्वेकरूप एव॥

ब्रह्मजिज्ञासोपक्रमादीनामप्यद्वैतवाद एव स्वारस्यम् ।

सति चैवम्–प्रथमाध्याये प्रथमपादे–"प्राणस्तथाऽनुगमादि"त्यन्तिमाधिकरणे, जिज्ञासाधिकरणे जीव-ब्रह्मैक्यस्योपक्रमे प्रस्तुतस्योपसंहारः, आनन्दमयाधिकरणेन तस्यैव परामर्शः, प्रथमाध्यायद्वितीयपादादावपि सगुण-निर्गुणविचाराः, तत्रापि सूत्राणामध्यायानां पादानां चोपक्रम-परामर्शोपसंहारा अद्वैतवादानुगुणा एव वर्तन्त इत्यादि विशदं भाष्यप्रदीपेऽस्मदीये द्वितीयाध्यायद्वितीयपादपर्यन्तप्रकाशिते नवव्याख्योपेतब्रह्मसूत्रभाष्ये, इति तत एवाधिकमवगन्तव्यम् ॥

ब्रह्मजिज्ञासाया निर्विशेषप्राधान्येऽपि
सविशेषविचारस्यापि सङ्गतिः ।

तत्र यद्यपि सविशेषवाक्यान्यविद्योपहितविषयपराणि; तथापि सविशेषोपासनस्याप्यन्तरङ्गसाधनत्वात् तेषामप्यत्र निर्विशेषप्रधानेऽपि शास्त्रे विचारो नासङ्गतः; ससाधनज्ञानस्वरूपविषयकत्वाद् ब्रह्मजिज्ञासायाः, यथा "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति वहिरङ्गसाधनस्यापि कर्मणः, इति नात्र 'सार्थादपि तस्करा वहवः' इति न्यायप्रसरः ॥

सविशेषविचारस्य सङ्ख्याधिक्यमप्रयोजकम् ।

चक्रवर्तिकल्पनिर्विशेषब्रह्मप्रधानानि न्यूनान्यप्यधिकरणानि न वहुभिरपि तस्करप्रायैः सगुणविचारपरैरभिभवितुं शक्यन्ते वहुत्वेऽपि तेषाम् । न ह्यन्धकारसहस्राण्यसङ्ख्येयान्यप्येकमपि सवितारमभिभवन्ति । सर्वथा तु समन्वयप्रतिपादनपरप्रथमाध्यायप्रथमपाद एकादशाधिकरणात्मकः—षड्भिरधिकरणैर्निर्विशेषपराणि वाक्यानि विचारयति, पञ्चभिस्तु सविशेषपराणि वाक्यानि । तत्राप्येकमधिकरणम्—"अत एव प्राणः, इत्याकाशाधिकरणन्यायसमानन्यायपरम्, न स्वतन्त्रमधिकरणान्तरम्, इति सङ्ख्याधिक्यं निर्विशेषविचारस्यैव ॥

वेदान्तवाक्येष्वपि निर्विशेषाणां
सङ्ख्याधिक्यमकिञ्चित्करम् ।

वस्तुतस्तु–निर्विशेषवाक्यान्यपि प्रचुरप्रकाशसवितृसदृक्षान्यल्पसङ्ख्यान्येव महाराज-चक्रवर्त्यादिवद् दृश्यन्ते, परं त्वसन्दिग्धानि, इति किं वा कृत्यमत्राधिकरणसङ्ख्याया आधिक्यस्य,? प्रत्युत परस्सहस्राणि

सविशेषपराणि वाक्यानि दृश्यन्ते। तथापि विचार्यन्ते तु त्वतीव स्वल्पानि, इत्यलमनेन सङ्ख्याल्पत्व-बहुत्वचर्चयाऽकिञ्चित्कर्या ॥

द्वैताभिमतप्रथमाध्यायविषयवाक्यविवेकः।

तत्र प्रथमाध्यायविषयवाक्यान्यन्यत्र प्रसिद्ध-नामात्मकशब्दघटितानि प्रथमपादे, लिङ्गात्मकान्यन्यत्रप्रसिद्धशब्दघटितानि द्वितीयपादे, उभयत्र प्रसिद्धनाम-लिङ्गात्मकशब्दघटितानि तृतीयपादे, अन्यत्रैव प्रसिद्धाव्यक्तादिशब्दघटितानि तुरीयपाद इति द्वैतानुसारिणी व्यवस्था ॥

अद्वैताभिप्रेतप्रथमाध्यायविषयः।

अद्वैतानुसारिणी तु सा—स्पष्टब्रह्मलिङ्गवाक्यानि प्रथमपादस्य, सगुणप्रधानास्पष्टब्रह्मलिङ्गवाक्यानि प्राचुर्येण द्वितीयपादस्य, निर्गुणपरास्पष्टब्रह्मलिङ्गवाक्यानि प्राचुर्येण तृतीयपादस्य, अन्यत्रैव प्रसिद्धपदविशेषमात्रनिर्णयमात्रं तुरीयपादस्य विषयः—इति ॥

तत्र स्पष्टास्पष्टलिङ्गनिरुक्तिः।

तत्र स्पष्टब्रह्मलिङ्गत्वं लिङ्गात्मकशब्दघटितवाक्येऽप्यानन्दमयवाक्यविचारपरेऽधिकरणे वर्तते, एवमन्तराधिकरणेऽपि। आकाश-प्राण-ज्योतिर्वाक्यानि तु नामात्मकशब्दघटितानि। तत्र निर्णेयवाक्यघटकसंभाव्यमानस्वारस्यब्रह्मेतरलिङ्गाभिभूतब्रह्मलिङ्गकत्वमस्पष्टब्रह्मलिङ्गकत्वम्, तद्भिन्नत्वं स्पष्टब्रह्मलिङ्गकत्वमित्येवं स्पष्टास्पष्टब्रह्मलिङ्गनिरुक्तिपूर्वकं सर्वेषु तत्तद्विषयवाक्येषु लक्षणसमन्वयोऽद्वैतदीपिकायां विशदः, शङ्करपादभूषणे च ॥

द्वैतिविषयव्यवस्थायामनुपपत्तिः।

तत्र साक्षाद् धर्मिवाचिनो नामात्मकाः, धर्मद्वारा धर्मिपरा लिङ्गात्मका इति विवेचनपूर्वकं नामप्रधानान्यत्रप्रसिद्धशब्दविचारः प्रथमे पाद इति द्वैतिनो वदन्ति, परन्तु—आनन्दमयशब्दस्य, अन्नमयादिशब्दानां वा धर्मद्वारा धर्मिवाचिनां विषयताऽत्र दुर्वचा; नामात्मकान्यत्रप्रसिद्धशब्दाविषयकत्वादस्याधिकरणस्य। न चाऽद्वैतमते कुत्रापि स्पष्टास्पष्टब्रह्मलिङ्गकत्वस्य व्यभिचारः प्रथमपादे, द्वितीय-तृतीयपादयोर्वेति व्यक्तमन्यत्र ॥

॥ इत्यानन्दमयाधिकरणम् ॥

❀ ओं ❀

# ❀ अथान्तरधिकरणम् ❀

## ॥ अन्तस्तद्धर्मोपदेशात् ॥

सविशेषवाक्यनां तत्राप्यन्तःशब्दघटितवाक्य स्यात्र सङ्गतिः ।

तत्र स्पष्टब्रह्मलिङ्गवाक्यान्तरमानन्दमयाधिकरणानिर्णीतं सविशेषपरं वाक्यमधिकृत्येदमधिकरणम् । आनन्दमयाधिकरणं तु निर्विशेषपरं तादृशवाक्यमनुसृत्येत्यद्वैतप्रक्रिया; ब्रह्मद्वैरूप्यमादायैव ब्रह्ममीमांसायाः प्रवृत्तेः पूर्वमुपपादनात्, निर्विशेषब्रह्मज्ञानान्तरङ्गसाधनेषु सगुणोपासनस्याप्यद्वैतिभिरपि स्वीकारात् ॥

द्वैतमतेऽप्यन्यत्र प्रसिद्धानां शब्दानां प्रथमपादविषयतया महायोगमाश्रित्य गुणसामान्यवाचिनां ब्रह्मपरत्वमेवेति पूर्वाधिकरणसिद्धान्तन्यायेन सर्वेषां लिङ्गानामपि ब्रह्मपरता । तत्र अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । "इन्द्रो राजा जगतो य ईशे" इत्यादिवाक्यानामन्तःप्रविष्टत्व-देवत्व-दुर्विज्ञेयत्वादिलिङ्गात्मनां शब्दानामत्र विचारात् पादसङ्गतिः ॥

द्वैतमत एतदधिकरणवैयर्थ्यम् ।

अत्रेन्द्रपदेन सङ्कुचितैश्वर्यवतो विवक्षणापेक्षयाऽनवधिकैश्वर्यवत एव ग्रहणस्य पूर्वाधिकरणसिद्धान्तन्यायेन ब्रह्मपरताया अपेक्षितस्य सिद्धेः जगत्कारणत्व-शास्त्रयोनित्व-समन्वयादीनां भगवदंशरूपेष्वपि ब्रह्म-रुद्रादिष्विवेन्द्रेऽप्यसम्भवाच्च न संशयलेशोऽपि, इति व्यर्थमिदमधिकरणं तदीयाधिकरणसिद्धान्तन्यायैः ॥

अद्वैतसिद्धान्ते तु "अथ य एषोऽन्तरादित्ये हिरण्मयश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" इति वाक्यस्य स्पष्टब्रह्मलिङ्गस्यात्र विषयत्वे दोषाभावात् "अन्तर उपपत्ते"रित्यधिकरणस्यास्पष्टब्रह्मलिङ्गवाक्यविषयकत्वेन तेनास्याधिकरणस्यागतार्थत्वेनाधिकरणद्वयस्याप्यावश्यकत्वात् "अथ य एषोऽन्तरादित्ये" इति वाक्यस्यापि ब्रह्मपरत्वेन संशयनिवर्तकतयोक्ताधिकरणप्रवृत्तिस्वीकारेऽद्वैतसिद्धान्ते लेशतोऽपि हान्यसम्भवात्

प्रसिद्धभाष्यकारोद्धृतवाक्यं निर्णेयं परित्यज्य वाक्यान्तरस्य विषयताश्रवणं वितथम्; अधिकरणसिद्धान्तनयेन चापेक्षितवाक्यविशेषस्याप्यनेन निर्णयसम्भवात् ॥

इन्द्रपदस्य नामात्मकस्वनिर्णय एव यदि प्रधानं लक्ष्यम्, तर्हि "अन्तस्तद्धर्मोपदेशात्" इति विषयवाक्यस्थान्तःप्रतीकेन किमर्थं ग्रहणम्? नामात्मकस्यापीन्द्रपदस्य महायोगस्यैव प्राबल्यात् परमात्मपरत्वं निर्णीतं पूर्वाधिकरणेन। "देवा न विदुरि"ति पुरन्दरविषयत्वे नोपपद्यते। न हि स्वेषां राजा तेषां दुर्विज्ञेयः। "देवैरत्रापि विचिकित्सितं पुरा" इत्यादौ परमात्मलिङ्गमेव दुर्विज्ञेयत्वामाम्नायते। "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इत्यादिकमपि वाक्यजालमत्रानुसन्धेयम्, इति व्यर्थमिदमधिकरणं स्यात् ॥

द्वैतिनां विषयवाक्यस्य नात्र सङ्गतिः।

पूर्वोक्तरीत्या पादासङ्गतिश्च; नामात्मकत्वाभावादन्तःप्रविष्टत्वादीनाम्। नामात्मकेन्द्रपदमपि "इन्द्रं मित्रं वरुणमग्निमाहुः"इत्यत्रेन्द्रशब्दस्य भगवति विद्वद्रूढिसद्भावस्यावगमाच्च वितथमिदमधिकरणम्। अन्तरधिकरणान्तराधिकरणयोरुभयोरपि विषयभेदाद् वैयर्थ्यमद्वैते नैकेनापरस्येति पूर्वमेवोक्तम्। सौत्रान्तःपदस्य प्रतीकमात्रस्य तद्घटितसर्वप्रकरणगतसर्वशब्दनिर्णायकत्वमेव सूत्राशय इति तु प्रतीकान्तरेऽपि सन्देहे सत्येव युज्यते, न तु तदंशेऽसन्देहे ॥

"आनन्दमयोऽभ्यासादि"त्यत्रानन्दमयांशेऽपरमात्मपरत्वनिरासमभिप्रेत्यैव तस्य प्रतीकग्रहणम्। न चेन्द्रस्य देवानां राज्ञोऽक्षरेशितृत्वमपि, येने"न्द्रो राजा जगतो य ईशे" इतीन्द्रपरत्वेऽन्वितं स्यात्, निरङ्कुशजगदीशितृत्वस्य तत्र बाधात् ॥

वस्तुतस्तु – इन्द्रस्तुतिपरत्वादस्य प्रकरणस्येन्द्रपरत्वेऽपि न बाधा। न च सर्वेषां परमात्मपरत्वे व्याहतिः परविद्यात्वे; सर्वस्य विष्णुपरताया अविरोधात्। कर्मकाण्डगतानां पदानामल्पफलसाधनत्वादपरविद्यात्वस्यापि स्वीकारेणेन्द्रपदस्यापरविद्यात्वमस्या विद्याया अभिप्रेत्येन्द्रपरत्वमपि न दोषाय ॥

इन्द्रपदस्य परमात्मपरत्वं न निर्णेयम्।

सर्वेषां परविद्यात्वोपपादकतया विष्णुपरत्वं तु समन्वयाधिकरणसिद्धं

नात्र साधनीयं ऋङ्मन्त्राणाम्। किं वहुना? सर्वेषां मन्त्राणां परमात्मबोधकत्वेनाऽऽध्यात्मिकदृष्ट्यापि विवरणं सायणभाष्यस्यापि सम्मतम्। परं त्वधिकारिभेदेनाधिदैविकादिपरतयाऽपि विवरणं न विरुद्धम्। इन्द्रपदस्य परमात्मपरत्वं निरुक्तेऽपि वेदाङ्ग एकैव देवतेति पक्षे निर्णीतमेव, इति नेन्द्रादिपदानां वैदिकमन्त्रघटकानामपि परविद्यात्वोपपादकाध्यात्मिकदृष्ट्येश्वरपरत्वमत्र पुनरपि निर्णेयम्॥

द्वैताभिमते विषयवाक्ये—न केवलं "अन्तःप्रविष्टमि"त्यादाविन्द्रपदमात्रस्य श्रुति-लिङ्गे, किन्तु "ब्रह्मेन्द्रमग्निमि"ति ब्रह्माग्नि-त्वष्टृ-बृहस्पतीनामपि। न चैकं वाक्यमनेकपरं युक्तम्, इत्येकवाक्यतोपपत्त्यर्थमेकवाक्यता स्वीकर्तव्या। तत्र चैकप्राधान्येऽपरेषां प्रशंसा, अन्यथा नयनं वेति व्यवस्था॥

सर्वथा त्वाऽऽध्यात्मिकदृष्ट्या, आधिदैविकदृष्ट्या वैकदैवत्यपक्षे निरुक्तनिर्णीतस्य निर्णयो नात्रापेक्ष्यते, अग्नि-वाय्वादित्यास्तिस्रो देवता इति पक्षे तु प्रकरणानुरोधादादित्यः कदाचनेन्द्रपदार्थः, अग्निर्वायुर्वेति॥

सर्वत्र कल्पेषु पुरन्दरो नामैवेन्द्रोऽप्रसिद्धः; मन्वन्तरभेदेनेन्द्रभेदात्। न चेन्द्रपदं कुत्रापि रूढम्. किन्तु यौगिकमिति प्रकरणात् प्राकरणिकेऽर्थ इन्द्रपदप्रवृत्तिः, विनियोगवशादग्न्यादावपीन्द्रपदप्रवृत्तिः, यथा "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यग्न्युपस्थाने विनियुक्तमन्त्रघटकेन्द्रपदस्य "कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यत्रेन्द्रपदमग्निपरम्, इतीन्द्रपदार्थनिर्णयार्थं यद्यधिकरणम्, तर्हि परविद्यात्वमुपपादयितुमित्येव वक्तव्यम्। तच्च पूर्वमेवावधारितम्, इत्यन्तःपदविवक्षितधर्मिस्वरूपं नामात्मकशब्दाबोध्यं निर्णेतुमेवेदमधिकरणम्॥

तत्तु यदि ब्रह्मलिङ्गानुसारेण निर्णेयम्, तर्हि ब्रह्मलिङ्गाभिभावकं किञ्चिद् ब्रह्मेतरलिङ्गमपि तत्र वाक्योपक्रमगतत्वेन, अन्येन वा निमित्तेन प्रबलं श्रूयत इति वक्तव्यम्। न "चान्तः प्रविष्टमि"त्यत्र तादृशं ब्रह्मलिङ्गाभिभावकं पूर्वपक्षे किमपि, सिद्धान्ते तु तदभिभवायोग्यत्वाद् ब्रह्मलिङ्गं प्रबलं वक्तुं शक्यते॥

अथ "य एषोऽन्तरादित्ये" इति वाक्ये तु पूर्वपक्षबीजम्, सिद्धान्तोपपत्तिश्चोभयमपि वर्तते, इत्यद्वैतिनां विषयवाक्यमेवात्र विषयतामर्हति, इतीन्द्रपदांशो नास्य विषयः। अयमेव न्यायो ब्रह्माग्नि-बृहस्पत्यादिशब्देष्वपि। सर्वथा तु "अन्तस्तद्धर्मोपदेशात्" इति सूत्रमपि लिङ्गात्मकशब्द-

घटितवाक्यविषयकमद्वैतिनां स्पष्टब्रह्मलिङ्गवाक्यविषयतायास्तत्र सत्त्वादेतत्परं सङ्गतमिति सर्वमनवद्यम् ॥

॥ इत्यन्तरधिकरणम् ॥

---

## ❀ अथाकाशाधिकरणम् ❀

### ॥ आकाशस्तल्लिङ्गात् ॥

विषयवाक्यस्य पादसङ्गतिरुभयत्र ।

पूर्वाधिकरणे सम्भाव्यमानस्वारस्यौपक्रमिकजीवलिङ्गैरव्यभिचारिसार्वात्म्य-सर्वदुरितविरहबाधायोगाद् जीवलिङ्गानभिभूतब्रह्मलिङ्गकत्वाच्च विषयवाक्यस्य पादसङ्गतिः । अत्राकाशश्रुत्यभिभूतब्रह्मलिङ्गकत्वाद् ब्रह्मेतरलिङ्गाभिभूतब्रह्मलिङ्गकत्वं नास्तीति स्पष्टब्रह्मलिङ्गकत्वसमन्वयोऽद्वैतसिद्धान्तदृष्ट्या, लोकप्रसिद्धनामात्मकान्यत्रप्रसिद्धवाक्यविषयत्वादस्याधिकरणस्य द्वैतमते पादसङ्गतिसमन्वयः ॥

विषय-संशयोपपादनम् ।

तत्र तात्पर्योपबृंहितानन्तत्वलिङ्गस्यासङ्कुचितस्य श्रुतिबाधकत्वम्, न श्रुतेर्लिङ्गबाधकत्वम् । तथाहि—"अस्य लोकस्य का गतिरि"ति प्रश्नस्या"यं लोकः" इत्युत्तरे "अन्तवद्वै किल ते सामे"ति शालावत्येनान्तवत्त्वेन दूषिते पश्चात् अस्य लोकस्य का गतिरिति शालावत्येन पृष्टे उत्तरम्—"आकाश इति होवाच स एष परोवरीयानुद्गीथोऽनन्तः" इत्यनन्तं किञ्चिदुक्तम् ॥

तत्राकाशपदं भूताकाशपरं वा, आकाशशब्दश्रुतिवशात्, अनन्तत्वलिङ्गेन श्रुतिबाधाद् ब्रह्मपरं वेति संशय-पूर्वोत्तरपक्षसङ्गतिविशेषैराकाशाधिकरणम्, इत्यद्वैतदृष्ट्या पादसङ्गतिः । द्वैतेऽप्यन्यत्र प्रसिद्धनामात्मकशब्दस्य ब्रह्मपरत्वनिर्णयार्थत्वात् पादसङ्गतिसमन्वयः ॥

द्वैतवाद उक्ताधिकरणवैयर्थ्यम् ।

उभयत्रापि "अस्य लोकस्य का गतिरिति आकाश इति होवाचे"त्यादिछान्दोग्यवाक्यमेव विषयः । अत्राद्वैतिनां द्वैतिनां च सिद्धान्ते न कोऽपि विशेषः । तथापि द्वैतवादे पूर्वपक्षे, सिद्धान्ते च सर्वेषां पदानां परमात्मन्येव

मुख्यत्वं विद्वद्दृष्ट्येति पूर्वाधिकरणसिद्धान्तात् तेनैवास्य गतार्थतयोक्ताधिकरणवैयर्थ्यं दुष्परिहरम्। इन्द्रादिपदवत् चेतनवाचकशब्दानामेव तत्र निर्णयः, अचेतने तु न स्वल्पमपि परमेश्वराधीनं चेष्टादिकं निरवकाश आकाशे सम्भवतीति कृत्वेदमधिकरणमिति तु तेषामपि परमेश्वराधीनसत्ताकत्वमादायैव समाधीयत इति न युक्तम्॥

अचेतनपदस्यापि परमात्मपरत्वं न निर्णेयम्।

परविद्यात्वं सर्वेषां पदानां विष्णुवाचित्वेनेति सिद्धान्तः समन्वयाधिकरणसिद्धो नाचेतनविषय इति पूर्वं कुतोऽवगतम्? "जन्माद्यस्य यतः" इति ब्रह्मणो जगत्कारणत्वमाकाशादीनामपि कार्यत्वमादायैव खलु। सति चैवं परमेश्वराधीनसत्ताकस्याकाशस्य कथं न परमात्मवाचित्वम्? आकाशादिशब्दानां भूत-तदभिमानि-देहान्तर्यामिरूपार्थचतुष्टयं सिद्धवत्कृत्य खल्वन्नमयादीनां परमात्मत्वमानन्दमयाधिकरणे व्यवस्थापितम्, इति कथं भूताकाशमात्रपरत्वमादायाधिकाशङ्काया उत्थितिः? इति पूर्वाधिकरणसिद्धान्तन्यायैरेव गतार्थत्वं दुष्परिहरम्॥

अद्वैतमत उक्ताधिकरणसार्थक्यम्।

अद्वैतमते तु "सदेवे"ति वाक्ये सत्पदस्य चेतनाचेतनसाधारण्याद् आकाशशब्दस्याचेतनमात्रपरत्वात्, साङ्ख्यसिद्धान्त आकाशस्याप्यनन्तत्वात् पूर्वपक्षोत्थितिः, सिद्धान्तस्तु—"आकाशादेवे"त्यवधारणानुपपत्तिः, परमात्मासाधारण्यादाकाशपदस्य लिङ्गोपोद्बलितस्य तस्य परमात्मपरत्वमादाय॥

उद्गीथावयवरूपेणोपास्यस्यैवाकाशस्य विवक्षणाद् मुख्यज्ञेयस्वरूपस्याविवक्षणात्, सविशेषस्यैवाकाशस्य विवक्षा, इति पूर्वोत्तरपक्षयोः फलभेदसङ्गत्यादिकम्, अधिकरणसिद्धान्तन्यायेन पूर्वेण केनाप्यगतार्थत्वमिति च न दोषः॥

सर्वथा त्वद्वैतसिद्धान्तस्य नात्र विरोधः; सविशेषब्रह्ममात्रस्यात्र विवक्षणात्। विशेषस्तु द्वैतसिद्धान्ते, यत्र केवलं निमित्तकारणत्वं मन्यते, ब्रह्मपरत्वं चास्य वाक्यस्य, तत्र—"अकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती"ति लयाधिष्ठानत्वादिनाऽवगतोपादानत्वानुपपत्तिः, अद्वैतमते तु न सेति॥

तत्र पूर्वपक्षे भूताकाशस्योपादानतापरतया नयनम्, सिद्धान्ते तु निमित्तकारणतामात्रपरतया, इति पञ्चम्यन्तपदबोध्यत्वम्, लयाधिष्ठानत्वं चोपादानत्वप्रयोजकमिति स्वीकारात्, सिद्धान्ते तदस्वीकाराच्च वैरूप्यम्॥

उभयत्रापि निमित्तकारणत्वविवक्षायां नाचेतनस्याकाशस्य कर्तृत्वम्, इति कथं पूर्वपक्षोत्थितिः ? अद्वैतसिद्धान्ते तु नोक्तविधं वैरूप्यम्; आकाशपरिणाम्युपादानतायाः, ब्रह्मविवर्तोपादानतायाश्च स्वीकारादुभयोरप्युपादानत्वाविशेषाद् आकाशशब्दस्य गौणत्वमेव स्वीकर्तव्यम्। तत्तु कुत्रेति विवेचनार्थमाकाशाधिकरणमिति तु निष्कर्षः॥

॥ इत्याकाशाधिकरणम् ॥

—: ❁ :—

## ❁ अथ प्राणाधिकरणम् ❁

### ॥ अत एव प्राणः ॥

विषय-संशयोपपत्तिरद्वैतवादे।

अत्र—"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते शतधा निपतिष्यति"। कतमा सा देवतेति प्राण इति होवाचेति वाक्यं विषयः। अत्र देवताशब्दो न चेतनपरः, किन्तु चेतनाचेतनसाधारणोपास्यमात्रपरः, यथा प्रतिहारादीनामन्नरूपेणोपास्यत्वम्॥

सति चैवं तेन न्यायेन प्रस्तावोऽपि किं प्राणरूपेण, उत ब्रह्मरूपेणानुसन्धेय इति संशयः; चेतनाचेतनयोरुभयोरप्युपास्यदेवतात्वाप्रसिद्धावप्युपास्यत्वाविरोधात्। अत एव "वाचं धेनुमुपासीते"त्यादौ वाचोऽदेवतात्वेऽपि धेनुदृष्टेर्विधानम्, पञ्चाग्निविद्यादावचेतनानामप्युपास्यत्वं प्रधानमुदाहरणम्। गायत्र्या भूतादिपादत्वेनोपासनमपि प्रसिद्धम्। अतो नात्रासंशयः॥

अद्वैतवादे पूर्वपक्षोपपत्तिः।

तत्र मुख्यप्राण एव प्राणशब्दवाच्यः, ब्रह्म तु गौणम् ? लक्ष्यं वाऽऽकाशवत्। तत्र सर्वभूतसंवेशनोद्गमनं योगिनां प्रत्यक्षसिद्धम्, अन्येषामपि सुषुप्ति-जागरयोः "सुखमहमस्वाप्स"मिति परामर्शस्य स्वीयस्या-

नुपपत्त्या साक्षिणा प्रत्यक्षमिति परैरपि स्वीकर्तव्यम्, अन्यथाऽहमर्थस्य सुषुप्तौ भानसाधनासम्भवात् ॥

तत्र च मुख्यप्राणो वर्तत इति परेषां प्रत्यक्षम्; तत्र चक्षुरादिव्यापारोपरमात्, तेषां सर्वेषां मुख्यप्राणात्मनैवावस्थानात्, भूतानामप्यविद्यात्मनैव सत्त्वाच्च तत्र स्थूलरूपेणाभावः। जागरावस्थायां स्थूलरूपेण सर्वेषामाविर्भावः। यथासम्भवं तत्तदिन्द्रियव्यापारेण सर्वेषां प्रत्यक्षत्वं च प्रत्यक्षम् ॥

अस्याधिकरणस्याकाशाधिकरणातिदेशत्वम्।

तत्र भूतसंवेशनोद्गमनमन्येषामानुमानिकम्; अन्यदीयाविद्याया अन्यत्राभावात्, मुख्यप्राणस्य सुषुप्तावपि चेष्टादिदर्शनेन तदधीनत्वानुमानसम्भवाच्च प्राणशब्दस्य मुख्यप्राणपरत्वं सम्भाव्यते। शास्त्रदृष्ट्या तु भूतसंवेशनोद्गमनं सुषुप्तावपि परमात्मसम्बन्धादिति निर्धार्यत इति लोकसिद्धानुभवम्, प्राणशब्दमुख्यार्थत्वं चावलम्ब्य पूर्वपक्षः। शास्त्रदृष्टेर्निर्दोषायाः प्राबल्येन सिद्धान्तः। प्राणशब्दस्य तु गौणत्वम्। आकाशाधिकरणन्याय एवात्रापि। अधिकाशङ्कानिराकरणेन समानन्यायत्वस्यात्र सत्त्वादतिदेशाधिकरणमिदम् ॥

"अत एव प्राणः" इति पूर्वन्यायसमानत्वमेवास्य न्यायस्य सूत्रकारेणापि सूच्यते। "अत एव" पदस्य तल्लिङ्गादित्येवार्थः, इति सूत्रकारः पूर्वाधिकरणसिद्धान्तनयसिद्धत्वं स्वीकृत्यैवाधिकाशङ्कामात्रमभिप्रेत्येदमधिकरणं विरचयति ॥

द्वैतमत उक्ताधिकरणवैयर्थ्यम्।

परमते त्वचेतनस्य प्राणस्य देवतात्वमेव नास्तीति नात्र संशयः, किन्तु ब्रह्मपरत्वनिर्णय एव मन्यते। तत्र भूतसंवेशनोद्गमनयोः सुषुप्तावस्थायां प्राणसम्बन्धितयाऽनुमितयोः का वा गतिः? यदि तस्याप्रयोजकत्वेन तस्य पारमेश्वरकर्मत्वमेव शास्त्रदृष्टेर्बलीयस्त्वेन, तर्हि तन्न्यायसूचनमेवास्याधिकरणस्य प्रधानं लक्ष्यम् ॥

परमते पूर्वोत्तरपक्षायोगः।

तत्र लौकिकानुभव उक्तश्रुत्याऽनुगृहीतः प्रबल इति पूर्वपक्षः, लोकानुभवस्य कारणश्रुतिविरुद्धस्याप्रामाण्यम्, इति सर्वजगत्कारणत्वं ब्रह्मण इति

श्रुतेरेवात्रानुकरणमिति सिद्धान्तः। लोकानुभवोऽपि सुषुप्तौ प्राज्ञात्मना जीवस्य प्रकाशात् प्राज्ञसम्बन्धीन्येव प्राणोद्गमनादीनीति श्रुत्यनुग्रहेण वक्तव्यत्वाद् न सम्भावितमात्रमप्रमाणम् ॥

परे तु औपनिषदं वाक्यं सर्वं प्राणशब्दघटितं ब्रह्मपरं निश्चित्य तैत्तरीयाणामौपनिषदं वाक्यमत्रोदाहृत्य तस्य ब्रह्मपरतां सिद्धान्तयन्ति। तत्र कर्मकाण्डगतानामपि पदानां विष्णुपरत्वव्युत्पादनायोगस्य पूर्वमेवोपपादनात्, प्राणादिहेतुना दृष्टाधिकाशङ्कायाः—"कतमा सा देवता प्राण इति होवाचे"त्यत्रापि समानत्वात्, न्यायविशेषाभावाच्च नात्र विषयतः, न्यायतो वा विशेषः। सर्वथा तूदाहरणमात्रभेदः। तत्रोभयोरप्यनिर्भरे न किमपि प्रबलं निमित्तमस्ति ॥

॥ इति प्राणाधिकरणम् ॥

## ❀ अथ ज्योतिरधिकरणम् ❀

इतः परं तु विषयवाक्यविशेषाणामघलम्ब्याधिकरणरचनायां निर्विशेषब्रह्मनिर्णयविरोधिनो न्याया यत्र सूच्यन्ते, तत्रैवाद्वैतसिद्धान्तविरोधो मा भूदिति विचारः करिष्यते, उभयेषामपि सविशेषब्रह्मपरत्वे यत्र न विप्रतिपत्तिः, तत्रोपपादनप्रकारभेदमात्रमधिकृत्य तत्तत्प्रकारसाधुत्वासाधुत्वविचारेण ग्रन्थविस्तरमात्रं मा भूत्—इति च ॥

तत्र "ज्योतिश्चरणाभिधानात्" "छन्दोऽभिधानादिति चेदि"त्यादौ चोपासनाविधिपरेषु न विप्रतिपत्तिः। विषयवाक्यभेदमात्रं त्वकिञ्चित्करम्, इतीन्द्रप्रतर्दनाधिकरणमात्रे विप्रतिपन्ने विचारः प्रारभ्यते ॥

॥ इति ज्योतिरधिकरणम् ॥

## ❀ अथेन्द्रप्रतर्दनाधिकरणम् ❀

॥ प्राणस्तथाऽनुगमात् ॥

मतद्वयाभिमतविषयवाक्यविभागः।

इदं ह्यधिकरणम् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रमनुसृत्याहमर्थं संविन्मात्रमभिप्रैति, यत्र प्रत्यगात्मनो ब्रह्मणश्च न भेदः, किन्त्वभेद इति सिद्धान्तो निरस्यते परैः ॥

"अथातो ब्रह्मजिज्ञासा" इति प्रस्तुतम्, आनन्दमयाधिकरणेन परामृष्टं च जीवब्रह्मैक्यं वेदान्तमहातात्पर्यविषय इत्युपक्रम-परामर्शोपसंहारैर्ब्रह्मजिज्ञासा द्रढयति। "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे"ति वाक्यमद्वैतदृष्ट्या विषयवाक्यम्, द्वैतदृष्ट्या तु "ता वा एता शीर्षञ्छ्रियं श्रिता चक्षुः श्रोत्रं मनो वाक्प्राणः। ततं देवा प्राणयन्त स एषोऽसुः प्राणः प्राण ऋच इत्येव विद्यात् तदयं प्राणोऽधितिष्ठति" इति विषयवाक्यम्। उभयत्रापि प्राणशब्दस्य ब्रह्मपरत्वे न विप्रतिपत्तिः॥

तत्र "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरि"त्यहन्तादात्म्यानुभवः शास्त्रदृष्ट्या शास्त्रश्रवण-मनननिदिध्यासनाधीनसाक्षात्कारावस्थमिन्द्रमाश्रित्येत्यद्वैतम्। शास्त्रस्य शास्तुरन्तर्यामिणोऽन्तःप्रवेशादन्तर्यामिणमभिप्रेत्येति द्वैतमतम्। इदमेव गृहीत्वा सर्वेषां पदानां न केवलं लौकिकभूतादिपरत्वमात्रम्, किन्त्वन्तर्यामिपरत्वमपीत्यानन्दमयाधिकरण उक्तम्॥

"अहं मनुरभवम्" "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे"त्ययमप्यन्तर्याम्युपासनविध्यभिप्रायमेव। अतो नात्र जीव-ब्रह्मैक्यं विवक्षितम्। तथाच सर्वत्राहं शब्दस्तत्तादन्तर्यामिपर एव। "अहं मनुरभवं सूर्यश्चे"त्यत्राप्येवमेव। न हि मनुसूर्यादिर्भवति वामदेवः, किन्तु सर्वेषामन्तर्यामी वासुदेव इत्येवात्र विवक्षितम्॥

अहंपदस्यान्तर्यामिपरत्वायोगः।

तत्राहंशब्दस्यान्तर्यामिपरत्वे "प्राणोऽस्मी"त्युत्तमपुरुषप्रयोगानुपपत्तिः। अस्मद्युपपदे समानाधिकरणे स्थानिन्यप्युत्तमपुरुषविधानात्। स च नित्यमहमर्थं जीवात्मानमभिप्रेत्यैव, नान्तर्यामिणम्; अन्यथा सर्वेषां वाक्यानामन्तर्यामिपरत्वेन प्रथम-मध्यमपुरुषयोर्न कुत्राप्यवसरः स्यात्। शरीराभिमानिनमभिप्रेत्य यदि तत्प्रयोगसाधुत्वम्, तर्हि नान्तर्यामिपरतायां तत्साधुता। अहं गच्छामीत्यहमात्मनाऽध्यस्तशरीरतादात्म्यमादायोत्तमपुरुषप्रयोगोऽप्यत एवोपपद्यते,इत्यहमर्थवाच्यतां बाधितामम्, अबाधितां वा वाक्यार्थज्ञानद्वारावस्थामाश्रित्योत्तमादिपुरुषा निर्वाह्याः॥

अहं मनुरभवमित्यादौ न तादात्म्यं द्वैतवादे।

सति बाधे लक्ष्यार्थमादाय शब्दबोधेऽपि प्रथमप्रतीतार्थमादाय साधुत्वं निरुह्यते। "अहं मनुरभवं सूर्यश्चे"ति वाक्ये वामदेवस्य मन्वादितादात्म्यं

प्रतिपाद्यमानं न वामदेव-मनु-सूर्याणां तत्तद्भावेन भिन्नानां सम्भवति। सर्वानुगतसंविदात्मना तु कार्याणामपि कारणात्मनामिवाभेदः, औपाधिकानां स्वनुपहितात्मनाऽभेद इति सिद्धान्तात् शास्त्रजनिताखण्डाकारवृत्तिमभ्यस्यमानामाश्रित्याभेदो न विरुध्यते। तत्र यद्युपाधयः परित्यज्यन्ते, तर्हि वामदेव-मनु-सूर्याणामौपाधिकानां स्वरूपतोऽभावदशामाश्रित्य सामानाधिकरण्यमबाधितमन्तर्यामिपरत्वेऽपि। यद्यपि सर्वान्तर्यामिणामैक्यात् सामानाधिकरण्यं निर्वोढुं पार्यते; तथापि तत्तन्नियम्यानामपि विशेषणतया भाने नैक्योपपत्तिः, अन्यथा घटः पटो भवति, अन्धकारो दीप इत्यादिवाक्यानामपि तत्तदन्तर्यामिपरतया प्रामाण्यापत्तिः॥

नियम्यविशेषितस्यान्तर्यामिस्वरूपमात्रस्य विवक्षा तु नियम्यापेक्षत्वाद् नियामकताया न सम्भवति। तत्र संविन्मात्रं निर्विषयं निराश्रयं च विनाऽऽश्रय-विषयौ वृत्तिज्ञानमिव स्वरूपमात्रेण विवक्षितुं न शक्यम्, यथा सुवर्णात्मना कटक-कुण्डल-ग्रैवेयकाणां सामानाधिकरण्येनाभेदः॥

न चान्तर्यामि-नियम्ययोः, तन्नियम्ययोर्वा केनापि रूपेणाभेदो द्वैतसिद्धान्ते, येन नियामकभावेन नियम्यानामपि मनु-सूर्य-वामदेवानामैक्यं स्यात्॥

अहं मनुरिति सामानाधिकरण्यं नान्तर्यामिणमाश्रित्य।

अन्तर्यामित्वविवक्षायां तु मनोरहम्, सूर्यस्याहम् वामदेवस्याहमित्येव प्रतीतिः स्यात्, न तु अहं मनुरभवं सूर्यश्चेति, इति 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरि"तीन्द्रवचनस्योपपत्तिरिन्द्रपरमात्मस्वरूपोपाधिबाधविवक्षया, स्वरूपमात्राभेदविवक्षया वा सामानाधिकरण्येनैव वक्तव्या शास्त्रदृष्ट्या बाधमादाय। इदं चाद्वैतवाद एव युज्यते॥

द्वैताद्वैतप्रथमाध्यायप्रथमपादविषयविभागः।

तत्र द्वैतमते द्वादशाधिकरणानि प्रथमाध्याये प्रथमे पादे। तत्र च तिस्रः पेटिकाः—प्रथमादिपञ्चमाधिकरणान्तैका पेटिका, ततो द्वितीया ह्यधिकरणद्वयात्मिका, तृतीया तु ततः पञ्चाधिकरणात्मिका॥

अद्वैतमते तु प्रथमाध्यायप्रथमपाद एकादशाधिकरणानि। तत्र च द्वैतसिद्धान्तवदेव तिस्र एव पेटिकाः। तत्र प्रथमादिषष्ठाधिकरणान्ता निर्विशेषब्रह्मपरा प्रथमा पेटिका, सप्तमादिदशमान्ता चतुरधिकरणात्मिकोपास्य-

सविशेषब्रह्मावलम्बिनी द्वितीया पेटिका, तृतीया तु प्रथमपेटिकेव जीवब्रह्मैक्यनिरूपणपरा ॥

तत्र द्वैतमत आद्ये जिज्ञासाकर्तव्यतोक्तिः, द्वितीये जिज्ञास्यब्रह्मणो जन्मादिकारणत्वोक्तिः, तृतीये तत्रागमेषु पाञ्चरात्रमात्रप्रामाण्योक्तिः, तुरीये प्रमाणानामन्यपरत्वनिरासेन विष्णावेव समन्वयः, पञ्चमे स एवाखिलवेदमुख्यार्थः, न निर्विशेषं किमपीति समन्वयसूत्रघटकसंशब्दार्थसामर्थ्यमिति प्रथमपेटिकान्तर्गताः पादार्थाः ॥

तत्र द्वितीयपेटिकान्तर्गताः—गुणिसामान्यम् , वाक्यानां ब्रह्मणि समन्वयः, वस्तुविशेषप्रसिद्धेन्द्रादिपदानां विद्वद्रूढ्या विष्णौ सामन्वयश्च विषयाः ॥

तृतीयपेटिकागतास्तु विषयाः—अधिभूत-वाय्वाकाशादिशब्दानां ब्रह्मणि समन्वयः, अध्यात्मवाचकप्राणादिशब्दानां ब्रह्मणि समन्वयः, ज्योतिरादिःशब्दानां ब्रह्मणि समन्वयः, अधिदैवतगायत्र्यादिशब्दानां ब्रह्मणिसमन्वयः, बहुश्रुति-लिङ्गप्रापितान्यपरत्वशङ्कानिरसनेन प्राणशब्दस्य ब्रह्मणि समन्वय इति द्वैतदृष्ट्या प्रथमाध्यायप्रथमपादार्थनिष्कर्षः ॥

तत्रान्तिमाधिकरणं सर्वेषामन्तर्यामिपरत्वं व्युत्पादयति । तत्राकाश-प्राणतेजशब्दानामाधिभौतिका , ज्योतिपदस्य चाधिभौतिकपरस्यः ब्रह्मपरत्वे न विप्रतिपत्तिः । अन्तरधिकरणविषयवाक्येऽद्वैताभिमते न संशयः, इति न तस्य विचार्यत्वम् , किन्त्विन्द्रादिपदानामिति द्वैतमतम् । "छन्दोऽभिधानादि"ति तु पृथगधिकरणमधिदैवतगायत्रीपदस्य ब्रह्मपरत्वनिर्णायकम् । अन्तिमे त्वहम्पदस्यान्तर्यामिपरत्वमिति ॥

तत्राद्वैते विशेषस्तु "छन्दोऽभिधानादि"ति न पृथगधिकरणम् , किन्तु ज्योतिःपदवाच्यस्य ब्रह्मण एव गायत्र्युपहितरूपेणोपासनविधि एवमन्तिमेऽधिकरणेऽप्युक्तत्रैविध्यं विवक्षितम् , न तु प्रत्येकं सर्वेषां प्राणादीनामन्तर्यामिपरत्वम् । अहमर्थस्य प्रत्यगात्मनोऽपि संविन्मात्रस्य निदिध्यासनावस्थाया विवक्षणाद् नोपासनाशब्दविधिविरोधः ॥

॥ इतीन्द्रप्रतर्दनाधिकरणम् ॥

## ॥ इति प्रथमाध्यायस्य प्रथम पादः ॥

❀ ओं ❀

# ❀ अथ प्रथमाध्यायस्य द्वितीय पादः ❀

## ॥ सर्वत्र प्रसिद्धोपदेशात् ॥

## ॥ सर्वत्र प्रसिद्धाधिकरणम् ॥

प्रथमद्वितीयपादविषया मतद्वयदृष्ट्या ।

तत्र प्रथमद्वितीयपादविषयाः सविशेषप्रधानास्पष्टब्रह्मलिङ्गवाक्यान्यद्वैतदृष्ट्या, द्वैतदृष्ट्या तु लिङ्गात्मकान्यत्रप्रसिद्धशब्दानां ब्रह्मणि समन्वयः॥

तत्र प्रथमे पादे सिद्धान्तदृष्ट्या यद्यपि सर्वेषां वाक्यानां यौगिकत्वाद् लिङ्गात्मकत्वमेव , तथाप्यापातदृष्ट्यैव नामात्मकत्व-लिङ्गात्मकत्वविभागः। तेन च "यच्छब्दा योगवृत्तयः" इत्यनेन न विरोधः। आपातदृष्ट्याऽप्यानन्दमयाधिकरणे लिङ्गात्मकत्वेऽपि प्रायिकत्वं नामात्मकानामेवेति न दोषः । तत्र मतद्वयेऽपि सप्ताधिकरणानि ॥

तत्र द्वैतमते "सर्वगतत्वरूपभावलिङ्गप्रतिपादकं प्रथमाधिकरणं प्रथमपेटिका, द्वितीय-तृतीयाधिकरणात्मिका तु सर्वात्तृत्वरूपसामान्यस्य कर्मफलभोक्तृत्वस्य च विचारात्मिका द्वितीया पेटिका ॥

तुरीयपञ्चमाधिकरणे तु नियामकतयाऽन्तरवस्थानलक्षणक्रियारूपलिङ्गप्रतिपादकाधिकरणद्वयात्मके तृतीया पेटिका ॥

तत्राद्ये नियामकतया चक्षुरन्तःस्थत्वोक्तिः, द्वितीये सर्वसत्तानियामकत्वरूपान्तर्यामित्वोक्तिरिति विभागः ॥

तुरीया पेटिका तु अदृश्यत्वाद्यभावाख्यलिङ्गप्रतिपादकं षष्ठमधिकरणम् । सप्तममधिकरणं बहुलिङ्गसमन्वयफलकवैश्वानरनामसमन्वयप्रतिपादकं पञ्चमी पेटिकेति विभागः। अत्राप्यापाततो वैश्वानरशब्दो नामात्मक एव, न लिङ्गात्मक इति पूर्वत्रानन्दमयाधिकरण इव नैकान्ततो लिङ्गात्मकानां शब्दानामेव विचार इति विशदम् ॥

द्वैताद्वैताभिमतविषयवाक्यविभागः ।

अत्र द्वैताद्वैतयोर्विषयवाक्यभेदः प्रथमाधिकरणे, द्वितीयाधिकरणे

च। अन्यत्र तु विषयैक्यम्। तत्र द्वैतमते प्रथमाधिकरणे "ब्रह्म ततमम्" इति ब्रह्मसर्वगतत्वप्रतिपादकं वाक्यं विषयः। तत्र ब्रह्मशब्दार्थः "तस्यैतस्यासावादित्यो रसः" इति वाक्यशेषाद् आदित्य इति पूर्वपक्षः। सिद्धान्तस्तु—"सव्यश्चायमशरीरः प्रज्ञात्मा" इत्यादिनोच्यमानो नारायण एव ब्रह्मपदार्थः, न स जीव इत्युक्ताधिकरणे विचारः॥

अद्वैताभिप्रेतं विषयवाक्यम्।

अद्वैतमते—"सर्वं खल्विदं ब्रह्म तज्जलानि"ति शान्त उपासीत स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्प इति वाक्यमुक्ताधिकरणविषयः॥

"सर्वं खल्वि"ति वाक्यस्य विषयत्वनिरासः।

अत्र मनोमयो न परमात्मा; आनन्दमयाधिकरणे तत्परमात्मताया निरासात्। न च मनोमयस्तत्र ब्रह्मरूपेणोपास्यतया प्रतिपाद्यते; तच्छ्लोके हि "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहे"ति वाङ्मनसागोचरत्वमुपन्यस्यते। इदं चेद्गत्यधिकरणसिद्धान्ते परमात्मनो वाच्यत्वस्य स्थापनात् तस्य परमात्मपरत्वे विरुध्यते इति तदीयश्लोक एव पर्याप्तं कारणं नात्र परमात्मा विवक्ष्यत इत्यत्र॥

मनोमयवाक्यविषयत्वसमर्थनम्।

अयं श्लोकः परमात्मप्रतिपत्तिद्वारत्वेन परमात्मसाम्यं प्रतिपादयितुं परमात्मानमेव प्रशंसितुं च प्रवृत्तः, न तु साक्षाद् मनोमयस्य परमात्मत्वं बोधयितुम्, इत्येतद्विषयवाक्यस्य मनोमयत्वमवश्यं निर्धारणीयमिति तदेवास्याधिकरणस्य विषयः॥

पराभिमतविषयवाक्यनिरासः।

न चात्मनः सर्वगतत्वे संशयलेशोऽपि। "सत्यं ज्ञानमनन्तं ब्रह्मे"ति हि ब्रह्मणः सर्वगतत्वं निश्चितमेव। आदित्यमण्डलम्, तदन्तरो नारायणो वा तदुपहितो न सर्वगतः; अन्यत्र तद्रूपेणाभावात्, इति नादित्यब्रह्मसर्वगतत्वप्रतिपादकवाक्य आदित्यपरत्वशङ्कोदेत्यपि॥

अनिर्णीतसर्वगतत्वनिरूपणासम्भवः।

न च सर्वगतत्वं ब्रह्मणोऽत्रोपपादनीयमपि। ब्रह्मणः सर्वगुणपूर्णत्वसिद्धये खल्वानन्दादयः, स्रष्टृत्वादयश्च गुणास्तत्र तत्र प्रतिपाद्यन्ते। न च

सर्वगतत्वं ब्रह्मण आनन्दवद् गुणः। तत्तच्छक्तिप्रेरकत्वं तु न सर्वगतत्वम्। सर्वसंयोगित्वरूपं विभुत्वम्, अन्यविधं वा किमपि सर्वशक्तिप्रेरकत्वादि नात्र किमपि प्रतिपादनीयम्। अदृश्यत्वाधिकरणविषये "नित्यं विभुं सर्वगतमि"त्युभयविधस्यापि तस्य स्वयं श्रुत्यैव प्रतिपादनात्॥

### परमत एतदधिकरणवैयर्थ्यम्।

एतेन—परविद्यायां सर्वगतत्वमात्रमुक्तम्, अत्र तु तत्तच्छक्तिप्रेरकत्वमिति प्रकारभेदोक्तिरपि—परास्ता; विभु-सर्वगतपदाभ्यां सर्वविधस्य सर्वगतत्वस्य तत्र प्रतिपादनात्। अथ यदि सर्वत्र स्थितिरेव सर्वगतत्वम्, तर्हि तस्याप्यन्तर्याम्यधिकरणविषयवाक्यैरेवावगतत्वाद् नात्र तदपि प्रतिपादनीयम्। किं बहुना ? अन्तर्याम्यधिकरणेन न सर्वत्र स्थितिमात्रं परमात्मनो वर्ण्यते, किन्तु सर्वशक्तिप्रेरकत्वमपि, इति निरर्थकमिदमधिकरणम्॥

परमात्मान्तर्यामित्वं पृथिव्यादीनां षड्भावविकारशक्तिप्रेरकत्वेनैव, न तु सत्तामात्रनियामकत्वेन; अन्यथाऽन्तस्स्थत्वाधिकरणेनैव स्थितिप्रयोजकत्वस्य व्यवस्थापनादन्तर्याम्यधिकरणं वितथं स्यात्॥

### कतिपयान्तस्थत्वविवक्षाऽयोगात् परमते विषयानुपपत्तिः।

एतेन—इन्द्रादिकतिपयान्तस्स्थत्वमेव तत्र प्रतिपादितमिति शङ्कापि—परास्ता; कतिपयान्तस्स्थत्वस्य परमात्मलिङ्गत्वाभावेन तेनेन्द्रादिपदानां परमात्मपरत्वसाधनासम्भवेन तदधिकरणसिद्धान्तस्यानवस्थित्यापत्तेः। न च सर्वमूर्तसंयोगित्वं परममहापरिमाणसंयोगित्वं वा सर्वगतत्वमत्र विवक्षितुं शक्यते; "अर्भकौकस्त्वादि"त्याशङ्काया अनुत्थितेः। अतो न द्वैतदृष्ट्यैतदधिकरणे संशय-पूर्वोत्तरपक्षा भवितुमर्हन्ति, इत्यद्वैतदृष्ट्यैव ते वक्तव्याः। तत्राद्वैतमते ब्रह्मणस्सर्वगतत्वं नापलप्यते, किन्तु न तदसन्दिग्धं विचार्य निर्णेतव्यमित्येव तदाशयः॥

### परमते जीवपूर्वपक्षासंभवः।

तत्र "कर्म-कर्तृव्यपदेशाच्चे"ति जीवपूर्वपक्षनिरासार्थमिति सम्प्रतिपन्नम्। तत्र परमात्मन एव सर्वगतत्वधर्मेणोक्तवाक्यविषयत्वे निर्णीते द्वैतमतेऽणुपरिमाणस्य जीवस्याप्यादित्यादिवदुक्तवाक्याविषयत्वस्य सिद्धत्वात् स्वत एव जीवपूर्वपक्षो निर्गच्छति, इति किमर्थं "कर्म-कर्तृव्यपदेशा-

च्चे"ति तद्व्यावर्तनार्थं सूत्रम् ? न च प्रथमसूत्रे "आदित्य इव जीवोऽपि पूर्वपक्षविषयः । अद्वैतमते तु मनोमयपदेन जीवपूर्वपक्षताया एव विवक्षणात्, तद्वारणार्थमुक्तसूत्रं युक्तम् ॥

"सर्वं खल्विदमि"ति वाक्यस्यैव
सूत्रसूचितं विषयत्वम् ।

तत्र "सर्वत्र प्रसिद्धोपदेशात्" इति सूत्रे सर्वत्रपदस्य, प्रसिद्धपदस्य च प्रयोगात् प्रथममुपस्थितं भवति "सर्वं खल्विद"मित्युपक्रमवाक्यम्, तत्प्रसङ्गेन चोत्तरवाक्यापेक्षितोपासनाविषयसमर्पकत्वेन तस्य वाक्यस्य तत्रोपयोगोऽपि सूच्यते । तेन कारणवाक्यानां ब्रह्मणि समन्वयोऽप्युपासनाप्रकरणेऽध्यारोपापवादनयेनैव विशेषाणां ब्रह्मणि सम्बन्धः, न तु वस्तुगत्येति सूचनमपि "सर्वं खल्विदमि"ति बाधायां सामानाधिकरण्यप्रयोगादवसीयते, इति प्रथमाध्यायप्रथमपादोपक्रान्तजन्मादिकारणत्वमपि बाधायां सामानाधिकरण्योपपादकमेव स्वीकर्तव्यमिति प्रथमपादार्थमनुक्रस्यैव द्वितीयपाद इति प्रतीयते ॥

तत्राद्वैतिनां मतेऽपि यद्यपि यत्र ब्रह्मणः सर्वगतत्वं सन्दिग्धम्, तस्य यत्र कुत्रापि श्रूयमाणस्य विषयवाक्यत्वे न विप्रतिपत्तिः; तथापि "सर्वं खल्विदं ब्रह्मे"तिप्रस्तुतमनोमयादिवाक्यमपि सन्दिग्धं विचारणमर्हति, तेन च बाधायां सामानाधिकरण्यमेव कार्य-कारणयोरिति सूचनेन सविशेषवाक्यानां कार्य-कारणभावमवष्टभ्य प्रवृत्तानां नाद्वैतेन विरोधः, इति तस्याद्वैतभाष्येण विषयवाक्यान्तरावलम्बने न लेशतोऽपि विरोध इति तु निगदव्याख्यातम । अयमेव न्यायोऽनन्तरेऽत्ताधिकरणेऽपि ॥

॥ इति सर्वत्र प्रसिद्धाधिकरणम् ॥

———

## ❀ अथात्त्राधिकरणम् ❀

### ॥ अत्ता चराचरग्रहणात् ॥

द्वैतमते न विषयैक्यस्य सङ्गतिः ।

अत्र मतद्वयेऽपि सर्वात्तृत्वं ब्रह्मलिङ्गमित्यत्र न विप्रतिपत्तिः । परं त्वत्तृत्वं द्वैतमतेऽदनक्रियावत्त्वम्, अद्वैतमते तु सर्वसंहर्तृत्वम् । तत्र सर्वगतत्वमिव सर्वात्तृत्वमपि नानन्दसृष्ट्यादिवत् ब्रह्मणो गुणः, इति तस्य गुणपूर्णस्य विचारार्थायां ब्रह्मजिज्ञासायां नास्य विचारस्य सङ्गतिः ॥

तत्र "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते"त्यत्र जन्म-स्थिति-भङ्गत्रितयकारणत्वं यद् श्रुतम्, तद् न समुदितं लक्षणम् । तत्र च निमित्तकारणमात्रासाधारणं स्थितिकारणत्वमात्रम्, अभिन्ननिमित्तोपादानकारणत्वोपपादकं तु जन्मकारणत्वम्, लयकारणत्वम्, उभयं वा । स्थितिकारणत्वं तु जन्म-लयान्यतरसमवहितमेव-लक्षणमिति सूचयितुमन्तरधिकरणविषयवाक्ये सार्वात्म्यं कार्य-कारणयोरुभयोरपि तत्तद्रूपेण प्रतीतिसमयेऽपीति मत्वा जन्मकारणत्वं लक्षणतया विवक्षितम् ॥

अद्वैतमत एव विषयवाक्यस्य सङ्गतिः ।

यत्तु कार्य-कारणयोरुभयोरपि कारणभावावस्थायां कार्याणां लयकाले ब्रह्मात्मनैवावस्थानम्, तदध्यारोपापवादन्यायेनान्तःकरणादीनां प्राज्ञसम्परिष्वक्तप्रत्यगात्मभावेनावस्थानम्, एवं मायोपहितस्य सविशेषस्येश्वरस्यापि तदुपाध्यविद्याया विलये प्रत्यगात्मतैव परमार्थेत्यद्वैततत्त्वरहस्यं च विवेचयितुमत्राद्वैतिनां विषयवाक्यम्—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति कठवल्लीगतम् ॥

द्वैताभिमतविषयवाक्यविमर्शः ।

अनेन ह्यद्वैततत्त्वं स्पष्टं सूत्रकारेण ज्ञाप्यते । तदिदमद्वैततत्त्वं मा बहिरवतरतादिति मत्वा विषयवाक्यान्तरं द्वैतिनाम्—स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वमि"ति ॥

इदमेवात्रालोचनीयम्—को वा विशेषः—"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इति वाक्यं विहाय विषयवाक्यान्तरस्यात्र विवक्षितस्य ? उभयत्रात्तृत्वस्य परमात्मलिङ्गस्यैव यद्यत्र साक्षात् स्वीकारः, तर्हि "यस्य ब्रह्म च क्षत्रं चे"ति वाक्यस्य साक्षादत्तृत्वविषयस्य केन न्यायेन परमात्मपरत्वनिर्णयः ?

किं वात्तृत्वमुभयत्र परमात्मलिङ्गम्—किमदनक्रियासामान्यं भोक्तृत्वमात्रम्, उत भोक्तृत्वविशेषः। उभयत्र क्रियाया अनित्याया न परमात्मस्वरूपत्वमानन्दादेरिव ॥

परमेश्वरस्य हि नित्यत्वं जन्मादिसूत्रसिद्धम्। न च नित्यस्यानित्यक्रिया स्वरूपम्; नित्यानित्ययोः स्वरूपैक्यासम्भवात्, इत्यगत्या नित्यस्यानित्यधर्मस्वरूपत्वमध्यासादिति वक्तव्यम्। अद्वैतमते त्वत्तृत्वमत्र संहर्तृत्वमात्रमुच्यते, यत्तु मायोपाधिकं ब्रह्मणि सोपाधिकमध्याससिद्धम्, इति न विरोधः ॥

अत्तृत्वं संहर्तृत्वम्, न भोक्तृत्वम्।

अत्तृत्वेन चात्र संहरणक्रियाविशेष एव विवक्षितुं शक्यते, नात्तृत्वसामान्यम्; "अनश्नन्नन्योऽभिचाकशीती"ति परमात्मनोऽभोक्तृत्वश्रवणात्। न च शुद्धप्रत्यगात्ममात्रविषयं तत्; संविन्मात्रताया उभयत्राविशेषात्। सविशेषविषयमत्तृत्वं संहर्तृत्वमद्वैतवादेऽपि यद्यप्यविरुद्धम्; तथापि न स तस्य स्वभावः ॥

न च तदपि संहर्तृत्वातिरिक्तं भोक्तृत्वसामान्यरूपम्; "सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" इति—

"सर्वज्ञताऽल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः।
स्वातन्त्र्य-पारतन्त्र्याभ्यां सम्भोगो नेश-जीवयोः ॥"

इति गारुडवचनानुसारिणा सूत्रेण तन्निरासात्, तद्रूपस्यात्तृत्वस्यैवात्र विवक्षणेन न विशेषो वाक्यद्वयस्यापि; संहरणादिक्रिया हीश्वरस्य सविशेषस्य मायोपाधिकत्वादनित्यैव; तदुपाधेर्मायाया अनित्यत्वेन तस्या अप्यनित्यत्वात्। न ह्यौपाधिकं लौहित्यं स्फटिकस्य स्वभावो नाम ॥

संहर्तृत्वं सविशेषस्य, न निर्विशेषस्येति संप्रतिपन्नम्।

"एकमेवाद्वितीयमि"ति द्वितीयसामान्यनिषेधेन, मायाया अपि श्रुत्यैव

बाधितत्वेन च श्रुतिसिद्धममायत्वं परमात्मनः संविन्मात्रस्य। सविशेषस्तु स्वोपाधेरनादितादात्म्याध्यासनिष्पन्न ईश्वराख्योऽप्यौपाधिकोऽनित्य एव, न नित्यः। द्वैतिनोऽप्यनित्यक्रियावत्त्वं नित्यत्वं च विरुद्धं कथमन्यथा निर्वहन्ति? स्वरूपतो नित्यत्वमनित्यक्रियाश्रयत्वे कथम्। तत्रापि यदि परमेश्वरस्य शक्तिविशेषाद् निर्वाहः, तर्हि सैव शक्तिर्माया नामेति स्वीकृत्य मायोपाधिकमेव संहर्तृत्वादिधर्मवत्त्वं मायानिवृत्तौ निवर्तते, अन्यथा तु न निवर्तते। यावन्निवृत्ति तु नित्या। अनन्तत्वं ह्युपाधेरनित्यत्वादौपाधिक्याऽनित्यतया न व्याहन्यत इति मत्वा वा सन्तुष्यताम्। श्रुतिसिद्धत्वाच्च मायायास्तदुपाधिकस्येश्वरस्य, तत्संहर्तृत्वादेश्च क्रियायाः प्रमाणगम्यत्वाद् न तत्र न पर्यनुयोगावसरः; "किमिव पचनं न कुर्यादि"ति न्यायात्॥

परोक्षत्वादीश्वरस्य यथाश्रुति स्वरूपमूरीकर्तव्यम्।

श्रुतिसिद्धश्चेश्वरः परोक्ष एव; नापरोक्षोऽविद्योपहितस्वरूपत्वात्, उपहितरूपेण यावदावरणनिवृत्ति न सोऽपरोक्षः। सत्यामावरणनिवृत्तावखण्डनिर्विशेषरूपेण तु प्रत्यक्षः, न त्वीश्वररूपेण कदाऽप्यपरोक्षः। न च परमतेऽपीश्वरः प्रत्यक्षः स्वभावतः; अन्यथा सर्वेषामपि तत्प्रत्यक्षतापत्तेः। भक्ताराधितः स स्वीयं रूपमपरोक्षयतीति तु भक्त्यतिशयसाध्यज्ञानादिप्रदानेनास्यावरणनिवृत्तिं सम्पाद्य स्वीयं स्वरूपं प्रकाशयतीत्यभिप्रायम्, इत्यत्र को वा विप्रतिपद्यते?

स्वीयं च रूपं निवृत्ताविद्यमविद्यानुपहितमिति त्वन्यदेतत्। ईश्वरशक्तिविशेषरूपा मायाऽपि निवर्तत इति "भूयश्चान्ते विश्वमायानिवृत्तिरि"ति श्रुतिरेव श्रावयति, इति नात्रानाश्वासस्यावसरः। सविशेषस्येश्वरस्य संहरणादिकमिव ज्ञानमपि मायापरिणामरूपमनित्यमेव, मायानिवृत्तौ तु तदपि निवर्तत इत्यनित्यमेव॥

सर्वभाष्यान्तरविषयवाक्याऽनादरानौचित्यम्।

साक्षिरूपमपि ज्ञानमविद्योपहितं साक्षित्वेनोपहितरूपेणानित्यमेव, न तु नित्यम्; अनुपहितस्वरूपेणैव तस्य नित्यत्वात्। अत एव स्रष्टृत्व-संहर्तृत्वादीनां तत्तज्जीवधर्माधर्मनिमित्तलीलामात्रत्वात् कादाचित्कत्वम्; अन्यथा सदा स्रष्टृत्व-संहर्तृत्वाद्यापत्त्या कार्यमात्रक्षणिकत्वमापद्येत॥

मायारूपेण विद्यमानानां तदा तदाऽभिव्यक्तिमात्रमिति वादस्तु

समान एवोभयत्र। सा च माया शक्तिरूपाऽऽवरण-विक्षेपशक्तिमती, ईश्वर-स्वरूपातिरिक्ता वेति त्वन्यदेतत्। सर्वथा तु "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः" इति कठवल्लीवाक्यमपि यदि विषयः, साक्षात्, परम्परया वा संहर्तृत्वरूपस्यैवात्तृत्वस्य ब्रह्मलिङ्गस्यात्र साधनात्, तर्हि वितथं भाष्यान्तराहृतविषयवाक्यं विहाय विषयान्तरान्वेषणम्॥

कठवल्ल्या निर्विशेषसंविन्मात्र एव तात्पर्यम्।

तस्यापि यदि विषयत्वमधिकरणसिद्धान्तन्यायेन, तर्हि तत्र संहर्तृत्वे न्यायेन विवक्षित ईश्वरः किं सविशेषः सविशेषरूपेण तात्पर्यविषयः? उत निर्विशेषसंविन्मात्राधिष्ठिततया परतन्त्रेण रूपेण? आद्ये "क इत्था वेद यत्र सः" इति वाक्यशेषविरोधः, "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्ती"ति तृतीयप्रश्नस्य जीवात्मतत्त्वविषयकस्येश्वरविषयकत्वाभावात् न स्वतन्त्रेश्वरस्वरूपोपदेशः प्रकृतोपयुक्तश्च॥

न चात्रेश्वरप्रश्नोऽधिकः कल्पयितुं शक्यते; वरत्रयातिरेकेण प्रश्नकल्पनायां प्रमाणाभावात्, निर्विशेषचैतन्याधिष्ठिततयैव "क इत्था वेद यत्र सः" इति वाक्यवशादीश्वरस्वरूपविवक्षायां तु तत्त्वमसिमहावाक्यस्थानीयस्यास्य जीव-ब्रह्मैक्यबोधन एव तात्पर्यमूरीकर्तव्यम्॥

"यस्य ब्रह्म चे"ति वाक्येऽत्तृमात्र-
निर्णयः, न तु तेन पर्यवसानम्।

अस्मिन् हि "क इत्था वेद यत्र सः" इत्यस्मिन्नंशे प्रतीयमानार्थ एव मुख्यार्थः, नान्य इत्यत्तृस्वरूपमात्रे विशय-पूर्वोत्तरपक्षाणामुपस्थापनमिति वक्तव्यम्, इति स इत्यस्यांशस्यान-न्वयः संहर्तुः स्वतन्त्रस्यात्र ज्ञेयतापक्षे विशदः। अतः "अत्ता चराचरग्रहणादि"ति सूत्रमद्वैतकल्प एव साधु कल्पते॥

तेन च प्रथमाध्यायप्रथमपादे जगत्कारणत्वेन लक्षितब्रह्मस्वरूपमपि निर्विशेषात्मनैव शास्त्रबोध्यमित्यानन्दमयाधिकरणान्तार्थ एव—"अत्ता चराचरग्रहणादि"त्यनेनापि निर्धार्यते। न ह्यन्यथा "क इत्था वेद यत्र सः" इत्यस्यान्वयः सम्भवति। तदेवं प्रथमाधिकरणमुपास्यसविशेषब्रह्मपरम्, द्वितीयाधिकरणं तु निर्विशेषप्रधानसविशेषस्वरूपनिर्णायकमिति फलति, उभयत्रास्पष्टब्रह्मलिङ्गत्वमव्याहतम्; मनोमयत्वात्तृत्वाद्यापातप्रतीत्या ब्रह्मेतरलिङ्गप्राबल्येन पूर्वपक्षप्रवृत्तेः॥

"गुहां प्रविष्टावि"त्यत्रोपहितानुपहितसंवित्स्वरूपपरत्वम् ।

अयमेव न्यायः–"गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि"त्यधिकरणेऽपि । तत्राप्यत्त्राधिकरणे संविन्मात्रं विगलिताहङ्काराद्युपाधिकमीश्वराभिन्नं यथा प्रतिपाद्यते, एवमेवोपहितजीवोऽप्यनुपहितजीवात्मस्वरूपाधिष्ठितरूपेणैव पारमार्थिकः, न तूपहितरूपेण; सविशेषजीवस्वरूपस्यापि निर्विशेषानुपहित-जीवाभिन्नस्वरूपस्यैव पारमार्थिकत्वादिति निरूपणमेव लक्ष्यम् ॥

तेन–जीवेश्वरयोरुभयोरप्युपहितरूपेणोभयोः, अन्यतरस्य वोपहित-त्वेऽपि भेद एव । द्वयोरप्यनुपहितरूपेणैवाभेद इत्यधिकरणद्वयनिर्णयस्य विवेकः फलति । तेन चाभ्यामधिकरणाभ्यां सामान्य-विशेषाभ्यां क्रियारूपं लिङ्गं विवक्ष्यत इति विषयविवेकोऽपि नावसरति । अधिकरणद्वयस्यापि निर्विशेषजीवेश्वरपारमार्थिकरूपनिरूपणार्थत्वेन सविशेषपर्यन्तमेव प्रमाणस्य प्रवृत्तिः, न तु निर्विशेषपर्यन्तं सविशेषस्यापि प्रस्तावः, न च सविशेषवाक्यानाम्, प्रमाणान्तराणां च निर्विशेषतटस्थलक्षणविधयैवो-पयोग इति पर्यवसन्नम् ॥

अस्पष्टब्रह्मलिङ्गत्वं सविशेषमात्रपर्यवसन्नं निर्विशेषस्वरूपनिर्णये द्वार-मात्रमित्यभिप्रेत्यैवात्तुः, संहर्तुर्वाऽधिष्ठितस्यैव स्वरूपमत्र निर्णीतम्, अधि-ष्ठानस्वरूपं दुर्विज्ञेयमिति निरूपणेन ॥

एतत्पादार्थविषयनिष्कर्षः ।

अस्मिन् पादेऽपि सप्तस्वधिकरणेषु द्वितीय-तृतीय-तुरीय-पञ्चम-षष्ठा-धिकरणानि पञ्च निर्विशेषपराणि, प्रथमम्, अन्तिमं च सविशेषब्रह्मलिङ्ग-परमिति विवेकः । अत्र सर्वत्रास्पष्टब्रह्मलिङ्गत्वं समानम्, सविशेषप्राधान्यं तूपक्रमोपसंहारयोः सविशेषविषयत्वमात्रेण, न तु सविशेषवाक्यविचार-स्य सङ्ख्याधिक्येन । तत्र प्रथम-द्वितीयाधिकरणे विहाय सर्वत्र-विषय-वाक्यमविशिष्टम् । परं तु निर्णयस्य सर्वत्र सविशेषप्राधान्यं परमते, अद्वैतसिद्धान्ते तु प्रथमान्तिमे, अन्तर्याम्यधिकरणम्, अन्तराधिकरणं च सविशेषपरमिति विवेकः । द्वितीय-तृतीय-षष्ठाधिकरणानि निर्विशेषपराणि ॥

॥ इत्यत्त्राधिकरणम् ॥

---

## ❀ अथ गुहाधिकरणम् ❀

### ।। गुहां प्रविष्टावात्मानो हि तद्दर्शनात् ।।

विषयवाक्योपन्यासः ।

अत्र "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायाऽऽतपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इत्येव विषयवाक्यमुभयत्रापि ।

आत्मभेद उपाध्युपधानानुपाधानमात्रेण, न स्वरूपेण ।

तत्र सुकृतफलभोक्तृत्वमप्येकस्यैव, न द्वयोरित्यत्रापि न विसंवादः । स भोक्ताऽहमर्थो जीव एव, विगलिताहङ्कारसंविन्मात्रम्—अधिकरणविषयवाक्ये यत्र शब्दनिर्दिष्टमीश्वरस्याप्यधिष्ठानम्, यस्य न भोक्तृत्वम्, भोक्ता तु जीवः संहर्तेति ।।

तत्रोपाधिद्वाराऽध्यस्तोऽप्यध्यस्तात्मना भिन्नः, संविन्मात्रेण त्वभिन्नः। अत एव गुहां प्रविष्टाविति द्वित्वम्। तत्रैकस्य मुख्यात्मत्वम्, अपरस्य त्वौपाधिकं मिथ्यात्मत्वम्। कर्मफलभोक्तृत्वं तत्कर्तुरुपहितमिथ्यात्मन एव, न त्वनुपहितस्य संविन्मात्रस्य, तस्य कर्तृत्व-भोक्तृत्वयोरुभयोरपि बाधितत्वात् ।।

तस्य पुण्य-पापोभयफलभोक्तृत्वेऽप्यृतमिति पुण्यफलमात्रभोक्तृत्वोक्तिस्तु हिरण्यगर्भान्तस्य दिव्यशरीरस्यापि बद्धत्वाविशेषसूचनार्थम्। अथवा—"इतरस्याप्येवमसंश्लेष" इति न्यायात् पापफलस्याप्युपलक्षणमिति न विरोधः ।।

आत्मानाविति द्वित्वं कल्पितसशरीरत्व-
परमार्थिकाशरीरत्वाभिप्रायेण ।

सर्वथा तु जीवात्म-परमात्मानावत्राध्यारोपापवादविषयौ प्रतिपाद्यौ। तेन "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति प्रश्नोऽपि समाहितो भवति। अयं हि बद्ध-मुक्तात्मनोः, सशीरत्वाशरीरत्वयोर्वा

विविच्य ज्ञानार्थमेव। तथाच सशरीरत्वं न मुक्तात्मनः, किन्त्वशरीरत्वमेव, सशरीरत्वं मिथ्या, अशरीरत्वं पारमार्थिकमिति तत्त्वमुपदिष्टं भवति ॥

परामिमतात्मद्वित्वम्, तदनुपपत्तिश्च।

द्वैतभाष्यं तु एक एव आत्मा हरिरात्मान्तरात्मभेदेन भिन्नः, अतोऽत्र द्विवचनम्। पुण्यफलभोक्तृत्वं तु परमात्मरूपेणैव, इति परमात्मैव फलभोक्ताऽत्र विवक्षित इति। तत्रानश्नन्नन्योऽभिचाकशी"ति श्रुतिविरोधो विशदः। जीवाद्यं नाश्नातीति विवरणं त्वकर्तृत्वात् परमात्मनः, अन्यकृतस्यान्येन भोगायोगात्, अन्यथा कृतहानाकृताभ्यागमप्रसङ्गात्, पुण्यफलवत् पापफलस्यापि भोक्तृत्वापत्तेश्च न युक्तम्। "तयोरन्यः पिप्पलं स्वाद्वत्ति" इत्यविद्वदभिप्रायम्, अविदुषां भोगकाले स्वादुत्वानुसंधानाद्वोपपद्यते। तदुक्तम्—

"न पापफलमिच्छन्ति पापं कुर्वन्ति मानवाः।"

इति ॥

परमत उक्ताधिकरणवैयर्थ्यम्।

पूर्वस्मिन्नधिकरणे हि परमात्मन एवात्तृत्वम्, तत्तु संहर्तृत्वरूपमेव विवक्षितम्—"तज्जलानि" ति पूर्वाधिकरणविषयप्रस्तुतमाश्रित्य, न तु कर्मफलात्तृत्वमपि; अन्यथा तेनैवात्रापि परमात्मपरत्वस्य निर्णयात् निष्फलमिदमधिकरणम्। एतेन—क्रियासामान्यलिङ्गं पूर्वाधिकरणे, अत्र तु क्रियाविशेषो लिङ्गमित्यपि—प्रत्युक्तम्; अन्यथा तेन संहर्तृत्वस्यापि साधनासम्भवाद् नात्तुर्जीवव्यतिरिक्तत्वं निर्णीतं स्यात्। अत्तृत्वसामान्यं हि जीवस्यापि प्रसिद्धम्, "अग्निरन्नादः" इति चाग्नेरपि। चराचरात्तृत्वमपि पर्यायेण जीवस्यापि सम्भवति। सृष्टस्यादनं संहार एव; तयोः सवत्र सहैव पाठात्, इति परमात्मनोऽत्तृत्वपरतयाऽस्य वाक्यस्य योजनं न सङ्गतम् ॥

न च कठवल्ल्यां मुक्तात्मस्वरूपातिरिक्तपरमात्मप्रश्नः, तदुपन्यासो वा प्राधान्येनात्र, उत्तरत्र वा। न च परमात्मनो रूपभेदप्रश्नोऽपि, येन रूपभेदेन भिन्नं परमात्मरूपमादायात्र निर्वाहः ॥

अद्वैतवाद उक्ताधिकरणसार्थक्यम्।

सर्वथा तु द्वैतमत इदमधिकरणं व्यर्थम्। अद्वैतमते त्वविद्याकल्पितं

भेदमनूद्य वस्तुगत्यौपाधिकस्य जीवस्य मिथ्यात्वोपपादनद्वारा संविन्मात्र-विवक्षां ज्ञापयितुमत्रोक्तमधिकरणम् । तथाच परमात्मनः कर्मफलभोक्तृत्व मुपपादयितुमिदमधिकरणम् । न च सर्वसंहर्तृत्वारिक्तं परमात्मनः सर्वात्तृत्वं प्रामाणिकम् । न वा जीवस्य सर्वात्तृत्वं संहर्तृत्वरूपमपि , येन सर्वात्तृत्वस्य तत्रातिव्याप्तिः स्यात् । तत्र शुभफलभोक्तृत्वं विद्वद्दृष्ट्या प्रायिकत्वेन । विदुषामपि प्रारब्धपापफलभोक्तृत्वम् , "भोगेन त्वितरे क्षपयित्वा" इति सूत्रसिद्धत्वात् तथाच जीव-परमात्मानावित्येव सिद्धान्तः न त्वात्मान्तरात्मभेदभिन्ने विष्णुरूपे ॥

वस्तुतस्त्वात्मान्तरात्मानावुपहितानुपहितरूपावेव, न तु रूपान्तरम् । जीवन्मुक्तो हि सर्वमपि भोग्यम् , अन्तःकरणादिकं करणम् , शरीरमालम्बनम् , प्रमातारं च भोक्तारमात्मनमेव पश्यन् छायादिवदात्मनो वस्तुगत्याऽभोक्तृत्वमेवानुसन्दधातीति ब्रह्मसिद्ध्यादौ व्यक्तम् । अतोऽद्वैतसिद्धान्तानुगुणमुक्ताधिकरणयोजनम् ॥

### अद्वैतदृष्ट्या परमात्मपदार्थनिष्कर्षः ।

वस्तुतस्तु—गुहां प्रविष्टावात्मानौ जीव-परमात्मानाविति सिद्धान्ते जीवपदं शरीरेन्द्रियमनोयुक्तबद्धभोक्त्रात्मपरम् परमात्मपदं तु विगलितशरीरादिसर्वोपाधिशुद्धप्रत्यगात्मपरम् । "व्यक्तं चैतत्—त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे"त्यत्र ॥

अत एव-"ऋतं पिबन्तौ सुकृतस्य लोके" इत्यत्र वाक्यशेषे "आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव चे"त्यादिना "आत्मेन्द्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः" इत्यन्तेन शरीरेन्द्रियादिसंयुक्तं भोक्तारं प्रस्तुत्य "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" इत्यादिना शरीरेन्द्रियादिविविक्त एव पुरुषः परकाष्ठारूपः प्रत्यगात्मा प्रतिपाद्यते । स च तथैव"अस्तीत्येवोपलब्धव्यः" इति जीवस्याशरीरतैव पारमार्थिकस्वरूपम्, न तु सशरीरत्वं मुक्तिर्नामेति विधया विविच्यते ॥

### शरीरात्मनो रथ-रथ्यादिरूपेणरूपकस्य लक्ष्यम् ।

अयमेव न्यायः—"द्वा सुपर्णा सयुजा सखाया" इत्यत्रापि । विशेषस्तु कठवल्ल्यां शरीरस्य रथरूपेण रूपकम् , मुण्डके तु वृक्षरूपेण, आत्मनस्तु रथिरूपेण, पक्षिरूपेण च । भोक्तृत्वं स शरीरस्य, अभोक्तृत्वं तु तद्विग-

मेन। अधिकमन्यत्र। तैत्तिरीयेऽन्नमयाद्यानन्दमयान्तानां पक्षिरूपेण रूपकमप्येवमाशयमेव। इदमप्यधिकरणमत्ताधिकरणमिव जीवब्रह्मैक्योपपादकं क्षेत्रक्षेत्रज्ञविवेकदृष्ट्या ॥

तत्र क्षेत्रज्ञो द्विविधः—व्यष्टिरूपोऽन्तःकरणादिपरिच्छिन्नः, समष्टिरूपश्च मायावच्छिन्नः। तत्र पूर्वस्मिन्नधिकरणे मायारूपक्षेत्रविवेकेनात्मस्वरूपं समष्टिजीवाधिष्ठानं विवेचितम्, अत्र त्वन्तःकरणोपाधिविविक्तसंविन्मात्रविवेचनम्, उभाभ्यां मिलित्वा तु "क्षेत्रज्ञं चापि मां विद्धि" इति जीवेश्वरैक्यं व्यवस्थाप्यत इति वस्तुस्थितिः ॥

अधिकरणद्वयविषयविवेकः ।

अत एवाव्यहितवाक्यद्वयमेकप्रकरणगतमादायाधिकरणद्वयम्; मुखभेदेन जीवेश्वरैक्यस्योभयविषयत्वात्। अत्र जीवेश्वरैक्यमुपाध्यनुपधानदशामाश्रित्यैव, न तूपहितावस्थाम्, इति न "सत्यं भिदा सत्यं भिद"इति पैङ्गिश्रुतिविरोधः; तयोर्भेदस्यैव यावज्जीवेश्वरविशिष्टस्वरूपसत्त्वमद्वैतवादेऽपि स्वीकारात्, भेददशायामभेदानङ्गीकारात्, सत्यपदस्य व्यावहारिकसत्यपरत्वात्, इति "यथेश्वरो जीवश्च सत्यभेदौ परस्परम्। तेन सत्येन मां देवास्त्रायन्तु सह केशवाः" इति वचनमपि-व्याख्यातम्; अन्यथा एकप्रकरणगतयोरव्यवहितयोर्वाक्ययोर्निर्णयार्थमधिकरणद्वयम्, अव्यवहितवाक्यद्वयपरीक्षणं वा निष्प्रयोजनम् ॥

## ॥ इति गुहाधिकरणम् ॥

---

# ❀ अथान्तराधिकरणम् ❀

## ॥ 'अन्तर उपपत्तेः' ॥

द्वैतिनामद्वैतिनां च विषयविवेकः।

अत्र "य एष आदित्ये पुरुषः योऽहमस्मि" इतिवाक्यं विषयः। एवमेव "य एषोऽक्षिणि पुरुषो दृश्यते" इति च। उभयत्राप्यग्निरेवोच्यते। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते' इत्यग्निज्ञानादेव सर्वपाप्मासंश्लेषात् मोक्षोपपत्तिरिति द्वैतभाष्यं पूर्वपक्षविषयम्। सिद्धान्तस्तु परमात्मैवाक्षिस्थः पुरुषः ॥

अत्र सिद्धान्त उभयोरप्यविशेषः। पूर्वपक्षे तु छायापुरुष इत्यद्वैतमतम्॥

अन्तरधिकरणेनागतार्थत्वादि।

"एष दृश्यत" इत्येतत् प्रत्यक्षेऽर्थे प्रयुज्यते।
परोक्षं ब्रह्म न तथा प्रतिबिम्बे तु युज्यते॥

इति पूर्वपक्षसारः। सिद्धान्तसारस्तु—

"अनिष्पन्नाभिधाने द्वे सर्वनामपदे सती॥
प्राप्य संनिहितस्यार्थं भवेतामभिधातृणी॥"

इति। तथा चामृतत्वाभयत्वादिरूपात्मधर्मेणैवोपक्रमिष्यमाणस्य यदेतच्छब्दाभ्यां ग्रहणात्, तस्य परोक्षस्यापि परमात्मलिङ्गभूयस्त्वसत्त्वेन परमात्मपरत्वमिति व्यवस्था। तत्राग्निपूर्वपक्षः प्राकरणिकवाक्यशेषवशाद्यद्यपि भवति; तथाप्यक्षिण्यग्नेरप्रत्यक्षत्वाद् न स सम्भवति। सर्वथा तु नात्र द्वैताद्वैतवादयोः सिद्धान्तभेदः; परमात्मोपासनस्यैवात्र विवक्षणात्, श्रुतोपनिषत्कगत्यभिधानाच्च॥

इदमधिकरणं मतद्वयेऽपि सविशेषपरमेव। अत्रान्तर इति, पूर्वस्मिन् पादे "अन्तरिति चोपादानात्, "य एषोऽन्तरादित्ये" "य एषोऽन्तरक्षिणि" इति चान्तश्शब्दघटितं वाक्यं स्पष्टब्रह्मलिङ्गं तत्र विषयः, अत्र तु "य एषोऽक्षिणि पुरुषः" इति विनान्तश्शब्दं एष इति विशेषणवशादन्तर इत्यर्थो विवक्ष्यते, इत्यस्पष्टब्रह्मलिङ्गं विषय इत्यभिप्राय इति मन्तव्यम्॥

अस्पष्टब्रह्मलिङ्गत्वं चास्य "एष दृश्यते" इत्युपक्रमस्थप्रत्यक्षत्वस्य ब्रह्मेतरलिङ्गस्य श्रवणात्। अत्रान्तर इति प्रयोगेणोपास्यस्वरूपे न विशेषः कोऽपि। सुखरूपत्वं तु सुखविशिष्टाभिधानादेव चेत्यनेनैव सिद्धम्। न च तत्रान्तरविशेषणस्य किमपि प्रयोजनम्; अन्यथा "अन्तरुपपत्तेः" इत्यत्रेवातिलाघवं सूत्रस्य स्यात्, इति कृतमनेनोपास्यस्वरूपानुपयुक्तार्थविवक्षाभिप्रायेणान्तरशब्दार्थविवरणक्लेशेन। अत्राग्नेरन्तः पुरुषस्य वोपास्यत्वं निरीश्वरवादित्व एवेति पूर्वपक्षिणो युज्यते; सेश्वरवादिनामपि "वाचं धेनुमुपासीते"तिवदुपासनाविवक्षायां बाधकाभावात्॥

आस्तिक-नास्तिकयोः पक्ष-प्रतिपक्षौ।

न चात्रेन्द्र-विरोचनयोः पूर्वोत्तरपक्षौ, किन्तु प्रजापतिवाक्यपूर्वापरसन्दर्भसमालोचनया। तत्रेश्वराङ्गीकारानङ्गीकारावप्रयोजकौ। अग्निर्वपू·

ताऽप्युपकोसलविद्यायामुद्दालकोपकोसलयोरीश्वरवादिनोरास्तिकयोरेव ॥

न चैकस्येन्द्रविरोचनयोरिवान्यतरस्यान्तन्तो गत्वा नास्तिकत्वेन। उपास्यस्वरूपनिर्णयो हि तत्तदुपास्यस्वरूपमात्रसत्त्वमाहार्यम्, अनाहार्यं वाऽपेक्षते। अत्र चक्षुरन्तस्थत्वं सर्वगतत्वेन, तन्नियामकत्वेन वा वक्तव्यम्। तत्राद्यमाद्याधिकरणगतम्, द्वितीयमनन्तराधिकरणेन गमिष्यति, इत्येतदधिकरणसाध्यं न किमपि, इत्यात्मत्वामृतत्वाद्यनुपपत्तिमात्रेण सिद्धान्त इति वक्तव्यम् ॥

द्वैतमत एतदधिकरणवैतथ्यम्।

सर्वत्रावस्थानं हि ब्रह्मणः कारणस्य जन्माधिकरणेनैव सिद्धम्, इति नास्याधिकरणस्य फलम्। नियामकतयाऽन्तरवस्थानोक्तिरन्तर्यामित्वं हि द्वैतमते "शास्त्रदृष्ट्या तूपदेशो वामदेववा"दिति न्यायेनैव साधितं प्रथम एव पादे, इति व्यर्थं पुनरत्र। किं बहुना? उत्तराधिकरणेनापि साधयिष्यते, इति वितथानि बहून्यधिकरणान्यन्तर्यामित्वं साधयितुम् ॥

तत्र यदि साक्षादन्तर्यामित्वसाधनमनन्तर एवाधिकरणे, तर्हि किं प्रयोजनं प्रथमपादान्तेऽपि तत्साधनम्? अन्तर्यामित्वं हि नियामकत्वं तदधीनसत्ताकत्वेन, तदधीनस्थितिकत्वेन,तदधीनभानेन, किं बहुना? तदधीनषड्भावविकारैरपि, इति न तदधीनस्थित्यभिप्रायेण, तदधीनसत्ताशयेनान्तर्यामित्वस्य समन्वयार्थं बहून्यधिकरणानि; अन्यथा तदधीनापक्षयविनाश-परिणाम-वृद्ध्यादीनामुपपादयितुमपि पृथगधिकरणान्यापद्येरन् ॥

निर्विशेषस्वरूपमेवान्तर्यामि।

अन्तर्यामित्वं ह्यधिष्ठानस्वरूपं निर्विशेषस्य ब्रह्मण एव, इति नान्तरोपासनमप्यन्तर्याम्युपासनं तन्निदिध्यासनं वा। अन्तर्यामिब्राह्मणं हि चक्षुराद्यन्तरवस्थानम्, किं बहुना? सर्वान्तरवस्थानं परमात्माधीनमुपदिशति। प्राणनियामकत्वेन, चक्षुर्नियामकत्वेन वाऽन्तर्यामित्वं न प्रयोजनविशेषेण सफलम् ॥

इन्द्रप्रतर्दनाधिकरणे वामदेवस्य मनु-सूर्यात्मतया स्वस्वरूपावस्थानम्, इन्द्रस्य वा स्वनियामकस्योपासनोपदेशस्तेषामात्मनाऽन्तर्यामिणा सामानाधिकरण्योपदेशो वा नाधिष्ठानातिरिक्तत्वेऽन्तर्यामिण उपपद्यते। विषयवाक्यान्तरं स्वतन्त्रमादायान्तर्यामिस्वरूपनिर्णयोऽधिकरणान्तरेणैव निर्वाह्य इति तु निष्कर्षः ॥

॥ इत्यन्तराधिकरणम् ॥

## ❀ अथान्तर्याम्यधिकरणम् ❀

### ॥ अन्तर्याम्यधिकरणम् ॥

द्वैतवाद उक्ताधिकरणवैयर्थ्यम् ।

"यं पृथिवी न वेद यः पृथिव्या अन्तरा यः पृथिवीमन्तरो यमयती"-त्यादिवाक्यमेवोभयत्र विषयोऽस्य सूत्रस्य । तत्रान्तरत्वात् पृथग् यः पृथिवीमन्तरा यमयती"ति निर्देशादन्तरवस्थितिमात्रेण न नियामकत्वम्, किन्तु ततोऽतिरिक्तमेव तत्, अन्तर्यामित्वं वेति सूच्यते । तेन च "अन्तर उपपत्तेरि"त्यप्यन्तर्यामित्वस्य रूपान्तरं विषय इति परास्तम् ॥

इदमत्रानुव्याख्यानम्—

रमणं नातियत्नस्य विक्षेपादेव युज्यते ॥
इति चेत् सर्वनियमो यस्य कस्माद् न शक्यते ॥
स्वात्मना नियतं वस्तु प्रतीपं ह्यात्मनो भवेत् ।
स्वाधीनसत्ता-शक्त्यादि कथमात्मप्रदीपकम् ॥

इति ॥

एतदधिकरणसाध्यान्तर्यामित्वदुर्वचत्वम् ।

तत्र स्वाधीनस्थित्या नियामकत्वं यद्यतिक्लेशसाध्यं परमेश्वरस्यापि, तर्हि स्वाधीनसत्ताकत्वेन प्रपञ्चस्य तदन्तर्यामित्वमप्यतिक्लेशसाध्यम्, इति सर्वविधमप्यन्तर्यामित्वं बाधितं स्यात्, इत्यनवस्थापातात् परमेश्वरशक्त्या अचिन्त्यत्वेनैवोक्तशङ्का परिहरणीया । सा च पूर्वाधिकरणेनापि सुपरिहरा, इति व्यर्थमिदमधिकरणम् । अत्रैवान्ता रमणत्वमन्तर्यमयितृत्वेन पृथिव्यादिसत्ताप्रयोजकत्ववत् तत्स्थितिप्रयोजकत्वस्यापि अन्तरः इति, अन्तर्यामीति च श्रवणात् साधनसम्भवाद् व्यर्थमिदम्, पूर्वाधिकरणं वा ॥

न चात्राप्यधिकरणपूर्वोत्तरपक्षादौ प्रायेण विशेषः; तथाप्यधिष्ठानविशेषत्वप्रयुक्तमेव नियम्यसत्ताप्रयोजकत्वमिति सिद्धान्तो । द्वैतमते तु केवलनिमित्तकारणत्वाद् ब्रह्मणो नाधिष्ठानत्वम् । उभयत्र सविशेषं ब्रह्मैवान्तर्यामि, परं तु तत्तच्छरीरकत्वादिना, तत्तदुपाधिकत्वेन वेति विशेषोऽद्वैतमते॥

॥ इत्यन्तर्याम्यधिकरणम् ॥

## ❀ अथादृश्यत्वाधिकरणम् ❀

### ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥

अभावलिङ्गेन ब्रह्मनिर्णयोऽत्रेति द्वैतवादः ।

अत्रादृश्यत्वं दृश्यभेदो गुणो ब्रह्मणो लिङ्गं प्रतीयते, इत्यभावरूपलिङ्गबोधकशब्दविचारत्वात् पादसमन्वयः । अन्यत्र सर्वत्र भावरूपा धर्माः पूर्वमुक्ताः, अत्राभावरूपः, इति तैर्नास्य गतार्थतेति द्वैतिनः । तत्रानन्दस्रष्टृत्वादीनामिवाभावस्य ब्रह्मस्वरूपत्वाभावात् कथं तल्लिङ्गत्वमिति शङ्का तु नावसरति ; अन्योन्याभावस्य धर्मिस्वरूपत्वात् ॥

अभावस्य धर्मिस्वरूपत्वेन गुणत्वम् ।

न च धर्म्यन्योन्याभावयोर्विरोधः । न हि भेदोऽन्योन्याभावो वा नञ्पदेनैव व्यवह्रियते, किन्तु भेदपदेनापि । न हि पटस्याघटत्वम् घटादन्यत्वं च भिन्नं केवलं भेदशब्दमात्रेण । पृथक्त्वमपि भेद एव, न गुण इति मतेऽपि तद्भेदविवक्षया । 'तस्मात् पृथक्त्वमि'त्यपि प्रयोगो दृश्यते ॥

भेदस्य भावस्य गुणत्वोपपत्तिः ॥

आरोग्यं गुणः, अक्रौर्यं गुण इत्यादौ रोगाभावादौ गुणत्वव्यवहारोऽपि तत्र गुणत्वस्य विधानेनोपपद्यते । "अदृश्यत्वादिगुणकः" इति प्रकृतेऽप्यदृश्यत्वादिगुणोक्तिरभावस्य गुणत्वेन विधानेन विधि-प्रतिषेधरूपत्वेनाविरोधं सूत्रकार एव द्रढयति ॥

अभावस्य मिथ्यात्वरूपस्य न ब्रह्मस्वभावत्वम् ।

अत्यन्ताभावस्तु धर्मो निषेधरूपो न स्वरूपम् , किन्तु धर्मः । अतो दृश्यभिन्नत्वरूपमदृश्यत्वं ब्रह्मणः स्वरूपमिति तल्लिङ्गमिति द्वैतिनः ॥

अद्वैतिनस्तु—यदि "अगोत्रमि"त्यादौ गोत्राभावो धर्मो ब्रह्मणि विवक्ष्यते, तर्हि गोत्रप्रसक्तिस्तत्र गोत्रारोपेणैवेति वक्तव्यम् , इति गोत्रमिथ्यात्वाभिप्रायमद्वितीयपदमिव, इति तन्मिथ्यात्वमादाय तत्र मिथ्यात्वस्यापि

मिथ्यात्वेन गोत्राभावोऽपि न ब्रह्मणो धर्मः, न वा मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वम् ॥

अदृश्यत्वपदं मिथ्यात्वमिथ्यात्वाविरोधसूचकम् ।

अयमेव न्यायोऽदृश्यत्वपदेऽपि । तत्रापि बहुव्रीहिसमासाश्रयेण दृश्यसामान्याभावरूपधर्म एव बोध्यते । तत्र "अगोत्रमचक्षुश्श्रोत्रमि"त्यादौ सर्वमिथ्यात्वे बोधितेऽपि मिथ्यात्वमिथ्यात्वमपि दृश्यत्वेनैव, न तु मिथ्यात्वेनेति बोधयितुमदृश्यत्वपदम् ॥

अत एव प्रतियोग्यभावयोरत्राविरोधोऽपि; निषेध्यतावच्छेदकैक्यात् , इति रजताभावमिथ्यात्वे रजतसत्यत्ववद् न मिथ्यात्वमिथ्यात्वेन प्रपञ्चसत्यत्वमिति न्यायः सूत्र्यते । तत्र दृश्यत्वम् = दृक्तादात्म्यापन्नत्वम् ; अग्राह्यत्वम् = अप्रमेयत्वम् = फलाव्याप्यत्वं वेति तयोर्भेदः ॥

अभावस्य ब्रह्मस्वभावत्वमपि न विरुद्धम् ।

साङ्ख्यानां प्रत्यवस्थानं तु नञ्तत्पुरुषमभिप्रेत्य । अतो नात्र ब्रह्मस्वरूपाभावलिङ्गता । प्रपञ्चाभावस्यापि मिथ्यात्वात् तस्य धर्मत्वमपि कल्पितमेव तेन तेन रूपेण । न च तावता भेदधर्मिस्वरूपतावादस्योत्थितिः । तदिदं मिथ्यात्वस्यापि मिथ्यात्वमभिप्रेत्य । तत्सत्यत्वेऽपि दृश्यात्यन्तावत्वोपलक्षितस्वरूपस्य ब्रह्मस्वरूपत्वाद् अभावाधिकरणस्वरूपवाद इव दृश्यात्यन्ताभावस्यापि ब्रह्मस्वरूपत्वं नाद्वैतिनामपि विरुद्धम् । तदनन्यत्वमदृश्यत्वमिति तु निष्कर्षः । तत्र गुणपदं मिथ्यात्वमिथ्यात्वकल्पेन ॥

भेदस्य धर्मिस्वरूपत्वायोगः ।

वस्तुतस्तु—भेदस्य धर्मिस्वरूपत्वं दुर्वचम् ; तस्य प्रतियोग्यनुयोगिसापेक्षत्वनियमेन तन्निरपेक्षधर्मिस्वरूपताया अयोगात् , अन्यथा धर्मिस्वरूपज्ञानादेव तदितरभेदज्ञाने शुक्तिज्ञानदशायां रजतभेदस्यापि गृहीतत्वाद् रजतभेदग्रहे सति रजतभेदाग्रहरूपभ्रमकारणाभावात् शुक्त्यादौ रजतभ्रमनिर्वाहायोगः ॥

हेतौ लिङ्गपदमुपदेशपदं च विहाय
धर्मोक्तिपदमद्वैत एव स्वरसम् ।

नञ्तत्पुरुषेण दृश्यभेद एवात्र यदि विवक्ष्यते, तर्हि द्वैतमते ब्रह्मणो-

ऽपि द्वैतवादे दृश्यत्वेन दृश्यभिन्नत्वमसम्भवदुक्तिकम् । "अदृश्यत्वादिगुणको धर्मोक्तेः" इति धर्मोक्तिपदेन सर्वज्ञत्वादिधर्मो विवक्षित उभयत्र । तत्र धर्मस्योक्तिमात्रं श्रौतत्वेऽप्युच्यमानं तत्र तात्पर्याभावं सूचयति । "आकाशस्तल्लिङ्गादि"तिवद् लिङ्गपदाप्रयोगेणाभावस्य लिङ्गत्वं सूत्रकारो वारयति । अत एव--अपहतपाप्मत्वादीनामभावरूपाणां सविशेषब्रह्मासाधारणानां ग्रहणं कर्तव्यमिति "अन्तस्तद्धर्मोपदेशादि"त्यत्र धर्मपदम्, न लिङ्गपदम् । तस्य लिङ्गत्वं तु तत्पदेनासाधारण्यसूचनेन, न तु धर्मत्वमात्रेण । अत्रोपदेशपदप्रयोगेणोपासनास्थले सविशेषस्य ब्रह्मणो विशेषस्य, तद्धर्माणां च मिथ्यात्वेऽपि यः कोऽपि धर्मो नोपास्यतामर्हति, किन्तु यथोपदिष्टमेव धर्माणामुपासनं कर्तव्यमिति सूच्यते ॥

अभावस्य स्वतो निर्विशेषलिङ्गत्वमेव ।

सर्वथा त्वभावस्य न ब्रह्मलिङ्गत्वम्, न वा धर्म-गुणपदयोर्लिङ्गपदेनैकार्थ्यम्, अन्यथा "अन्तस्तद्धर्मोपदेशात्" इत्यनन्तरसूत्रे "तद्धर्मोपदेशादि"त्यस्यानुवृत्त्या निर्वाहे "आकाशश्च" इत्येव सूत्ररचनापत्तिः । "अत एव प्राणः" इतिवत्, "अत एवाकाश" इति वा सूत्ररचनापत्तिः । अत एवादृश्यत्वादिलिङ्गको धर्मोक्तेरित्यसूत्रयित्वा "अदृश्यत्वादिगुणकः" इति गुणपदम्, धर्मपदं च । न पक्षे हेतौ वा लिङ्गपदम् ॥

"न स्थानतोऽपि परस्योभयलिङ्गमि"त्यत्र लिङ्गपदं सविशेषासाधरणभावधर्माणां लिङ्गत्वमपेक्ष्य । अभावस्य लिङ्गत्वं निर्विशेषस्य । सविशेषस्य तु भावधर्म एव लिङ्गम्, नाभावरूपः, अपहतपाप्मत्वादिकं तु निर्विशेषस्य लिङ्गम् । अतः सविशेषलिङ्गत्वं भावधर्मस्य, अभावस्य धर्मस्य लिङ्गत्वं तु निर्विशेषतादात्म्यपेक्ष्यैव ॥

लिङ्गपदघटितसूत्रसंग्रहः ।

तत्र लिङ्गपदं हि ब्रह्ममीमांसायाम्--(१) "आकाशस्तल्लिङ्गात्"(२)"जीवमुख्यप्राणलिङ्गात्," (३) "गति-शब्दाभ्यां तथाहि दृष्टं लिङ्गं च," (४) "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः",(५)"क्षत्रियत्वावगतेश्च चैत्ररथेन लिङ्गात्", ६-"तदभिध्यानादेव तु तल्लिङ्गात् सः," (७) "अन्तरा विज्ञान-मनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्", (८) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि," (९) "लिङ्गभूयस्त्वाद्धि बलीयस्तदपि", (१०) "सर्वथा तु त एवोभयलिङ्गात्", (११) "अतस्त्वितरद् ज्यायो लिङ्गाच्च", (१२) "लिङ्गाच्च", (१३) "भोगमात्रसाम्यलिङ्गाच्चे"तित्रयोदशसूत्रेषु निर्दिश्यते ॥

तत्र (१)"आकाशस्तल्लिङ्गात्"(१-१-१२)इत्यत्र नित्यत्वं परोवरीयस्त्वादिकं च भावधर्म एव लिङ्गम्,(२)"जीव-मुख्यप्राणलिङ्गान्नेति चेन्न"(१-१-३१) इत्यत्रापि जीव-मुख्यप्राणलिङ्गं भावरूप एव, (३) "गति-शब्दाभ्यां तथा हि दृष्टं लिंङ्गं च"(१-३-१५)इत्यत्रापि सुप्राप्यत्वं भावरूपमेव लिङ्गम्,(४) "क्षत्रियत्वावगतेश्च चैत्ररथेन लिङ्गात्" (१-३-३५) इत्यत्र पौत्रायणकर्तृकवेदविचारो लिङ्गं भावरूपमेव, (५) "जीव-मुख्यप्राणलिङ्गादिति चेत् तद् व्याख्यातम्"(१-४-१७)इत्यत्रापि प्राणलिङ्गं भावरूपम्, (६) "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः" (१-४-२०) इत्यत्र भूतेभ्यस्समुत्थानम्, अन्यद्वा भावरूपमेव लिङ्गम् (७) "तदभिध्यानादेव तु तल्लिङ्गात् सः" (२-३-१३) इत्यत्र भगवदिच्छाधीनत्वं भावरूपं द्वैतानुगुणं लिङ्गपदार्थः, अद्वैतदृष्ट्या त्वन्तर्यामित्वम्, (८) "अन्तरा विज्ञान-मनसी क्रमेण तल्लिङ्गात् सः" (२-३-१५) इत्यत्राद्वैतदृष्ट्या बुद्धि-मनसोः श्रुतिसिद्धत्वं भावरूपं लिङ्गम्, द्वैतमते उत्पत्ति-प्रलययोः क्रमो भावरूपं लिङ्गम् ॥

"न स्थानतोऽपि परस्योभयलिङ्गम्"(३-२-११)इत्यत्र भिन्नस्थानत्वानुमानं भावरूपं लिङ्गं द्वैतदृष्ट्या, अद्वैतदृष्ट्या तु सविशेषलिङ्गम्, निर्विशेषलिङ्गं च, तथाचाभावरूपं लिङ्गं न सविशेषस्य,(१०) "लिङ्गभूयस्त्वाद्धि बलीयस्तदपि"( ३-४-४४ ) इत्यत्र सर्वभूतान्वेषणं भावरूपमद्वैते, गुरुप्रसादप्राबल्यं द्वैतमते, (११) "सर्वथापि तु त एवोभयलिङ्गात्" (३-४-३४) इत्यत्र योग्यतान्वयव्यतिरेकदर्शनं भावधर्मरूपं लिङ्गं द्वैतमते, श्रुति-स्मृतिलिङ्गमद्वैते, (१२) "अतस्त्वितरज्ज्यायो लिङ्गाच्च"(३-४-३९) इत्यत्र श्रुति-स्मृती भावरूपे लिङ्गम्,(१३) "लिङ्गाच्च" (४-१-२) इत्यत्र रश्मिबहुत्वविज्ञानश्रवणं भावरूपं लिङ्गमद्वैते, "पुनरेव वरुणं पितरमुपससरे"ति श्रवणं द्वैते, (१४) "आतिवाहिकास्तल्लिङ्गात्" (४-३-४) इत्यत्र वायोः पूर्वप्राप्यत्वलिङ्गादातिवाहिकत्वं भावरूपं द्वैते लिङ्गम्, अद्वैतेऽमानवस्य गमयितृत्वं तत् ॥

अन्यत्रापि लिङ्गपदघटितेषु सूत्रेषु सविशेषलिङ्गं भावधर्म एवाभिप्रेयते, इत्य"दृश्यत्वादिगुणकः" इत्यस्य ब्रह्मस्वरूपाभावलिङ्गविषयकत्वं न युक्तम्। कथञ्चनात्र गुणशब्देन लिङ्गस्य विवक्षायामप्यदृश्यत्वं दृश्यसामान्याभाववत्त्वं दृश्यत्वे सर्वाभावस्वरूपं ब्रह्मैव निर्विशेषं ज्ञापयितुं शक्नोति, इत्यदृश्यत्वाधिकरणं निर्विशेषब्रह्मवादमेव पोषयति, न तु सविशेषब्रह्मवादम्; निर्विशेषब्रह्मविद्याया एव परविद्यात्वात्, अपरविद्यात्वाच्च सविशेषविद्यायाः ॥

"अक्षरात् परतः परः" इत्यादौ जडाजडसर्वभेदः-
परमात्मनो हरेरिति द्वैतमतम् ।

"विशेषण-भेदव्यपदेशाभ्यां च नेतरौ" "रूपोपन्यासाच्च" इति सूत्राभ्यां जडाजडप्रकृतिद्वयातिरिक्तो हरिरेवाक्षरात् परतः पर इत्युच्यते । न च स ब्रह्मा, रुद्रो वा । तत्र "यः सर्वज्ञः सर्ववित्" "तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिवाक्येषु "यस्सर्वज्ञ" इत्यनेन जडाजडप्रकृतेर्निरासः; सर्वज्ञ इति विशेषणात्, "तस्मादेतद् ब्रह्म" इति सृज्यकोटौ प्रवेशेनार्थतो ब्रह्मणः, "जुष्टं यदा पश्यत्यन्यमि"तीशस्याप्येतन्महिमत्ववर्णनेन ततश्च भेदोऽवगम्यते इति द्वैतभाष्यम् ॥

प्रकृति-जीवमात्रव्युदासोऽद्वैतवादे ।

अद्वैतमते तु प्रकृतिव्युदासः, जीवव्युदासश्च । न चाजडा प्रकृतिः कापि प्रसिद्धोपनिषत्सु । परप्रकृतित्वं तु जीवस्य गीतायां शुद्धप्रत्यगात्मैक्याभिप्रायम् ब्रह्म-रुद्रयोरपि विष्णुत्वात्, सविशेषब्रह्मण एव रूपभेदाद् न तन्निरासः । हिरण्यगर्भस्य त्वादिजीवत्वात् तस्य जीवपक्षनिरासेनैव निरासः । सर्वत्र जीवपूर्वपक्षो हिरण्यगर्भं समष्टिजीवमादायापीति मन्तव्यम् । "जुष्टं यदा पश्यत्यन्यमीशमि"ति तु प्रकृतिसंसर्गप्रयुक्त एव परमात्मनः सर्वतो भेदः, न तु स्वरूपत इत्यर्थपरम् ॥

॥ इत्यदृष्यत्वाधिकरणम् ॥

---

## ॥ अथ वैश्वानराधिकरणम् ॥

### ॥ वैश्वानरः साधारणशब्दविशेषात् ॥

द्वैतवादे नामपदस्यात्रासङ्गतिः ।

अत्र पूर्वोत्तरपक्षयोर्न विसंवादः; सविशेषपरमात्मोपासनविधिपरत्वादुभयत्रापि । लैङ्गिकानामेव शब्दानां समन्वयपरे द्वितीयपादे नास्याधिकरणस्य संगतिरिति परं द्वैतवादे विशेषः ॥

एतेन—

बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः ।
प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः ॥

वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः ।
तानि लिङ्गानि ते शब्दा अपि तद्गा हि सर्वशः ॥
बहुलाऽप्यङ्गरूढिस्तत्प्राङ्गरूढिं न बाधते ।"

इत्यनुव्याख्यानमपि—व्याख्यातम् । एवं सति हि "अन्तस्तद्धर्मोपदेशादि"त्यत्रापि बहुलिङ्गसमावेशादिन्द्रपदघटितम्य तस्यापि वाक्यस्यानेनैव गतार्थत्वात् तदधिकरणवैयर्थ्यापत्तिः । पादद्वयशेषत्वेन नामशब्दानामप्यत्र विचार इति तु पादद्वयादित्वेन पादद्वयमध्यत्वेनेत्येवं कल्पनया यत्र कुत्रापि यस्य कस्यचिद्विचारस्यापि समर्थनं प्रौढिमात्रम्, न व्यवस्थापकम् । अत्र वैश्वानरशब्दोऽग्नाविष्णुवाचक इति द्वैतमते, अद्वैतमते तु जाठराग्निः, तद्देवता, जीवः, ईश्वरो वेति पक्षा इति विवेकः । सिद्धान्तांशे तु न फलभेदः ॥

॥ इति वैश्वानराधिकरणम् ॥

## ॥ इति प्रथमाध्यायस्य द्वितीयः पादः ॥

—:❀:—

❀ ओं ❀

# अथ प्रथमाध्यायस्य तृतीयः पादः ।

## ॥ द्युभ्वाद्यधिकरणम् ॥

### ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥

एतत्पादार्थविभागः ।

प्रथमाध्यायतृतीयपादे उभयत्र प्रसिद्धानां नाम-लिङ्गात्मकानां शब्दानां ब्रह्मणि समन्वयः, उभयत्र लोकप्रसिद्धस्य महारुढ्या तत्तद्वाक्ये ब्रह्मेतरपदत्वव्युदासः प्रयोजनमिति द्वैतप्रक्रिया । अद्वैते तु निर्विशेषप्रधानास्पष्टब्रह्मलिङ्गवाक्यानां ब्रह्मणि समन्वयस्तृतीयपादार्थः । सङ्गतिविशेषात् सविशेषवाक्यानामपि पूर्वस्मिन् पाद इव निर्विशेषपराणामपि विषयता । तत्रानन्तरसङ्गतिः षोढा—प्रसङ्गोपोद्घातावसर-प्राप्ति-कार्य-कारणभावैकार्थत्वभेदेन । तत्र प्रथमा स्मारकवशात्, द्वितीया तदधीनसिद्ध्या, तृतीया समन्वयशेषेणावरोधात्, तुरीयोत्तरविचारकारणत्वेन, पञ्चमी पूर्वविचारकार्यत्वेनेति सम्प्रतिपन्नम् ॥

तत्र द्वैतदृष्ट्या चतुर्दशाधिकरणानि । "पत्यादिशब्देभ्यः" इति पादान्तिमसूत्रस्य पृथगधिकरणत्वात्, अद्वैतदृष्ट्या तु त्रयोदशाधिकरणानि । उभयत्र देवताधिकरणापशूद्राधिकरणयोः "मनुष्याधिकारत्वाच्च शास्त्रस्ये"ति सूत्रस्मारितत्वात् प्रसङ्गगतिः । अन्येषां तु यथायथमन्याः सङ्गतयः । तत्र निर्विशेषवाक्यविचारः—(१) द्युभ्वाद्यधिकरणे, (२) भूमाधिकरणे, (३) अक्षराधिकरणे, (४) अनुकृत्यधिकरणे, (५) प्रमिताधिकरणे, (६) कम्पनाधिकरणे, (७) ज्योतिरधिकरणे, (८) आकाशार्थान्तरत्वाधिकरणे, (९) सुषुप्त्युत्क्रान्त्यधिकरणे च । सविशेषविचारस्तु (१) दहराधिकरणे, (२) ईक्षतिकर्माधिकरणे च । अवशिष्टे देवताऽपशूद्राधिकरणे प्रासङ्गिके इति विभागः ॥

तत्र द्वैतमतेऽन्यत्र प्रसिद्धनामात्मकशब्दानां ब्रह्मणि समन्वयः (१) द्युभ्वाद्यधिकरणे, (२) अक्षराधिकरणे, (३) दहराधिकरणे, (४)

कम्पनाधिकरणे, ( ५ ) ज्योतिरधिकरणे, ( ७ ) अव्याकृताकाशाधिकरणे, ( ७ ) पत्यधिकरणे च । अपरत्र देवताऽपशूद्राधिकरणव्यतिरिक्तेषु पञ्चसु लिङ्गात्मकशब्दानामिति विभागः ॥

ब्रह्ममीमांसाभिप्रेतश्रुत्यादिलक्षणानि ।

तत्र ब्रह्ममीमांसाश्रितश्रुत्यादिलक्षणं सम्प्रतिपन्नम् । श्रुतिः = वाचकशब्दः, लिङ्गम् = असाधारणधर्मः, लक्षणं वा; वाक्यम् = निरपेक्षाणि पदानि, प्रकरणम् = प्रसिद्धम्, स्थानम् = विप्रकीर्णप्रकरणगतसमानोक्तिः, समाख्या = अध्यायादिप्रबन्धविशेषः—इति ॥

तत्र नामप्राधान्येन पूर्वपक्षः, लिङ्गप्राधान्येन सिद्धान्तः । नामात्मकशब्दानां ब्रह्मणि समन्वयः, लिङ्गानां तु प्रबललिङ्गेन दुर्बललिंङ्गस्यान्यथानयनम् । तत्र द्युभ्वाद्यायतनं ब्रह्मेति सम्प्रतिपत्तिरुभयत्र ॥

॥ द्युभ्वाद्यधिकरणम् ॥

—: ❀ :—

## ॥ अथ भूमाधिकरणम् ॥

### ॥ भूमा स सम्प्रसादादध्युपदेशात् ॥

द्वैताद्वैतयोः सिद्धान्तविमर्शः ।

भूमाधिकरणेऽपि पूर्वोत्तरपक्षयोर्न विप्रतिपत्तिः, न वा फलभेदः; तथापि "सम्प्रसादादध्युपदेशादि"त्यस्य विवरणे प्रकारभेदमात्रम् । तत्राद्वैतसिद्धान्ते सम्प्रसादः प्राणः "प्राणो वा आशाया भूयानि"त्युपसंहृतः; तस्मादधिकं ततोऽप्यनन्तरं भूम्न उपदिश्यमानत्वादिति ॥

द्वैतमते तु सम्प्रसादः = सुखाधिक इति साध्यनिर्देशमात्रम्—"यो वै भूमा तत् सुखमि"ति वाक्यशेषात् । "अध्युपदेशादि"त्येव हेतुः । अधिशब्दस्येश्वरवाचित्वमखिलेशस्यैव सुखाधिकस्योपदेशोऽत्र—इति ॥

तत्र भूयस्त्वोपदेशपरम्परायाः प्राणेन परिसमाप्तिरिति निरूपणार्थतया सम्प्रसादादध्युपदेश इति विशिष्टस्यैव हेतुत्वविवक्षैव युक्ता; अन्यथा प्राणशब्दस्यैव ब्रह्मपरत्वे सिसाधयिषिते तस्य प्रथमपाद एव निर्णीत-

त्वादिदमधिकरणं वितथम् । अपरो विशेषस्तु भूमाऽयं निर्विशेषं ब्रह्मैव, न तु सविशेषम्; "अथातोऽहङ्कारादेशः" "अथात आत्मादेशः" इति भूमानुकर्षेणाहमर्थविविक्तात्मरूपताया उपदेशात् ॥

## ॥ इति भूमाधिकरणम् ॥

—०—

## ॥ अथाक्षराधिकरणम् ॥

### ॥ अक्षरमम्बरान्तधृते ॥

#### अस्थूलत्वादिविरोधशङ्का ।

अत्र—"एतद्वै तदक्षरं गार्गि" इति प्रस्तुत्य प्रवृत्तम्—"अस्थूलमनण्वह्रस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमगन्धमरसममनोऽचक्षुष्कमप्राणमसुखमगोत्रमनन्तरमबाह्यं न तदश्नाति किञ्चने"ति-वाक्यमत्र विषयः । तत्रास्थूलानणुत्वादीर्घत्वानां परस्परविरुद्धानां परमात्मनि समवेशो बाधित, न वेति संशयेऽन्यत्र तयोर्विरोधेऽपि परमात्मनि न विरोधः; श्रुतिसिद्धत्वात् । प्रमाणसिद्धे चाणुत्व-महत्वादौ न पर्यनुयोग-संभावनापि । तथाच श्रुतिः—"अणोरणीयान्महतो महीयानि"ति ॥

#### निर्विशेषपरत्वेन विरोधपरिहारः ।

अत्रास्थूलादिवाक्येन जडस्वभाववस्तुव्यावृत्तिमात्रं विवक्ष्यते, तेन च तेष्विव स्थूलत्वाणुत्वादीनामत्र नावसर इत्येव विवक्षितम् । कथं तर्हि विरुद्धयोः सहावस्थानं ब्रह्मणि ? स्वभावभेदादिति द्वैतिनः ॥

#### अध्यारोपापवादनयेन विरोधपरिहारः ।

अद्वैतमतेऽत्र यद्यपि विरुद्धधर्माणाम्—बहूनां सर्वेषां स्थूल-सूक्ष्म-शरीरादीनां बाह्याभ्यन्तरवस्तूनां चाभावः सर्वकारणे ब्रह्मणि प्रतिपाद्यते । न चात्र श्रुतिसिद्धेऽनाश्वासावरो द्वैतमत इव, परं तु विरोधपरिहारक्रमो भिन्न एव, यथा गवि तुरगत्व-महिषत्वयोर्विरुद्धयोः सहावस्थानमुभयोरपि कल्पितत्वेन परमार्थतोऽधिष्ठानारोप्यभावेन, आरोपितरूपेण सत्त्वेन च विरोधपरिहारः, तेन चाध्यारोपापवादन्यायसिद्धमदृश्यत्वादिगुणक सूत्र-

विचारिताक्षरब्रह्मपरापरविद्यैकवाक्यतावगतं च निर्विशेषब्रह्मवाद एवोक्त श्रुतेस्तात्पर्यमिति पर्यवस्यति ॥

प्रत्यक्षापेक्षया श्रुतिप्राबल्येनात्र व्यवस्था ।

न च लोकव्यतिक्रमेणैकान्ततः श्रुत्यर्थो विरुद्धोऽपि न स्वीकर्तव्य इति संभवति; अन्यथा प्रत्यक्षविरोधेन श्रुतेः प्रपञ्चमिथ्यात्वपरायाः, जीवेश्वरैक्यपराया वा श्रुतेर्बाधकथामात्रमपि सम्भवदसंभवद्वा नोत्तिष्ठत्यपि, न वा "शास्त्रयोनित्वादि"ति प्रत्यक्षविरोध आगमस्यैव प्राबल्यम्—

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ॥"

इति वचनावगतमुपपद्येत ॥

अध्यारोपापवादन्यायेनैवान्यभावव्यावृत्तिः ।

एतेन—"अन्यभावव्यावृत्तिरपि-व्याख्याता। तथाहि—"नान्यदतोऽस्ति द्रष्टृ"इति प्रतिपादितं द्रष्टृत्वं प्रधानादिपरिग्रहे न भवतीत्येवार्थः। न तु घटादिवैलक्षण्यमात्रमस्थूलत्वानणुत्वादीनामविरोधसमर्थनार्थम् ॥

तत्र ब्रह्मणो घटादिवैलक्षण्यं लोकसिद्धं किमर्थं वा प्रतिपाद्यते? यदि घटादीनामिव प्राकृतत्वं निषेद्धुम्, तर्हि व्यर्थमिदम् न। हि ब्रह्म प्राकृतमिति वादः कोऽपि। अत्र त्वलोहितत्वागोत्रत्वाबाह्यत्वादिसर्वात्यन्ताभावाधिकरणत्वं बोध्यमानं शब्दत एव सर्वस्थूलवैलक्षण्यमपि बोधयति, अशरीरत्वं च ॥

यदि तु प्रधानादीनां परिणामिकारणानां स्वसमानसत्ताकत्वात् कार्यस्य नान्यभावव्यावृत्तिः संभवति, ब्रह्मणस्तु विवर्तोपादानत्वात् तद्व्यतिरेकेण स्थूलावस्थ-सूक्ष्मावस्थसर्वकार्याभावात् परमार्थतो नान्यभावः; सद्रूपेण भासमानत्वेऽपि कार्यसामान्यस्य, तर्हि "अस्थूलमनण्वि"त्यादीनां पूर्वोक्तविधयाऽध्यारोपापवादन्यायेनैवाविरोधसमर्थनं सूत्रकाराभिमतमिति प्रतीयते। सर्वथा त्वक्षराधिकरणमद्वैतसिद्धान्तस्यैवोपष्टम्भकम्। निस्स्वभावं तु ब्रह्म, इति न स्वभावतोऽविरोधोपपादनमपि युक्तम् ॥

निर्विशेषपादे मुक्तोपसृप्यसूत्राविरोधः ।

न च निर्विशेषस्यैव शास्त्रार्थत्वे मुक्तोपसृप्यव्यपदेशानुपपत्तिः; तस्य भेदगर्भत्वादिति शङ्काऽवसरति; सर्वेषु मोक्षवादिषु मुक्तोपसृप्यं न ब्रह्म,

ब्रह्मप्राप्तेरेव मुक्तित्वेन मुक्तित्वेन मुक्तप्राप्यत्वाविरोधात्, इत्युपसृप्यमुक्त-रूपत्वादित्येवार्थो वर्णनीयः। उपसर्पणं च मुक्तेरविद्यानिवृत्त्युपलक्षित-संविदात्मनाऽवस्थानमेव। तस्य साध्यत्वं तु तदुपलक्षणस्य, विशेषणस्य वाऽविद्यानिवृत्तेर्ज्ञानसाध्यत्वमात्रेण, इत्यविद्यानिवृत्त्युपलक्षितसंविन्मात्रं सर्वाधिष्ठानतया द्युभ्वाद्यायतनमिति सूत्रार्थः, इति न तत् सूत्रं निर्विशेष-वादविरोधि। अत एव "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति बन्धनिवृत्तिमात्रमात्मसाक्षात्का-रसाध्यम्, न तु साध्याऽपरा काऽपि मुक्तिरिति श्रूयते ॥

॥ इत्यक्षराधिकरणम् ॥

———

## ॥ अथ प्रमिताधिकरणम् ॥

### ॥ शब्दादेव प्रमितः ॥

अस्यापि निर्विशेषपरत्वे स्वारस्यम्।

"शब्दादेव प्रमितः" इति सूत्रे वामनस्य परमात्मत्वं साधितं द्वैतिभिः। सर्वत्र सविशेषपरत्वं तु तन्मते, अद्वैते तु "शब्दादेव प्रमितः" इत्यत्रापी-शानपदश्रुत्याऽपि परमात्मस्वरूपं निर्विशेषमेव बोध्यते ॥

॥ इति प्रमिताधिकरणम् ॥

———

## ॥ अथ देवताधिकरणम् ॥

### ॥ तदुपर्यपि बादरायण सम्भवाय ॥

अत्र "मध्वादिष्वसंभवादनधिकारं जैमिनिरि"ति प्रस्तुतजैमिनिपक्षस्य न परिहारो दृश्यते। अतो ज्ञायते यत्रोपासने, विद्यायां वाऽधिकारस्संभवति, तत्र देवतानामप्यधिकारो जैमिनेरपि संमतः। एवं बादरायणस्यापि यत्र मध्वादावुपासनाविधिस्तत्र नाधिकार इत्येव मतमित्यत्रोभयत्र स्वस्वरूप-

साक्षात्कारार्थायामात्मविद्यायां कर्तृत्वाद्यनुसन्धाननिरपेक्षायां हिरण्यगर्भान्तस्यास्त्येवाधिकारः। तदुक्तम्—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥"

इति। तेन च साक्षात्कृतात्मतत्त्वानाम् अभ्यस्यमानपटुतरसाक्षात्कारवताम्, स्वस्वाधिकारसमाप्तौ निवृत्ताविद्यानां सर्वातीतानावृतसंविन्मात्रनिर्विशेषभावप्रयोजकब्रह्मविद्यायां सर्वाधिकारस्तदधिकारप्रयोजकसाधनसम्पन्नानामिति ज्ञाप्यते। अन्येषु त्वधिकरणेषु शब्दविशेषाणां ब्रह्मपरत्वे न विप्रतिपत्तिः॥

॥ इति देवताधिकरणम् ॥

एवमनुकृत्यधिकरणेऽन्यत्र च यत्र नोपासनविधिः, किन्तु ज्ञानमात्रे तात्पर्यम्। तदेवं पत्यादिशब्देभ्य इत्यन्तं द्वैताद्वैतसम्प्रदायानुसारिणी व्यवस्था॥

## ❀ इति प्रथमाध्यायस्य तृतीयः पादः ❀

———

❀ ओं ❀

## ॥ प्रथमाध्यायस्य तुरीयः पादः ॥

### ॥ आनुमानिकाधिकरणम् ॥

**आनुमानिकमप्येकेषामिति तु शरीररूपक विन्यस्तगृहीतेर्दर्शयति च ॥**

प्रथमतुरीयपादार्थौ मतद्वयाभिमतः ।

श्रुति-लिङ्गाभ्यामन्यत्रैव प्रसिद्धानां पदानाम्, तद्घटितवाक्यानां च कर्मादिपराणामब्रह्मपराणामपि यया कयाचन विधया योगेन ब्रह्मणि समन्वयः प्रथमाध्यायतुरीयपादार्थः ॥

तत्र (१) "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च," (२) "ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" (३) "न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च" (४) "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः" (५) "समाकर्षात्" (६) "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्" (७) "एतेन सर्वे व्याख्याताः" इत्यधिकरणैः—(१) अव्यक्त (२) ज्योतिर्वसन्ते-वषड्-वैषडादि (३) बहुवचनान्तपञ्चजन (४) कारणत्वेन निर्दिष्टाकाशपदा (५) कर्मकरणादिपरसर्ववाक्य (६) प्रकृत्यादि-सर्वस्त्रीलिङ्गपदा (७) सच्छून्यादिपदानां विष्णौ समन्वयस्तत्तत्प्रवृत्ति-निमित्तसूचनद्वारा प्रतिपाद्यते—"सर्वे वेदा यत्पदमामनन्ति" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते" इत्यादिश्रुतिभ्य इति द्वैतिनां मर्यादा ॥

अद्वैतिनां तु "महतः परमव्यक्तमि"त्यत्राव्यक्तपदं न प्रधानपरम्, किन्तु सूक्ष्मावस्थपञ्चभूतात्मकशरीरपरम् (२) "अजामेका"मित्यत्रापि तेजोऽबन्नात्मकतया न प्रकृतिपरमजापदम् (३) "पञ्चपञ्चजना" इत्यत्र न पञ्चविंशतितत्त्वपरता, (४) कारणवाक्यानां कारणस्वरूपविषय ऐकरस्यम्, (५) "आत्मा वा द्रष्टव्यः" इत्यत्रात्मपदस्य परमात्मपरत्वम् (६) प्रकृतिश्चे"ति सूत्रेण जन्मादिकारणत्वोपसंहारः (७) ब्रह्मातिरिक्तकारणत्वनिरासोपसंहारश्चाधिकरणसप्तकसिद्धान्तविषय इति मर्यादा ॥

द्वैतवाद एतावतामधिकरणानां वैतथ्यम् ।

तत्र यथा कथञ्चित् सर्वेषां शब्दानां ब्रह्मणो गुणपूर्णत्वं व्युत्पादयितुं "ज्योतिरुपक्रमा तु" इति न्यायेन लोकव्यवहाराविरोधेन यदि व्युत्पादनीयम्, तर्हि एतावन्त्यधिकरणानि वितथानि। न हि पदविशेषाणां ब्रह्मपरत्वव्युत्पादनमात्रं ब्रह्ममीमांसाया लक्ष्यम्। सर्वाणि नामानि यदि ब्रह्मपराणि, तर्हि वैदिकशब्दानामिव लौकिकशब्दानामप्यन्यत्रैव प्रसिद्धानां यया कयाचन विधया ब्रह्मपरत्वस्यावश्यकत्वेन वैदिकपदमात्रस्य ब्रह्मणि समन्वयो नोपपद्यते ॥

विपरीतक्रमेण चतुस्सूत्र्यर्थसंकलनम् ।

सर्ववेदाम्नायमानत्वं कारणस्य, ज्ञेयस्य वा ब्रह्मणः स्वतिरेकेणान्याभावनिरूपणेन "तत्तु समन्वयादि"ति शास्त्रारम्भोपपादकचतुःसूत्र्यन्तर्गततुरीयसूत्रसिद्धान्तस्य, तथैव शास्त्रयोनित्वस्य च विनिर्णय इति विपरीतक्रमेणोपसंहारार्थं खलु तुरीयपादः ॥

तत्रेक्षत्यधिकरणसिद्धान्तस्य शास्त्रोपसंहारव्याजेन प्रथमाध्यायतुरीयपादादिमाधिकरणत्रयेणानुसन्धानम्। तत्र गतिसामान्यमीक्षत्यधिकरणसिद्धमुपपादयितुं तुरीयं कारणत्वेन चेत्यधिकरणम्, "तत्तु समन्वयादि"ति प्रस्तुतसमन्वयो जावैक्य एवेत्यंशस्योपसंहारार्थमन्वयपदघटितं वाक्यान्वयाधिकरणम्, येन शास्त्रयोनित्वमप्यर्थसिद्धम् ॥

ततो जन्माधिकरणप्रतिपादितकारणत्वमभिन्ननिमित्तोपादानत्वमेव, यत इति पञ्चम्या हेतुसामान्यपराया उपादानत्वेऽपि प्रयोगात्, यथा "गोमयाद् वृश्चिको जायते" "हिमवतो गङ्गा प्रवहती"त्यादौ, इति ब्रह्मण उपादानत्वमपीति व्यवस्थयोपसंहर्तुम्—"प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"त्यधिकरणम् ॥

अभिन्ननिमित्तोपादानं चेतनं ब्रह्मैव "अथातो ब्रह्मजिज्ञासे"ति सूत्रप्रस्तुतमिति जिज्ञासाधिकरणमुपसंहर्तुम्"—"एतेन सर्वे व्याख्याता व्याख्याताः" इत्यधिकरणम्. येनाचेतनात्, प्रधानात्, अणुभ्यः, अभावात्, जीवात्, स्वभावाद्वा न प्रपञ्चाविर्भावः, इति सम्पूर्णशास्त्रार्थस्य प्रथमाध्यायप्रथमपादेऽनुक्रमेण प्रस्तुतस्य व्युत्क्रमरूपेणोपसंहार एव सूत्रकारस्य लक्ष्यमिति प्रतीयते ॥

वेदान्तानामद्वैत एव मुख्यं तात्पर्यम् ।

तत्र वेदान्तवाक्यानि तटस्थलक्षणविधया कारणत्वेन सविशेषमवान्तरतात्पर्यगोचरतया, निर्विशेषं तु महातात्पर्यविषयतया प्रतिपादयन्ति । न चैतादृशं कारणम्, ज्ञेयं वा साङ्ख्यदर्शनसिद्धं प्रधानमितीक्षत्यधिकरणेन ब्रह्म-प्रधानसाधारणसत्पदघटितसद्विद्यातात्पर्यविषयस्तत्प्रकरणस्योपक्रमोपसंहारादिविरुद्धत्वात् प्रधानकारणतावादस्य, इति सत्पदमात्रमादाय शङ्कितपूर्वपक्षनिरासः कृतः । तेन च न केवलमवान्तरतात्पर्यविषयतया, किन्तु कारणस्य विना वेदान्तं दुर्विज्ञेयस्य ज्ञेयतया शास्त्रेण प्रतिपादनाद् शास्त्रमुख्यतात्पर्यविषयो निर्विशेषं ब्रह्मेति पर्यवस्यति ॥

आनुमानिकाधिकरणलक्ष्यम् ।

तदुपरि तु साङ्ख्यानां प्रत्यस्थानम्—प्रधान-पुरुषविवेकस्यैव मोक्षसाधनत्वात, मोक्षसाधनज्ञानविषयस्यैव शास्त्रमुख्यतात्पर्यविषयत्वाच्च स्वदर्शनप्रसिद्धं प्रधानपुरुषविवेकज्ञानं कठवल्ल्यां प्रस्तूयते, यत्र कारणतया न पुरुषः प्रस्तुतः, किन्तु क्षेत्रविविक्ततया, प्रकृतिविविक्ततया च, तेन चावगम्यते—पुरुषविविक्तं प्रधानं कारणतयापि प्रतिपिपादयिषितम्—कठवल्ल्येकवाक्यतया सद्विद्ययेति शङ्कानिराकरणार्थमानुमानिकाधिकरणम् ॥

साङ्ख्यादिनिरासस्यान्तर्भावलक्षणसङ्गत्यविरोधः ।

न हि ब्रह्म कारणतयैव जिज्ञास्यम्, किन्तु ज्ञेयतयाऽपि । तत्र कारणतया ज्ञानं द्वारमात्रम; निर्विशेषस्यैव मुख्यतया ज्ञेयत्वात् । तथाचाव्यक्तशब्दवाच्यत्वेन प्रधानस्य कठवल्ल्यां निर्णयस्य प्रथमाध्यायमुख्यार्थत्वाद् नात्राव्यक्तशब्दवाच्यत्वनिषेधस्य नान्तर्भावलक्षणा संगतिः ॥

अविरोधाध्याये साङ्ख्यस्य, वेदान्तस्य च भिन्नविषयत्वम्, भिन्नप्रस्थानत्वं च; वेदान्त-योग-पाशुपत-पाञ्चरात्राणामास्तिकदर्शनानामिव, सौगतार्हत-वेदान्तानामिव वेति तत्र तन्निरासः प्रस्थानभेदमादाय । समन्वयाध्याये साङ्ख्यमतचर्चा तु तत्रापि वेदमूलत्वं कृत्वाचिन्तयाऽभ्युपगम्येति द्वैताद्वैतविशिष्टाद्वैतदर्शनानामिव साङ्ख्यदर्शनस्यांशविशेषे वेदान्तेनैकवाक्यतया तत्परत्वमेव वेदान्तानामिति पूर्वपक्षनिरासेन ब्रह्मणि समन्वयस्यैव प्रथमाध्यायार्थत्वाद् नात्र साङ्ख्यसिद्धान्तानवसरव्यवस्थाया असंगतिः,

येन नान्तर्भावलक्षणा संगतिः स्यात्, इति ब्रह्मण्येव समन्वयस्थैर्यायैवात्र साङ्ख्यमतनिरासः। द्वितीयद्वितीयस्य तु परमतनिरासनमेव लक्ष्यम्, इति दृष्टिभेदेनैवाध्यायद्वयेऽपि साङ्ख्यमतनिरसनम्॥

साङ्ख्यनिरासस्य लक्ष्यं प्रधानकारणतानिरासः।

अत एव "विप्रतिषेधाच्चासमञ्जसमि"ति कस्मिंश्चनांशे साम्येऽपि बहुशो विप्रतिषेधोऽपीति कृत्वैव तन्निरसनं द्वितीयाध्याये, इति प्रधानस्याव्यक्तशब्दवाच्यत्वनिषेधोऽत्र न तावन्मात्रफलः, किन्तु तन्मुखेन तस्य मुख्यज्ञेयत्वस्य, तद्द्वारतया कारणतया ज्ञेयत्वस्य वा निरासार्थः, इत्यत्र न वाच्यतामात्रनिषेधः प्रधानस्य॥

"महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इत्युदाहृतवाक्ये यद्यपि न कारणतयाऽव्यक्तं निर्दिश्यते; तथापि ज्ञेयस्वरूपसमर्पणं वर्तते, ज्ञेयत्वं चात्राव्यक्तस्य ज्ञेयपुरुषविवेकप्रतियोगितया; प्रधान-पुरुषविवेकस्यैव तन्मते मोक्षसाधनत्वात्। तच्च व्यष्टि-समष्टिशरीरविविक्ततया निर्विशेषतया ज्ञापनेनैवोपपद्यते॥

प्रधानकारणतानिराससङ्गत्यविरोधः।

एतेन—"यस्मिन् पञ्च पञ्चजनाः" इत्यपि—व्याख्यातम्। तत्र यदि साङ्ख्योक्तानां पञ्चविंशतितत्त्वानामेव निर्देशः, तर्हि तदीयः प्रधान-पुरुषविवेकमोक्षसाधनतापक्ष एव श्रौत इति स्याम्, तेन चाचेतनकारणतवादः, उपासनामोक्षसाधनतावादः, न तु निर्विशेषज्ञानमोक्षसाधनतावाद इत्यद्वैते सर्वदर्शनसिद्धान्तविरोधः, इति प्रधानमल्लः साङ्ख्यो नामेति तन्निरासस्य समन्वयाध्यायो मुख्यं स्थानम्॥

तत्र पञ्चविंशतितत्त्वसंकलनम्, यथायथं तत्तत्स्वरूपोपयोगादिकमपि तदीयमेव मत्वाऽयं विचारः। एतेन—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥"

इति प्रस्तुतास्सर्वाः प्रक्रियास्तदीयाश्श्रुतिसंमताः। अयमेव न्यायो "महतः परमव्यक्तमि"त्यादौ तत्तन्नाममात्रनिर्देशेनापि, इत्यव्यक्त-प्रधानकारणतावादः श्रौत इति पूर्वपक्षे "महतः परमव्यक्तम्" 'पञ्च पञ्चजनाः' इति शब्दमात्रं तदीयप्रक्रियाणामुपस्थापनद्वारा ब्रह्मकारणतावादस्य, तन्मा-

त्रज्ञेयतावादस्य वा प्रतिवन्दि, इति कृत्वैवात्र तन्मतनिरासः, इति ब्रह्मणि समन्वयविरोधित्वाद् तन्निरसनस्यात्र नासङ्गतिः; अन्यथा द्वैतवादेऽपि निर्विशेषब्रह्मवादस्य पाशुपतागमादेरन्यस्य वा द्वैतमतदृष्ट्याऽपि पूर्वपक्षस्य कथं प्रथमाध्यायेऽन्तर्भावसङ्गतिः? यदि समन्वयस्थेम्ने, तर्हि द्वितीयाध्यायार्थोऽपि प्रथमाध्यायार्थः कथं नेति प्रतिवन्दी दुष्परिहरा ॥

तत्र "महतः परमव्यक्तम्" इति महदव्यक्तयोः काल-विप्रकृष्टत्वाभावावगमात्, ततः कार्य-कारणभावोऽप्यनुमेयः, संभाव्यो वा। तत्र यद्यपि कार्य-कारणभावविकल्पयोरपि परापरभावः; तथापि न स कार्य-कारणभावविकल्पयोरेव। तत्र च कार्य-कारणभाव एव तयोरिति साङ्ख्यप्रक्रियैव परामृष्टेति शङ्कानिरासं विना न साङ्ख्यमतानुल्लेखः कठवल्ल्यामिति स्थापयितुं शक्यते, इति तन्निरासोऽप्यवश्यमत्र कर्तव्यः। संभावनामात्रसिद्ध एव हि पूर्वपक्षो नाम, न तु प्रमित एव; अन्यथा पूर्वपक्षत्वव्याहतेः, इति तृतीयाधिकरणमद्वैतमतानुसारि नात्रासङ्गतम् ॥

एतेन—"चमसवदविशेषात्" इति द्वितीयाधिकरणमपि—व्याख्यातम्। तत्र हि—"अजामेकां लोहितशुक्ल-कृष्णां बह्वीं प्रजां जनयन्तीं सरूपामि"ति सत्त्व-रजस्तमआत्मना प्रकृति-विकृतिस्वरूपमात्रकारणप्रधानपरिग्रहो विशद एव, इत्युक्तश्रुतेः प्रधानकारणतामादाय पूर्वपक्षनिरासोऽवश्यमेव, इति नास्यात्रासङ्गतिशङ्का ॥

यत्तु—तत् किं ब्रह्मपरं करिष्यते—इति, सत्यं न तत् ब्रह्मपरं करिष्यते, किन्तु नेदं प्रधानपरमिति करिष्यते। तावन्मात्रं हि साङ्ख्यमतनिरासार्थं कर्तव्यम्। तेन च "सदेवे"त्यादिवाक्यस्य ब्रह्मपरत्वाद्येपपरिहारः सिद्ध एव, इति कारणवाक्यानि सर्वाणि ब्रह्मपराणि पूर्वपक्षप्रतिक्षेपमात्रेण कृतप्रायाणि भवन्ति ॥

अजादिशब्दानां प्रधानपरत्वनिरासस्येक्षत्य-
धिकरणोपबृंहणार्थत्वम्।

'अजामेकामि'ति वाक्यार्थस्तु तेजोऽबन्नात्मकप्रकृतिकारणतापरम्। तेजोऽबन्नात्मकत्वं तु पञ्चीकृतप्रक्रियया। सा च चेतनाधिष्ठितप्रकृतिकार्यतयेति क्रमेण केवलाचेतनकारणतावादस्य निरासोऽर्थसिद्धो भवति, यदेवेक्षत्यधिकरणस्यापि कृत्यम्, इत्यधिकरणत्रयमपीक्षत्यधिकरणोपबृंहणमात्रम्, इति न व्याघ्रेणोरणे नीते का हानिः? वृकेणोरणे नीते को लाभ इति लौकिकाभाणस्थानमिदम् ॥

"सदेव सोम्येदमि"ति वाक्यस्यैवैतद्वाक्यानुसारिणाऽऽक्षेपेणाक्षिप्तत्वात् तदाक्षेपे निवृत्तेऽप्रतिहता चेतनकारणतासिद्धिः, इति नात्राजादिशब्दानां ब्रह्मपरत्वसमर्थनम्; गतिसामान्याक्षेपेण परिहारमात्रत्वार्थत्वादेतद्वाक्यस्य, येन प्रधानपरत्वव्युदसनेनार्थसिद्धं गतिसामान्येन ब्रह्मकारणत्वं स्थिरीकृतं भवति। अत एवोक्तम्—ईक्षत्यधिकरणोपबृंहणार्थानीमान्यधिकरणानीति, इति सर्वेषां पदानां ब्रह्मणि समन्वयसमर्थनार्थमिदम्—यत्तु न व्यर्थम्, न बाधितम्, नाप्रयोजनं च। व्यक्तीकरिष्यते चेदमुपरिष्टात्॥

प्रथमाध्यायान्तेऽपि प्रधानवादनिरासः उपसंहारमात्रार्थः।

ईक्षत्यधिकरणानन्तरमेव यद्यपीमान्यधिकरणानि भवितुमर्हन्ति; तथापि तदर्थस्यैव पूर्वोक्तविधयोपसंहारार्थत्वात् तदेकवाक्यतयैव योजनमेषामधिकरणानां विवक्षितम्, तेन चोपक्रमोपसंहारैकरूप्येण सूत्राणामप्यभिन्ननिमित्तोपादाने ब्रह्मण्येव पर्यवसानम्, न केवलनिमित्तकारणे, न वा परिणामिकारणविधयाऽभिन्ननिमित्तोपादाने, नापि केवलाचेतनोपादानतावाद इत्ययमर्थो विशदीभवति॥

अत एव त्रिपादीमतिक्रम्यात्रोपसंहारार्थः प्रधानकारणतावादस्य साक्षात्, परम्परया वा निरासः प्रथमपादार्थोपसंहारपरत्वाच्च पूर्वोक्तविधया तुरीयस्य पादस्य॥

कारणत्वेनाकाशाधिकरणस्यात्र सङ्गतिः।

एतेन—"कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते"रित्यधिकरणमपि व्याख्यातम्। गतिसामान्यं हि कारणांशतायामेव, इति कार्यविशेषविगानमकिञ्चित्करमिति निरूपणार्थमिदमधिकरणम्। तत्र चाकाशादिसृष्टेः, तेजआदिसृष्टेः, अक्रमेण सृष्टेः, युगपत्सृष्टेश्च श्रुतौ दर्शनं क्रमाक्रमविपर्ययसृष्टौ वेदान्तवाक्यानां मुख्यतात्पर्याभावाद् न किञ्चित्करम्; जन्मादिकारणत्वानपायात्, इति तदपि गतिसामान्यस्याविरोधेनोपबृंहणमेव॥

न च साङ्ख्यनिरासमात्रमत्र लक्ष्यम्, किन्तु हिरण्यगर्भाख्यादिजीवकारणत्ववादिहैरण्यगर्भवादस्वभाववादनिरासः, अभाववादनिरासश्च। अत्रांशतः क्रमाक्रमयौगपद्येन स्वभाववादोऽपि प्रतीयते; "तद्धेदं तर्ह्यव्याकृतमासीदि"त्यादौ स्वयंकर्तृकाया अपि सृष्टेराम्नानात्, "असदेवेदमग्र आसीदि"त्यभावकारणतायाश्च। अत एव जन्मादि-

सूत्रभाष्येऽचेतनप्रधानाणु-स्वभावाभाव-जीवकारणतानिरासः सिद्धान्त-साध्यो विवक्ष्यते, इति जन्मादिसूत्रसिद्धकार्य-कारणभावो ब्रह्म-जगतोरेवेति निर्णयोपसंहार एवात्र । तत्र प्रधानकारणवादनिरासोऽप्यन्यतमात्रम् ॥

तुरीयपादार्थनिष्कर्षः ।

तदयं निष्कर्षः—निर्विशेषब्रह्मवादव्यतिरिक्तवादगतपारिभाषिकशब्द-विशेषाणां श्रुतौ श्रूयमाणानां निर्विशेषब्रह्मवादाविरोधेन नयनं प्रथम-तुरीय-पादार्थः । तत्र प्रथमाधिकरणेऽव्यक्तपदं प्रधानकारणवादोपष्टम्भकं ब्रह्म-कारणवादाविरोधेन योजितम् ॥

तुरीयाधिकरणं तु स्वभावकारणवादोपष्टम्भकस्वयंव्याक्रियादिपरतया प्रतीयमानं ब्रह्मकारणतावादाविरोधितया योजितम् ॥

पञ्चमाधिकरणं तु प्राणशब्दवाच्यहिरण्यगर्भकारणतामतोपष्टम्भकवत् प्रतीयमानं ब्रह्मकारणवादाविरोधितया योजितम् ॥

वाक्यान्वयाधिकरणं तु जीवब्रह्मभेदवादनिरासेन तदैक्यवादपर-तया "आत्म वा अरे" इति वाक्यस्य योजनपरम् ॥

प्रकृत्यधिकरणं तु ब्रह्मपरिणामिकारणतानिषेधपरतया, योजितम्, तन्निमित्तकारणतामात्रनिषेधपरतया च ॥

तत्राद्याधिकरणेऽव्यक्तशब्दस्य सूक्ष्मशरीरपरत्वमपि, न प्रधानपरत्व-मेव, इति न तन्मात्रेण साङ्ख्यप्रत्यवस्थानस्यावसर इति ज्ञाप्यते, न तु प्रधानस्याव्यक्तशब्दावाच्यतैकान्तेन, येनाव्यक्तशब्दवाच्यतैव प्रधानस्य निषिध्यत इति नोपपन्नमिति वाचो युक्तिरवसरेत् ॥

प्रधानमात्रस्याव्यक्तशब्दवाच्यतानिरासो हि तत्रार्थिकः । श्रौतं त्वत्रैव प्रधानातिरिक्तस्यैव सूक्ष्मावस्थापन्नशरीरस्याव्यक्तशब्दवाच्यत्वं समर्थ्यते । एकान्ततः प्रधानस्यैवाव्यक्तशब्दावाच्यत्वं केवलमत्र पर्यवस्यति । न हि प्रधानवाचकं पदं यत्रकुत्रापि नास्तीत्युक्ताधिकरणार्थः । साङ्ख्याभिमत-स्वतन्त्रपरिणामिप्रधानमात्रस्य वाचकम्, लक्षकं वा पदं वेदे कुत्रापि नास्तीति खलु तदधिकरणार्थनिष्कर्षः ॥

एतेन—

"विकारजननीमज्ञामष्टरूपामजां पराम् ।
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥"

इत्याथर्वणश्रुतिरिति—व्याख्याता । तत्रास्वतन्त्राया एव प्रकृतेराम्नानेन साङ्ख्याभिमतप्रकृतेरबोधनात् ॥

"सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥"

इति स्मृतिस्तु सत्त्व-रजस्तमोगुणाधिक्यापेक्षया गुणानां बन्धकत्वप्रतिपादनपरा न तत्समावस्थेश्वरानधिष्ठितसाङ्ख्याभिमतप्रकृतिपरा । अत एव–

"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।"

इतीश्वराधिष्ठिताया एव प्रकृतेर्जगज्जननीत्वं प्रतिपाद्यमानमुपपद्यते । अथर्वणश्रुतिरपि "विकारजननी"मिति जननीशब्दप्रयोगेणेममर्थं प्रत्यभिज्ञापयति ॥

स्वतन्त्रप्रधानवादोऽश्रौतः ।

न हि त्रिगुणात्मकं परिणामिकारणं प्रधानं प्रकृत्यपरपर्यायम्, तद्वाचकः शब्दो वा श्रुति-स्मृति-पुराणेतिहासेषु, किं बहुना ? भगवत्पादभाष्येऽपि नास्ति । साङ्ख्याभिमतस्वरूपं प्रकृत्यपरपर्यायं स्वतन्त्रपरिणामिप्रधानमवान्तरतात्पर्यविषयतया, मुख्यतात्पर्यविषयतया वा तत्र नास्ति, इति शरीरादीनामव्यक्तपदेन बोधनमिदं वस्तुगत्या शरीरस्यापि सूक्ष्मावस्थस्य प्रकृतित्वेऽपि संविन्मात्राधिष्ठिततयैव कारणत्वं प्रतिपाद्यते—शरीरस्येवात्मानधिष्ठानकत्वेऽकार्यकारित्वात् प्रकृतेरिति सूचयितुमेव "शरीररूपकविन्यस्तगृहीतेः" इति तत्र प्रकरणे शरीरपरत्वं सूत्रकारैः सूत्रितम् ॥

कठवल्ल्यां शुद्धप्रत्यगात्मपराया-
मव्यक्तपदेन कारणप्रधानपरिग्रहानवसरः ।

इदं हि प्रकरणं कठवल्ल्यां ज्ञेयस्वरूपं प्रतिपादयति, न कारणस्वरूपम् । तच्च प्रकृतिविविक्तमिति सम्प्रतिपन्नम् । तत्र च शरीरस्याव्यक्तपदवाच्यत्वे प्रत्यगात्मनः शुद्धं स्वरूपमुपदिष्टं भवति । न च प्रत्यगात्मनो जीवत्वम्, बन्धो वा सर्वोपादानप्रकृत्युपधानेन, किन्तु तत्कार्यभूतसूक्ष्मान्तःकरणाद्युपधानेनैव साङ्ख्यमतेऽपि, इति स्थूल-सूक्ष्म-कारणव्यष्टि-शरीरविविक्तात्मस्वरूपनिरूपणावसरे सर्वजगत्कारणमूलप्रकृतेरव्यक्तशब्दवाच्यताबोधो न नोपयुज्यते ॥

तत्पदार्थब्रह्मोपाधिर्हि माया, प्रकृतिः, अव्यक्तं वा न तत्पदार्थजगत्कारणनिरूपणप्रसङ्गे, ज्ञेयस्वरूपतत्पदलक्ष्यार्थस्वरूपणपरे वा प्रकरणे वर्तते, इति साङ्ख्यप्रत्यवस्थानस्य नात्रावसरलेशोऽपि ॥

तेन च कठवल्ल्यां मुक्तात्मजीवस्वरूपनिष्कर्षपरायामव्यक्तपदं "सदेवे"-त्यादिवाक्यप्रतिपाद्यप्रकृतिपरमिति वक्तुं न शक्यमित्युक्ताधिकरणतात्पर्यम्। अव्यक्तपदमात्रं न पर्याप्तं प्रधानकारणवादस्यैव श्रौतत्वव्यवस्थापनार्थम्; तस्य प्रकरणभेदेन भिन्नार्थत्वात्, कठवल्ल्यां जीवस्वरूपविवेकपरायां तस्य स्थूल-सूक्ष्म-कारणशरीरपरत्वेन प्रधानपरत्वाभावाच्च ॥

सूक्ष्मभूतस्यात्र नं प्रधानत्वम्।

एतेन—अनादेरुपादानस्य जडस्य भूतसूक्ष्मशब्दाभिधेयस्याङ्गीकारे प्रधानं नेति रिक्तं वचः; तल्लक्षणत्वात् प्रधानस्य, नाम्नि विवादायोगादिति-परास्तम्। भूतसूक्ष्मं ह्यनादि स्थूलभूतोपादानं तत्तद्गुणभेदेन व्यष्टि-समष्ट्यात्मना पञ्चप्राण-मनो-बुद्धि-दशेन्द्रियसमुदायकारणं तदन्तरप्रतिपत्तिनयेन जन्मान्तरेऽप्यनुवर्तमानं प्राकृतं जीवमात्रोपाधिर्मुक्तावननुवर्तमानं प्रकृति-शब्दवाच्यप्रधानकार्यमहदहङ्कारकार्यं न प्रधानम्, किन्तु तस्य कार्यमेवेति हि कापिलाः, अन्ये च सर्वे तन्नित्यत्वानित्यत्ववादिनः, इति भूतसूक्ष्मस्या-चेतनस्यानादेरुपादानस्याङ्गीकारः कथं वा प्रधानाङ्गीकारः? कथं वा नाममात्रे विवादः नात्र? सर्वथातु नात्र प्रकरणेऽव्यक्तशब्देन मूलप्रकृते-रुल्लेखशङ्काऽवसरत्यपि ॥

भूतसूक्ष्मस्यापि प्रधानकार्यत्वात् प्रधानात्मत्वमेव वस्तुत इति कृत्वा प्रधानपरिग्रहपर्यवसानेऽपि "तदधीनत्वादर्थवदि"ति सूत्रेण प्रधानस्य स्वतन्त्रस्य नात्र ग्रहणमिति सूत्रकारः स्वयं विशदयति। न हि सूत्रकारः स्वतन्त्रं तेजोऽवन्नात्मकं कारणमभ्युपगच्छति, किन्तु ब्रह्मपरतन्त्रमेवाचेतनं कारणमितीक्षत्यधिकरणे व्यक्तम् ॥

प्रधानसत्त्वे न कस्यापि विप्रतिपत्तिः, किन्तु तस्यैव कारणत्वे।

तत्र ब्रह्माधीनं प्रधानकारणत्वं प्रधानोपहितत्वेनैव ब्रह्मणोऽपि, परं तु रूपभेदेन। अनादित्वादविद्या-चिद्योगस्य नात्रान्योन्याश्रयः। सर्वथा तु प्रधानास्तित्वे न विवादः। तत्कारणत्वं तु ब्रह्माधीनम् न तु स्वतन्त्रमिति कापिलानाम्, अन्येषां वैदिकानां च विप्रतिपन्नम्। तत्र चाव्य-

क्तशब्देन न प्रधानस्य परिग्रह इति वर्णनतात्पर्यं तु शरीरवत् तत्पारतन्त्र्यव्युत्पादन एव, न तु प्रधानं नाम तत्त्वमेव नास्तीति पूर्वमेव निरूपितम् ॥

एतेन—प्रधानस्वातन्त्र्यं साङ्ख्येन चोदनीयम्, तत्पारतन्त्र्यं वाऽद्वैतिभिर्वर्णनीयम्। अव्यक्तपदेन प्रधानपरिग्रहनिरासस्तु विफल इति—प्रत्युक्तम्; अत्राव्यक्तपदेन शरीरस्यैव ग्रहणमित्येवं व्यवस्थापनस्यात्रत्याव्यक्तपदार्थस्य परम्परया प्रधानपरत्वेऽपि शरीरवत् पारतन्त्र्याद् न साङ्ख्यपरिकल्पितस्वतन्त्रप्रधानपरिग्रहे तात्पर्यमित्यत्रैव तात्पर्यात् ॥

कठवल्ल्याः स्वतन्त्रप्रधाननिरास एव तात्पर्यम् ।

कठवल्लीगताव्यक्तपदस्य साङ्ख्याभिमतप्रधान एव तात्पर्यमिति वदन् हि पूर्वपक्षी न परतन्त्रं किमपि प्रधानं नाम स्वीकरोति, इति स्वतन्त्रपदाभावेऽपि स्वतन्त्रप्रधानपरिग्रह एवाव्यक्तशब्देनेत्येव पूर्वपक्षस्याशयो वर्णनीयः तादृशं च प्रधानं न श्रौतम्, शरीरस्थानत्वादिति तु सिद्धान्ततात्पर्यम् ॥

"अव्यक्तात् पुरुषः परः इति" तु पूर्वपक्षदृष्ट्या तयोर्विवेकमात्रपरम्, न त्वव्यक्तस्य पराधीनतापरम्, अन्यथा तु न पूर्वपक्षः, न वा साङ्ख्यमतनिराकरणमत्रेति साङ्ख्यमतनिराकरणपरतायां विवक्षितायां पूर्वोक्तरीतिरेवात्र शरणीकर्तव्या ॥

यत्तु—अत्राव्यक्तपदेन प्रधानमेवोच्यते चेदपराधः कः—इति, न कोऽप्यपराधो यदि परतन्त्रं श्रौतं प्रधानं सिद्धान्ताभिमतं विवक्ष्यते, साङ्ख्यपरिकल्पितस्वतन्त्रप्रधानपरिग्रहे तु चेतनब्रह्मकारणतासिद्धान्तविघातो ब्रह्महत्यैव महानपराधस्तत्र । साङ्ख्यमतेन पूर्वपक्षकथाऽत्र स्वतन्त्रप्रधानवादमेव पुरस्करोतीति हि निगदव्याख्यातम् ॥

अजावाक्येऽप्यत्र न प्रधानविवक्षा ।

एतेन—"अजामेकां लोहित-शुक्ल-कृष्णामि"ति विषयवाक्यमधिकृत्य प्रवृत्तं "चमसवदविशेषादि"त्यधिकरणमपि—व्याख्यातम्; अत्रापि तेजोऽबन्नात्मकपरतन्त्रप्रकृतेरेव विवक्षणेन साङ्ख्यपरिकल्पितप्रधानपरिग्रहाभावात्, अन्यथेक्षत्यधिकरणसिद्धान्तविरोधात्, पूर्वोदाहृतगीतादिविरोधाच्च ॥

परेषामीक्षत्यधिकरणव्याख्यानमपव्याख्यानम् ।

यथा चेक्षत्यधिकरणस्यान्यथाव्याख्यानमपव्याख्यानम्, तथा तत्रैव

व्यक्तम् , अन्यथा द्वैतमतेऽपि प्रधानपरिणामकारणतायाः स्वीकारात् तत्परतयाऽजामन्त्रादीनां विवरणासाधुत्वे ब्रह्मनिमित्तकारणतावादोऽपि लुप्यते । तत्र यदि तस्या ईश्वरशक्तिरूपत्वान्न स्वातन्त्र्यम् , तर्ह्यजामन्त्रस्योक्तविधशक्तिपरताव्याख्यानं कुतः ? कुतो वोक्तसाङ्ख्याभिमततत्स्वातन्त्र्यवादस्य न निरासः ?

यदि वाक्यान्तरवशात् , तर्हि घट्टकुट्यां प्रभातम् ; अस्वतन्त्राया एव प्रकृतेरत्र विवक्षेति साङ्ख्यसिद्धान्ताश्रौतत्वस्थापनमप्यधिकरणस्य लक्ष्यमिति हि वक्तव्यम् । अयमेव न्यायः–आनुमानिकाधिकरणविषयवाक्ये, अन्यत्र च साङ्ख्यप्रतिवादोल्लेखवदाभासमानेषु वाक्येषु ॥

द्वैतवादे प्रधाननिरासवैयर्थ्यम् ।

तद् यदि जन्माधिकरणन्यायेन शास्त्रयोनित्वनयेन च सिद्धम् , तर्हि ब्रह्मणः सर्वशब्दवाच्यत्वम् , सर्ववाक्यबोध्यत्वम् , अन्यच्च यद्यदुक्तपादासेयम् , सर्वं "तत्तु समन्वयादि"त्यनेनैव सिद्धम् , इति किमनेन विस्तृतेन प्रथमाध्यायतुरीयपादेन ?

यदि कोष्ठशोधनिकान्यायेन तत्तद्वाक्योदाहरणेन समन्वयतत्प्रयोजनम् तर्हीक्षत्यधिकरण साधितस्यैव प्रथमप्रस्तुतस्य साङ्ख्यमतनिरासस्य समन्वयस्योपक्रमोपसंहारन्यायेनात्रोदाहरणविशेषावलम्बनेन विशदीकरणमद्वैतसिद्धान्तेऽपीति समानम् ॥

सर्वेषां पदानां ब्रह्मपरत्वायोगः ।

सति चैवमद्वैतिनामीक्षत्यधिकरणव्याख्यानं यद्यपव्याख्यानम् , तर्हि द्वैतिनां समन्वयाधिकरणव्याख्यानमपव्याख्यानमिति समानम् । न ह्येकस्य वाक्यस्य, वाक्यघटकतत्तत्पदविशेषाणां वाऽनेकार्थत्वेऽपि तात्पर्यविषयैकार्थत्वमतिरिच्यानेकार्थत्वं सकृदुच्चरितस्य भवितुमर्हति, विशिष्य च वैदिकस्य वाक्यस्य, तत्पदानां वा पौरुषेयागामुच्चारणावृत्तिमात्रेण, इति यदि सर्वेषां ब्रह्मपरत्व एव मुख्यं तात्पर्यम् । तर्हि कर्मकाण्डानां न कर्मणि तात्पर्यम् , इत्यापत्त्या प्रतीक-सम्पदाद्युपासनानि तत्तत्कार्यविशेषाश्च तत्तन्मात्राधिकारिकाः , अधिकारिपरस्य शब्दस्यापि परमात्मपरत्वे साधनपदानाम् अङ्गवाक्यानां सर्वेषां परमात्मपरत्वे च सर्वे विधि-प्रतिषेधाः, विकल्पोत्सर्गापवादाः, सर्वे लौकिक-वैदिकव्यवहाराः, सर्वाणि च शास्त्राणि विधि-प्रतिषेध-मोक्षपराणि, सर्वाणि द्वैतादिभाष्यगतानि पदानि चानन्वितततत्तत्पदार्थमात्रपर्य-

वसन्नानि, अन्वयपदस्यापि परात्मपरत्वेनानन्वितार्थमात्रबोधकत्वाच्च शब्दप्रमाणकथैव लुप्येत ॥

"सर्वे वेदा यत्पदमामनन्ती"ति तु मोक्षपर्यवसायित्वम्, जीव-ब्रह्मैक्य-पर्यवसायित्वं वा साक्षात् परम्परया वा बोधयति—साधनविशेष-तदिति-कर्तव्यतावान्तरफलविशेषादिबोधनद्वारेत्येव वक्तव्यम्, न तु सर्वेषां पदानाम्, वाक्यानां च परमात्मस्वरूपमेव वाच्यविधया प्रमेयमिति ॥

अन्यथा सर्वो लौकिको वैदिकश्च व्यवहारो लुप्येत, कर्मयोग-भक्तियोगादिसाधनोपदेशो मोक्षोपदेशश्चासंभावितः स्यात्। फलसाधनादिपदानामपि ब्रह्मपरत्वात् किं साधनम्? किं फलम्? को वाचार्यादिपदार्थः? परमात्मातिरिक्तः? तत्र यद्यवान्तरं तात्पर्यं सर्वेषां वाक्यानाम्, पदानां च लोकसिद्धेऽर्थेऽपि, तर्हि किं वा प्रयोजनं सर्वेषां वाक्यानाम्, पदानां च परमात्मपरत्वेन समन्वयसिद्धान्तस्य?

द्वैतिनामपि साङ्ख्यमतनिरासावश्यकता।

अस्तु वेक्षत्यधिकरणव्याख्यानं द्वैतिनां नापव्याख्यानमिति, एवमपि जन्मादिसूत्रेण, शास्त्रयोनित्वसूत्रेण च पाञ्चरात्रातिरिक्तागमानामप्रामाण्यव्यवस्थापनात्—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥"

इति वचननिर्दिष्टेषु पाशुपतस्येव साङ्ख्यस्याप्यशास्त्रत्वस्य द्वैत्यभिमतत्वात् साङ्ख्याभिमतस्वतन्त्रप्रधानकारणतावादस्याप्यप्रामाण्यात् तन्निराकरणमपि ब्रह्ममीमांसायां कर्तव्यम् ॥

तत्र च यदि साङ्ख्यसिद्धान्तमेव श्रौतं मन्यमानानां श्रुतीनामपि तत्रैव तात्पर्यं व्यवस्थापयतां च शैवागमपक्षपातिनां श्रुतिव्याख्यानिरसनेन विष्णुपरतासमर्थनवत् निरसनेन ब्रह्मण्येव समर्थनमावश्यकम्, तर्हि स्वतन्त्रप्रधानकारणपरतया कठवल्ल्यादिवाक्यानां योजनं कथं न समुचितम्, इति तदयोग व्यवस्थापनपरतयाऽऽनुमानिकाद्यधिकरणानां विवरणं द्वैतिनामवश्यकर्तव्यम्। अन्यथा—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ॥"

इति वचननिर्दिष्टकापिलसाङ्ख्यस्यापि शास्त्रत्वापत्त्या तस्य, पाञ्चरात्रस्य च सुन्दोपसुन्दन्यायेन परस्परहन्तृत्वापत्त्या च पाञ्चरात्रप्रामाण्यकथाऽप्यस्तमियात् ॥

तथाच कठवल्लीवाक्यगताव्यक्तपदस्य लोकदृष्ट्या, अवान्तरतात्पर्यविषयया वा प्रधानपरत्वं संभवति वा न वेति चर्चैव प्रथमं कर्तव्या, न तु तस्य, अन्वयस्य, पदस्य, वाक्यस्य वा ब्रह्मपरत्वमिति। तत्र चाव्यक्तपदं श्रुतिलिङ्गाभ्यामन्यत्रैव प्रसिद्धमिति कृत्वा खलु "महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इति कठवल्लीवाक्यमत्र विषयतया द्वैतिभिरपि स्वीक्रियते ॥

अव्यक्तादिपदानां परमात्मपरत्वायोगः।

तत्र यद्यव्यक्तपदं परमात्मपरमत्र, तर्ह्यव्यक्तस्यैव परमात्मत्वात् तस्मादपि परः को वा द्वैताभिमतोऽत्र विवक्ष्यते ? सर्वेषां पदानां परमात्मपरत्वमिति सिद्धान्तमवलम्ब्याव्यक्तपदस्य परमात्मपरत्वे—

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।"

इति वाक्यघटकेन्द्रियार्थ-मनो-बुद्धि-महत्पुरुषपदानां सर्वेषामपि परमात्मपरत्वे समाने को वा निर्भरातिशयोऽव्यक्तपदमात्रस्य परमात्मपरत्वव्युत्पादने ? किं बहुना ? वषट्वौषट्-ज्योतिरादिपदानां स्वमनोरथमात्रविजृम्भितव्युत्पत्तिविशेषावलम्बनेन परमात्मपरत्वं व्यवस्थापयतामव्यक्तपदे, पञ्चजनशब्दे, अजापदे, असत्पदे, शून्यपदे, सर्वस्त्रीलिङ्गानामन्येषां च तत्तु समन्वयसूत्रमात्रशरणानाम्—

"यस्य कस्य तरोर्मूलं येन केनापि मिश्रितम्।
येन केनापि भोक्तव्यं यद्वा तद्वा भविष्यति॥

इति न्यायेन का वाऽपेक्षा—विशिष्य परमात्मपरत्वव्युत्पादनस्य सूत्रकाराणाम्, ततोऽपि स्वतन्त्रेच्छानां नियोगपर्यनुयोगानर्हाणाम् ॥

तत्रान्यत्रैव प्रसिद्धानि पदानीत्यत्रान्यत्रपदं यदि शास्त्रान्तरपरम्, तर्हि नाव्यक्तपदम्, पञ्चपञ्चजनपदम्, अजापदम्, असत्पदम्, अन्यद्वा किमपि शास्त्रान्तर एव प्रसिद्धम्। यदि तु शास्त्रान्तरेऽर्थविशेषपरिभाषितपरपदम्, तर्हि साङ्ख्यादिप्रसिद्धार्थपरं श्रौतमव्यक्ता-

दिपदमिति शङ्कानिरासेन वाक्यविशेषाणां तत्सिद्धान्तपक्षपातित्वनिरासेन च तुरीयपादस्यापि वेदान्तवाक्यानां ब्रह्मणि समन्वय एव लक्ष्यमिति भवति, इति शास्त्रान्तर्भावसङ्गतिस्तुरीयपादस्यापि वाक्यविशेषाणां ब्रह्मणि समन्वय एव, न तु पदविशेषाणां ब्रह्मणि समन्वये। "अथातो ब्रह्मजिज्ञासा" इति वेदान्तवाक्यानां ब्रह्मणि समन्वय एव प्रतिज्ञायते—"तत्तु समन्वयादि"ति यस्य परामर्शः, वाक्यान्वयादित्युपसंहारश्च। अत एव न पदमात्रमत्रोदाह्रियते, किन्तु वाक्यमेवात्रापि पादे॥

॥ इत्यानुमानिकाधिकरणम् ॥

———

## ❀ अथ चमसाधिकरणम् ❀

### ॥ चमसदविशेषात् ॥

अजापदस्य प्रकृतिपरतया द्वैतिविवरणनिरासः।

एतेन—"अजामेकामि"त्यत्र अजाशब्देन न तावद्रूढ्या छाग स्वीकर्तुमुचिता, विद्याप्रकरणत्वात्, नापि परं ब्रह्म; लोहितादिरूपत्वाभावात्, भोग्यत्वानुपपत्तेश्च। अत एव न जीवः; भोक्तृतया पृथगभिधानात्, नाप्यन्यत् किञ्चिदचेतनम्; अजननानुपपत्तेः। अतः प्रकृतिरेवाऽजा; जन्माभावात्, लोहित-शुक्ल-कृष्णा च; रजः-सत्त्व-तमोरूपत्वात्। तदनुपक्तश्च जीवः संसरति, असंसक्तस्तु मुच्यत इति सुप्रसिद्धम्। न चेदेवमव्यक्तपदस्य नात्र विषयत्वापत्तिः। न चात्र मन्त्रे परिणामि जडं तेजोऽबन्नलक्षणं प्रतिपाद्यम्, इति मन्त्रोऽयमेतां प्रकृतिमाहेत्येव फलति। तत्र च न कोऽपि दोष इति परास्तम्। यद्येवमुक्तमन्त्रस्य साङ्ख्याभिमतप्रधानपरत्वमेव द्वैतिनां सिद्धान्ते, तर्हि कथं साङ्ख्यमतनिरसनम्? उक्तश्रुत्युपष्टब्धस्य साङ्ख्यसिद्धान्तस्यापि पाञ्चरात्रसिद्धान्तस्येव कथं न प्रामाणिकत्वम्॥

अजामन्त्रे स्वतन्त्रप्रकृत्यविवक्षा।

यत्तु—यद्यत्र जगत्कारणत्वं समर्थनीयम्, तर्ह्यजाशब्दस्यापि ब्रह्मपरत्वं समर्थनीयम्, अन्यथा तु प्रधानरूपताऽपि दुष्परिहरा, इति तेजोऽबन्नात्म-

कत्वसमर्थनं न प्रकृतोपयोगि। यदि तेजोऽबन्नात्मकानि परमेश्वराधीनानि, तर्हि प्रधानमपि तथा, इति किं प्रकृतिपरिग्रहनिराकरणेन ? अतोऽजापदस्य प्रकृतिपरत्वमूरीकृत्य "यो योनिमधितिष्ठत्येकः" इति वाक्यशेषात् तस्यापीश्वराधीनत्वमेवोपपादनीयम्—इति ॥

तदिदं वाक्यशेषापर्यालोचनायामप्युक्तस्य मन्त्रस्य प्रधानपरत्वव्युत्पादनायोगमभिप्रेत्य, "यो योनिमधितिष्ठती"त्यत्र योनिपदार्थस्य योनिपदेनैकेनैकैकस्य जीवस्य प्रकृत्यविवेकस्यैव विवक्षामभिप्रेत्य वा, पूर्वपक्षे प्रकृति-पुरुषाविवेकनिबन्धनत्वात् संसारस्य, इति नेश्वरानधीनत्वमजाया योनिपदवाच्यायाः ॥

अयं हि वाक्यशेषः—"अजो ह्येको जुषमाणोऽनुशेते" इत्यस्यैव विवरणम्; एकशब्देन तदंशस्य प्रत्यभिज्ञानात्, इति जीवात्मनः पूर्वाधिकरणन्यायेन स्थूल-सूक्ष्मशरीरबन्धप्रयुक्त एव संसार इति बोधनमात्रपरस्यास्य सन्दर्भस्याजाशब्दस्य तेजोऽबन्नात्मकप्रकृतिसम्बन्धमात्रनिर्वाह्यत्वात् संसारस्य, तावन्मात्रे तात्पर्यम्, न तु प्रधानसम्बन्धपर्यन्तेऽपि; प्रयोजनाभावादिति विधया साङ्ख्यप्रक्रियाया अत्रानुल्लेखसमर्थनपरतया सूत्राशयवर्णनमेव युक्तम्॥

अजामन्त्रेऽजापदं न जन्माभावाभिप्रायम्।

अजापदं तु "कल्पनोपदेशादि"ति न्यायेन भोग्य-भोक्तृव्यवस्थामुदाहरणद्वारा विवेचयितुं रूपकविधया, न तु जन्माभावाभिप्रायेण, येन तेजोऽबन्नात्मकप्रकृतिरत्राजाशब्दार्थो न स्यात् ॥

अजापदस्य प्रधानपरत्वे दोषः।

यत्तु—अस्य मन्त्रस्य प्रधानपरत्वेऽपि न दोषः—इति, तदिदं शास्त्रयोनित्वसिद्धान्तविरुद्धमिति पूर्वमुक्तम्। "तत्तु समन्वयादिति" सूत्रार्थस्तु द्वैतसिद्धान्ताभिमतः पूर्वमेव निराकृतः, अत्राप्यनुपदमेव सर्वेषां पदानाम्, वाक्यानां च ब्रह्मपरत्वायोगव्यवस्थापनेन ॥

अश्नत इवाऽनश्नतोऽपि, जीवस्यैवात्र ग्रहणम्, न परमेश्वरस्य तदरिक्तस्य।

सत्यं तेजोऽबन्नात्मिकाया अपि ग्रहणं लक्षणयैव, सा तु तात्पर्यानुपपत्त्या। तात्पर्यं ह्यत्रैकस्य तदनुषक्तस्य भोक्तृत्वम्, तद्विपरीतस्य त्वभोक्तृत्वमुपपादयितुम्। तत्रैको भोक्ता जीवो बद्धः, अपरस्तु मुक्तः तदननुषक्तः;

विपरीतस्तु परमेश्वरः। भुक्तभोगत्वं हि तस्य नेश्वरदृष्ट्या, न वा तामनुशयानः परमेश्वरः। भुक्तभोगश्च जीवः, नेश्वरः, नापि तामनुशयानोऽपि, भुक्तभोगायास्तस्या विहाता च। तदुभयं च भोक्तृत्व-तत्परिहाणं जीवस्यैव, न तु परमेश्वरस्य ॥

अजापदस्य प्रकृतिपरत्वनिरासप्रयोजनम्।

न च तत्र जीवस्य साक्षाद् मूलप्रकृत्या सत्तालेशोऽपि। कार्यावस्थतन्मात्रकार्यसूक्ष्मशरीरादिद्वारा भोक्तृत्वादिप्रयोजकभूतसूक्ष्मात्मिकायाः प्रकृतेरेवात्र ग्रहणं युज्यते, न मूलप्रकृतेः परिग्रहे। मूलप्रकृतिमात्रसंसक्तिर्हि प्राकृतलयावस्थायाम्, यदा तदनुशयनपरिहाणे न संभाव्येते, इति मूलप्रकृत्यवस्थाविशेषत्वेऽपि तेजोऽवन्नात्मिकाया एव तस्याः ग्रहणम्, तस्या अपीश्वराधीनाया एव भोगप्रयोजकत्वं तु तस्य जीवाधिष्ठातृत्वेनेति त्वन्यदेतत्, इति प्रकृतिपरत्वनिराकरणमत्र सप्रयोजनम् ॥

न च कथञ्चनेक्षितृत्वमिव भोक्तृत्वमपि प्रधानस्याचेतनस्य, अकर्ताऽपि भोक्ता चेतन एवेति खलु साङ्ख्यानां राद्धान्तः। अत एवेक्षत्यधिकरणादस्याधिकरणस्य विशेषः, इति तेनैवास्य न गतार्थता। रूढिस्त्वजाशब्दस्य न मूलप्रकृतावेव; पुरुषसाधारण्याज्जन्माभावस्य। तथाचोक्तम्—

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥"

इति। अत एव न योगोऽपि; तस्यापि तत्साधारण्यात्। प्रातिपदिकमात्रं हि रूढम्, यौगिकम् योगरूढं वा। तत्त्वीश्वरपरमपि। अत एव—"अजो ह्येक" इति पुरुषातिरिक्तेश्वराभावात् "योनिमधितिष्ठत्येकः" इत्यस्यापि तत्परत्वस्यैव युक्तत्वाच्च नाचेतनप्रधान-तद्विविक्तपुरुषवादिनां साङ्ख्यानामेवात्र ग्रहणमिति शङ्कायाः परिहारः ॥

"भुक्तभोगामजोऽन्य" इत्यत्राजपदमपि न परमात्मपरम्।

"भुक्तभोगामजोऽन्यः" इत्यपि सर्वात्मना विगलितसर्वशरीरस्य प्रत्यगात्मनो ग्रहणमेव द्रढयति। न चैतावता साङ्ख्यमतानिबर्हणम्। भुक्तभोगाऽपि सा कथं न परिणमेतेति शङ्का त्वीक्षत्यधिकरणेन निरस्ता। अजामन्त्रे प्रत्यक्स्वरूपमात्रविवेचनं द्वैतसिद्धान्तसाधारणमपि ॥

अजापदस्य तेजोऽबन्नात्मकप्रकृतिपरत्वमेव।

न च द्वैतमतेऽहङ्कारादिविवेको मुक्तावपि। एतदधिकरणकृत्यं त्वजामन्त्रोपष्टम्भेन साङ्ख्यप्रत्यवस्थानं तदसाधारणप्रक्रियया न भवतीति स्था-

पनम्। तत्तु—अजाशब्देन तेजोऽवन्नात्मकप्रकृतिविवक्षयैव, इति साङ्ख्यनिबर्हणमीक्षत्यधिकरणोपबृंहणेन युज्यते। द्वैतिनां त्वीक्षत्यधिकरणमन्यार्थम्, अजाशब्देन तु मूलप्रकृतेरेव विवक्षा, इति साङ्ख्यमतनिबर्हणमसम्भवि। "योनिमधितिष्ठती"ति वाक्यशेषस्तु साङ्ख्यानुसार्यपीति पूर्वमेवोक्तम्॥

तेजोऽवन्नात्मिकाया अजात्वं तु तस्या नाम-रूपात्मना व्याकरणाभावमभिप्रेत्य, "सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणी"ति तेजोऽवन्नात्मिकायाः प्रकृतेरेव स्वपुरुषविवेकेनापि हिरण्यगर्भजीवभावेन स्रष्टृत्वमिति हि वेदान्तमर्यादा॥

अजाऽनुशयानत्वं जीवस्यैव।

स एव तु तामनुशयानोऽपि। स तु कर्ताऽपि, भोक्ताऽपि, पुरुषस्तु न कर्ता, किन्तु भोक्ता। भुक्तभोगायास्त्यागी तु न साङ्ख्यानां पुरुषः; तस्याभोक्तृत्वात्, इति हिरण्यगर्भात्मनो जीवस्य तेजोऽवन्नात्मकप्रकृत्यनुषक्तेन रूपेण भोक्तृत्वम्, विगलितसततत्सम्बन्धस्य जीवस्य केवलं प्रत्यगात्मनोऽभोक्तृत्वमिति व्यवस्था॥

सर्वं चेदं साङ्ख्यप्रक्रियायां विवक्षितायां नोपपद्यत इति निरूपणार्थं चमसाधिकरणम्। अनेन सूच्यते—नाम-रूपात्मना व्याकृतावस्था जन्यैव। ततः प्राक्तनावस्था जन्मप्रागभावः। अत एव सुषुप्तिर्नित्यप्रलयः, जागरो नित्यसृष्टिरित्युपपद्यते, इति तेजोऽवन्नात्मिकायां प्रकृतावजाशब्दो रूढो वा भवतु, यौगिको वा, उभयथाऽपि न विरुद्ध्यते॥

तेजोऽवन्नात्मकत्वेऽपि स्त्रीलिङ्गैकवचनोपपत्तिः।

अजेति स्त्रीलिङ्गं तु "सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेने"ति वाक्ये तेजोऽवन्नात्मिकाया एव स्त्रीलिङ्गदेवतात्वेनाऽऽम्नानात् तेजोऽवन्नात्मिकाया ग्रहण एवोपपद्यते। प्रधानं तु न स्त्रीलिङ्गमेव, न वा पुमान्, किन्तु तत्र तत्राव्यक्ताव्याकृताक्षरादिपदबोध्यत्वाद् नपुंसकमपि। तेजोऽवन्नात्मिका तु स्त्रीलिङ्गदेवताशब्देन परामृश्यते, इति तत्रैवाजाशब्दस्य स्त्रीलिङ्गस्यापि स्वारस्यम्॥

अत एवैकवचनमपि; "सैषा देवते"त्येकवचनान्तेनैव परामर्शात्। अव्याकृतावस्थामाश्रित्य तथा व्यपदेशः। बहुत्वमप्यव्याकृतावस्थायां स-

त्यमस्ति "तिस्रो देवताः" इति परामर्शात् ; तथापि समुदितात्मनैव तस्यास्त्रिवृत्कारण-नामरूपव्याकरणादि । तदपि तदभिमानिदेवताया एव, इत्यजाशब्दोऽयं नाचेतनपरः, येन पूर्वपक्षस्य परिहारोऽजाशब्देन तेजोऽबन्नात्मिकाया ग्रहणेऽपि ॥

अत एव "कल्पनोपदेशाच्चे"ति सूत्रम् । तेजोऽबन्नात्मकत्वेनाव्याकृतावस्थाया एव देवतायाः स्त्रिया अजाशब्देन, भोक्तुस्त्वजशब्देन परामर्शो भोग्य-भोक्तृभावोऽनयोरिति सूचनेन तेजोऽबन्नात्मकत्वेनैव भोग्यत्वमजायाः न तु समावस्थसत्त्व-रजस्तमोगुणात्मकप्रकृतित्वेनेति ज्ञापयति । तेन हि प्रधानावस्थायां न प्रकृतेर्भोग्यत्वम् ॥

अजादृष्टान्तस्य न मनोरञ्जनमात्रत्वम् ।

सा हि सर्वेषां वैराग्यस्यैव निदानम् । न ह्यनयोर्भोगवर्णनेन, तत्सादृश्यसूचनेन च कस्यापि मनोरञ्जनम्, किन्तु शरीराभिमानत्यागप्रयोजकं वैराग्यमेव श्रुतेर्लक्ष्यम्, येन पामरमनोरञ्जनं नेदं काव्यमिति कथा सावकाशा स्यात् । अतोऽजामन्त्रेऽपि प्रधानवादशङ्कोत्थानपरिहारद्वारा ब्रह्मपरत्वं निर्धार्यते ; अन्यथा—"अजामनुशेतेऽजः" इत्यादीनां कथमन्वयः ? न चात्रान्येषां पदानामपि परमात्मातिरिक्तपरत्वमेव, न परमात्मपरत्वमिति द्वैतवादे संभवति ॥

द्वैतवादे चमसाधिकरणवैयर्थ्यम् ।

वस्तुतस्तु—प्रकृत्यधिकरणे सर्वेषां स्त्रीवाचकानां ब्रह्मपरत्वव्यवस्थापनात् तेनैव न्यायेनाजाशब्दस्यापि स्त्रीलिङ्गस्य संविन्मात्रपरत्वनिर्णये व्यर्थमिदमधिकरणं द्वैतमते ॥

वैदिकशब्दानां मुख्य-मुख्यतमत्वविभागायोगः ।

एतेन—अजादिशब्दाः परममुख्यया वृत्त्या ब्रह्मपराः, मुख्यमात्रतया प्रधानस्यापि प्रतिपादका इति—परास्तम् ; अजाशब्दस्यात्र प्रधानपरतया एव पूर्वोक्तरीत्याऽयोगात् । न हि वैदिकानां वचसां केवलमुख्यम्, मुख्यतमं चार्थद्वयं प्रामाणिकम् ; 'य एव लौकिकास्त एव वैदिका' इति न्यायविरोधात्, अलौकिकस्यार्थस्य तात्पर्यानुपपत्त्या लक्षणैकनिर्वाह्यत्वेनार्थद्वये मुख्य-मुख्यतमत्वयोरप्रामाणिकत्वात् ॥

मुख्यतमवृत्त्याऽजामन्त्रस्य न परमात्मपरत्वम् ।

सूत्रकारस्यापि सति बाधे एकत्र गौणार्थत्व एव तात्पर्यात्, वैदिकानां

वचसामुक्तपरमार्थमात्रपरत्वे मुख्यतमे संभवत्यमुख्यार्थबोधकत्वापत्त्याऽऽकाङ्क्षा-योग्यताऽऽसत्ति-तात्पर्यानुसारेणैव वाक्यार्थस्य वर्णनीयतया केवलप्रातिपदिकार्थमात्रविवक्षया परमार्थबोधकत्वेऽन्विताभिधानसिद्धान्तप्रसङ्गेऽखण्डार्थत्वखण्डनायोगात्, कर्मोपासनादिविधि-निषेधादिवैयर्थ्येन सर्वव्यवहारविलयापत्तेः, एकस्य वाक्यस्य विनाऽऽकाङ्क्षा-योग्यतादिकं वाक्यार्थद्वयपरत्वायोगाच्च नाजादिशब्दानामर्थद्वयपरत्वमपि तात्पर्येण संभवति। मुख्यतमस्त्वर्थो न रूढ्या, किन्तु योगेनैव स्वमनोरथमात्रविजृम्भितेन, इति "योगाद् रूढिर्बलीयसी"ति न्यायविरुद्धमजादिपदानां परमात्मपरत्वम्॥

एकस्य वाक्यस्याबाधे प्रथमप्रतीतार्थबोधकत्वमेव।

तथाहि--अस्ति तावद्विदितपद-तदर्थसङ्गतिकस्याधिगतशब्दन्यायस्याजादिश्रवणे प्रधानस्य प्रथमं प्रतीतिः। सा च स्वतः प्रमाणम्। अप्रामाण्यं तु तस्या बाधकप्रमाणाधीनम्। तथाचार्थद्वयस्य शब्द-बुद्धि-कर्मणां विरम्यव्यापाराभावाद् न युगपद् बोधः प्रमात्मको भवितुमर्हति॥

अत्र चैकस्यार्थस्य प्रसिद्धस्यान्वयबोधेनैवैकस्य वाक्यस्य चरितार्थत्वादर्थान्तर आकाङ्क्षाया अभावात् तेनैवाबाधितेन निर्वाहाद् नार्थान्तरपरत्वमपि। न च मुख्य-मुख्यतमयोर्यौगिक-रूढयोर्वा मुख्यस्य, रूढस्य वाऽबाधिते बोधेऽर्थान्तरपरत्वमपि प्रामाणिकम्। अतः प्रथमप्रतीतार्थपरित्यागेन नार्थान्तरपरत्वमेकस्य वाक्यस्य युक्तम्; अन्यथा लवणेच्छया प्रयुक्तस्य सैन्धवशब्दस्य बुध्यारूढाश्वपरत्वमप्यापद्येत; उभयेच्छया प्रयुक्तस्यापि तस्यावृत्त्यैव हि वाक्यार्थद्वयबोधकत्वम्॥

न च वैदिकेऽपौरुषेय एकत्रार्थद्वयतात्पर्येण प्रयोगकल्पनायां किमपि प्रमाणम्। "सर्वे वेदा यत्पदमामनन्ती"ति तु न सर्वेषां पदानां परमात्मपरत्वमभिप्रेत्येति पूर्वमेवोक्तम्। न च सर्वेषां पदानां परयोगेन परमात्मपरत्वे विशेषण-विशेष्यभावनियामककारणाभावात् पदमात्रस्यान्वितबोधकत्वस्याप्रमाणत्वाच्चार्थद्वयबोधकस्यापि प्रमाणत्वं संभवति। न चात्राजाशब्द उपादानपरः, निमित्तकारणमात्रब्रह्मपरो वा भवितुमर्हति, इति प्रधानपरत्वं वा त्याज्यम्, ब्रह्मपरत्वं वा, नोभयपरत्वम्। तत्राद्ये "जनयन्तीं सरूपामि"त्यनन्वितम्, इति तेजोऽबन्नात्मकपरत्वमेवात्र॥

## ॥ इति चमसाधिकरणम् ॥

## ❀ अथ सङ्ख्योपसंग्रहाधिकरणम् ❀

॥ न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥

अस्यापि साङ्ख्यमतनिरासार्थत्वम् ।

इदमपि साङ्ख्यस्य प्रकारान्तरेण प्रत्यवस्थितस्य निरासार्थमेव; पञ्च-पञ्चजनशब्देन तत्र प्रकरणे पञ्चविंशतितत्त्वानामेव बोधस्यासंभवात् । द्वैतमतेऽपि यत्र पञ्चजनशब्दस्य पञ्चव्यूहात्मकपरमात्मपरत्वम्, तत्रापि "यस्मिन्नि"ति सप्तम्यन्तमनन्वितम् ॥

पञ्चपञ्चजनपदस्य न साङ्ख्यतत्त्व-
परत्वम्, न वा पञ्चव्यूहपरत्वम् ।

तत्र प्रथमतः पञ्चपञ्चशब्दस्य पञ्चविंशतिपरत्वं नास्ति; पञ्चशः पञ्चशः साधारणधर्माभावात्, इति नात्र साङ्ख्यमतस्योत्थितिः । द्वितीयतस्तु— "यस्मिन्नि"ति निर्दिष्टात्मनः "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति प्रतिष्ठात्वेन निर्दिष्टस्य पञ्चविंशतिसङ्ख्यातीतस्य षड्विंशस्याधिकस्य निर्देशो हि साङ्ख्यपक्षमत्र प्रतिक्षिपति । अतो न साङ्ख्यानां प्रत्यवस्थानावसर इति सूत्रानुसारिणी योजना । पञ्चव्यूहपक्षे तु नानाभावातिरेकयोरपर्यायत्वम्, व्यूहानामभिन्नानामपि भेदेऽपि—

"अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्" ॥

इत्युक्तरीत्या भेदाभेदयोरुभयोरपि वक्तव्यत्वे भेदमात्रोल्लेखोऽसङ्गतः ॥

पञ्चपदेनैव सिद्धस्य नानारूपस्य पुनरपि नानाभावादित्युल्लेखः पुनरुक्तिदोषग्रस्तः, "यस्मिन्नि"ति सर्वेषां परमात्माभिन्नत्वात् भेदव्यपदेशानुपपत्तिः, तेनापि विशेषनिर्वाह्यभेदस्य विवक्षणे नानाभावात्, अतिरेकाच्चेति हेतुकथनमसङ्गतम् । अतो नात्र व्यूहविवक्षया पञ्चपञ्चजनशब्दयोर्मिलितयोः परमात्मनः पञ्चव्यूहपरत्वम् ॥

पञ्चशो विभागे न पञ्चविंशतितत्त्वप्रतीतिः ।

तत्र यद्यपि पञ्चभिर्महाभूतैः, पञ्चभिस्तन्मात्रैः, पञ्चभिः कर्मेन्द्रियैः, पञ्चभिर्ज्ञानेन्द्रियैश्च पञ्चशः पञ्चशश्चतुर्णां साधारणो धर्मो वर्तते, न तु

पञ्चानाम्। तत्राकाशस्य पञ्चभूतेषु पञ्चतन्मात्रे चान्तर्भावात् पृथक्करणात् न प्रथमे, द्वितीये वा गणेऽपि न प्रवेशः उपपद्यते, इति पञ्चशः पञ्चशः पञ्चविंशतितत्त्वप्रक्रिया न प्रामाणिकी ॥

अत एव न तदनुसारीदं वाक्यमपि। सर्वथा तु कार्य-कारणात्मकस्य सप्रधानस्य चतुर्विंशतिगणस्य ग्रन्थान्तरसिद्धस्यापि नात्र पञ्चपञ्चजनशब्देन ग्रहणं संभवति। "न सङ्ख्योपसंग्रहादपी"ति सूत्रमपि पञ्चशः पञ्चशः सङ्ग्राहकधर्माभावेनैव सांख्यमतप्रत्यवस्थानमत्र निरुणद्धि। "सप्त पञ्च च वर्षाणि" इत्यत्रापि द्वादशवर्षाणां प्रतीतिर्न स्यात्। तत्र सङ्ख्याद्वयस्य समुच्चयमात्रं विवक्ष्यते। न चैवमत्र सङ्ख्याद्वयस्य समुच्चयेन दशसङ्ख्याया ग्रहणम्, किन्तु पञ्चविंशतिसङ्ख्यायाः। तच्च पञ्चश एकीकृतस्य समुदायस्य प्रत्येकं पञ्चत्वविवक्षयैव, इति पञ्चशः पञ्चशो गणस्य व्यवस्थां विना नोपपद्यते, इति नात्र पञ्च-पञ्चजनशब्दाभ्यां पञ्चविंशतितत्त्वानां संग्रहः संभवति। अयमेवाशयः—"न साङ्ख्योपसंग्रहादि"तिसूत्रस्यापि ॥

एतेन—

"व्रतमेतदनुष्ठेयं वर्षाणि नव पञ्च च।"

इत्यपि—व्याख्यातम् ॥

अस्तु वा कथञ्चन पञ्चविंशतिसंख्याया अत्र परिग्रहः; तथापि अतिरिक्तमपि पञ्चविंशतिभ्य आत्मस्वरूपमत्रोल्लिखितम्। न चैतत् पञ्चपञ्चजनशब्देन पञ्चविंशतिसंख्याग्रहण एवोपपद्यते। "यस्मिन्नि"तीश्वरस्य; षड्विंशस्य तत्त्वस्यापि ग्रहणात्। अतिरेकनिर्वाहस्तु, सत्यम्, पातञ्जलमते संभवति; तावताऽपि सांख्यप्रत्यवस्थानायोगस्य स्वीकारात् सांख्यप्रत्यवस्थानायोगः सूत्रकाराभिप्रेत इति सम्प्रतिपन्नत्वात् घट्टकुट्यां प्रभातम्। प्रथमाध्याये समन्वयाख्ये वेदान्तवाक्यानामपि "सदेवे"त्यादीनामिव "यस्मिन् पञ्च पञ्चजना"इत्यस्यापि स्वमतानुसारेण योजनं तदीयशास्त्रदृष्ट्या सूत्रकारैर्निरस्यमेव, इति पञ्चपञ्चजनशब्दस्यापि पञ्चविंशतिसंख्यापरत्वम्, जनशब्दस्यापि तत्त्वपरत्वं परिभाषामात्रेण सांख्यानां विवरणं चादायैवोक्तसूत्रप्रवृत्तिः ॥

पञ्चपञ्चसङ्ख्यायाः पञ्चविंशतिसङ्ख्यापरत्वायोगस्तु सिद्धान्तयुक्तिः, इत्यन्यथा तद्वाक्यार्थं मत्वा पूर्वपक्षस्यान्यथा सम्यगर्थबोधकत्वेन सिद्धान्तोपपत्तिः। तत्र "साङ्ख्यप्रत्यवस्थानस्य नोत्थिति"रपीति वादस्तु

सिद्धान्तवादः। तत्र युक्त्यन्तरमभिप्रेत्यापि यदि भवति, भवतु तर्हि, न नो हानिः। साङ्ख्यप्रत्यवस्थानायोगसिद्धान्तस्तु सर्वथा सुदृढः। द्वैतमते तु पञ्चजनशब्दः पञ्चशब्दसामानाधिकरण्ययोग्यः कोऽपि न प्रसिद्धः, यदि तदुक्तरीत्या पञ्चपञ्चजनशब्दस्य यथाकथञ्चित्पञ्चविंशतितत्त्वेऽप्रसिद्धिः, इति नात्र पादे तस्य परमात्मपरत्वव्युत्पादनम्; प्रसिद्धार्थमनपहायोभयार्थत्वं वेति नान्तर्भावसङ्गतिरस्याधिकरणस्य॥

व्युत्क्रमेणेक्षत्यधिकरणार्थमाद्येनाधिकरणत्रयेणोपपाद्य "वाक्यान्वयात्" इत्यनेन समन्वय-शास्त्रयोनित्वाधिकरणार्थं विविच्य च जन्माद्यधिकरणार्थस्याभिन्ननिमित्तोपादानत्वस्य ब्रह्मणो विवर्तमानतारूपत्वेनोपसंहर्तुमधिकरणम्—प्रकृतिश्चेत्यादि। अत्र प्रतिज्ञा-दृष्टान्तानुपरोधो विवर्तोपादानत्वेनैव, न तु ब्रह्मणः परिणामित्वेन; तस्यासंभवात्, नापि निमित्तकारणत्वमात्रेण, निमित्तकारणविज्ञानेन सर्वविज्ञानासंभवात्, इति परिशेषाद् विवर्तोपादानतायां पर्यवसानम्॥

ब्रह्मविवर्तमानत्वे श्रुति-सूत्रस्वारस्यम्।

उपादानत्वं तु ब्रह्मणः "यतो वा इमानि भूतानि जायन्ते। यत्प्रयन्त्यभिसंविशन्ती"ति प्रपञ्चजन्म-लयाधिष्ठानत्वाभ्याम्। उपबृंहणं त्वस्य "अभिध्योपदेशात्" "साक्षाच्चोभयाम्नानात्" "सोऽकामयत बहु स्यां प्रजायेय" "सर्वाणि ह वा भूतान्याकाशादेव समुत्पद्यन्ते" "आकाशं प्रत्यस्तं यन्ति" "सैषक् तत् सामे"ति चोपादानत्व-तन्निमित्ततादात्म्योपदेशाभ्यामपि॥

तत्र "तदाऽऽत्मानं स्वयमकुरुते"ति विशदं तादात्म्यमुपदिशति श्रुतिः। परिणामश्चात्र स्वावरकाविद्यापरिणामात्मना भानम्, न तु स्वयं परिणामित्वम्; निर्विकारश्रुतिविरोधात् "सच्च त्यच्चाभवत्" "सत्यं चानृतं च सत्यमभवदि"त्यादिश्रुतयोऽप्यत्रानुसन्धेयाः॥

तत्र सद्द्वयस्य ब्रह्मणः सत्यानृततादात्म्यमुपदिश्यमानं ब्रह्मकार्यस्य, तद्विवर्तस्य वा व्यावहारिक-प्रातिभासिकान्यतरत्वं ज्ञापयद् ब्रह्मविवर्तोपादानतां द्रढयति। एतदेवाभिप्रेत्य तत्र प्रकृतिश्चेति पदमतिरिच्य योनिपरमपि, तेन हि ब्रह्मण उपादानत्वमविकारेणेति ज्ञाप्यते॥

इदं चोपादानत्वं न ब्रह्मणः प्रमाणान्तरविरुद्धम्। श्रुतयस्तु पूर्वोदाहृतास्तदुपपादयन्त्यो न तत्र विरुध्यन्ते। न चेदमुपादानत्वं ब्रह्मणो विका-

रित्वेन; तस्यापरिणामित्वात्। स्वोपाधिमायापरिणामजगदात्मना भानमात्रेण हि शुक्त्यवच्छिन्नचैतन्यस्य तदाश्रिततूलाविद्यापरिणात्मतया भानमात्रेणेव। अतोऽविकृतत्वं ब्रह्मण उपादानत्वेऽपि ॥

ब्रह्मणो निरवयवस्य विवर्त एव जगत्, न परिणामः। अत एव मिथ्यात्वमपि तस्य।

तदेव भवति, यत् सावयवम्। न च ब्रह्म सावयवम्, येन कृत्स्नप्रसक्तिः; निरवयवत्वाद् ब्रह्मणोऽविद्याश्रय-विषयस्य शुद्धस्य, यदेवाविद्याविषयतयोपादानम्। तदुक्तत्—"श्रुतेस्तु शब्दमूलत्वादि"ति ॥

रज्जोरविकृताया भुजङ्गाकारेणेव ब्रह्मणो जगदात्मना भानमात्रमेव। अत एव "सदेव सोम्येदम्" "एकमेवाद्वितीयम्" "नेह नानाऽस्ति किञ्चने"-त्यादिश्रुतयो जगतो मिथ्यात्वप्रतिपादनपराः। मिथ्याजगदधिष्ठानत्वमेव तदात्मना विवर्तमानत्वम्, उपादानत्वं वा ब्रह्मणः, नान्यत् किमपि। ब्रह्माश्रयानिर्वचनीयाविद्यापरिणामत्वाद् जगदपि मिथ्या, अनिर्वचनीयं वा; परिणामि-परिणामयोः समसत्ताकत्वात्। न चैतावता ब्रह्मसार्वज्ञानुपपत्तिः; सर्वाकारस्वाश्रयाविद्यापरिणामवृत्त्या सार्वज्ञोपपत्तेः। ब्रह्मणोऽज्ञानाश्रयस्य तत्त्वादप्रच्युतस्य स्वविपरीतासत्याकारावभासलक्षणविवर्तत्वाद् मृषात्वमविद्यापरिणामस्येति तु निष्कर्षः ॥

विवर्तमानत्वेऽपि ब्रह्म न जीववत् दुष्टम्।

अयं भावः ब्रह्मैव स्वाश्रयाविद्यया जगदाकारेण विवर्तते, यथा जीवः स्वप्ने स्वाश्रिततूलाविद्यया स्वाप्नरथाद्यात्मना विवर्तत इति केचन। बिम्बस्थानीयं ब्रह्म स्वाश्रितमायाशक्तिमत् कारणम्। तत्र चैतन्यांशस्य विवर्तोपादानत्वम्, विशेषणभूतमायायास्तु परिणाम्युपादानत्वमिति परे। तत्रेश्वरोऽपि प्रतिबिम्ब इति तु प्रकटार्थकारादयः। उभयत्रोपाधेः प्रतिबिम्बपक्षपातित्वादविद्यागता दोषा जीवमेवाश्रयन्ति। अत्र प्रकटार्थकारमते ईश्वरः कारणम्, न कार्यजगदाश्रयत्वेन। जीवस्तु तत्कार्यान्तःकरणप्रतिबिम्बस्तद्गतदोषाश्रयः। अन्यत्र त्वविद्यायास्तदवस्थाविशेषान्तःकरणादेश्च दोषाः सर्वेऽपि जीवाश्रिता इति विवेकः ॥

अविद्या निमित्तकारणमात्रमिति ब्रह्मसिद्ध्यादिकल्पेऽपि न ब्रह्मविवर्तताहानिः।

अविद्योपहितं जीवचैतन्यं कारणम्। आश्रयत्वमुपाधित्वं चेत्यनर्था-

न्तरम्, इति जीवाश्रयाविद्योपबृंहणद्वारा सा निमित्तकारणमात्रम्। अविद्याविशिष्टस्तु बद्धोऽविद्यादोषाक्रान्त इति ब्रह्मसिद्धि-तत्त्वशुद्धि-भामतीकारादयः। तत्रोपाधित्वमविद्यायाः कार्यानन्वयित्वेन, इति नाविद्याऽप्युपादानम्, किन्तु निमित्तकारणमात्रमिति तदाशयः। शुद्धं तु ब्रह्म न कारणम्, न वा कार्यम्, किन्तु जीवाश्रयाविद्यावृतं जगदाकारेण शुक्तिरूप्यादिकमिव, स्वाप्ना इव वा मायामात्रम्—परिणामिकारणापेक्षम्, तदनपेक्षं वा स्वप्रकाशमपि ॥

अनेकाविद्यावादेऽपि प्रपञ्चैकीरूप्यं विशेषः।

प्रमाणजन्यवृत्त्या निवृत्तायामविद्यायामनावृतसंविन्मात्रमिति तु वस्तुस्थितिः। तत्र प्रतिजीवमविद्याभेदेऽपि विवर्तमानस्य ब्रह्मण एकत्वात् सर्वेषां जीवानामेकरूपप्रपञ्चावभासो न विरुध्यते, अनेकावगतद्वितीयचन्द्रवत्। इयान् विशेषः—द्वितीयश्चन्द्रमास्तूलाविद्याविषयावच्छिन्नचैतन्यविवर्तः, जगत्तु मूलाविद्याविषयब्रह्मविवर्तः। तत्राविद्याश्रयो न जीवः; तदुपहितत्वादविद्याश्रयत्वस्य, तद्विशिष्टत्वात् तद्दोषभाक्त्वाच्च जीवस्य, न वा शुद्धं ब्रह्म तदाश्रयः; अनावृतचैतन्यमात्रत्वात् तस्य ॥

अविद्योपधानेऽपि ब्रह्मणो न भ्रान्तत्वम्।

तथा च नोपहितस्य, शुद्धस्य वा भ्रान्तत्वम्, किन्तु विशिष्टस्यैवाविद्यावच्छिन्नस्य, इति शुद्धस्य ब्रह्मणोऽसार्वज्ञापत्तिर्न दूषणम्; तस्य तदनिष्टत्वात्। उपहितस्य हि तत्र सार्वज्ञम्। सर्वेषां ज्ञानं तु तत्र साक्षिणा, न त्वन्तःकरणपरिणामेन: सर्वकारणस्य तस्य स्वाश्रितसर्वतादात्म्येनैव सार्वज्ञम्। व्यक्तं चैतत् सिद्धान्तलेशसङ्ग्रहे। द्वैतमतेऽपि ब्रह्मणः सार्वज्ञं साक्षिभास्यत्वेनैव; "तदैक्षते"त्यादीनां तथैव मतद्वयेऽपि तात्पर्यात्, इति न "यः सर्वज्ञः" इति श्रुतिवैयर्थ्यम्; सार्वज्ञस्य जड-जीव-शुद्धब्रह्मातिरिक्ताविद्योपहितधर्मत्वात् ॥

अनाद्यज्ञानकल्पितसच्चिदादिभेदेन ज्ञाताज्ञातांश-

वत्त्वादधिष्ठानत्वं ब्रह्मणः।

यत्तु—ब्रह्मणो विशेषाभावाद् विशेषरूपेणाज्ञानाभावाच्च नाधिष्ठानत्वं सर्वेष्वपि प्रस्थानेष्वविद्याया जीवाश्रयत्व-ब्रह्माश्रयत्वादिपक्षेषु—इति, तदिदमनाद्यविद्यासम्बन्धकल्पितत्वादनादिसच्चिदादिभेदस्य सच्चिदात्मना ज्ञानेऽप्यनानन्दतापादकाज्ञानवशादानन्दात्मना विशेषरूपेणावरणेन भ्रम-

निर्वाहात् सच्चित्तादात्म्याध्यासमात्रेण सर्वप्रपञ्चभ्रमनिर्वाहसंभवाच्च न क्षोदक्षमम्। अविद्याकल्पितं सच्चिद्रूपं ब्रह्म स्वप्रकाशतया सिद्धमप्यानन्दात्मनाऽज्ञानात्, आनन्दात्मना सिद्धत्वाच्च नाधिष्ठानत्वानुपपत्तिरिति तु विवेकः॥

तत्राविद्या नाविद्यावच्छिन्नजीवाश्रया, न वा ब्रह्माश्रया, किन्त्वज्ञानोपहितत्वमात्रेणाज्ञानाश्रयो जीव इति ब्रह्मसिद्ध्यादयः, इत्यविद्यावच्छिन्नजीवाश्रयत्वमेवाविद्यायास्तन्मत इति कृत्वा तद्भ्रान्त्याश्रयत्व-भ्रान्तिकल्पितत्वयोरन्योन्याश्रयादिदोषोद्भावनं भावानवबोधनिबन्धनम्, न तु वस्तुस्थितिकथनम्॥

अनादित्वादविद्योपधानस्य नान्योन्याश्रयः।

यथा बिम्ब-प्रतिबिम्बयोस्सत्यप्यौपाधिके भेदे स्वरूपत ऐक्यम्, एवमत्र जीव-ब्रह्मणोः संविन्मात्रस्वरूपेणैक्यम्, औपाधिकस्तु भेदोऽपि। सोऽप्युपाधिरूपाविद्याकल्पितत्वादनात्मप्रपञ्चवत् कल्पितः। तत्र चानाद्यविद्यारूपोपाधियोगोऽप्यनादिः। तत्प्रयुक्तदेहेन्द्रियाद्यध्यासः सर्वोऽप्युपहितस्य कल्पित एव, अविद्योपधानमात्रेण तदाश्रयत्वम्, इति तद्विषयस्यैवाऽधिष्ठानत्वोपपत्त्या न पूर्वोक्तरीत्याऽन्योन्याश्रयः॥

ब्रह्ममीमांसाभाष्यवार्तिकं तु जीवाश्रयत्वपक्षोऽविद्योपलक्षितचैतन्याश्रयत्वपक्ष एव, इति फलतो ब्रह्माश्रयत्वपक्षादविशेष प्रतिपादयति। जीवाश्रयत्वपक्षे ब्रह्मणः सर्वज्ञस्वप्रकाशाविद्योपहितसंविन्मात्रसाक्षिवेद्यत्वेनैव सार्वज्ञमिति कल्पस्यैव स्वीकारस्य पूर्वमुक्तत्वाद् न रजतादिवत्, सुखादिवद्वा साक्षिमात्रभास्यत्वं प्रपञ्चस्याननुमतमत्र॥

परस्पराध्यासोऽधिष्ठानांशमात्रे संसर्गाध्यासेनैव।

देहेन्द्रियादिकमस्मिन् कल्पे कल्पितमेव भाति, न त्वकल्पितेन रूपेण; अनादित्वाद् देहाध्यासस्य। तदुक्तम्—"अहं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इति। न केवलं देहेन्द्रियादि, किन्तु सर्वमपि जगदविद्योपहिते, तदाश्रये वा कल्पितमेव; अनादित्वाद् देहेन्द्रियाद्यध्यासानाम्, पूर्वोक्तरीत्याविद्योपहितस्य, तदुपलक्षितस्यैव वाऽध्यासाधिष्ठानत्वाद् नाधिष्ठानमप्यध्यस्तमत्र, इति नान्योन्याश्रयप्रसरः। तत्र

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"

इति वचनात् सर्वेषु दर्शनेषु मायास्वीकर्तृषु मायेश्वरमाया-तद्योग-जीवानामनादित्वस्वीकाराद् नाज्ञानमज्ञानान्तरकल्पितम्; तद्धि स्वतः सिद्धत्वात् स्वसिद्ध्यर्थं नाध्यस्तं किञ्चिदपेक्षते। द्वैतमतेऽपि भावरूपमज्ञानमनादिजीवस्वरूपाच्छादयितृ जीवगं च स्वीक्रियत एव ॥

जीवः सत्यो नाज्ञानकल्पितः न वाऽज्ञानाश्रयः, किन्त्वज्ञानोपहितः, तदुपलक्षितो वेति पूर्वमुक्तत्वाद् दोषसाम्यम्, परिहारसाम्यमुभयत्र भ्रान्तेर्जीवाश्रितत्वं त्वविद्यावच्छिन्नस्य, योऽध्यस्तः, नाज्ञानोपहितस्योपादानस्येति व्यक्तमन्यत्र। तत्रोपहितावच्छिन्नजीवयोर्जीवेश्वरयोर्वा भेदोऽतदनाश्रितानाद्यविद्याकल्पितस्तत्प्रयोजकमज्ञानमिवाखण्डाकारसाक्षात्कारनिवर्त्यत्वादनादिरपि बाध्यः, मिथ्या चेति व्यक्तं तत्र तत्र। अविद्याया आरोपो ब्रह्मणीति प्रस्थानान्तरम्, उपहितमेवोपाध्यारोपमात्रादधिष्ठानमिति तु प्रस्थानान्तरम् ॥

### अज्ञानस्य जीवाश्रयत्वपक्षे नान्योन्याश्रयः।

अत एव जीवाश्रयाज्ञानवादोऽपि व्याख्यातः। अविद्योपहितस्य तदुपलक्षितस्यैवानादेरनाद्यविद्याश्रयत्वाद् नान्योन्याश्रयः। न चात्र बीजाङ्कुरन्यायेनानादित्वम्; ईश्वरमायादिवत् तदुपहितस्य नित्यसिद्धानादित्वात्, इति बीजाङ्कुरन्यायमादाय दूषणानां नात्र सम्भावनाऽपि ॥

### देहाध्यासे बीजाङ्कुरन्यायादोषताऽनवस्था वा।

देहाध्यासस्तु तत्र व्यक्तिभेदाद् बीजाङ्कुरन्यायेनोपपद्यते। न च बीजाङ्कुरस्थलेऽनादिवादचर्चा, येनानादिसर्गे देहादिदर्शनानुपपत्तिः। अज्ञानस्य साक्षिसिद्धत्वादादिसर्गे तदात्मना देहादिरपि साक्षिसिद्धः। देहादिरूपेणात्मनो भानं तत्र देहादेरध्यासेनैव, न तु कर्माधीनतया। अत एव नित्यमशरीरत्वम्; अकर्मनिमित्तत्वात् सशरीरत्वस्य। बीजाङ्कुरन्यायस्तु कर्मनिमित्तत्वे सशरीरत्वस्यान्धपरम्परा। अतो देहाद्यध्यासस्य पूर्व-पूर्वाध्यासनिमित्तत्वे नानवस्थादोषः। अन्यथा तु स दोष एव। न च शरीराध्यासस्याज्ञाननिमित्तत्वे किमपि प्रमाणम् ॥

### प्रपञ्चमिथ्यात्वे "नेह नानाऽस्ती"ति श्रुतिर्मानम् ॥

"नेह नानाऽस्ती"त्यादिश्रुतेरपि तत्र प्रमाणत्वात्, अन्यथा सशरीरत्वस्वाभाविकत्व आत्मनि स्वेतरसर्वनिषेधो नोपपद्यते। न च "नेह नानाऽस्ती"ति प्रतिपन्नोपाधौ देहादेर्निषेधोऽनुपपन्नः; येनो-

पपत्तिविरुद्धत्वाद् नायं तद्वाक्यार्थः स्यात्। "अन्धो मणिमविन्ददि"-ति वाक्यं च न प्रमाणं स्यात्। पराक्रान्तं च प्रतिपन्नोपाधौ त्रैकालिक-निषेधप्रतियोगित्वेऽद्वैतसिद्ध्यादौ, न्यायामृतार्णवपरीक्षापर्यन्ते, इति नानु-पपत्तिशङ्कोत्तिष्ठति ॥

स्वरूपतो मिथ्याभूतायाः श्रुतेर्विषयतोऽपि न मिथ्यात्वम्।

न चैवं सति विचारशास्त्रानवस्थापत्तिः; भाविबाधदृष्ट्यैव मिथ्या-त्वेन यावद्ब्रह्मसाक्षात्कारमज्ञानवतामेव दूरमात्रेण विचारादिसर्वव्यव-हारोपपत्तेः। तदुक्तम्—"तमेतमात्मीनात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेध-मोक्षपराणि" इति। सत्यम्, वियदादिकमिव महावाक्यमपि स्वरूपतो मिथ्या; तथापि विषतो नाखण्डाकारसाक्षात्कार-बाध्यम्; तत्त्वसाक्षात्कारस्य बाधकत्वं ह्यज्ञान-तत्प्रयुक्तान्यतरमात्रविषयम्; अन्यथा शुक्तिज्ञानेन रजतादेरिव शुक्तेरपि बाधापत्त्या शुक्तिज्ञानस्य रजतबाधकत्वं बाध्येत ॥

ब्रह्मणोऽबाध्यत्वं मुक्तौ।

तत्र यदि रजतोपादानशुक्त्यज्ञान-तत्प्रयुक्तयोरेव शुक्तिज्ञानबाध्यत्वम्, न तु शुक्तेः, तस्यास्तत्प्रयोजकमूलाज्ञानस्य च ब्रह्मसाक्षात्कारमात्रबाध्य-त्वात्, तर्हि ब्रह्मसाक्षात्कारबाध्यत्वमपि मूलाज्ञान-तत्प्रयुक्तयोरेवेति वक्त-व्यम्। न च ब्रह्मापि श्रुतिरिव मूलाज्ञानप्रयुक्तम्, येन तस्यापि बाधः स्यात् ॥

आरोपितस्याप्यर्थक्रियाकारिता।

न चारोपितस्य मिथ्याभूतस्यार्थक्रियाकारित्वायोगः; अर्थक्रिया-कारिताया अबाध्यत्वरूपसत्त्वाप्रयुक्तत्वात्, सत्त्वासत्त्वौदासीन्येनापरो-क्षतया, परोक्षतया वाऽसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टस्यार्थक्रि-याकारित्वाविरोधात्। न च स्वरूपतस्त्रिकालाबाध्यमखण्डं संविन्मात्रम-र्थक्रियाकारि। अत एव मायोपहितस्यैव जगत्कारणत्वमुपाधितो बाध्यस्यापि। अयमेव न्यायो घटादेरपि। किं बहुना? बाधितस्य शुक्तिरूप्यादेरपि यावच्छुक्तितत्त्वसाक्षात्कारं रजतलाभनिबन्धनानन्दानुभवः सर्वसिद्धः, इदङ्काराभिमुखी च रजतार्थप्रवृत्तिः। तद्वैफल्यं तु शुक्तितत्त्वसाक्षात्का-

रानन्तरमकिञ्चित्करमिति व्यक्तमत्रैवाधस्तात् प्रथमसूत्रे। तत्र यद्यप्याध्यात्मिकस्यैव प्रसङ्गः ; तथापि बाह्यस्यापि तदुपलक्षणम् ॥

बाध्यानामपि व्यावहारिकादिसयुत्यत्वम् ।

वस्तुतस्तु—सर्वोऽप्ययं प्रपञ्चो भाविबाधदृष्ट्या। भ्रान्तिसिद्धोऽपि यावद्बाधं व्यावहारिकः। व्यावहारिकत्वं तु व्यवहारसमर्थार्थधीहेतुत्वं श्रुतेरपि समानम्। तत्र व्यावहारिकत्वं यावद् व्यवहरणीयार्थाबाधः, तावत्पर्यन्तमबाध्यत्वेनाप्युपपद्यते। न हि सार्वदिकाबाध्यत्वं व्यवहारायापेक्ष्यते। न च व्यावहारिकत्वमबाध्यत्वं चेत्यनर्थान्तरम् ॥

अबाध्यत्वं हि प्रतीतिकालमात्राबाध्यत्वेन, व्यवहारकालाबाध्यत्वेन, त्रैकालिकाबाध्यत्वेन च त्रेधा। आद्यं प्रातिभासिकसत्त्वम्, द्वितीयं व्यावहारिकं सत्त्वम्, तृतीयं पारमार्थिकं सत्त्वमिति हि सत्तात्रैविध्यमर्यादा। तेन च शुक्तिरूप्यघटादीनां प्रातिभासिक-व्यावहारिकाणामबाध्यत्वविशेषास्वीकारेऽपि न विरोधः। व्यावहारिकं सत्त्वं तु सर्वस्य प्रपञ्चस्य को वा वारयति? यथा च भाविबाधः प्रत्यक्षदशायां प्रत्यक्षेण प्रमाणजन्येन, साक्षिणा वा न ग्रहीतुं शक्यते, तथा पूर्वमुपपादितम् ॥

"अर्थक्रिया ह्यभिज्ञाऽभिवदन-प्रवृत्ति-हानोपादानरूपा प्रातिभासिके प्रवृत्तिपर्यन्ता, व्यावहारिके हानोपादानभिव्यापिनी, पारमार्थिके तु वृत्त्यात्मिकाभिज्ञामात्रपर्यन्ता सर्वेषां प्रत्यक्षा। तत्रार्थक्रियाकारित्वम्, हानोपादानाभिव्यापिकार्यकारित्वं वा प्रपञ्चस्य सत्त्वं न कोऽपि नेच्छति। न च तद् मिथ्यात्वविरोधि, सत्यत्वप्रयोजकं वा; ब्रह्मणि संविन्मात्रेऽखण्डे व्यभिचारात् ॥

व्यवहारोपयोगिकार्यनिर्वाहकत्वमात्रे हि न पारमार्थिकत्वं प्रयोजकम्, व्यावहारिकं रजतं व्यावहारिकवलयनिर्माणादिकार्यकारि, न प्रातिभासिकम्। नवोभयमपि सत्यं तत्र वस्तुतः; यावद्बाधं सत्यतायाः स्वीकाराद् न वलयादिव्यवहारानुपपत्तिः। अयमेव न्यायः शुक्तिकायामपि। सापि यावत्तद्बाधं शुक्तिकार्यं कुरुते। सा हि स्वाधिष्ठानापेक्षया बाध्या, रजतापेक्षया बाधिका; तत्तदधिष्ठानज्ञानस्यैव तत्तद्बाधकत्वात् ॥

स्वाप्नन्यायेन मिथ्याभूतस्यार्थक्रियाकारित्वम्, स्वाप्नपरीक्षा च ।

शुक्तिकाया बाध्यत्वं न रजतबाधकज्ञाने बाध्यत्वेन विषयतया,

किन्तु स्वबाधकज्ञाने बाध्यत्वेन विषयता। बाध्यत्वं चापेक्षिको धर्मविशेषः। न हि बाधिकैव शुक्तिका, नैपैकैकान्ततोऽबाध्यापि। आपेक्षिकं बाध्यत्वं तु व्यावहारिकस्य सर्वस्याप्यनेनैव नयेन। न चात्र व्याहतिः॥

वस्तुतस्तु—असत्यस्य स्वाप्नकामिनीसंभोगादेश्चरमधातुविसर्गार्थक्रियाकारित्वं दृष्टम्, तथा तादृशस्य समङ्गलद्रव्यस्त्रीदर्शनादेः शुभहेतुम्, इत्यर्थक्रियाकारित्वस्य न सत्यत्वेन व्याप्तिः। यद्यपि स्वाप्नाः पदार्था वासनामया द्वैतमते, अद्वैतसिद्धान्ते तु मायामात्रम्। असकृद् मायावादिपदेनाद्वैतिनामेव द्वैतिभिर्निर्देशादद्वैताभिमतमायामात्रत्वमेव सौत्रमिति द्वैतिभिरपि वक्तव्यम्॥

प्रज्ञावाची मायाशब्दस्तु न सूत्रकाराभिमतः; अन्यथा स्वाप्नांशे विज्ञानवादो बादरायणस्य, द्वैतिनाम्, इतरेषां वा स्यात्। न च विज्ञानवादेऽपि ज्ञानव्यतिरेकेण विषयासत्त्वादसतोऽर्थक्रियाकारित्वपक्षाद् निस्तारः। न हि तेऽपि व्यावहारिका इत्यसत्याः, नियमेन वा स्वप्नदर्शनमात्रेण वलयाद्यर्थक्रियाकारिणः। न हि वासना कार्यजनिका, किन्तु तदुद्बोधद्वारा स्मृतेरेव कारणम्। न च स्वाप्नानां स्मरणमात्रमिति द्वैतिनामपि सिद्धान्तः; अन्यथा तत्र विद्यमानतया स्मर्यमाणानां जागरे तत्तदर्थक्रियाकारित्वापत्तिः॥

न च स्वाप्नार्थस्य सत्य ईश्वरः कर्ता; वासनामयत्वसिद्धान्तव्याकोपात्। स्वाप्ना हि तूलाविद्यापरिणामास्तदाश्रय-विषयजीवाभिन्ननिमित्तोपादनकाः शुक्तिरूप्यादीनीव। न च कर्तृसत्यत्वं कार्यसत्यत्वप्रयोजकम्; मायाविकार्ये व्यभिचारात्। अत एव—"मायामात्रं तु" इति सूत्रम्। न हि मायाविनो मायेव प्रातीतिका एव स्वाप्ना इति सूत्राशयः॥

वासनायाः स्मृतिकारणस्य न विषयकारणत्वम्; कुत्राप्यदर्शनात्, मायाकारणत्वं तु "अजामेकामि"तिश्रुतिसिद्धम्, इति तदनुवाद एव मायामात्रमिति सूत्रे; अन्यथाऽप्रामाणिककल्पना, अलौकिककल्पना वा। मृषात्वं तु मायिककार्येषु, शुक्तिरजतादौ च लौकिकम्। अत एव भाष्यम्—"तथाच लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदि"ति॥

स्वप्ने वासनाया अपि दोषविधयैव कारणत्वम्, न स्वाप्नोपादानतया। तत्रापि प्रमातृचैतन्याश्रिता तूलाविद्यैवोपादानं शुक्तिरजतादाविव।

अत एव पूर्वदृष्टस्य तादात्म्यापन्नस्य पूर्वदृष्टसदंशस्य वा भ्रमेऽध्यासः। "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति चाध्यासलक्षणम्। सर्वथा तु स्वाप्नार्थस्य मिथ्याभूतस्यैवार्थक्रियाकारित्वम्॥

जागरे शुक्तिरूप्यादीनां रज्जु-सर्पादीनां च तज्ज्ञानप्रयुक्तानन्द-भयकम्पादिजनकत्वं प्रत्यक्षम्। न च तत् सत्यस्यैवार्थक्रियाकारित्व उपपद्यते। एवमेव सर्प आरोपितायाः कुसुममालायाः सन्तोषकारणत्वम्। न च तत्र सर्पज्ञानमेवार्थक्रियाकारि। न हि तत्रापि न सर्पज्ञानम्, अन्यथा विषयाविशेषित ज्ञानमात्रस्यार्थक्रियाकारित्वे ततोऽपि घटज्ञानादिवार्थक्रियाकारित्वापत्तिः;नायं सर्प इति सर्पस्यैव बाधज्ञानम्, न तु नेदं सर्पज्ञानमिति तज्ज्ञानस्य॥

सविषयस्यैव ज्ञानस्यार्थक्रियाकारित्वम्, न तु ज्ञानमात्रस्य।

विषयवैपरीत्येनैव हि ज्ञानस्य भ्रमत्वम्; तदभाववति तत्प्रकारत्वस्य, बाधितार्थविषयकत्वस्य वा भ्रमत्वप्रयोजकत्वात्। न चान्यद् ज्ञानवैपरीत्यं नाम अन्यथा ज्ञातस्यान्यथा सम्यग्ज्ञानमिति प्रमालक्षणमपि विषयविशेषितमेव, न त्वन्यथाज्ञानम्, सम्यग्ज्ञानमात्रं वा भ्रम-बाधौ॥

यत्तु—सत्यपि सर्पादौ, असति तज्ज्ञाने भय-कम्पाद्यनुपपत्तेर्ज्ञानमात्रमर्थक्रियाकारि—इति, तदिदं सत्यसर्पस्थलेऽप्यसति तज्ज्ञानेऽर्थक्रियाकारित्वायोगापत्त्याऽज्ञातसर्पदष्टस्य मरणाभावापत्त्या, अज्ञातस्याग्नेः स्पृष्टस्यादाहकत्वापत्त्या, सर्पे कुसुममालभ्रमे कुसुममालाज्ञानस्य सन्तोषनिदानत्ववदज्ञातस्य सर्पस्य सत्यार्थक्रियाकारित्वानुपपत्त्या च न युक्तम्॥

अयं भावः—घटादिज्ञानस्यापि ज्ञानत्वेनैवार्थक्रियाकारित्वापत्त्या न ज्ञानमात्रमर्थक्रियाकारि, इति विषयावच्छिन्नं ज्ञानमेवार्थक्रियाकारि। तच्च विषयज्ञानं न विषयाविशेषितं भयकम्पादिजनकम्, किन्तु तद्विशेषितमेव। इति मिथ्याभूतस्याप्यर्थक्रियाकारित्वमकामेनापि स्वीकर्तव्यम्॥

ज्ञानगतधर्मस्यैवार्थक्रियाकारित्वप्रयोजकत्वशङ्का।

यत्तु—सत्यसर्पज्ञानं घटादिज्ञानाद् व्यावृत्तमनुभूयते। व्यावृत्तिश्च व्यावर्तकधर्मयोगकृता सर्वत्रोपलब्धा। न च विषयो व्यावर्तकः; तस्याधर्मत्वात्। सम्बद्धं हि व्यावर्तकं भवति; अन्यथाऽतिप्रसङ्गात्। विषयसम्बन्धो न व्यावर्तकः; तस्य संयोगादिरूपत्वाभावात्, इति ज्ञानगत एव कश्चिद्धर्मो व्यावर्तको वक्तव्यः। विलक्षणसामग्रीजन्ययोर्ज्ञानयोः परोक्षत्वापरोक्षत्वनियामको धर्मविशेषो ज्ञानधर्म एव कश्चन, इति सर्पज्ञानस्य विलक्षण-

क्रिया न ज्ञानगतेनातिशयेन विनोपपद्यते। अतो विषयान्तर्भावमन्तरेण स्वगतेनैव विशेषेण सर्पादिज्ञानस्य भय-कम्पादिजनकत्वाद् न सर्पस्य किञ्चित्करत्वम्—इति ॥

तदिदं सर्वत्र सामग्रीविशेषजन्यत्वमात्रेणार्थक्रियाकारित्वे, व्यावृत्तत्वे च सत्यसर्पस्थलेऽपि सत्यसर्पदंशज्ञानस्यैव मरणहेतुत्वम्, न तु सर्पदंशस्येत्यापद्येत; अन्यथा कथं निरालम्बनवादः? न चासत्यसर्पस्थल एवायं नियमः; असत्यस्यासाधकत्वात्, सत्यस्थले तु विषयस्यैव साधकत्वमिति विशेषे न किमपि नियामकम् ॥

"अर्थेनैव विशेषो हि निराकारतया धियाम् ॥"

इति नियमेनार्थस्यैव विषयतया ज्ञानसम्बद्धस्य ज्ञानव्यावर्तकत्वेन तदतिरिक्तज्ञानगतविशेषस्यादृष्टस्य कल्पने प्रमाणाभावः। न च प्रत्यक्ष-परोक्षयोरपि विशेषो विलक्षणसामग्रीजन्यत्वमात्रेण; विषयस्य प्रमातृचैतन्यभिन्नत्वाभिन्नत्वाभ्यां विषयवैलक्षण्येनैव ज्ञानवैलक्षण्यात्, अन्यथा परोक्षापरोक्षवैलक्षण्यानिर्वाहात् ॥

विषयाविशेषितसत्यज्ञानमात्रस्यासाधकत्वम्।

अन्यथा सत्यसर्पस्थलेऽपि कथं न सर्पज्ञानस्यैव सर्पकार्यकारित्वापत्तिः; उभयोरपि सत्यत्वाविशेषात्? कथं च विषयमनन्तर्भाव्यैव न कार्यकारित्वम्? यद्यनुभवविरोधस्तत्र नियामकः, तर्हि प्रकृतेऽपि दृष्टस्य सर्पस्यैव भय-कम्पादिहेतुत्वानुभवात् सर्पस्य भयकम्पादिहेतुत्वमप्यबाधितम् ॥

वस्तुतस्तु—दृश्यत्वनिरुक्तौ दृग्दृश्यसम्बन्धानुपपत्तिप्रकरणे ज्ञान-विषययोर्विषय-विषयिभावोऽनुभवसिद्धः कश्चन सम्बन्धो वर्तत इति द्वैतिभिरुक्तत्वाद् ज्ञान-विषययोर्न कोऽपि सम्बन्ध इति वर्णनं व्याहतम्। कथमन्यथा सर्पज्ञानम्, रजतज्ञानम्, घटज्ञानमिति विषय-विशेषमन्तर्भाव्य व्यपदेशः?

भ्रमस्थले ज्ञानस्यापि मिथ्यात्वम्।

वस्तुतस्तु—भ्रमस्थले रजतवद् तज्ज्ञानमप्यविद्यापरिणामरूपमसत्यमेव, इति ज्ञानस्यैवार्थक्रियाकारित्वेऽपि कथं नासत्यस्यासाधकत्वम्? रजताकारवृत्तेरप्यन्तःकरणवृत्तित्वे तु विषयविधया सत्यसर्पस्थल इव सर्पस्यापि कथं नार्थक्रियाकारित्वम्? दोषजन्यत्वेन सर्वेषां भ्रमाणां

साम्यात् सर्वेषां भ्रमाणामेकार्थक्रियाकारित्वापत्तिः, सर्वभ्रमकार्यकारित्वापत्तिर्वा प्रतिभ्रमम् ॥

यदि विषयविशेषमन्तर्भाव्यज्ञानस्य नार्थक्रियाकारित्वम्, एकस्यां रज्जावेकेनैव दोषेण सर्प-भूरन्ध्र-जलधारादिभ्रमसंभवाद् न सामग्रीभेदेन विषय-विशेषान्तर्भावमन्तरा ज्ञानत एव कश्चन विशेषः कल्पयितुं शक्यते। आस्तामियं रज्जुसर्पादिसम्बन्धिनी कथा ॥

मिथ्याभूतस्यार्थक्रियाकारित्वोपसंहारः।

प्रपञ्चस्य मिथ्याभूतस्याप्यर्थक्रियाकारित्वे को दोषः? कुत्र वा सत्यस्यैवार्थक्रियाकारित्वमुभयसम्प्रतिपन्नम्? न चानावृतं स्वयम्प्रकाशमखण्डं सत्यं संविन्मात्रं साधकं सम्प्रतिपन्नम्? द्वैतमते तस्यानङ्गीकारात् तत्र विप्रतिपत्तिः, अद्वैते तु तस्य निर्विशेषत्वात्तदभावः। सविशेषं तु ब्रह्म निर्विशेषवद् न सत्यमद्वैतदृष्ट्या; तस्य विशेषबाधनिबन्धनौपाधिकबाधस्य स्वीकारेण घटादिसाम्यादर्थक्रियाकारित्वस्य मिथ्यात्वाविरोधित्वात् ॥

एतेन—तत्रापि ज्ञानस्यैवार्थक्रियाकारित्वशङ्कापि—परास्ता; तस्यापि घटादिवदेव मिथ्यात्वात्, इति श्रुतेर्मिथ्यात्वेऽपि कथं तस्या अबाधितब्रह्मबोधकत्वानुपपत्तिः? सत्यप्येवं सर्वत्र ज्ञानस्यैवार्थक्रियाकारित्वे शब्दज्ञानमेव शाब्दबोधकारणमिति मतेऽत्रापि श्रुतिज्ञानमेवाखण्डब्रह्मसाक्षात्कारसाधनमित्यङ्गीकृत्य सन्तुष्यन्तु द्वैतिनः ॥

एतेन—रेखागवयादीनां सत्यगवयहेतुत्वमपि—व्याख्यातम्; तत्र हि सत्यगवयज्ञानहेतुं रेखागवयमेव बालानां निर्दिशन्ति, न तु तज्ज्ञानम्; अशक्यात् किं बहुना? सर्वानुभवविरुद्धं रज्जुसर्पादिस्थले विषयमनन्तर्भाव्य ज्ञानमात्रस्यार्थक्रियाकारित्वमिति ॥

शुक्तिरूप्यादीनाम्, जगतोऽपि च प्रातिभासिकादि-
सत्तामेवार्थक्रियाकारित्वम्।

यथाकथञ्चिदबाध्यत्वेनार्थक्रियाकारित्वं तु शुक्तिरूप्यादेरपि समानम्। सत्यरजतस्यार्थक्रियाकारित्वे न कोऽपि विशेषः। कालविलम्बाविलम्बाभ्यां बाधाबाधवकिञ्चित्करौ। अबाध्यत्वस्यार्थक्रियाकारितावच्छेदिकतायाः, असद्व्यावृत्ताया निर्विशेषब्रह्मव्यावृत्ताया व्यावहारिक-प्रातिभा-

सिकसाधारण्येन तावतैव शुक्त्यादेरिवार्थक्रियाकारित्वाविरोधाद् न कोऽपि विरोधः ॥

त्रिकालाबाध्यस्यैवार्थक्रियाकारित्वे
ब्रह्मणो जगत्कारणत्वानुपपत्तिः ।

न च सविशेषब्रह्मणः प्रपञ्चापेक्षयाऽर्थक्रियाकारित्वे कोऽप्यतिशयोऽद्वैतसिद्धान्ते; अन्यथा तत्रापि ब्रह्मज्ञानमेव जगत्कारणम्, न ब्रह्मेति न कथम्? अन्यथा शुक्तिरूप्यादीनां शुद्धब्रह्मणश्चार्थक्रियाकारित्वायोगात् प्रपञ्चमात्रस्यार्थक्रियाकारणत्वमसाधारणं स्यात् ॥

न हि निर्विशेषं ब्रह्म जगदुपादानम्, किन्तु मायोपहितमेव। तच्च मायोपधानाद् मायावत् प्रपञ्चवच्च न त्रिकालाबाध्यम्, इति प्रपञ्चविशेष एव, इति ब्रह्मजगत्कारणत्वान्यथानुपपत्त्याऽप्यर्थक्रियाकारित्वं न त्रिकालाबाध्यस्यैवेति नियन्तुं शक्यते ॥

कार्य-कारणभावे न सत्त्वापेक्षा ।

अयं भावः—अर्थक्रियाकारित्वं न सत्यत्वप्रयुक्तम्, न वा मिथ्यात्वप्रयुक्तम्। न हि कार्य-कारणभावः कारणसत्त्वमपेक्षते। तदुक्तम्—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥"

इति। सति चैवं ब्रह्म निर्विशेषं सद्रूपमपि नार्थक्रियाकारि। शुक्तिरूप्यादिः, घटादिः, श्रुतिर्वा मिथ्याभूतान्यपि न नार्थक्रियाकारीणि ॥

"उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥"

इति न ज्ञानतः, किन्तु स्वरूपतोऽप्यर्थस्यार्थक्रियाकारित्वं द्रढयति ॥

अयं भावः—सम्प्रतिपन्नमिदम् "मानाधीना मेयसिद्धिः" इति। तत्र प्रमाणमर्थसाधकं सत्यं वा, असत्यं वा। तत्र सत्यं न साधकमद्वैते, सत्यस्य निर्विशेषस्यासाधकत्वात्, साधकस्य चापारमार्थिकत्वात्। साक्षिचैतन्यं तु भासकम्, न साधकम्, तदप्यान्तर्नित्यसम्बद्धस्य, न तु तदसम्बद्धबाह्यप्रपञ्चसाधारण्येन सर्वस्य; अन्यथाऽन्ध-बधिराद्यभावप्रसङ्गात् ॥

असत्यं न साधकमिति परेऽपि, इति सत्त्वासत्त्वौदासीन्येन निर्विशेषब्रह्मासद्विलक्षणस्यैव साधकत्वम्, सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा

साक्षिभास्यमिति हि ज्ञाततावस्थायाम्, अज्ञातत्तायां च साक्षिभास्यत्वं गमयति, न तु सार्वकालिकमपि। तदपि सर्वस्य कार्यस्य न कारणात्मतायाम्, किन्तु कार्यावस्थायामेव। विश्वसत्यत्वं तु न साक्षिभास्यमिति साधयिष्यते ॥

सत्त्वासत्त्वौदासीन्येनैव सर्वाः कथाः।

प्रमाणाप्रमाणव्यवस्थायां सत्त्वासत्त्वौदासीन्येनैव विचारः। साक्षिणोऽपि साधकत्वं सत्त्वासत्त्वौदासीन्येनैव। न च तदुपहितं चैतन्यम् यद्युपहितात्मना सत्यमिति सम्प्रतिपन्नम्, इति न विवर्ततासिद्धान्तम्, सर्वां विचारप्रणालीम्, कथाव्यवस्था, प्रमाणाप्रमाणस्वरूपं वा नाद्वैतिनोऽपि नाङ्गीकुर्वन्ति। तदङ्गीकारस्तु सत्त्वासत्त्वौदासीन्येन। ततो न मूकत्वमेव वरम्। प्रमाणाप्रमाणकार्य-कारणभावादिव्यवस्थां स्वीकृत्यैव विचारः, न तु तत्सत्यत्वाद्यपेक्षयेति निष्कर्षः। व्याहतत्वाव्याहतत्वव्यवस्थाऽप्येवमेव। अधिकं त्वत्र पराक्रान्तं खण्डनखण्डखाद्यादौ ॥

मिथ्यात्वाभावस्य साक्ष्यवेद्यत्वोपपादनम्।

इदमत्रानुयुज्यते–कुतो वा शुक्तिरूप्यस्यापि सत्त्वेन भासमानस्य मिथ्यात्वाभावः साक्षिणा न गृह्यते? यदि तस्य बाधितत्वात्, तर्हि कथं सत्त्वेन साक्षिणा ग्रहणम्? यदि तत्प्रातिभासिकसत्यत्वाभिप्रायं भावि बाधमादाय बाध्यत्वयोग्यतया च, तर्हि घटादावपि समानम्। कुत्र वा सम्प्रतिपन्नं साक्षिणाऽबाध्यत्वं गृह्यत इति? तत्र सविशेषं ब्रह्माबाध्यमिति विप्रतिपन्नम्, निर्विशेषमबाध्यमपि तथा, इति किं वा निदर्शनमुपष्टभ्य साक्षिणा मिथ्यात्वाभावो गृह्यत इति वर्ण्यते? सत्यपि मिथ्यारजतस्य बाध्यस्यापि साक्षिग्राह्यत्वे। काल-गगनादिस्वरूपसाक्षिवेद्यता तु सम्प्रतिपन्नैव। तदुक्तम्–"अप्रत्यक्षेऽप्याकाशे बालास्तल-मलिताद्यध्यस्यन्ति" इति। अत्राप्रत्यक्षेऽपीत्यपुरोवस्थितेऽपीत्यर्थः, 'इति प्रत्यक्षप्रमाणजन्यवृत्त्यविषयत्वमेव विवक्षितम्, न तु साक्षिवेद्यत्वाभावोऽपि। तत्रानुमानप्रमाणं प्रवर्तताम्, मा वा। तदगम्यमेव तत्र मलिनताद्यध्यासाधिष्ठानं बालानामनुमानाकुशलानामिति दुरपह्नवं तत्त्वम्। साक्षिवेद्यस्याप्यनुमेयत्वम्, प्रमाणान्तरविषयत्वं वा न वार्यते; 'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि'ति सिद्धान्तात्, इति गगनादिसाक्षिवेद्यत्वे न विवादः। तद्धि व्याकृतं वा अव्याकृतं वेत्यन्यदेतत् ॥

तदयं निष्कर्षः—स्वतो ग्राह्यं प्रामाण्यं साक्षिभास्यत्वलक्षणं भ्रमस्यापि, प्रमाया अपि। तत्राप्रामाण्यं बाधावसेयं न साक्षिभास्यम्; अप्रामाण्यस्य परतस्त्वात्, इति न तत्रापि साक्षिणो व्यापार इत्यद्वैतम्। द्वैतं तु तत्रापि साक्षिभास्यत्वमिति। सति चैवं यावदपवादं भ्रमस्यापि प्रामाण्यं साक्षिणा गृह्यत इत्यवश्यं स्वीकर्तव्यम्। अपवादस्तु बाधज्ञानानुमितो दोष एव। स च यदि "नेह नानाऽस्ति किंचने"त्यादिश्रुत्या ब्रह्मणि प्रपञ्चस्यापि बाधोऽवसीयते, तर्हि सप्रपञ्चत्वज्ञानमपि दोषरूपापवादसहितेन साक्षिणा, अन्येन वा प्रमाणमित्येवावगन्तव्यम्॥

सति चैवं बाध्यत्वाभावरूपं सत्यत्वं साक्षिग्राह्यमिति यदि बाधोदयपूर्वकालीनं प्रामाण्यमादाय, तर्हि शुक्तिरूप्यादिकमपि सत्यतया साक्षिग्राह्यमिति वक्तव्यम्। यदि तत्र बाध्यत्वयोग्यतया प्रामाण्यं सन्दिग्धम्, ततो बाध्यत्वाभावोऽपि सन्दिह्यते, तर्हि प्रपञ्चसत्त्वप्रत्ययेऽपि स एव न्यायः, इति कथं साक्षिणाऽपि मिथ्यात्वाभावस्य ग्रहः? कथं वा साक्षिप्रत्ययेन भ्रम-प्रमासाधारणेन निरस्तसमस्त-दोषापौरुषेयश्रुतेर्बाधः, अन्यथानयनं वा? इति गगनादेरपि शुक्तिरूप्यादेरिवाबाध्यत्वं न साक्षिग्राह्यम्॥

वृत्तेरप्यज्ञानप्रयुक्तत्वेन वृत्तिनाश्यत्वाद्
न निर्हेतुकनाशः।

तत्र च न निर्हेतुको वृत्तिविनाशः; वृत्त्युपादाननाशहेतुकत्वात् तन्नाशस्य। वृत्तिनाशो हि वृत्तेरप्यज्ञानप्रयुक्तत्वेन रूपेण, न वृत्तित्वेन वृत्तिनाश्यत्वात्, इति न विद्या स्वयमेव स्वनिवृत्तौ हेतुः। तत्र कार्यतावच्छेदकमज्ञानप्रयुक्तत्वम्, हेतुतावच्छेदकं तु वृत्तित्वम्। वृत्तित्वेन वृत्तेर्वृत्तिनाशहेतुत्वाभावेऽप्यज्ञानप्रयुक्तत्वेन विनाश्यत्वम्, वृत्तित्वेन नाशकत्वमित्यवच्छेदकभेदेन कार्य-कारणभावः। यथा घटप्रागभावरूपस्य घटस्य घटत्वेन प्रागभावनाशकत्वम्, प्रागभावनिवृत्तित्वेन प्रागभावनाश्यत्वम्; निराश्रयकार्यावस्थानासंभवात्॥

वृत्त्यादीनामपि ज्ञाननिवर्त्यत्वम्।

स्वोपादानाश्रयनाशो वा कार्यनाशप्रयोजकः। परम्परया ज्ञाननिवर्त्यत्वमपि मिथ्यात्वमेव, नैतावतापि वृत्तेर्न मिथ्यात्वम्, इति न संसारानुवृत्त्यापत्तिः, अमोक्षो वा; अज्ञान-तत्प्रयुक्तान्यतरत्वस्यैव मिथ्यात्वरूपत्वात्॥

न चैवं प्रपञ्चोऽप्युत्तरक्षण एव निवर्तेत। सा हि सत्यज्ञाने वा, असति वा तस्मिन्। नाद्यः; विरोधिसंनिपातम्, उपादानस्वरूपनाशं वा विना प्रपञ्चनिवृत्त्ययोगात्, असति, विनष्टे वाऽज्ञाने तु प्रपञ्चनिवृत्तिरिष्टैव। सर्वथा श्रुतिसिद्धस्य ब्रह्मणः सत्यत्वम्, अबाध्यत्वं वा साक्षिणा गृह्यते॥

प्रपञ्चसत्त्वस्य साक्षिणा ग्रहणम्।

प्रपञ्चस्य तु सत्त्वं न प्रत्यक्षग्राह्यम्। गृहीतं चेदपि तात्कालिकमेव। न हि श्रुतेरिव प्रत्यक्षस्य भूत-वर्तमान-भाविस्वरूपबोधकत्वं साक्षात्। न हि तत् सन्निकृष्टेन्द्रियजन्यं प्रत्यक्षमिव विद्यमानमात्रग्राह्यागमः। स हि संनिहितम्, विप्रकृष्टम्, सूक्ष्मम्, सूक्ष्मतरम्, त्रैकालिकमन्यविधं सर्वं बोधयितुं शक्नोति। अत एव प्रत्यक्षानुमानातिरिक्तं तत्प्रामाण्यं सतद्द्वयेऽपि॥

श्रुति-प्रत्यक्षप्रामाण्यविवेकः।

तत्र श्रुतिस्तु प्रमाणमेव, नाप्रमाणं कदापि। व्यावहारिकप्रमाणमपि तत्प्रमाणमेव। न्यायानुसारिसङ्कोचान्यथानयनादिकमकिञ्चित्करम्। न च प्रत्यक्षविरुद्धेति श्रुतिर्बाध्या, सदोषा वा कदाऽपि, इत्यात्यन्तिकप्रामाण्यं श्रौतज्ञानस्य साक्षी ग्रहीतुं शक्नोति, नैवं प्रत्यक्षं संभावितदोषं श्रुतिविरुद्धं चात्यन्तिकप्रामाण्यग्राहि; विद्यमानोपलम्भनत्वात् तस्य। न च श्रुतिरिव प्रत्यक्षमक्षजमनाविद्यकविषयकमेव, येन श्रौतब्रह्मज्ञानमिव प्रमाणमेव स्यात्। शुक्तिरजतादिप्रत्यक्षमप्यन्यथाऽऽत्यन्तिकप्रामाण्यग्राहि स्यात्; प्रत्यक्षत्वाविशेषात्। अविद्याविषयगोचरत्वं ह्युभयत्र समानम्॥

न च गगनादिज्ञानस्यादोषजन्यत्वम्; अविद्याया एव दोषत्वात्। अविद्याया दोषत्वं तु स्वेनावरणद्वारा ब्रह्मविवर्तमानतोपयोगित्वेन। तच्च ब्रह्मविवर्तविषयकज्ञानस्यैव विषयतो बाध्यतया। न चाखण्डाकारज्ञानविषयो ब्रह्म ब्रह्मणो विवर्तः, इति न घटादिज्ञानसाम्यं ब्रह्मसाक्षात्कारस्य। न च ब्रह्माकारवृत्तिमात्रस्य साक्ष्यनुपाधेः प्रामाण्यं साक्षिग्राह्यम्। तदा विलीनभावावस्थान्तःकरणाद्युपाधेरखण्डब्रह्मोपाधेरभावात्, इति न ब्रह्माबाध्यत्वं साक्षिग्राह्यम्। साक्षिवेद्यं तु तदतिरिक्तमेव प्रातिभासिकं व्यावहारिकं वेत्यवश्यमेव स्वीकर्तव्यम्, इत्याकाशादिसाक्षिद्यत्वं न त्रिकालाबाध्यत्वस्य तैरुपपादयितुमलम्। निर्विशेषब्रह्माबाध्यत्वस्य साक्षिग्राह्यत्वाभावेऽपि न तस्य मिथ्यात्वम्, इति साक्षात्, परम्परया वा साक्षिभास्यत्वेऽप्याऽऽन्तराणाम्, बाह्यानां च त्रिकालाबाध्यत्वाभावेऽपि सत्प्रतीत्युपपत्त्या प्रपञ्चमिथ्यात्वानुमानस्य, तत्परायाः श्रुतेर्वा न साक्षिप्रत्यक्षेण बाधः॥

मिथ्यात्वाभावस्य साक्षिवेद्यत्वशङ्का-तत्परिहारौ ।

एतेन—

ज्ञानं स्वविषयं सत्त्वेनैव गृह्णाति, नासत्त्वेन, सत्त्वासत्त्वोदासीनेन वा रूपेण । घटो नास्तीति ज्ञानं तु घटस्य देश-कालसम्बन्धाभावं विषयीकरोति, नासत्त्वं बाध्यत्वरूपम् । न हि सतः सर्वदेश-कालसत्तानियामकः । प्रामाण्यग्राहकेण साक्षिणा प्रामाण्यघटकाबाध्यत्वस्यापि ग्रहणात् साक्षिग्राह्यं गगनादि त्रिकालाबाध्यत्वम्, इति साक्षिप्रत्यक्षविरोधो दुष्परिहरः—इति ॥

तदिदं पूर्वोक्तरीत्या प्रामाण्यघटकाबाध्यत्वस्य त्रिकालाबाध्यत्वरूपत्वाभावात्, साक्षिग्राह्यत्वस्य प्रातिभासिक-व्यावहारिकाबाध्यत्वाविषयकत्वेनैव चारितार्थ्येन कालत्रयाबाध्यत्वानुपपादकत्वाच्च न विकल्पसहम् ॥

ज्ञानप्रामाण्यं साक्षिणा गृहीतमित्यस्यार्थस्तु यथासंभवं यावद्बाधनिश्चयमबाध्यत्वं साक्षिग्राह्यमित्येव; अन्यथा शुक्तिरूप्यज्ञानस्वरूपग्राहकोऽपि साक्ष्येव, इति कथं शुक्तिरूप्यादीनामपि नाबाध्यत्वं साक्षिग्राह्यम् ? न च शुक्तिरूप्यज्ञानस्याप्रामाण्यमेव, न प्रामाण्यमिति युक्तम्; बोधात्मकत्वेन तस्यापि प्रामाण्यानपायात् । तद्यदि पश्चाद् बाध्यते, तर्हि यावद्बाधं बोधात्मकत्वेनावगतं प्रामाण्यं कथं वार्यते ? यदि पश्चाद् बाध्यत्वयोग्यत्वेनाप्रामाण्यमेव, तर्हि प्रपञ्चज्ञानेऽपि तत्समानमिति व्यक्तीकृतमनुपदमेव ॥

तत्र न साक्षी ज्ञानं गृह्णन् प्रमाणमेवैतदिति गृह्णाति, किन्त्वदोषं चेत् प्रमाणम् ; अन्यथा त्वप्रमाणम्—इति । दोषाभावस्तु सजातीय-विजातीयसंवाद-विसंवादभावलक्षणापरीक्षावसेयः । तत्र च शुक्तिरूप्यादौ सजातीयसंवादलक्षणपरीक्षाया अभावात् दोषनिश्चयेनाप्रामाण्यग्रहः, प्रपञ्चज्ञाने सजातीयसंवादभावेन परीक्षया दोषाभावनिश्चयात् प्रामाण्यम् । शुक्तिरूप्यादावपि निश्शङ्कप्रवृत्तिस्तु न साक्षिणा, किन्तु मानसावधारणया । मनसस्तु दोषसंभावनया न मानसावधारणमात्रेण प्रामाण्यम् । परीक्षासहकृतः खलु साक्षी प्रामाण्यं गृह्णाति ॥

तत्र परीक्षा यत्र सन्देहः, तत्रैव नियता, नान्यत्र, इति परीक्षायाः स्वयं प्रमाणत्वेनावधृताया एव प्रामाण्यग्रहसहकारित्वेऽनवस्थापत्तिशङ्का नावतरति ॥

परीक्षा नाम न्यायानुसन्धानं दोषाभावनिश्चयाय। सन्दिग्धश्चार्थो न्यायविषयः। साक्षिसिद्धे च न सन्देहः, इति नानवस्था। न च सुखादौ, प्रातिभासिके च साक्षिसिद्धे सन्देहः, इति न परीक्षापेक्षा। यत्र परीक्षापेक्षा, तत्र फलपर्यन्तपरीक्षानन्तरमेव साक्षिणाऽऽत्यन्त्रिकप्रामाण्यग्रहः॥

फलपर्यन्तपरीक्षा तु स्वयमवधृतप्रामाण्यैव, इति न तस्याः परीक्षान्तरापेक्षेति नानवस्था। यत्र त्व'स्ति पानीयमि'ति वाक्यात् पानीये सन्देहः, तत्रैव परीक्षा फलपर्यन्ताऽपेक्ष्यते। विनापि परीक्षां फलपर्यन्तत्वे निर्णीते तु साक्षिणा प्रामाण्यग्रहस्तत्र निर्बाधः। घटादिज्ञाने तु संवादिफलत्वे न संशयलेशोऽपि, इति साक्षिग्राह्यं तत्र प्रामाण्यम्॥

तदिदं शुक्तिरूप्यज्ञानेऽपि प्रत्यक्षे सन्देहाभावात् साक्षिण्येव सुखादीनामिवाध्यासाच्च तत्प्रामाण्यस्यापि साक्षिवेद्यत्वेन शुक्तिरूप्यादेरपि कालत्रयाबाध्यत्वापत्त्या न क्षोदक्षमम्। न च कालत्रयाबाध्यत्वं ब्रह्मणोऽपि साक्षिसिद्धम्। ब्रह्म हि बाधावधित्वात् सर्वबाधकज्ञानविषयो बाधायोग्यत्वादेवाबाध्यं सद्रूपम्॥

तत्र यदि साक्षी प्रामाण्यम्, ज्ञानरूपं च विषयीकर्तुं स्वमहिम्नैव शक्नोति, भ्रमे तु दोषवशात् तदीयप्रामाण्यग्रहणशक्तिः प्रतिबद्धेति व्यवस्थयैव तत् स्पृशति, न त्ववधारणस्येष्टे। परीक्षया चापगते प्रतिबन्धे निजयैव शक्त्या प्रामाण्यमवधारयति। शुक्तिरजतादिज्ञाने तु दोषवशात् प्रामाण्यग्रहणशक्तिः प्रतिरुद्धा, इति साक्षी न प्रामाण्यं गृह्णातीति वैषम्यम्, निश्शङ्कप्रवृत्तिमात्रं तु मानसावधारणात्मकस्यैव॥

तत्र मानसावधारणामात्रविषयस्याप्रमेयस्य साक्ष्यसम्बद्धस्य निर्विशेषब्रह्मण एव सद्रूपस्याबाध्यत्वम्. न तु घटादेः सत्तादात्म्यमात्रापन्नस्य। मानस्यवधारणाऽपि निश्चयात्मिका बोधात्मकत्वात् कथं न स्वतः प्रमाणम्? येन साक्षिभास्यत्वं तावतापि न सिध्येत्। मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं प्रामाण्यसामान्यं सर्वेषामपि ज्ञानानामबाधम्॥

साक्षिणः परीक्षासहकृतस्यापि न प्रामाण्यग्राहकत्वम्।

न च साक्षिणः परीक्षासहकृतस्यैव प्रामाण्यग्राहकत्वम्; परतः प्रामाण्यप्रसङ्गात्, ग्राहकातिरिक्तायाः परीक्षाया अपेक्षणाच्च। अतः साक्षिणा गृहीतप्रामाण्यस्य परीक्षाऽवधारितदोषनिर्णयेनापनोदने परतोऽप्रामाण्यम्,

अन्यथा तु प्रामाण्यमेव; अन्यथा प्रमाणाप्रमाणान्यतरात्मकस्य साक्षिस्वरूपमात्रस्य प्रामाण्यम्, अन्येषां त्ववधारणमात्राणां वृत्त्यवच्छिन्नचैतन्यानां जन्यानामप्रामाण्यमेवेत्यापत्त्या किमपि ज्ञानं न प्रमेत्यापत्त्या घटादिज्ञानस्याप्यवधारणात्मकत्वेन स्वतोऽप्रमात्वात् घटादिज्ञानानामसाक्षिरूपाणां भ्रम-प्रमोदासीनानां घटादिसत्त्वग्राहकत्वं न स्यात्, सुतरां च साक्षात् साक्ष्यसम्बद्धानां घटादीनां साक्षिणा बाध्यत्वग्रहः, इति न साक्षिप्रत्यक्षबाध्यं घटादिमिथ्यात्वम्, साक्षिणो वर्तमानमात्रावगाहिनो भाविमिथ्यात्वग्राहकत्वायोगात्; मिथ्यात्वग्राह्यागमबाध्यकत्वस्य प्रामाणाप्रामाणसाधारणेन साक्षिणा बाधायोगाच्च ॥

साक्षिणः प्रत्यक्षादीनामैकान्तिक-
प्रामाण्यग्राहकत्वे चार्वाकमतस्यैव विजयः।

अन्यथा देहात्मप्रत्यक्षेणापि साक्षिणा देहात्मत्वबाधस्य भाविनो बाधात् देहानात्मतावादनिरासायोगः, इति व्यक्तमन्यत्रात्रैव, इति प्रत्यक्षादीनां प्रमाणानां नात्यन्तिकं प्रामाण्यं साक्षी गृह्णाति; किन्तु तात्कालिकमेव। साक्षिण आत्यन्तिकप्रामाण्यग्रहणे शक्त्यभावात्, अन्यथा देहात्मप्रत्यक्षस्याप्यत्यन्तिकप्रामाण्यग्राहकत्वापत्त्या लौकायतिकः कल्प एव सुष्ठु कल्पेत, वैदिकश्च सर्वोऽपि सिद्धान्तोऽस्तमियात् ॥

साक्षिणो विद्यमानज्ञानप्रमाण्यमात्रनिर्वाहकत्वम्।

एतेन—प्रपञ्चविषयाणां प्रमाणानां प्रत्यक्षादीनां प्रामाण्यं साक्षी कथं न गृह्णीयादिति—परास्तम्; साक्षिणाऽसम्बन्धात्। ज्ञानगतं हि प्रामाण्यं ज्ञानसत्तामेव ग्रहीतुं शक्नोति, न तदसत्तामपि। तदा हि न ज्ञानस्वरूपम्, न वा तस्य प्रामाण्यमस्तीति कस्य ग्रहणं साक्षिणा? ब्रह्मणः सत्यताबोधकश्रुतीनां प्रामाण्यमपि तद्वाक्यजन्यज्ञानकालिकमेव। सगृह्णाति। आत्यन्तिकाबाधस्तु ब्रह्मणस्तद्बाधकप्रमाणान्तराभावादर्थसिद्धः, इति घटादीनामिव ब्रह्मणोऽपि नात्यन्तिकबाध्यत्वम् ॥

श्रुतेः स्वरूपतो मिथ्यात्वेऽपि ब्रह्मणः
सत्यत्वाद् ब्रह्मज्ञानार्थं प्रवृत्त्युपपत्तिः।

घटादीनां बाध्यत्वं तत्तद्बाधकप्रमाणावसेयम्। घटादिसाधकज्ञानमेव तु तबाध्यत्वस्यापि साधकम्, इति घटसाधक-तद्बाधसाधकप्रमाणयो-

रनैक्याद् घटादिबाध्यत्वाविघातः। न चैवं ब्रह्मसाधकम्, ब्रह्मबाधसाधकं वा किमप्यत्रास्ति, येन बाधकप्रामाणभावात्, साधकप्रमाणाभावाच्च ब्रह्मणोऽपि बाधः स्यात्॥

तत्र हि घटादिस्थले "सन् घट" इति प्रत्यक्षं संभाव्यमानदोषकं घटग्राहकम्, बाधकं तु "नेह नानाऽस्ती"त्यादिश्रुतिः, इति साधक-प्रमाणभावः, बाधकप्रमाणसत्त्वं च, इति न साधकाभावः, बाधकप्रमाणं तु वर्तते। ब्रह्मणस्तु साधकप्रमाणं श्रुतिरस्ति, न च तद्बाधकं किमपि प्रमाणमस्ति, इति साधकप्रमाणभावःबाधकप्रमाणाभावश्च, इति वैषम्यम्, इति न ब्रह्मज्ञानमतत्त्वज्ञानम्, येन तदर्थः प्रयत्नो नोपपद्येत॥

ब्रह्मणो बाधार्हत्वायोगः।

न च ब्रह्म बाधार्हम्; घटादिवत् सद्विवर्तत्वाभावात्, अज्ञानाप्रयुक्त-त्वाच्च। घटादिप्रत्यक्षं तु बाधार्हविषयम्; तद्विषयस्याविद्याप्रयुक्तत्वात्, ब्रह्मविवर्तत्वाच्च॥

तत्र ब्रह्मणो बाधार्हत्वं घटादिवद् सादित्वे सत्यविद्याप्रयुक्तत्वात्, अनादित्वे सत्यविद्याप्रयुक्तत्वात्, उताविद्या-तत्संस्कारान्यतररूपत्वात्। तत्र नाद्यः; घटादीनामिवेतः पूर्वमपि कदाचन सृष्टेः पूर्वं नित्य-नैमित्तिक-प्राकृतप्रलयान्यतमे कारणतयाऽवस्थानरूपनिवृत्त्याः, अविद्याया अपि तदु-पादानायाः श्रुतिप्रामाण्यात् निवृत्तिसंभावनया च बाधार्हत्वं स्यात्। न चैतदस्ति॥

अत एव न द्वितीयः; जीवेशभेदादेरिवानादेः प्राकृतप्रलयेऽपि निवृत्त्य-भावात्, निवृत्तस्य सर्गादौ पुनरनुवृत्तिः, इति सम्प्रत्यनुवृत्तिरप्युपपद्यते, पुनर्निवृत्तिसंभावना च, इति पक्षद्वयेऽपि घटादीनाम्, जीवेश-तद्भेदा-नामिव निवृत्त्यनुवृत्ति-तन्निवृत्तिपरम्परावद् न ब्रह्मणः सा परम्परा वर्तते, इति न बाधार्हं ब्रह्म। अत एव बाधार्हत्वमपि ब्रह्मणो नास्तीत्युक्तम्॥

अविद्या-तत्संस्कारान्यतरत्तु शास्त्रप्रामाण्याद्, बाध्यमेव वा। अयं तु बाधः पूर्वनिवृत्तिनिरपेक्षः, इति केनापि प्रकारेण घटादिवद् न ब्रह्म बाधार्हम्॥

एतेन—इतः पूर्वमनिवृत्तत्वाद् यदि ब्रह्मणो न बाधार्हत्वम्, तर्हि किं ब्रह्मणो निवृत्त्यभावसम्भावना, उतानुमानम्। नाद्यः; संभावनाया

अपि संशयरूपत्वेन शङ्कानिराकरणासंभवात्। न द्वितीयः; तथा सति संसृतेः, अविद्यायाश्चानिवृत्तिप्रसङ्गात्, अन्यथा तस्यामेव व्यभिचारादिति—परास्तम्; घटादिवद् निवृत्तिसम्भावनाया एवात्र पूर्वोक्तरीत्या विवक्षणात्, अविद्याभिप्राये तु श्रुतिप्रामाण्याद् भाविबाधसंभावनाविवक्षणात्॥

ब्रह्मणो बाधानर्हत्वेऽनुमानसमर्थनम्।

वस्तुतस्तु—ब्रह्म, न निवृत्तियोग्यम्, सत्यज्ञानादिवाक्यावगतसद्रूपत्वात्, अज्ञान-तत्प्रयुक्तान्यतरातिरिक्तत्वात्, असद्वदित्यनुमानमेव निवृत्त्यसंभावनाहेतुरत्र विवक्षितः। न चास्यानुमानस्य व्यभिचारादिदोषदुष्टत्वम्। तत्र घटादिज्ञानम्, साधिष्ठानकम्, ससाक्षिकं चेति तद्विषयो घटादि बाधार्हम्। न च निरधिष्ठानं ब्रह्मज्ञानं भ्रमो नाम, इति घटादिवद् ब्रह्म न बाधज्ञानविषयतामर्हति, इति सत्यज्ञानादिवाक्यजन्यज्ञानविषयस्य न बाधयोग्यता संभाव्यते॥

शुक्तिरूप्यादिकं तु तूलाविद्याप्रयुक्तमपि न भ्रमात् पूर्वमासीत्, येन पूर्वं न्यवर्तत, नापि निवृत्तस्य तस्यानुवृत्तिः; प्रतीतिकाल एवोत्पद्यमानत्वात्, नाप्युत्तरकालेऽनुवृत्तियोग्यम्; अधिष्ठानसाक्षात्कारमात्रेण स्वोपादानेनाज्ञानेन सह स्वयमपि निवृत्तत्वेन केवलं बाध्यत्वात्॥

न च सोऽपि न्यायो ब्रह्मणि; ब्रह्मणोऽवच्छिन्नचैतन्याश्रयतूलाविद्यापरिणामत्वस्य, तत्प्रयुक्तबाध्यत्वस्य चासंभवात्। निवृत्तस्य चानुवृत्तस्य निवृत्तिसंभावना व्यावहारिकस्थले, तेन हि ब्रह्मणोऽपि घटादिवद् न व्यावहारिकमेव सत्वमिति शङ्काऽवसरत्यपि॥

साक्षिचैतन्यस्य विरोधिसंनिपातत्वाभावाद् न बाधकत्वम्।

अयमाशयः—साक्षिचैतन्यं प्रपञ्चग्राहकप्रत्यक्षादीनां नात्यन्तिकप्रामाण्यग्राहकम्, किन्तु तात्कालिक-तत्प्रामाण्यस्यैव ग्राहकम्। न चैतावता वियदादेः शुक्तिरूप्यादिवदुत्तरक्षणे निवृत्त्यापत्तिः। निवृत्तिर्हि विरोधिपातमपेक्षते, यथा घटादयो मुसलादि, प्रातिभासिकम्, मूलाविद्या वाऽधिष्ठानतत्त्वसाक्षात्कारम्। न च साक्षिचैतन्यं घटादीनां विरोधिसन्निपातो नाम, येनोत्तरक्षण एव तद्भावस्य निवृत्तिः; स्यात्—मुसलादिविरोधिसंन्निपातेन घटादिवत्, इति साक्षिण आत्यन्तिकप्रामाण्याग्राहकत्वेऽपि न

सर्वप्रवृत्ति-विलयप्रसङ्गः। परमेश्वरसञ्जिहीर्षा हि निमित्तकारणम्, न त्वात्यन्तिकाप्रामाण्यग्राहिका। ईश्वरेच्छयैव हि प्रपञ्चविलयं श्रुति-स्मृति-पुराणेतिहासादीनि प्रतिपादयन्ति। न हि निर्हेतुको विनाशो विश्वस्य; पटादिनाशे व्यावहारिके निर्हेतुकविनाशादर्शनात्॥

विद्याया आविद्यकत्वेऽपि न सर्वबाधकत्वानुपपत्तिः।

यत्तु—विद्या न संसारनिवृत्तिहेतुः। साऽपि ह्यविद्यात्मकत्वात् संसृतिरेव। न च तस्या निवर्तकान्तरमस्ति। तथाच निर्हेतुकनाशाङ्गीकारे न संसारनिवृत्तिः, न वा मोक्षः—इति। अत्रायं परिहारः—विद्या हि साक्षादज्ञानं निवर्तयति। अज्ञानकार्याणि तात्कालिकानि, अतीतानि, भावीनि चाज्ञाननाशनाश्यानि। न चैतावता ज्ञानानिवर्त्यत्वम्; ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वस्यैव ज्ञाननिवर्त्यत्वरूपत्वात्, इति ज्ञानेनाज्ञाने निवृत्ते सर्वस्य कार्यस्योपादानात्मनैवावस्थाननियमात्, वृत्तेरप्यविद्याकार्यस्य विनाऽऽश्रयमवस्थानासंभवाच्च वृत्तिरूपोऽपि संसारः स्वयं निवर्तते॥

विश्वसत्यत्वश्रुतीनामपि व्यावहारिकसत्त्वपरतया मिथ्यात्वाविरोधः।

"विश्वं सत्यं मघवाना" "कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्य" इत्यादिश्रुतयोऽपि व्यावहारिकं सत्यत्वमेव बोधयन्ति। तत्र यथातथ्यतःपदं यथा वर्तते तथेति विवक्षया यथावस्थितार्थबोधकं व्यावहारिकं व्यावहारिकतया, शीतं जलं शीतम्, उष्णमग्निमुष्णमिति कल्पान्तरीयतत्तद्रूपापरिवर्तनेन "धाता यथापूर्वमकल्पयत्" इति न्यायेन कल्पान्तरीयं वेदमेव स्मृत्वोपदिशति, न तु भारतादौ व्यासादिरिव स्वतन्त्रमिति बोधयति, न तु सृज्यमानस्य सर्वस्य परमार्थत्वम्, इति व्यावहारिकस्य यावद्बाधं सत एवानुवादः। व्यावहारिकसत्यत्वपरत्वं श्रुतीनामिति यावत्॥

"तत् सत्यं स आत्मा" "इति वाक्येऽपि सत्यपदमद्धा व्यावहारिसत्यपरम्—यदि प्रपञ्चवत् सत्त्वं ब्रह्मणि बाध्यमिति श्रुतिः श्रावयेत्। न चैतदस्ति। "असदेवेदमि"ति श्रुतिस्तु प्रपञ्चस्यासत्त्वं स्वरूपतः कारणात्मनाः सतो बोधयति, न तु ब्रह्मासत्परं तत्; इदम्पदस्य ब्रह्मपरत्वाभावात्। जगन्निर्मातृत्वेन परमेश्वरज्ञानं यद्यपि पुरुषार्थसाधनम्, इत्येतावता न तत् सृज्यमानस्य सत्यत्वमप्याक्षेप्तुमर्हति; परमेश्वरस्य सविशेषस्य यादृशं सत्यत्वम्, तादृशं सत्यत्वं तु तत्सृष्टानामपि न निषिध्यते॥

यथाहि—परमेश्वरसृष्टत्वं विश्वस्य श्रुत्या बोध्यते, तथा सत्यप्रपञ्च-निर्मातृत्वेन तज्ज्ञानं पुरुषार्थसाधनमिति, एवं निष्प्रपञ्चात्मज्ञानं परम-पुरुषार्थसाधनं प्रस्तूयते, इत्युभयविरोधः प्रपञ्चस्य सर्वस्य, तत्कारणस्य मायोपहितस्य, सविशेषस्य च व्यावहारिकसत्यतयैव परिहरणीयः। शून्य-परिभावनयाऽस्य शून्यतापत्तिस्तु सौगतानामविरोधाध्याये सूत्रकारेणैव निरस्ता, न श्रौतीति सम्प्रतिपन्नम् ॥

सत एवार्थक्रियाकारित्वे न किमपि प्रमाणम्।

सौगतागमोऽप्रमाणमिति सम्प्रतिपन्नत्वात् तत् प्रमाणाननुगुणमपि। निष्प्रपञ्चता त्वौपनिषदी प्रामाणिकी, इति न प्रमाणाननुगुण्यमद्वैत-वादस्य। को वा विसंवदते प्रपञ्चार्थक्रियाकारितायाम् ? तत्र पारमार्थि-कत्वं तन्त्रमित्येव विप्रतिपन्नम्। न चानुमानमपि प्रपञ्चस्यार्थक्रियाकारित्वं साधयत् तत्सत्यत्वमप्यनुमापयति। प्रत्यक्षं तु प्रमाणजन्यं न प्रपञ्चसत्यत्वं गोचरयति, किन्तु सत्तादात्म्यम्, मिथ्यात्वाविरोध्यर्थक्रियाकारित्वं वेति पूर्वमेवोक्तम् ॥

साक्षिणोऽपि मिथ्यात्वविरोधिसत्वाग्राहित्वम्।

स एव न्यायः साक्षिप्रत्यक्षेऽपि। न हि साक्षिचैतन्यमपि घटं पटयितु-मीष्टे; वर्तमानार्थग्राहित्वात् साक्षिप्रत्यक्षस्य। तत्रैकसत्तावादे सत्तादात्म्यम्, सत्तात्रैविध्यवादे तु व्यावहारिकसत्त्वापरपर्यायमर्थक्रियाकारित्वमेव साक्षि-प्रत्यक्षस्यापि विषयः। तत्र प्रथमे कल्प सद्रूपत्वं सत्त्वं ब्रह्मासाधारणम्, न प्रपञ्चसाधारणम्, इति न तत् घटादिसामानाधिकरण्यप्रतीतिविषयः। "न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इति त्वखण्डसाक्षा-त्कारातिरिक्तस्य सत्तादात्म्यविषयकत्वेन, न तु सद्रूपत्वविषयीकरणेन ॥

अत एव प्रकारांशे सर्वं ज्ञानं भ्रमः, अधिष्ठानांशे सन्मात्रे तु प्रमेति ब्रह्मसिद्धिकारादयः। गगनादिकं साक्षात् साक्षिविषयोऽपि गगनादि-रूपेणैव, न तु तत्सत्यत्वेनापि ; तत्सत्यतायाः सद्रूपताया वाऽभानात्, सत्तादात्म्यस्य सत्यत्वासाधकत्वात्। साक्षिचैतन्यं तु, सत्यम्, प्रत्यक्षम्, परं तु प्रमाणाप्रमाणसाधारणम्। शुक्तिरूप्यादिकमसदपि साक्षिभास्यं घटादिकमिव, सत्त्वं तु मिथ्यात्वाभावरूपं मिथ्यात्वविरोधि घटाद्यंशे मिथ्यात्वाभावम्, शुक्तिरूप्यादौ च न तद् गोचरयतीति वक्तव्यम् ॥

इतोऽपि प्रत्यक्षं न प्रमाणमेव; अविद्याश्रयाश्रितत्वात्। न च ब्रह्मज्ञानं तथा; अविद्यानाश्रयाश्रितत्वात्। न चाविद्याया जीवाश्रयत्वेऽन्योन्याश्रयाद्यापत्तिरिति व्यक्तमधस्तात्। अस्मिन् हि प्रस्थाने जीवाश्रिताज्ञानकल्पितः प्रपञ्चः, ब्रह्म तत्वविद्याविषयसंविन्मात्रम्, इति कथं प्रत्यक्षागमयोर्विरोध्य-विरोधिभावोऽपि ?

प्रपञ्चाविद्यकत्वे जीवैकत्वानैकत्वादौ प्रस्थानभेदाः।

तत्र विश्वं सर्वमेकाज्ञानकल्पितम्। तत्र ब्रह्माश्रयमज्ञानमित्यत्रैकमूलाविद्याकल्पितत्वं प्रपञ्चस्य, जीवाश्रयत्वपक्षे त्वविद्यावच्छिन्नचैतन्यं जीव एकः। तत्र तदवस्थाविशेषान्तःकरणावच्छेदभेदेन वहवो जीवाः। तत्राद्यो हिरण्यगर्भनामा समष्टिजीवः प्रथमः। ब्रह्माश्रयत्वपक्षेऽपीश्वरो विम्बचैतन्यम्, प्रतिविम्वाः सर्वेऽपि जीवाः, न त्वेको जीवः कश्चन। उभयत्र विवर्तोपादानत्वं ब्रह्मण एव॥

तत्रेश्वरबिम्बतापक्ष ईश्वरोपाधिर्मायाऽपि परिणाम्युपादानम्, ब्रह्माप्यधिष्ठानतया विवर्तोपादानम्, निमित्तं च। अवच्छेदवादे त्वविद्योपहितस्यैवाधिष्ठानत्वम्, अविद्या तु दोषविधया केवलं निमित्तकारणम्। केषाञ्चन तदेकदेशिनां तु माया द्वारकारणम्। तत्र विश्वस्यैकाज्ञानकल्पितत्वं विम्वेश्वरवादे, अनेकाज्ञानविषयैकब्रह्मविवर्तत्वमपरत्र। कल्पितत्वव्यपदेशोऽप्यधिष्ठानकारणापेक्ष एव, न तु केवलाज्ञानस्य परिणामभेदेन, किन्तु चैतन्यविवर्तत्वमात्रेण। इदं त्वविद्यावच्छिन्नवादेऽपि समानम्। तत्राज्ञानकल्पितत्वमज्ञानविषयब्रह्मविवर्ततावादमात्रमित्यद्वैतिनां मर्यादा॥

तत्र बहुजीववादो बिम्वेश्वरवादो वा न मन्दमात्रदृष्ट्या, किन्तु सर्वदृष्ट्या। अविद्यावच्छिन्नं चैतन्यं जीव इत्येकजीववादस्तु तमनुपस्थाप्यैवान्तःकरणावच्छिन्नचैतन्यस्यैव, अथवाऽवस्थाज्ञानमाश्रित्य जाग्रदाद्यवस्थाविशेषावच्छिन्नरूपेण व्यष्टिरूपेणैव। सर्वव्यवस्था त्वनेकजीववादवदत्रापि। उभयत्रापि मूलाविद्यावस्थाविशेषप्रतिविम्बत्वेन तत्तदवस्थाविशेषावच्छिन्नत्वमात्रेण जीवबहुत्वं तु समानम्। मतद्वयेऽपि तत्त्वज्ञानेन तत्तज्जीवस्य तत्तन्मूलतत्त्वबिम्बचैतन्येश्वरभाव एव यावत्सर्वमुक्ति मुक्तिः, सर्वमुक्तौ तु परमा मुक्तिः, अथवा तत्तदवस्थाविशेषितस्य तत्तज्जीवाश्रितस्य तत्त्वसाक्षात्कारेण निवृत्तौ मुख्याविद्यावच्छिन्नचैतन्यरूपजीवभावो मुक्तौ, इति नैकमुक्तौ सर्वमुक्त्यापत्तिरुभयत्रापि॥

शुकादिमुक्तिप्रतिपादकवचनानामर्थवादत्वम्, उपचरितार्थत्वं वेति तत्र तत्रोक्तिस्तु यावत्सर्वमुक्ति, एकस्य, बहूनां वा निर्विशेषब्रह्मभावाभावाभिप्राया। जीवेश्वरोभयप्रतिबिम्बभावकल्पे त्वेकैकस्यापि प्रतिबिम्बस्य संविन्मात्रशुद्धबिम्बभाव एव, न तु प्रतिबिम्बरूपेश्वरभाव इति व्यवस्था ॥

प्रपञ्चस्तु विवर्तः सर्वत्र ब्रह्मण एव तदुपाधिमायाकल्पितेन रूपेण पूर्वोक्तविधया। न चैकजीववादेऽवच्छेदवादाभिमतेऽप्यनेकेश्वरकल्पना; प्रतिजीवं तत्तदज्ञानकल्पितः प्रपञ्चभेदो वा। सर्वत्र सर्वोपादानं हीश्वरो नाम। तत्रावच्छेदवादेऽविद्योपहित ईश्वरः। स एव चैतन्यांशेन विवर्तत उपाध्यज्ञानावृतत्वेन। न हि कुत्रापि जीवाज्ञानपक्षे जीवोपादानकथा। अत एव कल्पतरुः—

"जीवाज्ञानाज्जगत् सर्वं सकारणमिति ब्रुवन् ॥
क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम् ॥"

इति। एतेन—बहूनामीश्वरस्य, तत्प्रेरितानां ब्रह्मादीनां च ज्ञानेच्छाप्रयत्नैर्निर्मितत्वे श्रुत्यादिप्रमाणासद्भावेन विरोध इति—परास्तम्; उक्तरीत्याऽविरोधात् ॥

यत्तु—एकजीवाज्ञानपरिकल्पितं जडजीवात्मकं समस्तमिति वदन् वादी प्रष्टव्यः—किमसावेको जीवस्त्वम्? उतान्यः। अन्यश्चेत्, तदज्ञानकल्पितस्य तव बन्ध-मोक्षाभावाद् व्यर्थं पारिव्राज्यादिकम्। आद्येऽपि प्रतिवादिमुखान् जीवान् पश्यसि वा, न वा। प्रथमेऽपि किं ते सन्ति, उत न? तत्र नाद्यः; परस्य प्रतिवाद्यादेः सतोऽसत्त्ववचनमसाम्प्रतम्, स्वानुभवसिद्धं चैतत्। नापि द्वितीय-तृतीयौ; तत्र यदि परः प्रतिवाद्यादिजीवान् न पश्यति, पश्यन् वा न सन्तीति पश्यति, तदा किमित्युन्मत्तवत् वदेत्? न कथायां प्रवर्तेत न शास्त्रं रचयेत्, व्याकुर्याद्वा; अन्यथोन्मत्तवन्नायं लौकिकः, नापि परीक्षक, इत्युपेक्षणीयः स्यात्—इति ॥

तन्न; भावानवबोधात्, दत्तोत्तरत्वाच्च। तत्र एकाज्ञानवादाभिमत एकजीवो व्यापकाविद्याच्छिन्नः, तदज्ञानकल्पिता जीवाश्च तदवस्थाविशेषावच्छिन्नास्तत्तज्जीवाः। प्रपञ्चस्तु जडात्मको न व्यापकमुख्यजीवाज्ञानकल्पितः, न वा परिच्छिन्नजीवकल्पितः, किन्तूभयमूलाविद्योपहितचैतन्यविवर्तः, ईश्वरस्तु सर्वेषु प्रस्थानेष्वेकः। ब्रह्मादयोऽपि सर्वत्रैकरूपा एव ॥

न ह्येकजीववादेऽत्रावस्थाविशेषावच्छिन्ना जीवाः प्रतिबिम्ववादे प्रतिबिम्बा इव प्रत्येकं वादिप्रतिवादिरूपान् जीवान् परान् कल्पयन्ति, किन्त्ववस्थाविशेषावच्छिन्नाः,अनादिसिद्धाः सर्व एव यथा प्रतिबिम्ववादे सर्वेऽपि प्रतिबिम्बाः न परस्परम्, अन्येषां वा जीवानाम्, जडानां वा ते कल्पकाः। सति चैवम्—विकल्पितेषु कल्पेषु न कोऽपि कल्पो विकल्पसहः ॥

तत्र प्रथमे मुख्यविकल्पे एकजीववाद एको जीवस्त्वं वा, अन्यो वेति विकल्पे द्वितीयः कल्प एव कल्पते, न प्रथमः। अन्यश्चायं व्यापकाविद्यावच्छिन्नो जीव एव, यस्यैवोपाध्यवस्थाविशेषावच्छिन्नाः सर्वेऽपि व्यष्टिजीवा वादिनः, प्रतिवादिनः, बद्धाः, जीवन्मुक्ताः, स्थितप्रज्ञाः, विश्व-तैजस-प्राज्ञाः, विराड्हिरण्य-गर्भान्तर्यामिणः, ब्रह्मादयः, इन्द्रादयो लोकपाला अन्ये च, इति सर्वेषां तत्तदधिकारानुरोधेन तत्तद्वर्णाश्रम-वयोऽवस्थाविशेषेण तत्तदुचिताश्रमधर्मानुष्ठानं प्रस्थानान्तरेष्विव तत्तदधिकारानुगुणं स्वस्वबन्धविमोकार्थं पारिव्राज्यादिकम्, सगुणोपासनम्, कर्मयोग-भक्तियोग-ज्ञानयोगेषु तत्तदधिकारिकेषु प्रवृत्तिश्च न नोपपद्यते ॥

न चात्रैकोऽविद्यावच्छिन्नो जीवो बद्धः, न वा मुक्तः, इति जीवमूलतत्त्वेन तेन न किमपि कर्तव्यम्। तत्तदवस्थाविशेषविशिष्टानां सर्वेषां मुक्तौ सोऽपि तदीयावस्थाविशेषाणां सर्वेषां निवृत्त्या निवृत्तप्रायः, स्वयं सोऽविद्योपाधिविलयात् संविन्मात्रेणावतिष्ठत इति हि वस्तुस्थितिः ॥

एतेन—द्वितीये विकल्पे-प्रथमविकल्पद्वितीयकल्पः प्रतिवादिनः सन्ति वा न वेत्यपि—व्याख्यातः। तत्रापि पूर्वोक्तमेवोत्तरम्—सन्तीति कृत्वैव विचार इति। न च वादी प्रतिवादिनं सन्तमपि न सन्तं पश्यति; तत्तदवस्थाविशेषावच्छिन्नानाम्, अवस्थान्तरविशेषावच्छिन्नानां च भिन्नानां यावत्तत्त्वसाक्षात्कारं वर्तमानत्वेन वाद-प्रतिवाद-वाद-जल्प-वितण्डादिकथाप्रणयनम्, तद्व्याख्यानम्, तदुपदेशादयो यावन्तो व्यवस्थितेषु दर्शनेषु व्यावहारिका अनुवर्तन्ते, न तेषामत्रापि पक्षे लेशतोऽपि भङ्गः ॥

प्रकृतिश्चेति सूत्रस्याद्वैतसिद्धान्त एव स्वारस्यम्।

न चोन्मत्तवद् व्यवहारः कस्यापि, इति न लौकिक-पारलौकिकव्यवस्था काऽप्यनुपपन्ना। तदेवं साक्षिप्रत्यक्षाग्राह्यत्वं प्रपञ्चे मिथ्यात्वस्य, ब्रह्मणि मिथ्यात्वभावस्य श्रुतिसिद्धत्वम्,ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वम्, श्रुति-स्मृति-पुराणेतिहासादीनामुपक्रमोपसंहाराद्यनुगृहीतसद्विद्या-परविद्यानन्दमयविद्या-

दीनां च निर्विशेषपारमार्थिकतायामेव पर्यवसानम्, एकजीववादेऽपि सर्वव्यवहारोपपत्त्यादि सर्वमुपपादितब्रह्मविवर्तोपादानतायामेवेति "प्रकृतिश्चे"तिसूत्रार्थपरीक्षाप्रसङ्गेन विवेचितम् ॥

प्रपञ्चमिथ्यात्वप्रमाण माण्डूक्यागमप्रकरणकारिकासंग्रहः ।

सर्वमिदं माण्डूक्योपनिषदागमप्रकरणेनाप्युभयाविप्रतिपन्नेनोपपाद्यत इति प्रथमं ताः परीक्ष्यन्ते, तदनन्तरं तु "प्रतिज्ञा-दृष्टान्तानुपरोधसूत्रांशविवरणप्रसङ्गेन वाचारम्भणादिश्रुत्यर्थः परीक्षिष्यते । तत्र माण्डूक्योपनिषत्कारिकाणां प्रथमं प्रकरणं श्रुतिः आगम एव, न तु गौडपादाचार्याणां कृतिरिति द्वैतिनः । पूज्यश्रीगौडपादानां कृतिरेवेयमित्यद्वैतिनः । उभयसम्प्रतिपन्नं तदुत्तमप्रामाण्यमिति तद्विवरणमात्रं परमतपरीक्षणपूर्वकमत्रानुक्रम्यते । तत्र च मुख्यतया दृश्यमानाः प्रपञ्चमिथ्यात्वविषयिण्यः कारिका अनुव्याख्यानोद्धृता आदौ निर्दिश्यन्ते । ता यथा—

"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं सर्वमद्वैतं परमार्थतः ॥
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं निवर्तते ॥

इति ॥

माण्डूक्यकारिकाया अनुव्याख्यानेन विवरणम् ।

तद्विवरणं त्वनुव्याख्यानस्य—

इत्यत्र यदिशब्दो द्वौ निवर्तेतेति च द्वयम् ।
विश्वस्य सत्यतामाहुर्विद्येतोत्पत्तिमेव च ॥
विद्योत्पत्ताविति ह्यस्माद्धातोरुत्पत्तिरेव हि ।
निवृत्तिर्व्याप्तियुक् प्रायः प्रपञ्चो भेदपञ्चकः ॥
जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जड-जीवभिदा तथा ॥
मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥
इति श्रुतेर्मितं त्रातं मायाख्यहरिविद्यया ।
उत्तमोऽर्थो हरिस्त्वेकस्तदन्यद् मध्यमाधमम् ॥

इति ॥

उक्तानुव्याख्यानस्य सुधया विवरणम् ।

अयं भावः—प्रपञ्चो यदि वर्तेतेत्यादौ श्लोकद्वये यदिशब्दद्वयम्, निवर्तेतेति लिङन्तपदद्वयं च वर्तते । इदमुपलक्षणम् । विद्येतेति पदान्तरस्य, केचिदिति च सत्यतायाः अनादितायाश्च । प्राहुरित्यर्थः । तथा च श्लोकद्वयस्य प्रपञ्चमिथ्यात्वपरतया व्याख्यानं न युक्तम् । यद्यत्र प्रपञ्चमिथ्यात्वमभिसन्धित्सितम्, तदा योऽयं प्रपञ्चो विद्यते = दृश्यते = स निवर्तिष्यते, अज्ञानेन कल्पितो विकल्पो निवर्तिष्यत इति वक्तव्यम् ॥

यदाद्याश्च शब्दा विगतार्थाः, विरुद्धार्थाश्च, तर्हि तत्प्रयोगे प्रसङ्गपरमेतद्वाक्यद्वयमिति विज्ञायते । यथा–यदि पर्वतो निरग्निको भवेत्, तदा निर्धूमः स्यादिति । प्रसङ्गस्य च विपर्यये पर्यवसानात् निवृत्त्यादिकमेव वाक्यसामर्थ्याल्लभ्यते । निष्कर्षस्तु—अत्र प्रपञ्चो यदि विद्येत, तर्हि निवर्तेत । यदिशब्दबलात् प्रसङ्गोऽयमिति ज्ञायते । प्रसङ्गश्च व्याप्तिमूलः । व्याप्त्यङ्गीकारे व्यापकप्रसञ्जनं तर्क इति तल्लक्षणम् ॥

तथाचोत्पत्तिरेव निवृत्तिव्याप्या, न सत्ता, इति विद्येतेत्युत्पत्तिपरमेव । न च सत्ता निवृत्तिव्याप्या द्वैतमते; व्यभिचारित्वात् । अद्वैते च विरुद्धत्वात् । अतः प्रतीयमानत्वान्यथानुपपत्त्या न सत्ता विद्यतेरर्थः, किन्तूत्पत्तिरेव; तद्योग्यत्वात । अस्य ध्वंसे व्यभिचारो मा भूदिति भावत्वे सतीति विशेष्यते ॥

प्रपञ्चशब्दे पञ्चशब्दो वर्गपरः, विशिष्टस्तु पञ्चविधभेदपरः ? स च प्रकृष्टो मोक्षाङ्गज्ञानविषयतया; भेदपञ्चकज्ञानपूर्वकपरमात्मसाक्षात्कारस्यैव मोक्षसाधनत्वात् । स च सत्यः, अनादिश्च । अनादित्वादेव न निवर्तते, इत्यतः सत्यत्वमपि तस्य ज्ञाप्यते ॥

मायामात्रमिदं सर्वमित्यस्य द्वैतानुगुणं विवरणम् ।

"मायामात्रमि"ति तु मायाशब्दस्य प्रज्ञार्थत्वाद् मात्रशब्दस्य मितपरत्वाद् हरिविद्यया परिच्छिन्नं सर्वं हरिव्यतिरिक्तम्, अद्वैतं तु हरिरेवैकः परमार्थः उत्तमोऽर्थ इति ॥

इयमत्र योजना—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥"

इति पूर्वश्लोकेऽनादिमायया परमेश्वरप्रज्ञया, तदिच्छया वा जीवजातस्य प्रकृत्यादिजडावृतज्ञानत्वलक्षणं सुप्तत्वम्, तयैवेश्वरप्रज्ञया परमेश्वरादितत्त्वविषयपरोक्षज्ञानमभिधायापरोक्षज्ञानमप्युक्तम्। तेन च जीवेश्वरादीनां भेदपञ्चकं प्रतिपाद्यते । सति चैवं प्रपञ्चो भेदपञ्चको यदि निवर्तेत, तदा जीवानां जडत्वापत्त्या मोक्षशास्त्रवैयर्थ्यापत्तिः, इत्यनिष्टनिवृत्त्यापादनं प्रथमश्लोकपूर्वार्धार्थः ॥

यस्मादिदं द्वैतं भेदपञ्चकं मायामात्रं ईश्वरप्रज्ञाविषयः, ततस्सत्यमिति भावः। "अद्वैतः सर्वभावानामि"ति तु परमेश्वरस्यैकत्वं परमार्थतः उत्तमार्थमाश्रित्य । परमार्थ इति पञ्चमी ल्यब्लोपे ॥

तदेवं निर्धारितभेदसत्यताभावे भेदपञ्चकस्यास्याज्ञानकल्पितत्वे तु तत् निवर्तेत, परं तु न निवर्तते, इत्यनिवृत्त्यनुपपत्तिर्बाधिका, इति भेदसत्यत्वोपसंहारार्थत्वं द्वितीयश्लोकस्य—

"विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ॥"

इति पूर्वार्धस्य तदेवं उपदेशात् = श्रुत्याद्यनुसारित्वात्, अयमेव वादः सताम्। द्वैतं न विद्यते इति तु तत्त्वेऽज्ञाते, ज्ञाते तु तद् वर्तत एवेत्युक्तमाण्डूक्यागमप्रकरणगतश्लोकार्थः। अनेन विशदमिदम्—प्रपञ्चसत्यत्ववाद एवागमसंमतः, न तु तन्मिथ्यात्ववादः —इति ॥

अद्वैतः सर्वभावानामित्यादावद्वैत एव स्वारस्यम्।

तत्र—

"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥"

इति तु—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥"

"इति श्लोकानन्तरः, ततः पूर्वमुपक्रमस्तु—

अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥"

इति ॥

"प्रपञ्चो यदि वर्तेते"त्यादिश्लोकद्वयं तूपसंहार एव, माण्डूक्योपनिषदो जाग्रदाद्यवस्थाविशेषं पुरस्कृत्य प्रवृत्तायाः प्राधान्येन त्वम्पदार्थशोधनमेव लक्ष्यमिति च प्रतीयते, इति जाग्रदाद्यवस्थात्रयातीतमुक्तस्वरूपरूपणपरमिदमागमप्रकरणम्, न तु तत्पदार्थस्वरूपनिष्कर्षपरम्; अन्यथा जाग्रदाद्यवस्थायाः तद्राहित्यस्य च प्रतिपादनस्यात्रासङ्गतेः, इति मुक्तात्मस्वरूपनिरूपणप्रसङ्गेनात्र तस्य परमात्मैक्यमपि निरूपयितुं निष्प्रपञ्चत्वं ब्रह्मणोऽपि प्रतिपाद्यते, येन "शिवमद्वैतं चतुर्थंमन्यन्त" इति व्याख्यातं भवति ॥

अत एव—

"अद्वैतः सर्वभावानाम्" इति सर्वेष्वपि भावेषु, अवस्थात्रयेऽप्यद्वैतः परमार्थतो द्वैतशून्योऽवस्थात्रयातीतोऽद्वितीयस्तुरीय इति प्रस्तूयते । इदमेव तत्त्वं परामृशति—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ॥"

इत्यादिना । अवस्थात्रयातीतावस्थायामद्वैतमेव, ततः पूर्वं सद्वैतमिव, वस्तुगत्या तु तत्रापि "अद्वैतः सर्वभावानामि"ति यावत् ॥

इदमेवाभिप्रेत्य स्वस्वरूपस्य जाग्रदाद्यवस्थायां माययाऽऽवरणम्, अनिद्रास्वप्नत्वादिरूपेणावस्थात्रयातीतस्य त्वद्वैतत्वमिति ॥

"अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥"

इति तुरीयावस्थायामद्वितीयरूपेणानावृततया प्रकाश इति विवरणम् ॥

तत्रानादिमायया स्वापोऽप्रकाशः, आवरणं हि जाग्रदाद्यवस्थायाम् । तुरीयावस्थायां त्वनावृतसंविन्मात्रप्रकाश इति वर्णनेन द्वैतप्रतिभासोऽज्ञानकल्पितः, परमार्थतस्त्वद्वैतमिति विशदम्, इति तस्यैवार्थस्योपक्रमान्तस्योपसंहारार्थे प्रकृते श्लोकद्वयेऽपि तदनुगुण एवार्थो वक्तव्यः ॥

अत एव—

"द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञ-तुर्ययोः" ।

इति । सुषुप्त-मुक्तयोर्द्वैताग्रहणसाम्येऽपि—

"बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ।"

इति जाग्रदाद्यवस्थाप्रयोजकस्थले स्थूल-सूक्ष्मशरीरयोः सुषुप्तौ तत्कारणाज्ञानात्मनाऽवस्थानम्, तुरीयावस्थायां त्वज्ञानस्याप्यभाव इति वैलक्षण्येन द्वैतस्य स्वरूपतोऽप्यभावस्तुरीयावस्थायां प्रतिपाद्यते ॥

तुरीया तु मुक्तावस्थाऽखण्डानन्दात्मता ब्रह्मस्वरूपसाक्षात्कारमात्राधीना, न केवलमवस्थारूपेण जीवत्वप्रयोजकेन, किन्तु स्वस्वरूपेणापि मूलाविद्याया निवृत्त्यैव, इति जगतोऽपि सर्वस्याविद्याप्रयुक्तत्वात् स्वरूपतोऽभावप्रतिपादनार्थमद्वैतप्रकरणस्योपसंहारः प्रस्तुतः । तत्र—

"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं सर्वमद्वैतं परमार्थतः ॥"

इति प्रथमश्लोकः । अयं च श्लोकः—पूर्वस्मिन् श्लोके—"अद्वैतं बुध्यते तदा" इति यदद्वैतमुक्तम्, तदिदं यदि द्वैतस्य निवृत्त्या स्वरूपतोऽभावेन, तर्हि कथं द्वैतप्रतिभासो जाग्रत्स्वप्नाद्यवस्थायाम्? प्राचीनसद्वैतावस्थाया जाग्रदादिरूपायाः कथं वोपपत्तिरिति शङ्कावारणार्थम् ॥

तुरीयावस्थायामद्वैतमिति वस्तुगत्या परमार्थतः—परमार्थस्थितिस्तुरीयावस्थामभिप्रेत्योक्ता । इदं पञ्चम्यास्तसिलमभिप्रेत्यैव परमत इव ॥

वस्तुतस्तु—प्रथमायामेव तसिल्, परमार्थमित्यर्थः । जाग्रदाद्यवस्थायां तत्सत्ताप्रतीतिस्त्वकिंचित्करी । न हि सत्त्वेन प्रतीतिमात्रं सत्त्वप्रयोजकम् । सत्त्वेन प्रतीतावपि रज्जुसर्पादीनामिवाधिष्ठानज्ञानेन बाधेनाद्वैतनिर्वाहः, सद्वैतनिर्वाहश्चोभयमपि ज्ञाताज्ञातदशाभेदादुपपद्यते । तथाच प्रपञ्चो यद्यपि न सन्; बाध्यत्वात्, तथापि यदि सन् घट इति प्रतीयते, तर्हि बाध्योऽपि, सत्तादात्म्यमात्रेणैव स सन्, इति नाद्वैतहानिः ॥

यदि शब्दस्य सम्भावनापरत्वम्, अवधारण-
परत्वं वा, न प्रसङ्गपरत्वम् ।

अत्र यदिशब्दोऽभ्युपगमवादेनासंभावनाभिप्रायेण, यथा "यदि सोमं न विन्देत पूतीकानभिषुणुयात्" "इत्यत्र । तथाच प्रपञ्चे यदि सत्प्रतीतिर्वर्तेत, तर्हि निवृत्तिरपि स्वीकर्तव्येति । लिङ्प्रत्ययस्तु यदिशब्दप्रयोगमाश्रित्यापि भवति, न हि सर्वत्र प्रसञ्जनपरः । यथा—

"उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत्
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।

तेषां प्रकाशनविधिश्च महीसुरैश्चेत् ।
"तानन्तरेण निपतेत् क नु मत्प्रणामः ॥"

इत्यादौ । यदि त्वत्रावधारणार्थ एव यदि, तर्हि प्रकृतेऽपि प्रपञ्चस्सन्प्रतीतिविषय एव, एवं निवर्तेत चेति योजनाऽनुसन्धेया ॥

एतेन—यदिशब्दद्वयमपि नाद्वैतसिद्धान्तविरोधि। परमते तु पूर्वप्रस्तुतद्वैतानुपपादकत्वात्, प्रत्युत तद्विरोधाच न तौ प्रसञ्जनपरौ । पूर्वस्मिन् श्लोके प्रस्तुतस्याद्वैतस्य परमात्मस्वरूपैक्यपरत्वे, प्रसक्तस्य तस्यैवोपपादनीयत्वाद् भेदपञ्चकनिरूपणस्यात्र का वा सङ्गतिः? येन तन्निरूपणार्थमयं सन्दर्भः स्यात् ॥

निर्धारितार्थः सत्त्वैव, नोत्पत्तिः ।

विद्येतशब्दस्य सत्तापरस्योत्पत्तिपरतया व्याख्यानम्, सत्यत्वानादित्वाध्याहारः, तदुपलक्षणता वाऽश्रौती परमते, यद्युत्पद्येत, तर्हि निवर्तेत, इत्युत्पत्ति-निवृत्त्योर्व्याप्तिस्तु ध्वंसे व्यभिचारित्वादयुक्ता, भावत्वे सतीति विशेषणं प्राय इत्यध्याहारश्चाप्रामाणिकः । परमात्मैक्यज्ञानस्य भेदपञ्चकमानस्य चाङ्गाङ्गिभावे न किमपि प्रमाणम्, तस्य बाधितत्वमसत्यत्वं चान्यत्र व्यक्तीकृतम् ॥

सत्त-निवृत्त्योरेव व्याप्तिः, न तत्पत्ति-निवृत्त्योः ।

विद्येतपदेन सत्त्वेन प्रतीतेरेव विवक्षणात्, सत्तादात्म्यस्यैव निवृत्तिव्याप्यत्वस्य विवक्षणाच्च न तस्याप्यद्वैतसिद्धान्ते विरोधः, पराभिमतसत्ता यद्यर्थक्रियाकारिता, तर्हि तस्य निर्विशेषेऽसम्भवात् तद्व्यतिरिक्ते सर्वत्रोपाधितः, स्वरूपतो वा निवृत्त्या व्याप्तिरप्यद्वैताविरोधिन्येव ॥

श्रुतिर्हि स्वयं स्वतन्त्रा सत्ताया निवृत्तिव्याप्यत्वं यदि श्रावयति, तर्हि सा स्वीयसिद्धान्ताविरोधेनान्यथानयनमर्हति । श्रुत्यनुसारी हि वैदिकः सिद्धान्तः, न तु तत्तन्मनोरथमात्रकल्पितः, इति सत्ताया निवृत्तिव्याप्यत्वं स्वसिद्धान्तविरुद्धमिति परेषामुक्तिः स्वयं स्वसिद्धान्तस्य श्रुतिविरुद्धत्वं डिण्डिमयति, इति "अद्वैतः सर्वभावानामि"त्युपक्रान्तम्, "अद्वैतं बुध्यते तदा" इति परामृष्टं चाद्वैतमेवात्र द्वैतसामान्यस्य सत्त्वेन प्रतीयमानस्यापि मिथ्यात्वनिरूपणेनैवोपसंह्रियते । अत एवोत्तरार्धम्—

"मायामात्रमिदं सर्वमद्वैतं परमार्थतः ।"

मायामात्रपदादोनामद्वैत एव स्वारस्यम् ।

इति ।। अत्र मायामात्र-परमार्थपदयोः परस्परप्रतियोगिनोर्विवक्षणाद् इदं सर्वमपरमार्थम्, अद्वैतं परमार्थमिति विशदं प्रतीयते। अन्यथा "अद्वैतं परमार्थतः" इति वितथमत्र। "अद्वैतः सर्वभावानाम्" "अद्वैतं बुध्यते तदे"त्यतोऽधिकस्यार्थस्य कस्याप्यबोधनात् ।।

प्रपञ्चसत्यत्वस्थापनपरत्वे पूर्वार्धस्य सद्वैतं परमार्थ इत्येवोपसंहारापत्तिः। मायामात्रपदे मात्रपदेन धातुद्वयादेकप्रत्ययेन कृदन्तत्वविवक्षया मितपरतया व्याख्यानस्यातिक्लिष्टत्वात्, प्रपञ्चपदेन निर्दिष्टस्य भेदवर्गस्यैकस्येदं-सर्वपदेनापि ग्रहणस्यानन्वयात्, तदनुसारेणापि प्रपञ्चपदस्य प्रसिद्धजगत्परत्वव्याख्यानस्यैव युक्तत्वात्, मायापदस्य प्रज्ञार्थपरत्वे मात्रपदेनैवाभिसन्धित्सितार्थलाभेन मायापदवैयर्थ्यात्, तत्रापि प्रसिद्धार्थपरत्वत्यागस्य निर्निमित्तकस्यायोगात्, अद्वैतपदस्यैकत्वपरताया असंभवात्, परमात्मैकत्वस्याविप्रतिपन्नस्यासन्दिग्धस्य चात्र निरूपणस्याप्येकमेवाद्वितीयमित्यादाविव सजातीय-विजातीय-स्वगतभेदराहित्यपरतयाऽद्वैतवादानुगुणविवरणस्यैव साधुत्वात्, उपक्रम-परामर्शोपसंहारेष्वभ्यस्यमानस्याद्वैतस्याभ्यासानुसारेणोपक्रम-परामर्शयोर्विवक्षितार्थोपयोगितयाऽद्वैतपदस्यापातप्रतिपन्नविरोधपरिहारेण समर्थनार्थमेव "परमार्थतः" इति पदमिति व्यवस्थाया एवाऽस्याञ्च मायामात्रमित्यंशोऽप्यद्वैतसिद्धान्तानुसार्येव।।

प्रपञ्चपदस्य भेदपञ्चकपरत्वायोगः ।

अयमेव न्यायः—

"विकल्पो विनिवर्तेत कल्पितो यदि केनचित्।।"

इत्यत्रापि। विकल्पपदेन ह्यत्र प्रपञ्चपदेन निर्दिष्टस्यैव परामर्शः। स च प्रपञ्चस्य विकल्प्यमानत्वम्, अज्ञानकल्पितत्वं वाऽभिप्रेत्य। "कल्पितः केनचित्" इति हि तद्विवरणम्। तत्र केनचिदित्यनिर्वचनीयेनेति विवक्षितम्, इत्यज्ञानकल्पितत्वम्, तत एव ज्ञाननिवर्त्यत्वं च विशदम्।।

ब्रह्मविवर्तवाद एव माण्डूक्यागमार्थः ।

अत्र यदिशब्दोऽवधारणार्थ एव = अज्ञानकल्पित एव प्रपञ्चः, निवर्तते

चेति हि निश्चितमित्यर्थः। सति चैवं "नेति नेती"ति निषेधमुखेनैवाद्वैत-तत्त्वं ज्ञातव्यम्। इदं चोपदेशगम्यम्, न तु द्वैतवत् प्रमाणान्तरावगम्यम्। द्वैतं तु यावदद्वैततत्त्वज्ञानं प्रमाणान्तरगम्यम्। ततश्च व्यावहारिकत्वमेव तस्य। ज्ञाते त्वद्वैततत्त्वे न द्वैतम्। तदुक्तम्—

"यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते ॥"

इति। इदमेवाभिप्रेत्य—"एकविज्ञानेन सर्वविज्ञानम्" "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति, इति ब्रह्मविवर्तोपादानतैव शास्त्रार्थः ॥

तथा सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, "वाचारम्भणं विकारो नाम धेयं मृत्तिकेत्येव सत्यमि"ति दृष्टान्तोपबृंहिता। सर्वं चेदं सूचयति सूत्र-कारः "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"ति ॥

मृत्तिकादृष्टान्तेनैकज्ञानेन सर्वविज्ञान-
प्रतिज्ञाया अद्वैत एवोपपत्तिः।

अत्र दृष्टान्तपदप्रयोगेण मृत्तिकेति तटस्थलक्षणविधया निदर्शन-मात्रम्, व्यावहारिके प्रपञ्चे कारणात्मता कार्यस्य नान्येन निदर्शयितुं शक्यते। तत्र मृत्तिकेत्युपलक्षणं मूलकारणस्य। पर्यवसानं तु परिणामिकार-णविधयाऽविद्यायाः, ततस्तस्या इव तत्त्वसाक्षात्कारे तत्प्रयुक्तस्य सर्वस्या-भावः, सविशेषपर्यन्तमेवेदन्तया शास्त्रस्य बोधकत्वम्, निर्विशेषं तु न वेदान्तशास्त्रगम्यम्; अविद्यानिवृत्तिपरत्वात् शास्त्रस्येत्यादौ ॥

तत्र दृष्टान्ते मृत्तिकापदं कारणमात्रपरम्, नाचेतनकारणपरम्, चेतन-ब्रह्मज्ञानेन सर्वविज्ञान उपपादनीयेऽचेतनकारणनिदर्शनस्याप्राप्तकालत्वात्, न वा मृत्तिकामात्रपरम्; तन्तुज्ञानेन पटविज्ञानानुपपत्तेः, किन्तु परम्परया सर्वोपादानसद्रूपब्रह्मकारणपरमेव। "सदेवेति" प्रस्तुतकारणविज्ञानेन हि सर्वविज्ञानं सर्वोपादानसत्पदार्थज्ञानेनैवेति ह्यत्र प्रक्रान्तम् ॥

रज्ज्वादिदृष्टान्तानुपादाने कारणम्।

एतेन—रज्जुसर्पदृष्टान्तानुपादानात् प्रपञ्चस्य नानिर्वचनीयत्वमिति शङ्काऽपि--निरस्ता; अन्यथा सर्पवत् प्रपञ्चस्यापि प्रातिभासिकत्वमापद्येत। न चैतत् युक्तम्। न चैकस्य मृत्तिकाया मूलाविद्याख्येन रूपेणोपादान-

त्यवत् प्रातिभासिकस्थले बहूनां प्रातिभासिकानामेकतूलाविद्यामूलकत्वम्, इति नैकविज्ञानेन सर्वविज्ञानम्। इदं सर्वमभिप्रेत्यैव ॥

"विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ॥"

इति सर्वकारणानिर्वचनीयमूलाविद्याकल्पितत्वं प्रपञ्चस्य विकल्पेनानुषज्य प्रतिपाद्यते। मूलाविद्या हि ब्रह्मव्यतिरेकेण नास्ति; अनादेरपि तस्या ज्ञाननिवर्त्यत्वात्, परिशेषन्यायेन ब्रह्मैकमेव पर्यवस्यति। सर्वमिदम्— "ज्ञाते द्वैतं न विद्यते" इत्यनेनाऽऽगमप्रकरणमुपदिशति ॥

यत्तु—

"उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥"

इत्यस्याज्ञाते तत्त्वे द्वैतं न विद्यत इति विवरणम्, तदिदं जडपरस्परभेद-जड-जीवभेदजीवेश्वरभेदादीनां प्रत्यक्षादिना ज्ञातानामपि विद्यमानत्वाद् नोपपद्यते। अतो न माण्डूक्यागमप्रकरणं द्वैतमिथ्यात्वसिद्धान्तप्रतियोगि, प्रत्युत तत्सत्यत्वसिद्धान्तस्यैव प्रतियोगि। अत एवोक्तम्— "उपदेशादयं वादः" इति ॥

अयंपदार्थो ह्यत्रोपक्रम-परामर्शोपसंहारनिर्दिष्टः—"अद्वैतं परमार्थतः' इत्यव्यवहितनिर्दिष्टोऽभ्यस्यमानश्चाद्वैतवाद एव, न तु द्वैतवादः; तस्य द्वैतं न विद्यते इति निषेध्यत्वेनैवोपसंहारात्, साक्षादत्र प्रकरणेऽनुपादानाच्च। अधिकं भाष्यादौ ॥

वाचारम्भणमिति श्रुत्यर्थोऽप्यद्वैतानुगुण एवेति शङ्का।

एतेन—प्रतिज्ञा-दृष्टान्तानुपरोधसूत्रांशमादाय वाचारम्भणवाक्यस्य नाद्वैतवादानुकूलत्वम्, किन्तु द्वैतवादस्येति विवरणमपि-परास्तम्। यत्तु तत्र—

वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम्।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ॥
एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च।
विकारित्वविवक्षायां न चैकनखकृन्तनम् ॥
सर्वं कार्ष्णायसं स्यादतः सादृश्य एव च।
विवक्षाऽत्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना ॥

प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैष विस्तरः ।
तस्मात् केनापि मार्गेण न विवर्तमतं भवेत् ॥
तदसङ्ख्यातदोषेतं हेयमेव शुभार्थिभिः ।
असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि ॥
उपरम्यते ततो विष्णुरिच्छापूर्वकमश्रमः ।
करोति पितृवद्विश्वं पूर्णाशेषगुणात्मकः ॥"

इति ॥

तत्र द्वैताभिमतवाचारम्भणशब्दार्थः ।

तस्यायमाशयः—एकविज्ञानेन सर्वविज्ञानम्, मृत्पिण्डादिदृष्टान्तश्च न तावत् वाक्यात् प्रतीयते, किन्तु, "वाचारम्भणमि"त्युपपादकवाक्यबलादिति वक्तव्यम् । तत्र वाचारम्भणशब्दो बहुव्रीहिः; वाचया = वागिन्द्रियेणारम्भणमस्येति तत्र विभागात् । अथवा वाचारम्भणशब्दो वागारब्धपरः । तत्र ल्युट् कर्मणि । "कृत्यल्युटो बहुलमि"ति हि कर्मणि ल्युट्, इति वाचारम्भणपदं साङ्केतिकपरम् । विकारशब्दस्तु विविधप्रकारमित्यर्थपरः सन् बहुविधपरं नामधेयस्य विशेषणम् ॥

तत्र विकारपदार्थः, एकविज्ञानेन सर्वविज्ञानोपपादनं च ।

वाक्यार्थस्तु—साङ्केतिकादिपदानि विकाराः; मृत्तिकेति संस्कृतं पदमेव नित्यम्—इति । बहुविधानि हि साङ्केतिकानि पदानि । इदमुक्तं भवति—कृतकत्वात्, अनित्यत्वाच्च परापेक्षत्वेन साङ्केतिकत्वेन परापेक्षं नामाप्रधानम्; अनादिनित्यत्वात्, परानपेक्षत्वाच्च संस्कृतं प्रधानम् । तत्र प्राधान्यात् संस्कृतज्ञानमात्रेण यथा साङ्केतिकानि ज्ञातमात्राणि, ज्ञानव्यवहारफलवद्व्यवहारगोचरा भवन्ति, एवं नित्यत्वादिना प्रधानस्य देवता-कर्मादिमिश्रस्य सकलस्यापि जगतो ज्ञानेन यत् फलम्, तत् समस्तमपि प्रधानस्य परमात्मनो ज्ञानबलाद् लभ्यते, तत्फले सर्वमन्तर्भवति । सत्यम्, एवं सत्येकविज्ञानेन सर्वविज्ञानं न मुख्यम्; तथापि न परनियोगार्हं तत् ॥

मृत्तिकेत्येव सत्यमित्यत्र सत्यपदार्थः ।

तत्र सत्यम्–सनातनम्–नित्यमित्यर्थः । सदाशब्दात् "तत्र भवः"

इत्यर्थेऽव्ययात् त्यपि "सर्वस्य सोऽन्यतरस्या"मित्यत्रान्यतरस्यामिति योगविभागे सादेशे च सत्यशब्दव्युत्पत्तिः । "नास्य जरयैतज्जीर्यते न वधेन वास्य हन्यते एतत्सत्यमि"ति सत्यशब्दस्य नित्यत्वपरत्ववर्णनादपि सत्यशब्दो नित्यपरः । 'अस्य'शब्दोऽत्र देहपरः, अयम्पदार्थस्तु परमात्मा; नाशस्यैवात्र प्रकृतत्वात् तस्यैव प्रतिषेधेन नित्यत्वमेवार्थः, न त्वप्रकृतानृतत्वप्रतिषेधात् सत्यत्वम् । अद्वैतवादे तु ब्रह्मव्यतिरिक्तं सर्वं मिथ्यात्वाद् नास्त्येव, इत्यसम्भवेऽनृतत्वस्य तुच्छकल्पस्यानिषेधः ॥

त्रिवारदृष्टान्तीकरणं तु शब्दान्तरस्यापि दृष्टान्तस्य प्रदर्शनार्थम्; अन्यथा मृदादिदृष्टान्तत्रयोपादानमद्वैतमतेऽपि वितथम् । गहनत्वाच्च प्रमेयस्यास्य दृष्टान्ताधिक्यं न दोषाय; बुद्धिवैशद्यार्थत्वादिति तु समं द्वैतमतेऽपि ॥

वाचारम्भणविकारादिसर्वपदसार्थक्यं द्वैतवाद एव ।

वाचारम्भणशब्दस्य मिथ्यात्वपरत्वे तु "नामधेयमि"ति पुनरुक्तम्; वाचारम्भणशब्देनैव लब्धत्वात् । विकारत्वं हि व्याक्रियमाणत्वाद् विशिष्टस्य, न रूपमात्रस्य, किन्तु नाम्नोऽपि । "मृत्तिकेत्येव सत्यमि"ति मृत्तिकाया एव सत्यत्वमाशयीतेतीतिशब्दस्तत्र व्यर्थः । स हि क्वचित्पदार्थविपर्यासकृत्, क्वचिद्धेतौ, क्वचिदेवमर्थे, क्वाप्यादिपदार्थे, क्वचित् समाप्तौ । न चात्रैतेष्वन्यतमेनार्थवान् सः । द्वैतमते त्वर्थविपर्यासकृत् । स मृत्तिकाशब्दपरताव्यवस्थापनेन सार्थकः ॥

अद्वैतवादे इतिशब्दानर्थक्यादिः ।

परिणामिवादिनोऽपि कृद्योगे तृतीयाया अङ्गीकृतत्वात्-वाचा = आरम्भणम् = विकारः, नामधेयं इत्येतेषामन्वयाभावेनाध्याहारस्येष्टत्वादश्रुतकल्पनम्, नामधेयस्यापि विकारशब्देन ग्राहणात् पुनरुक्तिः, इतिशब्दश्च निरर्थकः । न चात्र प्रकारवचन इतिशब्दः ।

कार्य-कारणयोर्भेदनिरासो नेतिशब्दप्रयोजनम् ।

किंचात्र प्रयोजनम्? कार्य-कारणयोर्भेदशङ्कानिरासो न तत्फलम् ॥ कार्य-कारणयोर्भेदनिरासो हि तयोस्सत्तैक्येन । तद्धि कार्य-कारणयोर्

स्वरूपैक्यम्; बाधात् । न चैकसामान्यकत्वम्, अनैकान्तिकत्वात् । अश्व-महिषयोरकार्य-कारणयोरपि ह्येकमेव सामान्यम् । कारण-सत्ताधीनसत्ताकत्वमपि कार्यस्यानैकान्तिकम् । न हि घटसत्ता कुलालसत्ताधीना, प्रत्युत विरुद्धाऽपि, इति न विवक्षितार्थसाधक इतिशब्दः ॥

अद्वैते दृष्टान्तानामेकविज्ञानेन सर्वविज्ञानानुपपादकत्वम् ।

"यथा सोम्ये"त्यादीनि दृष्टान्तवाक्यान्यपि परमतेऽनुपपन्नार्थानि । न हि जगतो ब्रह्मविकारत्वे, तद्विवर्तत्वे चैकविज्ञानेन सर्वविज्ञानं मृदादिदृष्टान्तेषु । मृदा विज्ञातया, लोहेन विज्ञातेन, कार्ष्णायसेन विज्ञातेन सर्वं मृन्मयम्, लोहमयम्, कार्ष्णायसं वा विज्ञातम्, इत्यत एवेष्टसिद्ध्या पिण्ड-मणि-नखनिकृन्तनशब्दानां वैयर्थ्यम् ॥

न च सर्वेषां मृन्मयानाम्, लोहमयानाम्, कार्ष्णायसमयानां चैकमृत्पिण्डकार्यत्वम्, इति विरुद्धार्थताऽपि । आरोपितत्वं त्वेकस्य मृन्मयादेरेकमृत्पिण्डादौ नास्त्येव । सर्वस्य युक्त्या समर्थनीयत्वे न दृष्टान्तता । दृष्टान्तान्तरं च तदुपपादकमप्रसिद्धम् । घटादयो हि भिन्नतया सर्वलौकिकैः प्रत्यक्षीक्रियमाणा न कारणाभिन्नाः । विशदीभविष्यति चेदं परमाणुवादनिरासप्रकरणे ॥

तत्रैकेन मृत्पिण्डेनेति तु बाधितम् । परमकारणदृष्ट्यैकत्वं पिण्डस्य, कार्याणां तु तेन रूपेणानेकत्वमिति सर्वपदमिति न युक्तम्; दार्ष्टान्तिके तद्विवक्षाभावात् । न च कार्य-कारणयोरैक्यम् । यदि च कार्यावस्थमेव कदाचन कारणावस्थमपीति कृत्वा, तर्हि नखनिकृन्तनस्यान्त्यवयविनः कारणत्वाभावाद् तन्नोपपद्यते ॥

द्वैतवाद एकविज्ञानेन सर्वविज्ञानाद्युपपत्तिः ।

द्वैतमते तु एकस्य प्रधानस्य विज्ञानेन सर्वविज्ञानोपपादनं सुष्ठु लगति । न चात्र कस्यापि वैयर्थ्यम्, अनुपपत्तिः, अनन्वयः, लोकविरोधो वा । तत्र वाचारम्भणवाक्ये वक्तव्यं पूर्वमेवोक्तम् । मृत्पिण्डादिसादृश्यत्रयं सादृश्याभिप्रायम् । वाचारम्भणवाक्यं प्रधानविषयम् । प्रतिपर्यायं तदाम्रेडनं तु बुध्यारोहार्थम् ॥

ब्रह्मणः प्राधान्यं कुत इति शङ्कानिरासार्थं सृष्टिप्रकरणादिकं सर्वं द्वैतमत उपपद्यते। न च विवर्तवादः ब्रह्माविद्याकल्पेन, जीवाविद्याकल्पेन, एकजीववादेन, अनेकजीववादेन, स्वपक्षसाधनेन, परपक्षनिरासेन, मुक्तिपर्यालोचनया, श्रुति-स्मृतीतिहास-पुराणपर्यालोचनया वा विचार्यमाणः क्षोदक्षम इति विशदीकृतमिदमधस्तात्, व्यक्तीकरिष्यते चोपरिष्टात्। असङ्ख्यातदोषग्रस्तो हि सः। सङ्ग्रहमात्राभिप्रायेणैतावदेवोक्तम्—ग्रन्थविस्तरे श्रोतॄणां न प्रवृत्तिः स्यात्—इति ॥

तदिदं—सद्विद्यायाः "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमि"ति ब्रह्मणो विवर्तोपादानतया ततोऽन्यन्नास्तीत्यभिप्रायेण प्रवृत्तत्वात्, श्वेतकेतुना तस्य तत्त्वस्याज्ञातस्य ज्ञानार्थमुद्दालकस्योपसरणात्, केवलनिमित्तकारणमेव ब्रह्म, नोपादानमिति शङ्कानिरासार्थं लोकसिद्धस्याभ्युपगमवादेन विवर्तवादभूमिकारूपस्य परिणामवादस्य, शाखाचन्द्रन्यायेनोपक्षेपेण कार्य-कारणयोर्भेदनिषेधेनाभेदपरत्वमादायैव तत्त्वोपदेशमुखेन प्रवृत्तत्वाच्च लोकसिद्धमुपादानोपादेयभावमादायैव श्रुतिस्तत्त्वमुपदिशतीति स्वीकर्तव्यम्, इति तद्विरोधाद् न समादरमर्हति ॥

मृत्तिकादिदृष्टान्तस्याद्वैतवाद एव सङ्गतिः, स्वारस्यं च।

तत्र कार्य-कारणयोरैक्यतो भेद एव युक्त इति वादो निरसिष्यते। परिणामिकारणविधया स यद्यपि संभवति; तथापि परिणामिकारणं ब्रह्माधिष्ठितमेव न स्वतन्त्रम्; अचेतनप्रधानकारणतायाः पूर्वमेव निरासात् ॥

तत्र च चेतनाधिष्ठितत्वस्य प्रकृतावचेतने तदधीनसत्ता-स्थिति-प्रकाशरूपायां तयाऽऽवरण-विक्षेपशक्तिमत्या कल्पितानादिसदादिभेदम्, तदावरणम्, आवृतावस्थसंविन्मात्रस्य तत्तदात्मना भानमात्ररूपविवर्तोपादानत्वरूपाधिष्ठानत्वं विना चानुपपत्तेः, प्रकृत्युपादानब्रह्मात्मतैव सती, न तु मृदाद्यचेतनात्मतेत्यत्रैव पर्यवसानम्, इति "मृत्तिकेत्येव सत्यमि"त्यादिना प्रतिदृष्टान्तं तत्तदुपादानकारणसत्यत्वबोधनमुपपद्यते ॥

तत्र "मृत्तिकेत्येवे"तीतिशब्दो नार्थविपर्यासाभिप्रायेण, इति मृत्तिकाशब्दो न वैदिकसंस्कृतशब्दपरः; शब्दनित्यत्ववादस्य सम्प्रतिपन्नत्वात्, साङ्केतिकशब्दानामपि संस्कृतशब्दत्वेन प्राधान्यात्, लोक-वेदाधिकरण-

न्यायेन 'य एव लौकिकाः, त एव वैदिकाः, इति सिद्धान्तेन मृत्तिकापदस्य वैदिकशब्दपरतया व्याख्यानस्यायुक्तत्वाच्च ॥

वेदापौरुषेयत्वस्य, तत्तत्पदस्वरूपापौरुषेयत्वे न तात्पर्यम्, किन्तु तत्तत्पदवाक्यक्रमे परमेश्वरस्यापि न स्वातन्त्र्यमित्येवम्परतायाम्, इति संस्कृतवैदिकपदविशेषाणां प्राधान्यबोधे न तात्पर्यम्, इतीतिशब्दोऽत्र प्रकारवाची, आदिपरः, उपलक्षणपरो वा, इत्युपलक्षणविधया तत्तत्पूर्वपूर्वकारणोपस्थापनेन ब्रह्मपर्यन्तपरमकारणस्यैवात्र समर्पणात्, स्थूलारुन्धतीन्यायेनातिसूक्ष्मब्रह्मतत्त्वसत्यताबोधन एवतात्पर्यात्, "यथा सोम्यैकेन मृत्पिण्डेने"ति तत्त्वोपदेशद्वारतामात्रेण मृदादिकारणतत्तत्कार्याभेदोपदेशस्य प्रक्रान्तलोकसिद्धदृष्टान्त-दृष्टान्तिकभावावलम्बनेनानुमानविधया, मननविधया वा तत्त्वोपदेशे तात्पर्याच्च; अन्यथा "मृत्तिकेति सत्यमि"त्यनेन निर्वाह एवपदं वितथम् ॥

तत्र "एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातमि"त्यत्र मृत्पिण्डपदेनोपक्रमः कारणस्य, "मृत्तिकेत्येव सत्यमि"त्यत्र तस्य मृत्तिकापदेन परामर्शश्च पूर्वपूर्वकारणात्मत्वमुत्तरोत्तरस्य कार्यस्य, तदात्मत्वं तत्कार्यस्येत्येवमर्थं सूचयति, इत्यतोऽपि "मृत्तिकेत्येव सत्यमि"त्यस्य तत्कारणक्रमेण परमकारणमात्रसत्यत्वे तात्पर्यम् ॥

संस्कृतस्य प्रधानस्य ज्ञानेन न सर्वविज्ञानम् ।

नखनिकृन्तनं तु नान्त्यावयवि; ततोऽप्यतिसूक्ष्मस्य तत्कार्यस्य सम्भवात्। सर्वथाऽप्यन्त्यावयविकार्यपर्यन्तं स्वकारणक्रमेण परमकारणादनन्यदिति बोधनार्थमेवातिसूक्ष्मकार्यपर्यन्तस्यात्रोल्लेखः, मृत्पिण्डस्य कारणस्योल्लेखः, मृन्मयमिति मयट्शब्देन कार्यस्योल्लेखश्च कार्य-कारणभावेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञां द्रढयति, न तु वैदिकसंस्कृतशब्दप्राधान्ये, प्रधानज्ञानेनाप्रधानसर्वविज्ञाने वाऽत्र तात्पर्यम्; अन्यथा "यथा सोम्यैकेन मृत्पिण्डेने"ति दृष्टान्तस्य "मृत्तिकेत्येव सत्यमि"त्यस्य च का वा सङ्गतिः ?

न हि मृत्तिकापदमेव वैदिकं संस्कृतपदम्, न तु "अग्निमीले" इति प्रक्रम्याम्नायमानानि कान्यपि न संस्कृतवैदिकपदानि, किं वा निमित्तं मृत्पिण्डनिदर्शनानन्तरं मृत्तिकापदस्य वैदिकसंस्कृतशब्दप्राधान्येनोल्लेखे ? मृत्पिण्डपदम्, मृन्मयपदम्, वाचारम्भणपदं च सर्वं वैदिकसंस्कृतपदमेव, इति

प्रकृते किमिति "मृत्तिकेत्येव सत्यमि"ति स्थाने मृत्पिण्डमित्येव सत्यमिति नाम्नातम् ? एवमन्यत्राप्यूहनीयम्। किं वा प्रयोजनं मृत्पिण्डोदाहरणोपन्यासस्य, विशिष्य च कार्य-कारणभावमाश्रित्य ॥

अत एव "अपागादग्नेरग्नित्वं" "वाचारम्भणं विकारो नामधेयम्" "त्रीणि रूपाणीत्येव सत्यम्" इति वाचारम्भणत्वम्; "यदग्ने रोहितं रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्ये"ति प्रस्तुतनामव्याकृततन्मात्रावस्थकारणरूपाणामेव सत्यत्वम्, न त्रिवृत्कृतानामग्न्यादीनां कार्यावस्थानामिति प्रतिपादितमुपपद्यते ॥

निष्कर्षस्तु—व्याकृतावस्थायां कारणात्मना मृत्पिण्डादीनाम्, तत्कारणमृत्तिकादीनां सत्यत्वात्, यथा "सोम्ये"त्यादिना अपागादग्नेरग्नित्वमित्यव्याकृतात्मनां सत्यत्वम्, तत्रापीत्येवेतीति शब्दप्रयोगात् कारणाविद्यात्मनः सत्यत्वम्, ततस्तु ब्रह्ममात्रस्य सत्यत्वमिति प्रतिपादनद्वारा "एकमेवाद्वितीयमि"ति प्रस्तुतमद्वितीयत्वमत्र व्यवस्थाप्यते ॥

सत्यपदार्थो न द्वैतवादानुगुणः।

एतेन—सत्यपदमपि—व्याख्यातम्। यद्यपि सत्यपदमत्र—"अष्टमप्रपाठके" नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरम्" इति प्रसक्तविनाशमात्रनिषेधाद् नित्यपरम्; तथापि कार्यात्मनां कारणात्मताऽवस्थायामनित्यत्वेन कारणात्मता यावदविद्यासत्त्वं नित्यैव। एवमविद्यायाः कारणात्मतायांब्रह्मात्मतायामप्यनित्यत्वमेव, इत्यविद्यान्तानां सर्वेषां कारणात्मता नाशः; अविद्या-तत्प्रयुक्तसर्वविनाशस्यैव मिथ्यात्वरूपत्वात्, सर्वेषां विकाराणां फलतो मिथ्यात्वम्। व्यवहारमात्रोपयोगित्वेन तेषां सत्यत्वव्यपदेशमात्रम्, स्वरूपतस्त्वसत्कल्पमेव सर्वं विकारजातमिति फलति। इदं सूचयितुमेव नित्यपदं विहाय सत्यपदम्; तत्तत्कारणात्मताविनाशेऽपि मूलकारणब्रह्मात्मत्वमेव सत्यमिति बोधनार्थत्वात्तस्य ॥

विकार-वाचारम्भण-सत्यादिपदानामद्वैतवादसङ्गतिप्रकारः।

एवं च विकारः सत्यमिति वाचारम्भणम्, व्यावहारिकं सत्यम्। वस्तुतस्तु नामधेयमात्रम् = असत्कल्पम्; "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति वचनात्। विकल्पमात्रमेव विकाररूपा मृन्मयादिशब्दप्रयोगा इति सूचयितुमेवात्र वाचारम्भणम्, नामधेयमिति च पदद्वयम्, यथा पुरुषस्य चैतन्यमिति, इति नानन्यपरं पुनःश्रवणं पुनरुक्तिः, येन सा दोषः

स्यात्। परमते तु वाचारम्भणपदेन नामधेयपदेन च साङ्केतिकशब्दानां ग्रहणे नामधेयपदं वितथम्; मृत्तिकेत्येतिपदेनार्थविपर्यासकृतैव नामधेयस्य प्रतीतेर्नामधेयाभिधेयांशस्तु वितथ एव; अवधारणार्थस्य तत्रानुपयोगात्, कार्याणामेवात्र साङ्केतिकानां ग्रहणात् तस्य विकारपदेन जनिमत्त्वबोधनमपि वितथम्॥

न चात्र विप्रतिपत्तिः काऽपि। एवं कारणात्मतया नित्यत्वेऽपि न विप्रतिपत्तिः, न वाऽनादीनां वैदिकसंस्कृतशब्दानां नित्यत्वे, इति तन्निरूपणमप्यत्र वितथम्, "तत् सत्यमि"तिपदेन नित्यत्वविवक्षायामसत्यापरत्वमपि कुतः? किं नाम प्राधान्यं यन्नित्याविनाभूतं शब्दासाधारणम्? यद्यना दित्वम्, तर्हि ईश्वरशक्त्यादीनामप्यनादित्वाद् न तज्ज्ञानेन सर्वविज्ञानम्॥

इतिपदस्याप्यद्वैतवाद एव स्वारस्यम्।

न चेतिपदस्य प्रकारपरत्वेऽपि मूलकारणाविद्यापर्यन्तनित्यत्वविवक्षायां यावद्ब्रह्मसाक्षात्कारमद्वैतमतेऽपि किमपि छिन्नम्। मायाया नित्यत्वमेव, न विनाश इति तु "भूयश्चान्ते विश्वमायानिवृत्ति"रिति श्रुतिविरुद्धम्, इति ब्रह्ममात्रनित्यत्व एव पर्यवस्यति। "वाचाऽरम्भणमि"ति षट्कृत्वोऽभ्यासस्य नाद्वैतसिद्धान्त इव किमपि प्रयोजनम्। बुद्धिवैशद्यं नानेकदृष्टान्तैरेकरूपैः कुत्रापि शब्दभेदमात्रेण भवति, प्रत्युतैकार्थपदानां पर्यायकल्पानां प्रयोगेण तद्विपरीतमेव भवति —किं प्रधानं संस्कृतपदं नित्यम्, उतान्यदिति॥

अद्वैतमतेऽपि तु बुद्धिवैशद्यं विविधकार्यस्यापि त्रिवृत्कृतस्यात्रिवृत्कृतस्य मायापर्यन्तकारणात्मना सत्त्वबोधनेन, तस्यापि विनाशे मिथ्यात्वबोधनेन, इति सफलोऽभ्यासः षोढाऽपि॥

इत्येव सत्यमित्यभ्यासस्वारस्यमप्यद्वैतवाद एव।

"त्रीणि रूपाणि सत्यमि"त्यत्र प्रकृतलोहितादिरूपाणां प्रत्यभिज्ञातानां परित्यागेनाप्रकृतवैदिकसंस्कृतशब्दग्रहणं प्रकरणविरुद्धम्, इतिपदं तु बह्वर्थम्, क्वचिदर्थविपर्यासकृत्, क्वचित् प्रकारार्थम्, क्वचिदादिपरम्, क्वचिदन्यान्यपरमिति द्वैतिनोऽपि स्वीकुर्वन्ति, इति प्रकृतस्यार्थस्यैवोपलक्षणतया विवक्षासूचनार्थमितिपदमित्याख्याने को वा विरोधः॥

त्रिः षट्कृत्वो वा वाचारम्भणाद्यभ्यासः कार्य-कारणयोर्भेदशङ्का-

निरासार्थः, त्रिविधत्रिवृत्कृतकारणस्य, तत्तत्कार्येभ्यो भेदशङ्कानिरासार्थं हि सर्वस्यापि कार्यस्य कारणात्मतैव नित्या, न तु कार्यात्मता। कार्यात्मता हि कदाचिदस्ति, कदाचिन्नास्ति, कारणात्मता तु सर्वदा यावत्कारणसत्त्वमस्ति। कार्यात्मना प्रतीतावपि "मृद् घटः" इति कारणात्मतापि प्रतीयते, कार्यात्मतेव, इति तत्र कार्यात्मताविनाशेऽपि कारणात्मता तस्यानुवर्तते, इति विवेचनं षट्कृत्वस्त्रिविधव्याकृताव्याकृतकार्य-कारणयोस्तत्तत्कार्य-कारणभावावस्थामाश्रित्यानित्यत्व-नित्यत्वबोधनं विना नोपपद्यते॥

लौकिकालौकिकदृष्टान्तैः कार्य-कारणयोः कारणात्मताया
एव सत्यत्वोपादनार्थमेव वाचारम्भणादि।

अत एव "मृद् घटः" इति सामानाधिकरण्यम्। तत्र त्रिवृत्कृतावस्थायां कार्य-कारणयोस्सामानाधिकरण्यं प्रत्यक्षम्, इति प्रथमं लौकिकानुभवमादाय त्रिभिरभ्यासैः कार्य-कारणयोस्तादात्म्योपदेशार्थं वाचारम्भणत्वोपदेशः; त्रिवृत्कृतयोः सामानाधिकरण्यं श्रुत्यैकसमधिगम्यमिति तत्रैव कारणत्मतैव नित्येतिबोधनार्थम्—"वाचारम्भणं नामधेयं त्रीणि रूपाणीत्येव सत्यमि"ति श्रुतिरेवोपदिशति॥

एवमव्याकृतस्य तत्कारणावस्थत्वम्, तत्कारणेन सामानाधिकरण्यं च मायोपहितस्य बोधयति—"सदेव सोम्येदमग्र आसीत्" इति। तेन हि हि सृष्टेः पूर्वं ब्रह्मोपाधिमायात्मतैव सर्वस्य व्याकृतस्य, अव्याकृतस्य च प्रपञ्चस्येति "सदेवेदमि"ति सामानाधिकरण्यं दृढीक्रियते॥

मायाया अनादेरप्यनित्यत्वमेव, स्वाभाविकत्वादाद्वितीयत्वस्य।

माया तु नित्या वा, अनित्या वा। नित्यत्वेऽद्वैतहानिः, अनित्यत्वे तत्कारणाङ्गीकारेऽनवस्था। अनङ्गीकारे नित्यैवेत्यापत्तिशङ्कावारणार्थम्—"एकमेवाद्वितीयमि"ति मायासाधारणसर्वप्रपञ्चशून्यत्वं ब्रह्मणः प्रतिपाद्यते। तेन चानादेरपि मायाया अनिर्वचनीयत्वेन नाशो न विरुध्यते; ज्ञाननिवर्त्यत्वादज्ञानस्य॥

अनादेरप्यज्ञानस्येश्वरप्रसादनाश्यत्वं द्वैतिनोऽपि स्वीकुर्वन्ति; अन्यथा न तन्मतेऽपि जीवस्य मुक्त्युपपत्तिः। अनादेरपि निवृत्तौ का वा बाधाऽनिर्वचनीयत्वे, तन्निवृत्तौ च ज्ञाननिबन्धनायाम्? "सदेव

सोम्येदम्” इतिवत् “एकमेवाद्वितीयमि”त्यपि सिद्धवदनुवादाददद्वितीयत्वं स्वाभाविकम्; विधेयत्वात्, तात्पर्यविषयत्वाद्वा, सद्वितीयत्वं त्वनूद्यमानत्वान्न तात्पर्यविषयः ॥

शास्त्रप्राप्तयोरप्याज्यभागयोः “न तौ पशौ करोती”ति प्रत्याम्नानाद् बाधो दृश्यते, इति सद्वितीयत्वस्य कारणवाक्यप्राप्तस्यापि निषेधो न व्याहन्यते। कर्मोपासनादिविषयत्वात् सद्वितीयत्वस्य, अद्वितीयत्वस्य च ज्ञानविषयत्वात् ॥

एकविज्ञानेन सर्वविज्ञानमसंकुचितमद्वैतवाद एव ।

एकविज्ञानेन सर्वविज्ञानं हि यावत्तत्त्वसाक्षात्कारं सद्वितीयब्रह्मात्मना तावत्पर्यन्तं तत्सत्तातिरिक्तसत्ताशून्यत्वम्, तदधीनसत्ता-स्थित्यादिमत्वं वा, तत्त्वसाक्षात्कारे तु तद्व्यतिरेकेण ज्ञातव्यस्य कस्याप्यभावेन। तदुक्तम्—

“यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते ॥”

इति। तदेवं व्यवहारदशामाश्रित्य, परमार्थदशामाश्रित्य वा-कार्य-कारणयोर्भेदशङ्कानिरासार्थं मृत्तिकादिपरिणामिसत्त्वमारभ्य ब्रह्मपर्यन्तसत्यत्वाम्नानं श्रुतिषु। तत्र यत्सत्तया मृत्तिका सती, तयैव मृन्मयं सत्। अत एव—

“कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥”

इति युक्तिः। अत एव तत्तदवान्तरकार्याणामपि सदात्मनाऽनुवृत्त्या परमात्मकार्यत्वम्, न त्वाकाशादिमात्रकार्यत्वं तत्तत्कार्यजातस्य ॥

यत्तु—यत्सत्तया मृत्तिका सती, तयैव मृन्मयं सत्यमिति व्याचक्षाणेनेदं वक्तव्यम्–तत्र केयं सत्ता विवक्षितेति। यदि सा स्वरूपसत्ता, तर्हि साध्याविशिष्टता। यो हि कार्य-कारणयोर्भेदं मन्यते, स कथं कारणस्वरूपेणैव कार्यं सदिति वदेत्? अथ सामान्यसत्ता, सा नैकान्तिकी। न हि महिषसत्तया सन्नप्यश्वो महिषाद् न भिद्यते। अथ मृत्तिकासत्ताधीनसत्ताकं मृन्मयम्, तर्हि कुलालाधीनसत्ताकमपि मृन्मयमित्यनैकान्त्यम्—इति ॥

तदिदं पूर्वमेव निरस्तम्; कारणात्मना प्रतीतिविषयत्वस्यैव कार्याणां कारणसत्ताया विवक्षितत्वात्। कारणस्य कार्यस्य च स्वरूपं यद्यपि भिन्नम्; परं तु रूपभेदेन, यथा कार्यात्मना यद्यपि कारणं भिन्नम्; कार्यं तु न कारणात्मना भिद्यते—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥"

इति वचनात्, कार्याणां परस्परं भेदेऽपि कारणस्वरूपस्य सर्वेषु कार्येष्वनुवर्तमानस्यैक्यात् तस्य चोपादानोपादेयभावनिबन्धनत्वात्, निमित्तकारण-कार्ययोः स्वरूपभेदस्य सर्वसम्मतत्वाच्च ॥

ब्रह्मणः केवलनिमित्तकारणतास्वीकारे तु न सदात्मना प्रसक्तभेद-शङ्कानिरासार्थमभेदवचनमिति युज्यते, तेन चोपादानत्वम्। कारणस्वरूपैक्येऽपि स्वरूपतो भेदशङ्कानिरासार्थत्वे न साध्याविशिष्टता। साध्यावैशिष्ट्यं ह्यनुमानस्य दूषणम्, न तु शब्दप्रमाणस्य। सत्तासामान्यवत्त्वेनाभेदस्त्वनङ्गीकारपराहतः। उपादानकारणसत्ताधीनसत्ताकत्वं तु न दुष्टम्। कुलालादीनां केवलनिमित्तकारणत्वाद् न कोऽपि दोषः। ब्रह्मणोऽपि तथात्वे तु "सर्वं खल्विदं ब्रह्मे"ति इदं रजतमित्यादिवत् सामानाधिकरण्यानुपपत्तिः ॥

यथा च वाचारम्भण-नामधेययोरपौनरुक्त्यम्, तथा पूर्वमेव निरूपितम्। नामधेयपदं ह्यत्र सत्यमिति व्यपदेशमात्रमिति बोधनार्थम्, नाम्ना सत्यत्वबोधनं विनाऽप्यर्थं शशशृङ्गादिपदवत् विकल्पाख्यप्रतीत्यभिलापकमात्रम्। विकारपदेन नामरूपात्मकः सर्वोऽपि प्रपञ्चो विवक्षितः, इति नाम्नोऽपि विकार्यस्य वाचारम्भणत्वमेव, इति तत्साधारण्येनैव वाचारम्भणत्वम् ॥

नामधेयमिति तु न नामात्मकप्रपञ्चाभिप्रायेण, अन्यार्थत्वात्तस्येति पूर्वमेव निरूपितम्। अत्र विकारपदेन मृत्तिकाक्रमेण प्रकृतिपर्यन्तस्य विवक्षणात्तस्यापि संग्रहार्थमितिपदम्, इति नात्र मृत्तिकामात्रसत्यतामात्रेण "मृत्तिकेत्येव सत्यमि"ति वाक्यम् ॥

अद्वैतवादे वाचारम्भण-विकारपदयोर्योजना।

वागालम्भनत्वं च कर्मणि लुटा निष्पन्नं सत्यपदेन विशेषितं विकारसामान्यस्य व्यावहारिकसत्यत्वपरम्, इति नात्राश्रुतकल्पना, अध्याहारादिदोषो वा विवर्तवादे। न च परिणामवादे, विवर्तवादे वा नामधेयपदं विकारविशेषणम्, येन विकारपदवैयर्थ्यम्, नामधेय-विकारपदयोर्विशेष्य-विशेषणभावेन वा प्रपञ्चसत्यत्वापत्तिः, "यथा सोम्येकेने"ति दृष्टान्तानुपपत्तिर्वा। तत्र "यथा सोम्यैकेनेति" हि नाम-रूपात्मकः

सर्वमृन्मयकार्योपलक्षणम्, इति नात्र नामप्रपञ्चस्य पृथगनित्यत्वस्य, मिथ्यात्वस्य वा निरूपणापेक्षा ॥

यथा सोम्यैकेनेत्येकपदसार्थक्यमद्वैतवाद एव ।

"यथा सोम्यैकेन मृत्पिण्डेन, यथैकेन लोहमणिना, यथैकेन नखनिकृन्तनेनेति वाक्येष्वेकपदप्रयोगः सर्वेषां कार्याणामेककार्यत्वमेव फलतः, न त्ववान्तरकार्य-कारणभावमात्रे कारणवाक्यानां तात्पर्यमिति सूचयितुम् । परमते तु तत्पदं वितथम्, अनुपपन्नं च; तत्तत्संस्कृतवैदिकशब्दानां तत्तत्साङ्केतिकापेक्षयैव प्राधान्येन सर्वसाङ्केतिकशब्दानामेकप्रधानासम्भवात् ॥

तत्र "यथा सोम्यैकेन मृत्पिण्डेने"त्यादि स्थूलारुन्धतीन्यायेन प्रसिद्धेन कार्य-कारणभावेन मुख्यं सद्रूपं कारणमुपदेष्टुमिति पूर्वमेवोपपादितम्, तत्र चैकस्या मृदोऽन्त्यावयवत्रिपर्यन्तं मृन्मयपर्यन्तं कारणत्वं लोकसिद्धमिति न दृष्टान्तानुपपत्तिः । अत एव "त्रीणि रूपाणीत्येव सत्यमि"ति तस्यापि कारणात्मनोपदेशस्सद्विद्यायामेव ॥

यदा तु सर्वस्य प्रपञ्चस्य ब्रह्मण्यारोपितत्वं विवक्ष्यते, तदा सर्वेषां कारणात्मनाम्, कार्याणां च खलेकपोतन्यायेनैकमूलाविद्ययैकस्मिन्नेव सदात्मना प्रतीयमानेऽध्यासाधिष्ठान ऐक्यबोधनार्थत्वादेकादिपदानां सार्थक्यमबाधम् । मृदवच्छिन्नमपि चैतन्यमविद्यावृतं तदुपहितत्वेनैव घटाद्यधिष्ठानम्, इत्यधिष्ठानत्वं सर्वेषां कार्याणां कारणानां च ब्रह्मव्यतिरिक्तानां ब्रह्मण एकस्यैवेत्येकाधिष्ठानबोधनार्थं प्रतिपर्यायमेकपदम् ॥

इदमेवाभिप्रेत्य मृत्तिकाद्युपादानस्य तत्तदुपहितचैतन्यस्यैकत्वाद् मृत्तिकामपेक्ष्य तत्परिणामत्वेन समसत्ताकत्वेऽपि मृत्तिकाया उपादानत्वं चैतन्यावच्छेदकतया । मुख्यं तूपादानम्, अधिष्ठानं वा संविन्मात्रमेकमेव, इति तद्दृष्ट्या सर्वं विकारजातं मिथ्याऽपीति तत्प्रतिद्वन्द्विनः सत्यपदस्य कारणेन सामानाधिकरण्यम् । तेन च नित्यत्वं फलतो मिथ्यात्वविरोधि सत्यत्वमेव, इति वाचारम्भणत्वम्, नामधेयमात्रत्वं वा ब्रह्मव्यतिरेकेण शून्यत्वम्, असत्कल्पत्वं वा सर्वस्य ब्रह्मव्यतिरिक्तस्य ॥

एकविज्ञानेन सर्वविज्ञानस्वारस्यमद्वैतवादे ।

"एकेने"ति परमकारणाभिप्रायम् । सर्वमिति कार्याभिप्रायम् । परमकारणव्यतिरिक्तं सर्वं मिथ्या, परमकारणमात्रं सत्यमिति तु निष्कर्षः । इदं सर्व-

मभिप्रेत्यैव दार्ष्टान्तिकेऽपि "एकमेवाद्वितीयमित्ये"कपदप्रयोगः, इत्युपक्रमे सर्वकार्याणामेकेन द्वितीयसामान्यशून्येन बाधायां सामानाधिकरण्यमेव "सदेव सोम्येदमि"ति प्रस्तुतमिति सूचनार्थमेव वाचारम्भणश्रुत्या सर्वमिथ्यात्वोपसंहारः, इति नात्रोपक्रम-परामर्शोपसंहारेषु सर्वेष्वेकपदवैयर्थ्यम् ॥

अत्र मृत्पिण्डेन, लोहमणिनेत्यादिस्थूलावस्थकारणस्यैव निर्देष्टव्यत्वे नखनिकृन्तनेनेत्यतिसूक्ष्मस्य कारणस्य निर्देशो हि कार्य-कारणभावोऽखण्डब्रह्मसाक्षात्कारपर्यन्तं पूर्वपूर्वावस्थाप्रहाणेनोत्तरोत्तरावस्थाभावेन न विश्राम्यति, तस्य विश्रान्तिस्त्वखण्डब्रह्मसाक्षात्कार एवेति सूचनार्थम्। नखनिकृन्तनमतिसूक्ष्ममपि कार्यं नश्यत् कार्ष्णायसात्मनैवावतिष्ठते। तस्याखण्डसाक्षात्कारे तु न ज्ञातव्यमवशिष्यत इत्येकविज्ञानेन सर्वविज्ञानोपपत्तिः ॥

प्राधान्यं त्वेकैकस्य सापेक्षं नैकविधम्। न चैकमेव वैदिकं संस्कृतं सर्वेषां प्रधानम्, इत्येकस्य विज्ञानेन सर्वस्य विज्ञानं द्वैतिनां मते। न ह्यद्वैतसिद्धान्त इव कार्य-कारणभावस्य विश्रान्तिरेकत्र मृदादिस्थलेऽपीव सर्वेषां साङ्केतिकानामेकप्रधानशब्दे, इत्येकशब्दो वितथः, बाधितार्थश्च द्वैतवादे। न च प्रधानसंस्कृतज्ञानेन सर्वेषां साङ्केतिकानां तदेव ज्ञानं भवति। न ह्येकस्य गोशब्दस्य संस्कृतस्य ज्ञानेन सर्वेषां तद्विकाराणां गावी-गोणी-गोपातलिकादीनां तदानीमेव ज्ञानमनुभूयते। न च तत्र बाधायां सामानाधिकरण्यम्, परिणामि-परिणामभावो वा। संस्कृत-साङ्केतिकापेक्षया प्राधान्याप्राधान्ये तु न सदृशयोरेव। विनापि सादृश्यमर्थतः पुण्डरीकाक्षादिपदानि सङ्केत्यन्ते बाधितेऽप्यर्थे, इति न सादृश्यादपि प्रधानसंस्कृतशब्दज्ञानेन साङ्केतिकानां ज्ञानं भवति ॥

न च प्रधानविज्ञानेनाप्रधानानां विज्ञानेऽत्र प्रकरणे सृष्टेरुपन्यासस्य किमपि प्रयोजनम्, इति दृष्टान्ते कार्य-कारणभावविवक्षायाः फलं कार्यकारणभावापेक्षं प्राधान्यम्, तदपि न निमित्तकारणापेक्षयेति विवक्षायामेव; अन्यथा कुलालादिरेव दृष्टान्तः समुचितः स्यात्, न तूपादानकारणं मृत्पिण्डादिः। न च स्रष्टृत्वमपि निमित्तकारणमात्रत्वेन ब्रह्मणः कुलालादिवद् निरपेक्षं सम्भवति ॥

न च तत्प्रयुक्त एव प्राधान्ये संस्कृतशब्दनिदर्शनौचित्यम्। "अन्ने

रग्नित्वमपागादि"त्यादि तु न ब्रह्मणः प्राधान्यप्रतिपत्त्यर्थम्, परमेश्वरसृष्टस्याग्नेरग्नित्वं सत्यत्वे कथमपगच्छेदपि ? न चेश्वरेच्छयाऽग्नेरग्नित्वमपगच्छति। "धाता यथापूर्वमकल्पयत्" इति यथापूर्वं स्रष्टृत्वमेव हि परमेश्वरस्यापि, न तु तदिच्छयाऽप्यग्निश्शीतः, आप उष्णा इत्यादिविपरीतभावः सृष्टौ सम्भवति। अद्वैतमते तु कारणात्मताबोधनार्थं तदित्युपपादितम्, इति कथमपि न विवर्तवादनिराकरणमवसरति ॥

ब्रह्मविवर्तवाद एव श्रुतीनां तात्पर्यम्।

न च विवर्तवादनिराकरणमविद्याया ब्रह्माश्रयत्वानुपपत्त्या, जीवाश्रयत्वानुपपत्त्या, तदनिर्वचनीयत्वानुपपत्त्या, एकजीववादानुपपत्त्या, अनेकजीववादानुपपत्त्या, प्रपञ्चमिथ्यात्वानुपपत्त्या, अनिर्वचनीयख्यात्यनुपपत्त्या, भेददुर्निरूपत्वानुपपत्त्या, ज्ञानमात्रस्य मोक्षसाधनत्वानुपपत्त्या, अनुपपत्त्यन्तरेण केनापि वा न सम्भवति; सर्वासामनुपपत्तीनां परिहारात्, किन्तु विवर्तवादसाधुतैव वास्तवी; तत्साधनानां सर्वेषामपि तत्र तत्र समर्थनात्, आनुषङ्गिकानां बाधकानां च तत्र तत्र निरसनात्, इति सर्वोऽपि समन्वयार्थोऽद्वैत एव स्वरसः ॥

परमते प्रकृत्यधिकरणवैयर्थ्यम्।

प्रकृत्यधिकरणेऽत्र स्त्रीवाचकानां सर्वेषां ब्रह्मणि समन्वयो वितथः। न शब्दगतं लिङ्गं तदर्थगतं लिङ्गमपेक्षत इति नियमः; नदीनदादिशब्दानामस्त्रीषु नपुंसकेषु पुंस्त्रीलिङ्गानाम्, दारशब्दस्य च पुल्लिङ्गस्य स्त्रियामपि प्रयोगदर्शनात्, प्रकृतिपदस्य, लिङ्गस्य, ब्रह्मशब्दस्य च परमे पुंसि नारायणेऽबोधकत्वापत्त्या तत्समर्थनस्य वितथत्वाच्च ॥

एतेनैवाजाशब्दस्य ब्रह्मपरत्वे शक्येऽजाधिकरणवैयर्थ्यमपरं दूषणम्, तेनैव वा सर्वेषां स्त्रीलिङ्गानां ब्रह्मपरत्वे निर्णेतुं शक्ये प्रकृतमधिकरणं वा वितथम। सूत्रस्वारस्यं त्वद्वैतवाद एवेति तत्र तत्र निरूपितमिति सर्वमनवद्यम् ॥

॥ इति प्रकृत्यधिकरणम् ॥

## ॥ इति प्रथमाध्यायस्य तुरीयः पादः ॥

॥ प्रथमाध्यायः समाप्तः ॥

—:※:—

## ❀ अथ न विलक्षणत्वाधिकरणम् ❀

### ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥

द्वैताभिमताधिकरणशरीरपरीक्षा ।

अनेनाधिकरणेन वेदस्य नित्यत्वम्, निर्दोषत्वम्, ततो नियतं प्रामाण्यम्; अपौरुषेयत्वादिति निरूप्यते । अतः पिपीलिकालिपिवत् तदप्रामाण्ये पाशुपतादीनामपि प्रामाण्याविरोधः, श्रुतिविरुद्धानामेव प्रामाण्ये तु न विरोधः कोऽपीति फलभेदः इति पाशुपतादीनामपि श्रुत्यविरुद्धानामेव प्रामाण्यम् । तत्र प्रत्यक्षविरोधे, श्रुतिविरोधे वा स्मृतयो दृष्टार्थाः अदृष्टार्था वा न प्रमाणम्, अन्यथा तु प्रमाणम्; उपजीव्यविरोधस्याप्रामाण्यप्रयोजकत्वात् । उपजीव्यं तु प्रत्यक्षमपि, युक्तिरपि यथायोगं तत्र तत्र । आगमैकप्रमाणे स्वागमविरोध एवाप्रामाण्यहेतुः ॥

प्रमाणादिविचारस्यात्राद्वैतमत एव सङ्गतिः ।

तत्र च युक्तियुक्त आगमः प्रबलः, विपरीतस्तु दुर्बलः । याथार्थ्यमेव प्रामाण्यम् । तत्र प्रमाणानि प्रत्यक्षानुमानागमाः, नोपमानार्थापत्त्यनुपलब्ध्यादयः । तेषां प्रत्यक्षानुमानयोरन्तर्भावः, इत्यादिना प्रमाणाप्रमाणविवेको स्वसिद्धान्तानुसारेणानुव्याख्यानादिना निरधारि ॥

तत्र द्वैताद्वैतविप्रतिपन्नविषया न्यायसुधापरीक्षणपूर्वकमानन्दपूर्णमुनिना स्वीयन्यायचन्द्रिकायां निरणायिषत । तत्र द्वैतमते प्रत्यक्षानुमानयोः साधारण प्रयोजनवत्त्वम्, तथापि शास्त्रान्तरविषयोऽपि तत् । अतस्तस्य तत्राविरोधः इति सङ्गृहीतम् । वैशेषिकाणां शब्दाप्रामाण्यवादः, विशिष्य वेदाप्रामाण्यवादश्च न्याय-मीमांसाभ्यां निरस्तः, अतस्तत्समर्थनमात्रे महाानुपयोग इति, तत्प्रामाण्यस्यात्र निर्देशः ॥

तत्राद्वैतसिद्धान्ते प्रपञ्चमिथ्यात्वोपयोगिदृष्टान्तसमर्थनेन प्रत्यक्षस्य, अनुमानस्य, अर्थापत्तेरनुपलब्धेश्चासाधारणं प्रयोजनमस्ति, इति षण्णामपि प्रमाणानां सङ्कलनम् । प्रमाणत्रयवादिभ्यो द्वैतिभ्योऽद्वैतिनां प्रमाणषट्कवादिनां विशेषः शास्त्रान्तरप्रसिद्धस्यापि प्रमाणषट्कस्य विशिष्याद्वैतसिद्धान्तेऽप्यस्ति प्रयोजनमिति विशेषः—इति ॥

द्वैतिनां तु "शास्त्रयोनित्वात्" "तत्तु समन्वयादि"ति व्यवस्थापितस्यैव पाञ्चरात्रविरुद्धपाशुपतादिस्मृत्यप्रामाण्यस्य सिंहावलोकनन्यायेन स्थूणा-निखनन्यायेन च समर्थनं द्वितीयाध्यायप्रथमपादप्रथमाधिकरणार्थ इत्या-शयः। तत्र युक्त्यविरोधस्य प्रथमपादार्थत्वं धर्म इव ब्रह्मण्यप्युपास्यादि-स्वरूपे युक्तीनां स्वतन्त्रं यद्यनवसरः स्यात्, तर्हि सम्भवति युक्तिविरोधे न ब्रह्मणि समन्वयस्याक्षेपः। न चैवं सम्भवति। धर्मे ब्रह्मणि चादृष्ट-विधयैव फलसाधनत्वे युक्तीनां तत्रानवसरात्। तदुक्तम् "तत् प्रमाणं बादरायणस्यानपेक्षत्वादि"ति ॥

द्वैतवादेऽद्वैतवाद इव युक्तिविरोधपरिहारार्थताऽयोगः।

अत्र ब्रह्मोपासनस्यानुष्ठानापेक्षस्य धर्मस्येव फलसाधनत्वं वदतां द्वैतिनां मते युक्तिविरोधशङ्काया नोत्थितिः, अवगतिपर्यन्तस्यानुष्ठानान-पेक्षस्य दृष्टविधयैव ज्ञानस्य मोक्षसाधनत्वे तु साक्षात्कारस्य—

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ॥
असाध्यः कस्यचिद् योगः कस्यचित् तत्त्वनिर्णयः ॥"

इति वदतां योगिनां दृष्ट्या योगसाध्योऽपि साक्षात्कार इति स्वीका-रात्, श्रवण-मननादीनि समप्रधानानीति सिद्धान्तेऽद्वैतमतेऽपि मननेनापि साक्षात्कारसम्भवाच्च योगप्रभावाधीनतत्त्वसाक्षात्कारवतां कपिल-पतञ्जलि-प्रभृतीनां मोक्षसाधनस्वरूपनिर्णये श्रुतिसमानयोगक्षेमं प्रामाण्यमिति शङ्का सम्भवतीति स्मृतिविरोधेन शङ्का, स्मृत्यन्तरविरोधेन परिहारश्चात्र भवितु-मर्हति। तत्त्वदर्शनोपायत्वं योगस्य साङ्ख्यादयोऽपि स्वीकुर्वन्ति ॥

साङ्ख्ययोगनिरासवैयर्थ्यं द्वैतमते।

असङ्गत्वं चात्मन इति साङ्ख्य-योगयोर्वेदान्तसिद्धान्तोपष्टम्भकत्वमपि वर्तत इत्यादि भाष्य एव व्यक्तम्। द्वैतमते तु पाशुपतापेक्षया पाञ्चरात्र-प्राबल्ये पाशुपतस्यावेदमूलत्वम्, पाञ्चरात्रस्यैव वेदमूलत्वमिति सिद्धा-न्तात्, पाशुपतस्य तन्त्रस्य सर्वजनव्यामोहनार्थस्य सौगतादिसमयवद-त्यन्तमेव परिग्रहानर्हस्य वेदविरुद्धत्वेनाप्रामाण्यस्य सिद्धत्वादिदमधिकरणं वितथम्। पाशुपतास्तु स्वीयागमस्यापि श्रुतिमूलत्वं स्वीकुर्वन्ति, इति सुन्दोप-सुन्दन्यायेनोभयोरपि श्रुतिविरुद्धयोरप्रामाण्यमेव ॥

पाञ्चरात्राद्यागमानां नैकान्ततः श्रुतिमूलकत्वम्।

पाञ्चरात्रस्य, पाशुपतस्य वा श्रुतिमूलत्ववादः साङ्ख्य-योगयोः श्रुति-मूलत्ववाद इवाप्रामाणिकः। अत एव—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ॥
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥"

इति पञ्चानामपि नानामतत्वम् विरुद्धार्थत्वं वा प्रतिपाद्यते । तत्र यदि वेदानां पाञ्चरात्रेणैकमत्यम्, तर्हि साङ्ख्य-योगयोरपि कथं न वैदिकत्वम्? कर्तृगौरवेण प्राबल्यं तु शिव-नारायणयोः प्राधान्यनियामकाभावात्, विष्णू-त्कर्षप्रतिपादकानाम्, शिवोत्कर्षप्रतिपादकानाम्, तदुभयैकस्वरूपत्व-प्रतिपादकानां च श्रुति-स्मृति-पुराणे-तिहासानां जागरूकत्वात्, नारायणाद् रुद्रस्येव रुद्रान्नारायणोत्पत्तिप्रतिपादकानामपि वचनानामुपनिषत्सु बहुशो दर्शनात्, प्रसिद्धासु दशोपनिषत्सु बहुश ईशेशान-महेश्वरादिशब्दवद् नारायणशब्दस्यादर्शनात्, कठवल्लीमात्रगतस्य "विष्णोः परमं पदमि"त्यत्र विष्णुपदस्य पूर्वोत्तरसन्दर्भानुसारेणालिङ्गा-शरीरसंविन्मात्रपरत्वात्, विष्णुपुराणे ब्रह्मण्येव सृष्टयवस्थायां नारायण-शब्दस्य निर्वचनात्, सर्वेषामपि ब्रह्म-रुद्र-विष्णूनां तुरीयनारायणांशत्वेना-विशेषेण सत्यपि भेदेऽभेदात्, वक्ष्यमाणरीत्या पाञ्चरात्रागमानां बहूनामद्वैत एव परमतात्पर्याच्च पाञ्चरात्रप्राबल्यानुसारेण पाशुपतनिरासेनाऽप्यौपनि-षदाद्वैतसिद्धान्तविरुद्धत्वेन पाञ्चरात्रस्याप्यप्रामाण्याच्च नेदमधिकरणं स्वार्थसाधकम् ॥

वेदाविरोध एव सर्वेषां मतानां पौरुषेयाणां प्रामाण्यम् ।

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।"

इति वचनं हि तत्र प्रस्तुतानां वेदातिरिक्तानां सर्वेषां साङ्ख्य-योग-पाशुपत-पाञ्चरात्राणां पौरुषेयत्वस्योत्तरत्र व्यवस्थापनात्, वेदेषु तदवर्ण-नाद् पौरुषेयत्वेन प्रामाण्यं वेदानामेव, अन्येषां तु पौरुषेयाणां यत्र वेदै-रविरोधः, तत्रैव प्रामाण्यमिति सूचयति, इति वेदाविरुद्धांशे प्रामाण्यं सर्वे-षामविशिष्टम्, इति वेदमुख्यतात्पर्यविषये जीवस्वरूपैक्ये, जीवब्रह्मैक्ये वा नैतेषामैकमत्यं वेदेन, इति तदंशेऽप्रामाण्यमेव सूचयति, अन्यथा कथं साङ्ख्य-योगमात्रयोरप्रामाण्यम्? न चात्र पाञ्चरात्रस्य प्राधान्यनियामकं किमपि लिङ्गमस्ति, पाशुमताप्राधान्यनियामकं वा । वेदार्थस्यांशतोऽ-विरुद्धस्य सङ्कलनं तु सर्वत्राविशिष्टम् । किं बहुना? सौगतसमयोऽपि "न हिंस्यात् सर्वा भूतानी"ति श्रुत्यर्थमंशतः सङ्गृह्णाति, पाञ्चरात्राभिमतं यागीयहिंसानिषेधमपि प्रामाणिकं मन्यते ॥

एतेन—साङ्ख्यसिद्धान्तोऽपि—व्याख्यातः, इति सर्वेषामेतेषां पाञ्चरात्रेण साम्यं वर्तते ॥

पशुयागादिहिंसा "अशुद्धमिति चेन्न शब्दात्" इति सूत्रेण बादरायणः, किं बहुना ? श्रीमदानन्दतीर्था अपि तदीये भाष्ये धर्म इति विवेचयन्ति, इत्यंशतोऽप्रामाण्यं पाञ्चरात्रस्य, बादरायणस्य, श्रीमदानन्दतीर्थानामपि च सम्मतम्। पिष्टपशुयाग-पशुयागयोः कस्य धर्मत्वमिति महर्षीणां देवानां च विवादं प्रस्तुत्य कूर्मपुराणं वैदिकानां पशुयागः, तान्त्रिकाणां पिष्टपशुयाग इति वैदिकावैदिकव्यवस्थितविषयं प्रामाण्यं तयोरिति व्यवस्थापयदवैदिकत्वं पाञ्चरात्रस्य तस्मिन्नंशे द्रढयति ॥

एतेन—

"साङ्ख्यं योगः पाञ्चरात्रं वेदारण्यकमेव च।"

इति पाठभेदोऽपि प्रकरणान्तर्गत आनुशासनिकपर्वणः—व्याख्यातः तत्रारण्यकपदेन पाञ्चरात्रस्य ग्रहेण वेदारण्यकयोः समाहारद्वन्द्वनिर्देशेनारण्यकस्य वेदत्वम्, ततः पृथग् निर्दिष्टस्य वेदतुल्यत्वं वा ज्ञाप्यत इव। तावता ह्येकक्रियान्वयित्वमात्रं तयोर्भवति, न तु वेदत्वम्। "ज्ञानान्येतानीत्ये" कज्ञानान्वयस्तु "एतानी"ति समुच्चित्य सर्वेषामनुषङ्गात् साङ्ख्यादीनामपि समानम्, न तावता साङ्ख्यादिभ्यः पाञ्चरात्रस्य विशेषः—वेदत्वम्, वेदसमानयोगक्षेमं प्रामाण्यं वा पाञ्चरात्रमात्रस्य ॥

### तत्त्वमसिवाक्यार्थस्यैव मुख्यत्वम्।

न हि विरुद्धयोर्न समाहारः; अहि-नकुलमित्यत्रापि समाहारद्वन्द्वश्रवणात्। मुख्यो विरोधो हि साङ्ख्यादीनां तत्त्वमसिमहावाक्यार्थ इति मत्वैव "नानात्मनः" इत्युक्तम् ॥

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।"

इति वचने साङ्ख्यादौ सर्वत्रैकवचननिर्देशः, वेदा इत्यत्र तु बहुवचननिर्देशस्तत्त्वमसिवाक्यमेव कर्मोपासना-ज्ञानकाण्डात्मककाण्डत्रयार्थप्रतिपादकत्वात्, सर्वेषामपि वेदानां तत्रैव तात्पर्याच्च तत्त्वमस्यादिमहावाक्यार्थस्य सर्ववेदतात्पर्यविषयत्वमभिप्रेत्यैव ॥

### पाञ्चरात्रसिद्धान्तस्यानैकरूप्यम्।

तत्र पाञ्चरात्रं ब्रह्मणोऽभिन्ननिमित्तोपादानतां स्वाभिमतां प्रतिपादयतीति

श्रीभाष्यानुयायिनः। निमित्तकारणमेव ब्रह्म विषयीकरोतीति तु द्वैतिनः। तत्र तन्निमित्तकारणमात्रत्वं त्वेकान्ततः पाशुपता एव स्वीकुर्वन्ति, यन्मतं "पत्युरसामञ्जस्यादि"त्यत्र सर्वेऽपि भाष्यकारा निरस्यन्ति; इति स्वसिद्धान्तोपबृंहकेऽपि पाशुपते द्वैतिनां विद्वेषः केवलं शिवद्रोहतात्पर्येणैव, येषां शिवोऽपि श्रीकृष्ण इव पूज्यः। चिह्नविशेषास्तु तत्तन्मतदृष्ट्या बहुविधाः—पाञ्चरात्रप्रामाण्यपक्षपातिष्वपि। द्वैतिनां तु चिह्नानि न पाञ्चरात्रीयाणाम्, न वाऽन्येषाम्, किन्तु स्वसम्प्रदायमात्रसिद्धानि॥

न च तत्र पाञ्चरात्रं मूलम्। तप्तचक्राङ्कनं तु यद्यपि साधारणो धर्मः पाञ्चरात्रीयाणां सर्वेषाम्; तथापि स एव न धर्मः, किन्तु व्यवस्थित-विकल्प एव तत्रेति निर्णयसिन्धुः सिद्धान्तयति। पूज्यश्रीसत्यध्यानतीर्था अपि गदगनगरे तद्धर्मत्वे निर्णयसिन्धुमेव स्मार्तदृष्ट्यापि प्रमाणीकृत्योपान्यास्थन्, अदृष्टार्थानां तत्तन्मतसिद्धानां चिह्नानां व्यवस्थितविकल्प एवेति हि न्यायविदः। दैनन्दिनचक्राङ्कनं तु न स्मृतिसिद्धम्, श्रुतिसिद्धं वा; अङ्कचिह्नधारणनियमो वा प्रत्यहम्। न चेदं पाञ्चरात्रसिद्धान्तानुयायिनामन्येषां सम्प्रदायः, सदाचारो वा॥

ब्रह्म केवलनिमित्तकारणतायां पाशुपतादिनिरासायोगः।

द्वितीयाध्यायद्वितीयपादे समयाविरोधपरे स्वतन्त्रयुक्तिमूलं केवलनिमित्तकारणमात्रपराणां वैशेषिकाणां योग-पाशुपतयोः, ब्रह्मणोऽकारणत्ववादिनः साङ्ख्यस्य च निरासवत् पाञ्चरात्रस्यापि निरासः किमिति न क्रियते? पाञ्चरात्रसम्मतत्वे च तस्य कथं पातञ्जलमतस्य, पाशुपतस्य च निरासः?

तत्र पाशुपतं न्याय-वैशेषिकयोरप्युपलक्षणं महाभारत इति वक्तुं शक्यते, इति पाशुपतपदोपलक्षितानां वैशेषिक-नैयायिक-पाशुपतानां साङ्ख्ययोगदर्शनयोश्च "साङ्ख्यं योगः पाशुपतमि"त्येवमादिसमयानां निरसनम्, वेदानिरसनं च वेदव्यतिरिक्तानि, तद्विरुद्धानि सर्वाणीतराणि दर्शनानीति सूचयति॥

पाञ्चरात्रस्यासौत्रत्वम्, शाक्तमतनिरासयोगश्च।

तत्र पाञ्चरात्रप्रामाण्यमेव यदि सूत्रकाराभिमतम्, तदा किमिति वाऽन्तिमाधिकरणं श्रीभाष्यमिव द्वैतभाष्यमपि न पाञ्चरात्रप्रामाण्यपरं

न व्याचष्टे। यदि समयविरोधपदेन तस्य न सङ्गतिः, तर्हि तदप्रामाण्यपरतया योजनं द्वैतिनां कथं न सङ्गतम् ? का वा सङ्गतिरत्र शाक्तमतनिरासस्य ? न हि शाक्तं तन्त्रमपि साक्षात्, उपलक्षणविधया वा वैशेषिकन्याययोरिव पाशुपतादिपदेन केनाप्युपलक्ष्यतेऽत्र, इत्यप्राप्तकालं शाक्ततन्त्रनिरसनम्। तत्र शक्तिश्चिच्छक्तिरूपा स्वयं परिणमत इति वादस्तदनित्यत्वापत्त्या भास्करादिमतवत् शक्तिमदधिष्ठातृस्वीकारं विना शक्तिमात्रस्योपादानात्वासम्भवेन, च न युक्त इत्यस्य साङ्ख्यमतवद्वा नोत्थितिः, इति व्यर्थं तदधिकरणम् ॥

सौन्दर्यलहरी तु "शिवश्शक्त्या युक्तः" इति केवलायाश्शक्तेरुपादानत्वं निषेधति, इति न केवलशक्तिकारणतावादमनुमोदते, प्रत्युताद्वैतवाद एव शाक्तानामपि तात्पर्यमिति विवृणुत इति तदीयाव्याख्यातरः केचने त्याचक्षत इत्यन्यदेतत्। शाक्तमतस्यात्र निराकरणमसङ्गतमिति तु श्रीभाष्यादयोऽप्यभिप्रयन्ति ॥

आगमान्तरात् पाञ्चरात्रस्य विशेषादिपरीक्षा।

सौगतं तु वेदाप्रामाण्यवादित्वादत्यन्तावहेयं वैशेषिकमतवदिति तु हृदयम्। स्पष्टीकरिष्यते चेदमुपरिष्टात् "एतेन शिष्टापरिग्रहा अपि व्याख्याता" इत्यत्र ॥

आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं श्रुतिः।
पिपीलिकालिपिनिभा वारयेत् सर्वगा हि ते ॥
इति चेद् यद्यशेषज्ञा रुद्राद्या हरिपूर्वकाः।
किं नाशेषमिदं भानं ह्युभयत्र समं भवेत् ॥
न चास्ति निश्चयस्तत्र शक्यते व्यभिचारतः।
न चास्याव्यभिचारोऽपि हीयते मानता क्वचित् ॥
निर्दोषवाक्यमूलत्वाद् न च तद्युक्तिमूलता।
वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः सदा ॥
नियमो व्यभिचारो वा नैव भातुं हि शक्यते।

इति ॥

पाञ्चरात्रप्रामाण्येऽद्वैतसिद्धान्तः।

तस्यायमाशयः—यदुक्तं परस्य ब्रह्मणः सकलजगत्कारण-

त्वम्, सार्वज्ञत्वादिगुणपूर्णत्वम्, निरस्तसमस्तदोषदूरत्वम्, तदयुक्तम्; पाशुपत-साङ्ख्य-सौगतार्हतादिस्मृतिविरुद्धत्वात्। ता हि शिवप्रभृतीनामेव जगज्जन्मकारणत्वादिकं प्रतिपादयन्ति। न च तासामन्योऽवकाशोऽस्ति, येन प्रतीतेऽर्थे तात्पर्याभावः प्रतीयेत, अन्यथा तासामप्रामाण्यापत्तिः—इति॥

तन्न; पुरुषोत्तमस्य नारायणस्यैव पाञ्चरात्रादिस्मृतिभिरखिलजगत्कारणत्वादेरुक्तत्वात्। तत्र पाशुपतादीनां प्रामाण्ये पाञ्चरात्रादीनां निरवकाशत्वेनाप्रामाण्यं स्यात्। तत्रोभयोः परस्परविरोधेन सुन्दोपसुन्दन्यायेन तत्त्वमस्यादिवाक्यगतजीवब्रह्मैक्यविरोधित्वेन चाप्रामाण्यमित्यद्वैतिनः॥

पाञ्चरात्रप्रामाण्ये पाशुपतसिद्धान्तः।

पाशुपतास्तु—सत्यम्, श्रुतिविरोधे स्मृतेरप्रामाण्यम्, स्मृतिद्वयविरोध एकतरमात्रप्रामाण्ये कारणं श्रुत्यनुगृहीतत्वमेकतरस्याः, अपरस्यास्तदननुगतत्वं च प्रामाण्याप्रामाण्यहेतुः; अन्यथा तु न विनिगमना। तत्र प्रामाण्याप्रामाण्ये कर्तुराप्तत्वानाप्तत्वनिर्णयाधीने। स्वतःप्रामाण्यं तु कर्तुराप्तत्वनिश्चये, न त्वपौरुषेयवेदवद् वाक्यत्वमात्रेण; विप्रलम्भकवाक्यानामपि प्रामाण्यापत्तेः। तत्र पौरुषेयत्वे निर्मूलश्रुतिप्रामाण्यं समूलस्मृतिविरोधे न सम्भवति; पिपीलिकालिपिनिभाया अर्थज्ञानपूर्वकं विरचितत्वाभावेन प्रामाण्यसन्देहात्, तद्वैपरीत्य एव स्मृतीनां प्रामाण्याच्च, इति श्रुतिविरोधोऽत्राकिञ्चित्करः, किन्त्वनादिमूलकत्व-तदभावावेव स्मृतिद्वयप्रामाण्याप्रामाण्यप्रयोजकौ॥

अस्तु वा स्मृत्यपेक्षया श्रुतीनां प्राबल्यम्, तद्विरोधे स्मृतीनामप्रामाण्यं च; तथापि श्रुतिविरोधः, श्रुत्यर्थस्यासन्दिग्धत्वे विस्पष्टत्वे वा भवति, न तु वैपरीत्ये। तत्र च स्मृतयो विस्पष्टार्थाः, श्रुतयस्त्वस्पष्टार्थाः। अत एव श्रुत्यर्थनिर्णयायैव मीमांसाविशेषाः, न तु स्मृत्यर्थनिर्णयाय। स्मृतयो हि योगमहिम्ना तत्तदर्थं साक्षात्कृत्य स्मृतिभिरुपनिबद्धाः, श्रुत्यर्थमस्पष्टमपि स्पष्टयन्ति। तदुक्तम्-

"इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्॥"

इति, इति पाशुपतादिस्मृतीनां श्रुतिविरोधोऽकिञ्चित्करः,

प्रत्युतास्पष्टश्रुतिमूलकत्वे स्मृतीनामप्यस्पष्टार्थत्वादप्रामाण्यमेव स्यात् ॥

एतेन—श्रुतिमूलकत्वेनाभिमतानां पाञ्चरात्राणां पाशुपताद्यपेक्षया प्राबल्यवादः—निरस्तः; उक्तरीत्या श्रुतिमूलत्वत एवप्रामाण्यात् । पाशुपतादिस्मृतिप्रणेतारो ह्याप्ताः स्वयं स्वयोगसिद्धिमहिम्ना साक्षात्कृतानर्थान् स्वस्वागमेषु निबबन्धुः, इति तेषामप्रामाण्ये न किमपि कारणम् । पाशुपतादिप्रणेतारो हि सर्वज्ञाः, आप्ताश्च । तत्र केचन बुद्धर्षभ-कपिला भगवतो हरेरवताराः सौगत-योग-साङ्ख्यस्मृतिकर्तारः, पाशुपतस्मृतिप्रणेता तु महानुभवो रुद्रो नारायणस्यापि मूलतत्त्वम् ॥

एतेन—

"पाञ्चरात्रस्य सर्वस्य वक्ता नारायणः स्वयम् ॥"

इति—व्याख्यातम् । नारायणस्य रुद्रांशस्य रुद्रापेक्षयाऽप्याप्तत्वायोगात् ; इति न साक्षाद् नारायणकर्तृकत्वेन पाञ्चरात्रस्य पाशुपतापेक्षया प्राधान्यम्, तद्बाधकत्वं वा युक्तम्, इति पाशुपतानुयायिनां शङ्कासमाधानार्थमिदमधिकरणमिति द्वैतिनः । न चात्रोभयाप्रामाण्यवादिनः पूर्वपक्षितया निर्दिष्टा इति तु कथान्तरम् ॥

पाञ्चरात्रस्यैव मुख्यं प्रामाण्यम्,
न पाशुपतादेरिति सिद्धान्ताशयः ।

सिद्धान्ताशयस्तु—पाशुपत-पाञ्चरात्रयोरुभयोरपि स्मृतित्वेन साम्यं मत्वा हि पाशुपतस्य पूर्वोक्तरीत्या प्राबल्यं प्रतिपादितम् । तत्र चोभयोस्साम्येऽपि यदि मूलं प्रमाणं कस्याश्चन श्रुतिः, तर्हि तस्या एव प्राबल्यम्, इतरस्यास्तु दौर्बल्यमिति स्वीकर्तव्यम् । मूलं च तत्र यदि श्रुतिः, तर्हि तत् प्रबलम्, तत्तत्प्रत्यक्षमात्रं तु सम्भावितदोषं न प्रमाणतामर्हति ॥

न च सर्वज्ञप्रणेतृत्वं पाशुपतस्यैव नान्यस्येति युक्तम्—

"कपिलो यदि सर्वज्ञः काणादो नेति का प्रमा ॥"

इति न्यायेन सर्वज्ञत्वस्य दुर्वचत्वात्, अन्यथा "सर्वज्ञस्सुगतो

बुद्धः" इति कोशात् बुद्धमात्रस्य सर्वज्ञत्वम्, न रुद्रादेरपीति स्यात्। तत्र सर्वज्ञानां मोक्षभाक्त्वेन, तन्मूलरागद्वेषाद्यभावेन च, सत्यम्, न विप्रलिप्सा सम्भाव्यते, परं तु सर्वज्ञत्वं सर्वेषां तीर्थंकराणां तत्तत्सम्प्रदायानुसारिभिः स्वीक्रियते, इति रुद्रासाधारणं सर्वज्ञत्वं न सुवचम्॥

ज्ञानेच्छा-प्रयत्न-स्थानकरणपाटवादीन्यप्राकृतशरीरस्य न रुद्रस्यापि नारायणस्येव, इति न ततोऽर्थमुपलभ्य रचयितृत्वेन सर्वज्ञत्वं रुद्रमात्रस्य सम्भवति। अपटुकरणा अपि बहव उपदेष्टारो दृश्यन्ते। स्वोपकार-परापकारहेतुदर्शनाभावोऽपि सर्वतीर्थंकरसाधारणः; लोकहितार्थमेव सर्वैरपि तत्तत्साक्षात्कृततत्त्वस्योपदेशात्। किं बहुना? निर्दोषवेदमूलकत्वेनैव प्रामाण्यं वक्तव्यम्। तत्तु पाशुपतैरनङ्गीकृतमेव, पाञ्चरात्रागमेन तु स्वीकृतम्। न हि श्रुतयः सर्वा अस्पष्टार्थाः पिपीलिकानिभा लिपयो वा, इति स्पष्टार्थश्रुतिमूलकानि पाञ्चरात्रादीनि प्रमाणानि, स्वबुद्धिमात्रविजृम्भिताः पाशुपताद्यागमास्त्वप्रमाणम्॥

अधिकारसाधनसौलभ्यमात्रं तु परेषामाकर्षणार्थं पाशुपतेषु दृश्यन्ते, इति "हेतुदर्शनाच्चे"ति न्यायेनापि पाशुपताद्यागमानामप्रामाण्यम्—इति॥

तदिदं यदि श्रुत्यमूलपाशुपतमताप्रामाण्यनिरासार्थम्, तर्हि स्वागतम्। श्रुत्यविरुद्धागमप्रामाण्यं त्वनेनैवाधिकरणसिद्धन्यायेन सिद्ध्यतीति शिवार्कमणिदीपिकाऽपि निष्कर्षयति। अयमेव न्यायः श्रुतिविरुद्धे पाञ्चरात्रेऽपीत्यपि शिवार्कमणिदीपिका विशदयति। अद्वैतिनां तु पाञ्चरात्रम्, शैवागमः, साङ्ख्यम्, योगो वा सर्वमपि श्रुत्यविरुद्धांशे प्रमाणम् तद्विरुद्धेषु तु न प्रमाणम्, अत एव॥

"ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै।"

इत्यधिकारिभेदेन सर्वेषां श्रेयोहेतुत्वमनुमन्यते तत्रात्यन्ताशक्तान्, तत्तच्छास्त्रमात्राधिकारिणः, वैदिककर्मानधिकारिणो वोद्दिश्याधिकारसाधनसौलभ्योपदेशो हितेच्छयाऽशक्तानामपि शक्त्यनुगुणम्, आपद्धर्मतया वा न विरुध्यते, मुख्य-गौणापद्धर्मभेदो वाऽत्र। अशक्तानधिकृत्य शास्त्रे खलु स्वल्पप्रायश्चित्तविधयो धर्मशास्त्रेषु

बहुशो दृश्यन्ते । कलौ पराशरस्मृतेरेव प्रामाण्यमिति वचनमशक्तविषये प्रायश्चित्तसङ्कोचाद्यभिप्रायेणेति पाराशरमाधवीये तदुपोद्घाते माधवाचार्यो विशदयति ॥

अतो न साधनसङ्कोचविकासादिकमधिकारिभेदेनाप्रामाण्यस्य, प्रामाण्यस्य वा गमकम् । अन्यथा कलौ पराशरस्मृतेरप्रामाण्यमिति महती विनष्टिरापद्यते । 'कर्तारं तु कलौ युगे वर्जयेत्' इति पतितसंसर्गस्य महापातकत्वं निवारयन्ती पराशरस्मृतिर्यद्यप्रमाणम्, तर्हि महापातकिव्यतिरिक्तम्लेच्छावासादिसंसर्गदूषिताः शुद्धात्मानो महात्मनोऽपि दुर्लभाः स्युः ॥

तप्तचक्राङ्कनमात्रेण सर्वपापनिर्हरणमिति साधनाधिकारसौलभ्योपदेशो द्वैतिनां पाञ्चरात्रानुयायिनामपि प्रसिद्ध एव । सर्वथा त्वपराणि चत्वारि ज्ञानानि यथासम्भवमधिकारिभेदेन वेदाविरुद्धांशे प्रमाणानि तत्तत्सम्प्रदायानुसारेण रक्ष्यमाणानि श्रेयस एव भवन्ति ॥

श्रुत्यविरोधे सर्वागमप्रामाण्यमद्वैतदर्शने ।

वैदिकमद्वैतदर्शनं तु यथासम्भवं तत्तदधिकारिदृष्ट्या सर्वागमानां कर्मोपासनादिविषये व्यावहारिकम्, पारमार्थिकम् त्वद्वैततत्त्वे तत्त्वमस्यादिमहावाक्यार्थे, जीवात्मैक्यमात्रे, मुख्यं वा प्रामाण्यमधिगमयत् वेदाविरुद्धांशानागमान् तत्तत्सम्प्रदायानुसारेण प्रमाणं समर्थयच्च सर्वागमानुपमर्दकम्, किं बहुना ? यथाधिकारं वेदमूलसर्वदर्शनसंरक्षकं च सर्वदर्शनमूर्धन्यतामर्हति । इदमेवाभिप्रेत्योक्तम्, अद्वैतदर्शनं सर्वेषु दर्शनेषु दर्शनीयतमं दर्शनम्—इति ॥

सर्वथा त्वद्वैतिनामधिकरणशरीरमात्रं द्वैतिभिरपि नासह्यम्, न वात्र पाञ्चरात्रविरोधेन पाशुपतस्येवाद्वैतस्याप्रामाण्यं शास्त्रयोनित्वसमन्वयाधिकरणनिर्धारितमत्र सिंहावलोकन्यायेनापि निरस्यम्, अधिकं पाञ्चरात्राधिकरणे परिशिष्यते ॥

॥ इति स्मृत्यधिकरणम् ॥

—:❀:—

❀ ओं ❀

# ❀ अथ द्वितीयाध्यायस्य प्रथमः पादः ❀

## ।। स्मृत्यधिकरणम् ।।

## ।। स्मृत्यनवकाशदोषप्रसङ्गादिति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।।

### द्वितीयाध्यायार्थसंग्रहः ।

अस्याध्यायस्याविरोधाध्याय इति नाम सम्प्रतिपन्नम् । तत्र प्रथमेऽध्याये वेदान्तसमानयोगक्षेमं प्रामाण्यं साङ्ख्यादिस्मृतीनाम् , तदीयन्यायानां चाशङ्क्य निरस्यते । द्वितीये पादे स्वतन्त्रानुमानस्य श्रुत्यविरोधेन नयनमाश्रित्य प्रवृत्तानां साङ्ख्यादीनां तदीयानुमानस्य सप्रतिपक्षोपपादनेन साङ्ख्य-वैशेषिकादीनाम् , वेदाप्रामाण्यवादिनां च युक्त्यैव तदीययुक्तिनिरासेन वेदान्तप्राबल्यं समर्थ्यते ।।

प्रथमेऽपि पादेऽशंतो युक्तिविरोधपरिहारेऽपि तत्र वेदान्तवाक्यस्य स्मृतिविरोधाविरोधचिन्ताऽपि वर्तते । वेदान्तवाक्यान्यनवष्टभ्य स्वतन्त्रयुक्तीनामेव परस्परं विरोधपरिहारेण समन्वयव्यवस्थेति विशेष इत्यद्वैतप्रक्रिया । द्वैतिनां तु युक्तिविरोधाभावः प्राधान्येन, समयविरोधाभावश्च प्राधान्येन द्वितीयप्रथम-द्वितीयपादार्थः ।।

तत्राद्वैतसिद्धान्ते वेदान्तानां सम्यग्ज्ञानपर्यवसायित्वात् , तस्य च योगादिमहिम्ना वेदान्तनिरपेक्षसाधनवशादपि सम्भवात् तन्मूलकस्मृतिविरोधेन समन्वयमाक्षिप्य स्मृत्यन्तरविरोधेन परिहारः क्रियते । तत्रोभयोरपि स्मृत्योर्बाध्य-बाधकभावमापन्नयोर्वेदान्तेनाविरोधसमर्थनमेव लक्ष्यम् , न तु वेदान्तप्रामाण्यं लक्ष्यम् । द्वितीयपादेन तु स्वतन्त्रयुक्तिविरुद्धार्थे वेदाप्रामाण्यनिरसनम् ।।

### प्रथमाधिकरणार्थः ।

तत्र प्रथमाधिकरणं साङ्ख्यस्मृतिविरोधेनाक्षिप्तस्य वेदान्तानां ब्रह्मणि समन्वयस्येक्षत्यधिकरणन्यायेन साधितस्याधिकाशङ्क्या सिंहावलोकनन्यायेन पुनराक्षिप्य स्थूणानिखनन्यायेन समर्थनार्थमिति विवेकः ।

जल्प-वितण्डादिहेत्वाभासानामद्वैताभिमतमिथ्यात्वखण्डनेऽस्ति महानुपयोग इति द्वैतिनः, अद्वैतिनोऽपि स्वसिद्धान्ते हेत्वाभासानामप्रसरेऽपि पराभिमतप्रपञ्चसत्यत्वानुमाने तेषां ब्रह्मजिज्ञासायाम्, विशिष्य च समन्वयाविरोधाध्याये, युक्त्यविरोधपादे चात्र प्रमाणाप्रमाणजिज्ञासा, तत्रापि शास्त्रसम्मततत्तल्लक्षणस्वरूपसङ्ख्यासम्बन्धि सर्वं सङ्गतम् ॥

न च तत्राध्यायसङ्गतिः, पादसङ्गतिः, वेदानुमतस्मृतिप्रामाण्यमीमांसानन्तरमधिकरणसङ्गतिर्वा समस्ति, अद्वैतमते तु साङ्ख्यस्मृत्यप्रामाण्येऽपि वेदवदेव साक्षात्कारपर्यवसायिषु प्रमाणेषु ब्रह्मसाक्षात्कारहेतुतया मननस्यापि प्रधान्येन विनियोगाद् युक्तिप्राधान्यवादमाश्रित्य विचारस्याप्यस्ति सङ्गतिः, इति पूर्वाधिकरणसिद्धान्तस्य युक्तिमवष्टभ्योत्थानादाक्षेपसङ्गतिरस्याधिकरणस्य, समन्वयविरोधपरिहाराद् युक्तिमवष्टभ्यैव प्रसक्तस्य तस्याक्षेपस्य निरसनादस्ति पादाध्यायसङ्गतिरपि। सर्वथा तु द्वैतिनोऽत्राद्वैतसिद्धान्तानुसारेण पूर्वपक्षम्, सिद्धान्तं वा नाक्षिपन्तीत्यद्वैतसिद्धान्ताक्षेपपरिहारमात्रं लक्ष्यतोऽस्य निबन्धस्य नात्र कर्तव्यं किमप्यवशिष्यते, तथाप्येतदधिकरणपरीक्षा मात्रयाऽत्र प्रस्तूयते ॥

न विलक्षणत्वसूत्रद्वैतभाष्यपरीक्षा ।

"न विलक्षणत्वादस्य तथात्वं इति च शब्दात्" इति सूत्रस्य द्वैतभाष्यमेवम्–श्रुतेः, तदनुसारिस्मृतेश्चाप्रामाण्यकारणाभावात् नाप्रामाण्यम्; विलक्षणत्वात् = नित्यत्वात्, निर्दोषत्वात्। स्वतस्तु प्रामाण्यम्। "न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा एवैनं गमयन्ती"ति "वाचा विरूपनित्यये"ति च श्रुती तावत्प्रामाण्यं समर्थयतः ॥

अस्योपबृंहणमनुव्याख्यानादिकम् । तत्र सूत्रद्वयात्मकमधिकरणम्। "दृश्यते" तु इति गुणसूत्रमस्याधिकरणस्य। अद्वैतसिद्धान्ते तु प्रथमसूत्रोक्ताचेतनकारणवादिनः साङ्ख्यस्यैव पुनराक्षेपपरिहारार्थतापराणि (१) अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (२) दृश्यते तु (३) असदिति चेन्न प्रतिषेधमात्रत्वात् (४) अपीतौ तद्वत् प्रसङ्गादसमञ्जस्यम् (५) न तु दृष्टान्तभावात् (६) स्वपक्षदोषाच्च (७) तर्काप्रतिष्ठानादप्यन्यथाऽप्यनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्ग, इति सप्त सूत्राणि 'न विलक्षणत्वा'धिकरणस्य गुणसूत्राणि, इत्यष्टसूत्रमिदमधिकरणम् ॥

"तत्र द्वैतमते "दृश्यते तु" इति न विलक्षणत्वादितिसूत्रानन्तरम-

धिकम्। अद्वैतसिद्धान्ते तु सर्वेषां सूत्राणामेकाधिकरणत्वात् "दृश्यते तु" इत्येकमेव सूत्रम्॥

अपरोऽयं विशेषः—यद् द्वैतसिद्धान्ते—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" "दृश्यते तु" इति सूत्रद्वयात्मकमपरमधिकरणम्। अन्यच्च (१) असदिति चेन्न प्रतिषेधमात्रत्वात् (२) अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् (३) न तु दृष्टान्तभावात् (४) स्वपक्षदोषाच्च (५) तर्काप्रतिष्ठानादप्यन्यथाप्यनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः (६) एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः—इति षट्सूत्रात्मकमधिकरणम्—इति॥

अत्रान्तिमम्—"शिष्टा अपरिग्रहा अपि" पाठान्तरेण पठ्यमानं सूत्रं त्वसदधिकरणस्य गुणसूत्रम्। अद्वैते तु—"एतेन शिष्टापरिग्रहा अपि व्याख्याताः" इति सूत्रपाठः, पृथगेकमधिकरणं च तत्सूत्रमात्रम्। मतद्वयस्यापि निष्कर्षस्त्वत्र "न विलक्षणत्वादि"त्यारभ्य "तर्काप्रतिष्ठानादि"त्यन्तं साङ्ख्यमतनिराकरणमेकमधिकरणम्, अपरं तु शिष्टापरिग्रहाधिकरणमित्यधिकरणद्वयम्। द्वैतदृष्ट्या त्वत्र पूर्वोक्तविधयाऽधिकरणत्रयम्। तत्र सूत्रद्वयविषये वक्तव्यं पूर्वमेवोक्तम्॥

"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" "दृश्यते च" इति सूत्रद्वयेनोभयत्र "मृदब्रवीत्" इत्यादौ मृदादीनां चेतनधर्मव्यपदेशो मृदभिमानिदेवताभिप्रायेणेत्येव। तथापि, चेतनकारणत्ववादोपष्टम्भकत्वमप्यद्वैतमते, तेनाप्रामाण्योपपादनं द्वैतमत इति विशेषः। अधिकरणभेदस्त्वत्राकिञ्चित्करः; स्वतन्त्राधिकरणन्यायस्यात्रासाधनत्वात्॥

### अभिमानिव्यपदेशसूत्रवैयर्थ्यं द्वैतवादे।

तत्र "अचेतनेऽर्थनिबन्धनात्"इति पूर्वमीमांसागतार्थवादन्यायैकदेशकृततत्परिग्रहप्रकारभेदानुवादमात्रम्, इति यदि वेदप्रामाण्योपपादकत्वमेवास्य युक्तमिति मन्यते, तर्ह्यत्रैकाधिकरण्यमेव, अद्वैतं तु" अर्थवादाधिकरणन्यायस्यात्रानुसन्धाने, तत एव सिद्धत्वान्नात्र पृथगधिकरणरचना युक्ता; प्रमाणपादसङ्गतस्य तस्य प्रमेयाविरोधप्रकरणेऽसङ्गतत्वात्, शास्त्रयोनित्वसूत्रगुणसूत्रतयैवाऽस्याधिकरणद्वयस्यापि सङ्गतत्वाच्च, इति न विलक्षणत्वसूत्रगुणसूत्रैरैकार्थ्यमेवात्र युक्तमित्यभिप्रैति॥

वस्तुतस्त्वानन्दमयाधिकरणे सर्वेषां पदानां भूत-तदभिमानि-देहान्तर्यामिरूपार्थचतुष्टयपरत्वव्यवस्थापनात्, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्",

इत्यत्र सर्वेषां पदानामन्तर्यामिपरत्वव्यवस्थापनात्, प्रकृत्यधिकरणेन सर्वेषां स्त्रीलिङ्गानां परमात्मन्येव मुख्यरूपे समन्वयस्य सिद्धान्तितत्वाच्चेदमधिकरणं व्यर्थम् ॥

न हि पूर्वतन्त्र इवात्र सर्वेषां पदानां चातुरर्थ्यवादे द्वैतसिद्धान्तसिद्धे "अचेतनेऽर्थनिबन्धनादि"तिशङ्काया उत्थितिरपि, येन तत्परिहारोऽत्र । अनुव्याख्यानमपि—

"बालरूढिं विनैवापि विद्वद्रूढिसमाश्रयात् ।
तत्तन्नामान एवैते तत्तद्रूस्त्वभिमानिनः ।"
"सन्ति तेषामशेषेण शक्तिरन्येभ्य उच्यते ॥
व्याप्तिश्चोक्तानुमानेन दृश्यते चाधिकारिभिः ।
शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः ॥"

इत्यादि समन्वयाध्यायलिङ्गमेवात्र सङ्गृह्णाति, इति वितथमिदमधिकरणं नविलक्षणत्वाधिकरणस्य प्रथमाधिकरणत्वेऽपि । विशिष्य तु समन्वयाध्याय एवास्य सङ्गतिः ॥

यत्तु—मृदाद्यचेतनाभिमानिनः सदेहा एव पिशाचादिवदन्तर्हिता एव तत्राधिष्ठिताः; तेषामेव वक्तृत्वम्; शास्त्रप्रामाण्यात्, तदधीनार्थापत्तिप्रमाणाच्च--इति, तदिदं मृदाद्यधिष्ठातृत्वातिरिक्तसशरीरत्वे प्रमाणाभावात्, शास्त्रप्रामाण्येन मृदाद्यधिष्ठानमात्रेण वागाद्यभावेऽपि वक्तृत्वेन वाक्योपपत्तेः सम्भवाच्च न साम्प्रतम्। सर्वथा तु मृदाद्यचेतनत्वे न विवादः, इति न सर्वं चेतनम्, इति विलक्षणत्वशङ्कोपपादकत्वमस्य सूत्रस्य । "दृश्यते तु" इति तु तत्परिहारपरसिद्धान्तसूत्रमित्यद्वैताशयः ॥

द्वितीयाधिकरणे मतद्वयाभिप्रेताधिकरणविभागः ।

यद्यत्र प्रधानकारणवादनिरासपरतयाऽधिकाशङ्क्योक्तसूत्राणां नयनम्, नास्माकं तत्र विप्रतिपत्तिः । "असदिति चेन्न प्रतिषेधमात्रत्वात्" इत्यादि "एतेन शिष्टा अपरिग्रहाः" इत्येतत्पर्यन्तमेकमधिकरणं द्वैतिनां दृष्ट्या । तत्र अन्तिमसूत्राधिकरणांशे वक्तव्यं यथावसरं वर्णयिष्यते ॥

इदं तुरीयमधिकरणं द्वैतदृष्ट्या, अद्वैतिनां तु शिष्टापरिग्रहवर्जं सर्वाणि सूत्राणि द्वितीयाधिकरणस्यैव गुणसूत्राणि, शिष्टापरिग्रहसूत्रं तु स्वतन्त्रं तृतीयमधिकरणमिति विभागः । तत्राभावकारणतावादनिरासपराण्यन्तिम-

वर्जम्, अन्तिमं तु तदतिरिक्तजीवप्रधानादिनिराकरणपरम्। अत्रासत्पदं न शून्यपरम्; अभावकारणत्वनिरासपरत्वात्। तत्राभावस्य कर्तृत्वमादाय पूर्वपक्षः, ईश्वरकर्तृत्वं विनैव स्वयमेव सर्वेषामुत्पत्त्येति विशेषः॥

अद्वैतरीत्योक्ताधिकरणप्रयोजनम्।

अद्वैते तु यदि विलक्षणं ब्रह्म जगतः कारणम्, तर्हि तद्विलक्षणस्य जगतोऽसत्त्वं न कथमिति शङ्कापरिहारार्थं तत्। तेन च स्वतोऽपि सदात्मना प्रतीतिर्वर्तते, स्वरूपतोऽसत्त्वमात्रं वाऽसत्त्वव्यपदेशमात्रम्। अत एव प्रागुत्पत्तेः "सदेव सोम्येदमि"ति सामानाधिकरण्यम्। इममेवाधिकरणन्यायमाश्रित्य परस्पराध्यासेऽप्यधिष्ठानसंसर्गमात्राध्यासः, न त्वारोप्यस्येवाधिष्ठानस्यापि स्वरूपतोऽप्यध्यास इति सिद्धान्तः। अभावकारणतावादस्तु प्रधानादिकारणवाद इव कथमपि न श्रुत्यनुगृहीतः, "असदेवेदमि"त्यसत्पदं न परमात्मपरमिति प्रथमाध्याय एव गतम्। असत्पदं हि धर्मिपरं नाभावरूपधर्मपरम्॥

द्वैतिनामद्वैतवादेऽधिष्ठानस्यापि स्वरूपाध्यासवादनिरासः।

न चास्मिन् प्रसङ्गेऽद्वैतसिद्धान्तस्य, विमर्शनम्, निरसनं वा द्वैतभाष्ये, सुधायां वा। यद्यपि प्रथमे पादे रूप्यादीनामपि संसर्गमात्राध्यास एव स्यादित्युक्तम्, एवमधिष्ठानस्यापि स्वरूपाध्यास एवाद्वैतवादे स्वीकृतमिति च, परं तु नेदं सूत्रसंमतमपीत्यद्वैतभाष्यतोऽवगम्यते, इत्यधिष्ठानस्यापि स्वरूपाध्यासवादो न सूत्र-भाष्यादिसम्मत इति पूर्वोक्तमत्राप्यनुसन्धेयम्॥

ईश्वरस्वरूपबोधकेषु वाक्येषु सत्सु तस्यैवाभावसाधनमनुमानेन न युक्तम्॥

अभावकारणतानिरासपरतयोक्ताधिकरणयोजनपरीक्षा।

वस्तुतस्तु—अभाववत् ईश्वरोऽपि वर्तत इति कृत्वा यदि पूर्वपक्षः, तदानीमीश्वरस्याभावत्वे न प्रतिषेधमात्रत्वेन सिद्धान्तोपपत्तिः, तेनाभावातिरिक्तसाधनात्। अभावस्येश्वरव्यतिरिक्तस्य सत्त्वे तु तस्य भावत्वे च कार्यतादशायां कार्यस्य भावत्वेन, कारणस्याऽपि सृष्ट्यादौ सतः तेनैव हेतुना कथं नेश्वरस्यैवानुमानम्? तदतिरिक्तेश्वरानङ्गीकारमादाय पूर्वपक्षे "अपीतौ तद्वत् प्रसङ्गादसमञ्जसमि"ति कथमीश्वराभावः प्रसञ्जनमर्हति? तस्य पूर्वपक्षिणोऽभिमतत्वात्॥

न चास्य निबन्धस्याद्वैतखण्डनांशनिरसनं विनाऽन्यल्लक्ष्यम्; तथाप्यसत्पदप्रयोगमात्रांशेऽद्वैतिनां सिद्धान्तोऽत्रासाधारणो वर्तत इति सूचन-

प्रसङ्गे किञ्चिदत्र निवेदितम्। अद्वैतमतनिरसनं तु नात्र विशेषतः—"तर्काप्रतिष्ठानादि"ति सूत्रं वर्जयित्वापि।

अथात्र तर्काप्रतिष्ठानादिति सूत्रभाष्यपरीक्षा।

तत्र केवलयुक्तीनां श्रुतिबाधिकानां न व्यवस्थेत्यद्वैतभाष्यम्। द्वैतिनस्तु श्रुतिमूलत्वे युक्तीनामप्यस्ति प्रामाण्यमित्यत्र वदन्ति। नात्र लेशतोऽप्यद्वैतसिद्धान्तस्य विरोधः, किन्त्वानुकूल्यमेवेति जन्माद्यधिकरणादौ भाष्य एव व्यक्तम्। केवलयुक्तिप्राबल्यवादो न युक्त इत्येवाद्वैतसिद्धान्ताद् नात्र परसिद्धान्ते विप्रतिपत्तिः॥

"शिष्टा अपरिग्रहा", इति सूत्रपाठभेदपरीक्षा।

एतेन—"शिष्टा अपरिग्रहा व्याख्याताः" इति पाठभेदः, अद्वैतसिद्धान्तनिरसनं च किञ्चिदिव समालोचनमर्हति। तत्राद्वैतभाष्यम्–एतेन—प्रकृतेन प्रधानकारणवादनिराकरणेन शिष्टैः—मनु-व्यास-प्रभृतिभिः केनचिदंशेनाप्यपरिगृहीता येऽण्वादिकारणवादाः, तेऽपि प्रतिषिद्धतया व्याख्याताः; परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वात्, तर्कस्याप्रतिष्ठितत्वात्, अन्यथाऽनुमानेऽविमोक्षात्, आगमविरोधाच्च—इति॥

यत्तु—साङ्ख्यादपि वैशेषिकादेरतिशयेन शिष्टागृहीतत्वम्, तदतीव विरुद्धम्; साङ्ख्यस्य निरीश्वरत्वात्, वैशेषिकादेस्तु सेश्वरत्वाद् वैपरीत्यस्यैवोचितत्वात्। इह हि जगत्कारणत्वे विप्रतिपत्तयो निरस्यन्ते—तत्र साङ्ख्यो ब्रह्मैव नाभ्युपैति, कुतस्तदीयं जगत्कारणत्वम्? इत्यतिशयेन वेदान्तवादविरोधित्वात् शिष्टापरिगृहीतः। वैशेषिकादिस्तु ब्रह्म, तन्निमित्तत्वं चाङ्गीकृत्योपादानतामात्रं नाङ्गीकुरुते, इतीषदविरोधित्वादीषच्छिष्टापरिगृहीत इत्युक्तम्। सत्कार्यवादित्वादिकं तु प्रकृतासङ्गतम्; अन्यथा यागीयहिंसानिषेधादिना विपरिवर्तः स्यात्। वेदसंवादबाहुल्यं तु न साङ्ख्ये; तत्त्वानामत्रापरिच्छेदात्। अतः शिष्टाः निराकृततयाऽभावकारणतायाः—जीव-प्रधानाऽसत्कालस्वभाववादा निरस्यन्त इति व्याख्यानमेवात्र युक्तम्—इति॥

शिष्टापरिग्रहाधिकरणस्य प्रधानजीवादि-
कारणतानिरासे न तात्पर्यम्,
किन्तु परमाणुकारणतानिरास एव।

तत्राभावकारणतावादो यत्रेश्वरो नास्तीति वादः, सन्नपीश्वरोऽकारणम्;

अभावस्य भावत्वेन विरोधश्चेति द्वैतवादिमात्रपरिकल्पितः कुत्राप्यप्रसिद्धः। तदपेक्षयोत्तमत्वं सर्वेषामपि प्रधान-जीवासत्कालादिवादानां वर्तते, इत्यभावकारणवादनिरासेन तेषां निरस्तत्ववर्णनापेक्षया शिष्टपदान्तर्गत-प्रधानकारणवादनिरासेनाभावकारणतावादस्य निरासोऽर्थसिद्धो वर्णयितुं शक्यते, इति न विलक्षणत्वसूत्रमारभ्यैतत्प्राचीनसूत्रपर्यन्तं प्रधानकारणतानिरासपरतया योजनमेवार्हति, इति व्याख्यातेषु सर्वेषु सूत्रेषु स्वमनोरथमात्रकल्पिताभावकारणतावादस्यापि तस्याप्यचेतनत्वाविशेषात्, परमगम्भीरस्य जगत्कारणस्याभावरूपत्वस्य तर्कानवगाह्यत्वात्, आगमविरोधाच्चातिदेशेनैव निरासो भवति, इत्यभावकारणतापेक्षयाऽतिशयेन हीनत्वं जीव-प्रधानादिकारणतादीनां न सम्भवति॥

तत्र यदि निरस्यानामतिशयेन हीनत्वमतिदेशेन न विवक्षितम्, किन्त्वधिकरणसिद्धान्तन्यायविषयत्वमात्रे तात्पर्यम्; सर्वेषामपरेषां कारणवादानां निरस्यत्वोपसंहारसूचनमात्रमुद्दिष्टम्, तर्हि प्रधानकारणवादापेक्षया, न्यूनत्वाभावेऽप्यतिदेशमात्रेण काञ्चनाधिकाशङ्कामाश्रित्य प्रधानकारणवादनिरासेन परमाणुकारणवादो निरस्यत इति वक्तुं शक्यत इति कृत्वाऽणुवादनिरासोऽत्रेति वक्तुं सुवचम्॥

परमाणुवादः सर्वापेक्षया हीन इति शङ्कापरीक्षा।

अधिकाशङ्का त्वनुमानेनान्ततो निमित्तकारणस्येश्वरस्य स्वीकारात् तस्य कथं निरास इति। परिहारस्तु—"स्मृत्यनवकाशदोषप्रसङ्गादि"ति सूत्रनिर्दिष्टासु स्मृतिषु केनापि काणादादिसूत्राणामनङ्गीकाराद् जडरूपात्मवादात्, वेदस्य, किं बहुना? शब्दमात्रप्रामाण्यानङ्गीकारात्, कुत्रचनाणुशब्दमात्रस्याणोरणीयानित्यादौ परमात्मतत्त्वपरस्य परमाणुपरत्वाभावात्, आनुमानिकमात्रस्येश्वरे दुस्साधत्वस्य सर्वसम्मतत्वात्, अणोरप्रत्यक्षस्य मृद् घट इति सामानाधिकरण्यायोगेन प्रतीत्ययोगेन तदनुवेधप्रयोजकोपादानत्वास्वीकारात्, कथञ्चनासत्पदेन कारणवाक्येषु प्राधान्येनानुल्लेखात्, आत्मासङ्गत्व-चेतनत्व-तज्ज्ञानसाधनादीनां कस्याप्यंशस्य वेदेषु, स्मृतिषु वानुपलम्भाच्च प्रधानवादापेक्षयाऽतिशयेन हीनत्वमवश्यं स्वीकर्तव्यम्॥

द्वैतमतेऽप्यणुकारणतानिरास इति वक्तव्यम्।

तत्र द्वैतमतेऽप्यणुकारणतावादो न सम्मतः, न वेश्वरस्य निमित्तकारणत्वमपि स्वाभिमतेश्वरशक्तिद्वारकं वैशेषिकैर्मन्यते; अन्यथा निमित्तकारण-

त्वमात्रेण परमाणुकारणवादेनैकमत्यात् योग-पाशुपतदर्शनाभ्यां किमपराद्धम्? यदि नारायणपरमात्मतावादोऽणुवादिनां न विरुद्धः, तर्हीदं विविच्यताम्—किमनुमानसाध्यं कारणस्य नारायणशब्दवाच्यत्वमपि? यद्योम्, तर्हि श्रुत्येकगम्यत्वाविरोधः? तदीयतर्काप्रतिष्ठानसूत्रनयेन परमाणुकारणवाद एव समर्थितः स्यात्, इष्टापत्तौ तु मायाशक्तिपरिणामितावादादयः सर्वेऽप्यस्तमियुः॥

प्रधानवादस्याणुवादापेक्षयोत्कर्ष एव, न हीनत्वम्।

परमाणुकारणवादाभिमतापेक्षया बाहुल्यस्य साङ्ख्यतत्त्वानां श्रुतिषु दर्शनमपि तस्य परमाणुवादापेक्षयोत्कर्षे कारणम्। "पञ्च पञ्चजना" इति तु तदीयतत्त्वानां सङ्ख्यानमपि वेदे वर्तते, इति साङ्ख्या मन्यन्ते, एवं प्रकृतिपदवाच्यत्वात् प्रधानस्य प्रधानपरिणामितावादोऽपि श्रुतिषु वर्तते, असङ्गचिद्रूपत्व-व्यापकत्वादयोऽपि साङ्ख्याभिमताः श्रुतिषूपलभ्यन्ते॥

इदमेवात्रानुयुज्यते—"एतेन शिष्टा अपरिग्रहाः" इति सूत्रेण परमाणुकारणवादोऽपि निरस्तो वा, न वेति। यद्याद्यः, तर्हि वृथाऽयं स्नुषायाः केवलं भिक्षादानाधिकारनिषेधः। यदि न परमाणुकारणवादो निरस्यते, तद्वदेव जीवस्वरूपाचेतनत्व-व्यापकत्वादयः, साधर्म्य-वैधर्म्यज्ञानतत्त्वज्ञानोपायता, असत्कार्यवादः, आरम्भवादो वा, समवायादिस्वीकारः; स्मृत्यप्रामाण्यवादादिकम्, शब्दाप्रामाण्यवादः, अन्ये च तदीया एव द्वैतिनामप्यभिमता इत्यापत्त्या पाञ्चरात्रादिप्रामाण्यस्वीकारः, तद्बलेनैव परमात्मतत्त्व-तज्ज्ञानसाधनत्वादिव्यवस्था, अन्यच्च सर्वं द्वैतिनां समूलमुच्छिद्येत। सर्वथा तु वेदाप्रामाण्यवादः, श्रुति-स्मृति-पुराणेतिहास-धर्मशास्त्रादिविद्यास्थान-धर्मस्थानाद्यस्वीकारश्च वैशेषिकमते, तद्विप्रतिषेधस्तु द्वैताद्वैतमतयोरुभयोरपि, इति तन्निरास एवात्र विषयः॥

न हि ते तदीयया प्रक्रियया नित्यज्ञानवन्तमीश्वरं चेतनमनुमातुमीशते। कुलालादयो हि स्वयमचेतना आगन्तुकज्ञानेनैव चेतना निमित्तकारणतयोपलभ्यन्ते, इति कुलालादिदृष्टान्तेन नित्यज्ञानवत ईश्वरस्य कथमनुमानम्? ज्ञानशब्दवाच्यस्य स्वरूपज्ञानस्य नित्यस्य तन्मते दृष्टान्तेन साधनासम्भवात्, इत्यनुमीयमानोऽपीश्वरः स्वयमचेतनः आगन्तुकज्ञानवानेव सिद्ध्येत्। तच्च कथं तस्य जन्यम्? इति सृष्टेः पूर्वमात्ममनःसंयोगादि-

कारणाभावादिति शङ्का त्वपरा तत्र, इति ईश्वराङ्गीकारः, ब्रह्माङ्गीकारो वा श्रुतिसम्मतो न वैशेषिकमते स्यात्, इति साङ्ख्यानामनीश्वरवाद एव वरो वैशेषिकाणां सेश्वरत्ववादापेक्षया, इति साङ्ख्यापेक्षया हीनत्वमतिशयेनाणुवादस्यैव सूत्रकाराभिमतमिति विवरणमत्र सर्वथाऽनवद्यम् ॥

॥ इति शिष्टापरिग्रहाधिकरणम् ॥

---

## ❀ अथ भोक्त्रापत्त्यधिकरणम् ❀

### ॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥

भोक्तृ-भोग्यसाङ्कर्यापत्तिपरिहारार्थताऽस्याधिकरणस्याद्वैते ।

इदमधिकरणम्—"प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"ति साधितविवर्तवादस्याक्षेपपरम्। तत्र सर्वस्य ब्रह्मविवर्तत्वाद् ब्रह्मणाऽभेदः साधितः। परमात्मनोऽनन्यत्वे च सर्वेषां "तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेनैक्याद् भोग्यस्य भोक्तृत्वम्, भोक्तुर्भोग्यत्वम्, इति सर्वेषामितरेतरभावापत्त्या लौकिकी भोग्य-भोक्तृव्यवस्थाऽस्तमियात्। अतो न ब्रह्मविवर्तवादो युक्त इत्याक्षेपाशयोऽद्वैतदृष्ट्या ॥

जीववद् जगत्कारणत्वं ब्रह्मणोऽपि नेत्यनापत्त्या ब्रह्मक्याख्याद्वैतनिरासार्थताऽस्याधिकरणस्येति द्वैतम् ।

द्वैतिनस्तु—न ब्रह्मणो जगत्कारणत्वं वास्तवं भवति; असर्वकारणेन जीवेनात्यन्ताभिन्नत्वात्, अत्यन्ताभिन्नयोश्च तयोरेकस्वभावत्वम्, न तु विरुद्धस्वभावत्वमित्यवश्यं स्वीकर्तव्यम्। न च मुक्तस्य सर्वकारणत्वम्; संसारेऽनुपलम्भात्। संसारे प्रतीयमानस्य कस्यचिदाकारस्यैवापगमो मोक्षे, नापूर्वाकारोत्पत्तिः; अनित्यत्वप्रसङ्गात् ॥

न चानन्दादेरिव विद्यमानस्यैव तिरोहितस्य सर्वकारणत्वस्यानुपलम्भमात्रम्; प्रमाणाभावात्। संसारे ह्यानन्दादीनामपि परमप्रेमास्पदत्वेनेषदुपलम्भो वर्तते, न तु जीवस्येषदपि सर्वकारणत्वस्योपलम्भः। ब्रह्मणो जगत्कारणत्वस्य श्रौतस्यान्यथानुपपत्त्या तदभिन्नस्यापि संसार ईषदुपलम्भः कल्पनीय इति तु न युक्तम्, काल्पनिकं हि जगत्कारणत्वं ब्रह्मणः श्रुतिराम्नाति ॥

जीवस्य मुक्तावेकीभावानुपपत्तिरद्वैते ।

न च तदेव जीवस्यापि; अन्यथा प्राधानादीनामपि काल्पनिक-जगत्कारणत्वेन कारणत्वमित्यापत्त्या न प्रधानकारणवादोऽनुपपन्नः स्यात्, मुक्तजीवस्य ब्रह्मणैक्यं ह्यद्वैतं नाम । अत एव—"कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती"ति श्रुतिः, इति मुक्तौ भोक्तुर्जीवस्य ब्रह्मभावात् तयोरविभागापत्तिः । ततश्च ब्रह्मणो न जगत्कारणत्वं वास्तवमिति शङ्कामनूद्य तन्निराकरणार्थ-मिदं सूत्रम् ॥

जीवस्य मुक्तावेकभावो द्वैतवाद एव लोकवत् ।

तत्परिहारस्तु—लोकवदिति पदेनाभिसन्धित्सितोऽयमेव—

श्रौतस्त्वेकीभावः, सत्यम्, तथापि स लोकवदेव—यथा लोक उदक उदकस्यैकीभावः स्थानैक्यनिबन्धनः, ऐकमत्यं वा, यथा प्राग्विभिन्नाः ब्राह्मणाः साम्प्रतमेकीभूता इत्यादौ, इति मुक्तौ जीव-ब्रह्मणोरेकस्थानत्वम्, ऐकमत्यं चात्र प्रतिपाद्यते ॥

न चैवंविधोऽत्रैकीभावो जीव-ब्रह्मणोरत्यन्ताभेदरूपः । स हि यदि प्रागपि ब्रह्मणाऽभिन्नस्यैव जीवस्य मुक्तावेकीभावः, तर्हि तत्राभूततद्भावार्थच्विप्रत्ययविरोधाद् गौणार्थत्वमापद्येत । प्राग्भिन्नस्यैकीभावस्त्वेकस्थानत्वैकमत्यरूप एव मुख्यो भवितुम-र्हति, इति जीवब्रह्मैक्यं बाधितमिति सूत्राशयः । अयमत्र प्रयोगः—जीवः, न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते, प्राक् ततो भिन्न-त्वात्; यथा घटः, पटेन कदाचिदपि नैक्यमापत्स्यते इति ॥

भेदनिषेधेनाद्वैतवादः शून्यवाद एव ।

तत्राभेदो हि जीव-ब्रह्मणोर्भेदनिवृत्तिद्वारेणेति वक्तव्यम् । न च भेदिनोः सतोर्भेदमात्रं स्तम्भ-कुम्भभेदादौ दृश्यते, इति भेदनि-वृत्तौ भेदिनोरपि निवृत्त्यापत्त्या शून्यवाद आपद्यते । शून्यवादो हि सर्वाभाववाद एवात्र विवक्षितः, न तु चतुष्कोटिविनिर्मुक्त-तत्त्ववादमात्रम्, इति शून्यवादमेवादाय—"असदिति चेन्न प्रतिषेधमात्रत्वादि"ति प्रवृत्तम् । न चैतद्युक्तम्; ईश्वरा-भावप्रसङ्गादेः ॥

न च मुख्यार्थे संभवति आगमा अप्यमुख्यार्थं बोधयितुं शक्नुवन्ति। विष्णुपुराणमपि—

"परमात्मात्मनोर्योगः परमार्थ इतीरितः॥
मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः॥"

इति। न चास्ति श्रुतिविरोधः; प्रागप्यभिन्न एव ब्रह्मणा जीव-इत्यङ्गीकारात्॥

द्वैतवाद एव एकीभवन्तीति च्विप्रत्ययोपपत्तिः।

न च च्विप्रत्ययानुपपत्तिः; प्रतीत्यपेक्षया श्रुत्युपपत्तेः। प्राग्विभिन्नतया दृष्टोऽयं जीवो ब्रह्मणाः मुक्तावभिन्नतया प्रतीयते—इति शङ्का तु न युक्ता॥

अत्रेदं वक्तव्यम्—किं प्राक्तनी जीव-ब्रह्मभेददृष्टिर्भ्रान्तिः, उत प्रमेति। नाद्यः; बाधकाभावात्। श्रुतयस्त्वद्याप्यव्यवस्थितानामर्थानां न बाधकतामश्नुवते। प्रमितस्तु भेदो न निषेद्धुं शक्यते कालान्तरे, इति नैकीभावस्य भेदनिवृत्तिरूपस्य, अभेदस्य वाऽत्रोपपत्तिः। अयमत्र प्रयोगः—जीवः, न कदाचिद् ब्रह्माभिन्नतया प्रमाविषयः, ततोऽत्यन्तभिन्नतया प्रमितत्वात्; यथा न घटः पटीभिन्नः—इति भेदप्रतीतिमादायापि न च्विप्रत्ययोपपत्तिः॥

द्वैताभिप्रेतभोक्त्रापत्तिसूत्रार्थः।

सूत्रार्थस्तु—भोक्तुर्मोक्षे परत्वापत्तेरुक्तत्वात् ब्रह्मणो जीवैक्यस्य श्रुतौ प्रतिपादनात्, जीवस्येव ब्रह्मणोऽपि जगत्कारणत्वं न स्यादिति चेत्, न; मुक्तावेकीभावोक्तेरेकस्थानत्वैकमत्यादिपरत्वेनात्यन्ताभेदपरत्वाभावादिति॥

अत्र भोक्त्रापत्तेरिति समासघटकभोक्तृपदस्य भोक्तृसम्बन्धिमुक्त्यवस्थैकीभावपरत्वम्; आपत्तेरित्यस्यानन्तरं मुक्तेरित्यध्याहारश्चेति विवेकोऽनुसन्धेयः॥

यत्तु—अद्वैतिनां चेतनाचेतनात्मकसर्वजगदुपादानत्वस्य, ततः-सर्वेषां ब्रह्मणाऽभेदस्य च प्रतीयमानस्य स्वीकारे भोग-भोग्य-भोक्तृव्यवस्थानुपपत्तिरिति भोक्त्रापत्तेरित्यंशस्य विवरणम्, तत्र-भोग-भोग्ययोः परमात्मनश्च भोक्तृत्वापत्तेरिति भोक्तृशब्दस्य

भावार्थत्वे लक्षणा दोषः, भोक्तृत्वापत्तेरित्येव सूत्रणापत्तिश्च। यद्यप्यध्याहारादिसाम्यमुभयत्र, परं तु भावप्रत्ययाभावोऽधिकः परेषां विवरणे दोषः—इति सूत्रमिदं द्वैतिनो विवृण्वन्ति ॥

मुक्तौ जीव-ब्रह्मैक्यं न जीवजगत्कारणत्वापादकम्,
इति न तन्मतनिरासार्थताऽस्य सूत्रस्य।

इदमत्राद्वैतिनोऽभिप्रयन्ति–सत्यम्, जीव-ब्रह्मणोरैक्यं मुक्तिदशामाश्रित्यैव, न तु तद् बद्धदशायाम्; अनावृतसंविन्मात्रस्वरूपत्वाद् जीव-ब्रह्मैक्यस्य। न च तस्यां दशायां जीवो जगत्कारणम्। जगत्कारणत्वं हि ब्रह्मणो मायोपहितस्वरूपेण, अविद्याविषयत्वमात्रेण वा। न च तस्यां दशायां शुद्ध-प्रत्यगात्मनस्तेनैक्यम्, न तरां च संसारिणो जीवस्य, इति जीव-ब्रह्मैक्यस्य शास्त्रार्थत्वे न जगत्कारणेन ब्रह्मणैक्यम्, इत्यसर्वकारणत्वाविशेषात् मुक्त्यवस्थायां तत्पदलक्ष्यार्थस्य, त्वम्पदलक्ष्यार्थस्य चासर्वकारणजीवेनैक्यं न सर्वकारणस्य, इति जीव-ब्रह्मैक्यस्य, कार्य-कारणभावस्य च वस्तुतो विरोधान्न जीव-ब्रह्मैक्येऽपि ब्रह्मणो जगत्कारणत्वानुपपत्तिरद्वैतवादे, इति न द्वैतिनामाक्षेपोऽयमद्वैतवादे लगति ॥

अद्वैते भोक्तृ-भोग्यसांकर्यशङ्कोपपत्तिप्रकारः।

तथाच न केवलं ब्रह्म, किन्तु मुक्तोऽपि न सर्वकारणम्। संसार-दशायामावृतसंविन्मात्रं ह्यविद्योपाधिवशाज्जीवभावम्, ईश्वरभावं वा प्राप्तं सत् तत्तदुपाधिभेदाद् भिन्नमिव प्रतीयमानम्, निवृत्तायामविद्याया-मनावृतस्वरूपसंविन्मात्रं हि मुख्यो मुक्तात्मा नाम–जीवेश्वरोभयप्रति-बिम्बतावादे प्रकटार्थकारप्रस्थाने। जीवेश्वरबिम्ब-प्रतिबिम्बभावप्रस्थानेऽपि विवरणाभिमते मुक्ते जीवाश्रिताविद्याविशेषरूपोपाधिविगमेनेश्वरभावेऽपि यावदीश्वरभावं तयोर्बिम्ब-प्रतिबिम्बभावेन किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिभेदाद् जीवकारणत्वस्याभावाद् मुक्तस्येश्वरभावमापन्नस्य कारणत्व इष्टापत्तेश्च न तत्रेश्वरकारणत्वायोगाक्षेपस्यावसरलेशः। उपाधिभेदनिबन्धनो हि भेदोऽत्रापि समानः। सर्वत्रोपाधीनामेव कार्यत्वम्, नोपहितस्वरूपस्य, इति ब्रह्मकार-णतावादे कार्य-कारणयोर्भेदे सर्वेषां कार्याणामेव कारणात्मनाऽभेदाद् कार्यसाङ्कर्यम्, भोक्तृ-भोग्यसाङ्कर्यं च यद्यपि शङ्कितुं शक्यते तदभिन्नाभिन्न-नयेन। तेन च ब्रह्मणोऽपि कार्याभेदेन कार्यत्वापत्त्या, उपाध्युपहिताना-मपि कारणत्वापत्त्या भोक्तृ-भोग्यव्यवस्था न स्यात् ॥

इदमुपलक्षणं कार्य-कारणभावव्यवस्थानुपपत्तेरपि, इति ब्रह्मणो जगत्कारणत्वाक्षेपपरिहारार्थत्वमप्यस्याधिकरणस्य नानुपपन्नम्। न च संसारदशायां जगत्कारणत्वतिरोधानम्, मुक्तौ तत्प्रकाश इत्यद्वैतमतम्, येनानन्दादेरिव विद्यमानस्यैवाविद्यया तिरोधानादिकमवसरेत्, आनन्दादेरिव संसारावस्थायां जगत्कारणत्वस्येषदुपलम्भश्च स्यात्। न च जीवस्यापि तत्कालप्यमपि; मायोपहितस्यैव कारणत्वात्, तस्य जीवेनैक्याभावात्॥

मुक्तौ न जीवस्य जगत्कारणत्वं भामत्यादिप्रस्थाने।

तत्र च मायोपधानमिव तन्निष्ठं जगत्कारणत्वमप्यविद्योपधानप्रयुक्तं काल्पनिकमेव। तदुक्तम्—

"अद्वमा भवतः केयं कारणत्वप्रकल्पने॥"

इति। काल्पनिकत्वं कारणत्वस्य मायोपहितस्यापि संविदधिष्ठानकत्वेनैव; अधिष्ठानारोप्याभावनिबन्धनकत्वात् काल्पनिकत्वस्य॥

तत्र काल्पनिकत्वमपि स्वरूपत उपाधेरेव, न तूपहितस्येति त्वन्यदेतत्, तत्र मायाऽपि ब्रह्मण्यध्यस्ता. इति तस्याः कारणत्वमपि कल्पितम्। न च प्रधानवादे प्रधानं ब्रह्मणि कल्पितम्, इति तद्दृष्ट्या न काल्पनिकं कारणत्वं प्रधानस्य, अद्वैतदृष्ट्या तु कारणत्वोपेताया मायायाः कल्पितत्वात् कारणत्वमपि शुक्तिरूप्यगतरूप्यत्वमिव कल्पितम्। न चैतादृशं कल्पितं कारणत्वं प्रधानस्य, साङ्ख्या ऊरीकुर्वन्ति। एवं जीवोऽप्युपहित औपाधिकेन रूपेण कल्पितोऽपि कारणेऽकल्पितत्वाद् न तस्यापि काल्पनिकं कारणत्वम्। अविद्याया उपाधिविधयोपधानमात्रेण संविदकारणतोपपादकत्वम्॥

अद्वैतेऽपि एकीभावः, च्विप्रत्ययोपपत्तिश्च।

"परेऽव्यये सर्व एकीभवन्ती"तिप्रतिपादित एकीभाव उपाधिनिवृत्तिप्रयुक्तौपाधिकभेदाभावः स्वरूपमात्रैक्यम्॥

एतेन—तत्र च्विप्रत्ययोऽपि-व्याख्यातः। उपाधिनिवृत्तिप्रयुक्तौपाधिकभेदाभावस्य मुक्तिपर्यन्तमभूतस्य मुक्तिकाल एव भावेन चाभूततद्भावाविरोधात्। नित्यसिद्धं स्वरूपैक्यमिति वादस्तु स्वरूपयोरौपाधिकभेदमात्रसत्त्वेऽपि स्वरूपतः सर्वदा भेदाभावमभिप्रेत्य, न स्वरूपैक्यं संसारदशायां विद्यमानमप्युपाधियोगादावृतत्वेनाभूतमिव, मुक्तौ तु तद् भूतमिव मत्वा। औपाधिकभेदप्रयुक्तस्याभूततद्भावस्य निवृत्त्या हि च्विप्रत्ययः। न

चात्र गौणार्थत्वम्; अभूततद्भावनिवृत्त्या तद्भावस्याप्यभूततद्भावत्वाद्। 'घटाकाशो महाकाशीभवति घटाकाश-मठाकाशादयो महाकाशीभवन्ति' "रसं ह्येवायं लब्ध्वाऽनन्दी भवती"त्यादाविव ॥

न हि स्वरूपानन्दस्य नित्यप्राप्तस्य स्वरूपाभिन्नस्यानन्दीभावोऽभूत्वा तद्भावः, किन्त्वभूत्वेव तद्भावः; अनाद्यविद्याकल्पितसदादिभेदस्याखण्डस्य ब्रह्मणोऽज्ञानेनाऽवृतावस्थायामनानन्दभावस्य पूर्वसिद्धस्य निवृत्त्याऽखण्डात्मताया अभूताया एव तत्त्वसाक्षात्कारेण भावात्। परत एव त्वेकीभावो नोपपद्यते, इति संसारदशायामिव मुक्तावपि जीव-ब्रह्मणोर्भेदस्यैव स्वीकारे संसारदशायामैक्यमभूतस्याभावेऽपि मुक्तौ तद्भावात्, इति परममुक्तौ, संसारावस्थायां च सर्वेषां जीवानां भिन्नतया सतामेकीभावस्य बाधितत्वाद् न तत्र च्विप्रत्ययानुपपत्तिः ॥

शुद्धोदके मिश्रितमुदकमेकीभूतमेव, तत्र पूर्वोत्तरोदकयोर्विवेकासम्भवात्। अयमेव न्यायोऽत्रापि, तत्र यदि तादृगेव भवति, न तदेव, तर्ह्येकीभावस्य परोदाहृतमुदकनिक्षिप्तमुदकं नोदाहरणतामर्हति ॥

एकस्थानत्वं चैकभूतलगतयोर्घट-पटयोरेकीभावमभिप्रेत्य घटः पटीभवतीति प्रयोगापत्त्या नैकीभाव इति न युक्तम्। न हि वैकुण्ठेऽन्यत्र वा विद्यमाना सर्वे भिन्नाऽपि एकीभवन्ति व्यपदेशयोग्या भेदगन्धं विनैव ॥

परामिमतैकीभावस्य मुख्यस्य दुर्वचत्वम्।

एकस्थानत्वं च किमेकशरीरकत्वम्, उत पृथग्विवेकानर्हत्वम्, उतैकलोकत्वम्। आद्यो बाधितः परमतेऽपि; मुक्तानां परमात्मशरीरकत्वाभावात्। द्वितीये पृथक्तया विवेकानर्हत्वं पृथक्त्वाभावेन, उत पृथक्तया प्रतीतिमात्राभावेन। तत्राद्यः परमते बाधितः, अद्वैतमते तु स्वीक्रियते। तत्र द्वितीये पूर्वप्रतीतस्य भेदस्य न प्रतीतिः, अप्रतीतस्य वा। तत्राद्येऽपि किं प्रतीतिर्भ्रान्तिः, उत प्रमा। नाद्यः; परमते भेदबाधकप्रमाणानङ्गीकारात्, प्रमितत्वे तु भेदस्य तत्प्रतीत्यनर्हत्वायोगः। पूर्वमप्रतीतौ तु न च्विप्रत्ययोपपत्तिः। उदके सिक्तमुदकं तु वस्तुतोऽभिन्नमेव। तत्र भेदस्तु पूर्वं परत्र विशेषोपाधिभेदमात्रेण। एकदेशस्थत्वं यद्येकचैतन्याध्यस्तत्वं घटतदाकारवृत्त्योरिव, एकचैतन्यावच्छेकत्वेन वा। तर्हि जीव-ब्रह्मणोरेकचैतन्यानवच्छेदकत्वाद् न सम्भवति। स्वरूपैक्यं त्वज्ञातवदवभासमानं तदुपाधिनिवृत्तिमात्रेण ज्ञातवदुपचर्यते, यथा कण्ठगताज्ञातग्रैवेयकम्। सति चैवमौपाधिकभेदनिवृत्त्याऽत्र फलतोऽभेदः ॥

ऐकमत्याभिप्राय एकीभाव इत्यपि गौणमेव। तत्राप्यैक्यं मतीनामेव, न व्यक्तीनाम्। तत्रापि मतिमभिप्रेत्यैकीभावो मत्युपाधिको मतिभेद-प्रयुक्तविरोधनिर्हरणम्, उत मतिभेदनाशाधीनद्वैतभावनिवृत्तिरेव। तत्राद्य एकीभावे "परेऽव्यये सर्व एकीभवन्ती"तिच्विप्रत्ययोऽद्वैतसिद्धान्ते न विरुध्यते। यद्यैकमत्यं मुख्य एकीभावः, तर्हि उपाधिविलयप्रयुक्तौ-पाधिकभेदविलयोऽप्यभेदरूपो मुख्य एव॥

चित्रप्रत्ययावगतैकीभावनिष्कर्षः।

निष्कर्षस्तु—अविद्याप्रयुक्तोपाधि-तत्सम्बन्धाधीनपरस्परपरमात्मभेद-वतां जीवेश्वरादीनां विद्याप्रयुक्ताविद्या-तत्प्रयुक्तोपाधि-तत्सबन्धनिवृत्त्यु-पलक्षितसंविन्मात्रतैवैकीभावशब्दार्थः। तत्र भेदनिवृत्तेरभूताया भावात्-च्विप्रत्ययोपपत्तिः, द्वैतमते तु संसारदशायामप्येकस्थानकत्वम्, ऐकमत्यं वाऽभूतभाव्येव, मुक्तावपि नैकस्यानेकस्थात्वनियमः, ऐकमत्यनियमा वा बद्धानामिव मुक्तानाम्, इत्येकीभावविवक्षायां न बद्धवत् मुक्तयोरपि तारतम्यस्वीकारात् मुक्तेशयोरविशेषः, इति "परेऽव्यये सर्वे एकीभवन्तीति नान्वितम्। न हि परेऽव्ययेऽनेकीभावः, साधकावस्थायामपि साधकानात्, इति को वा विशेषः साधकावस्थातो मुक्तावस्थायाः?

इदमत्रानुसन्धेयम्—सिद्धयोरेवाभेदोऽत्रैकीभावः, भेदस्त्वत्रौपाधिकः, अवस्थाभेदनिबन्धनो वा संसारे जीवकत्वे ब्रह्मणोर्मध्ये जीवस्यौपाधिक-त्वात्, तस्य निरुपाधिकेन, भिन्नोपाधिकेन वा भेद एव, मुक्तौ तूपाधिवि-लयादभेदः॥

औपाधिकभेदनित्यवृत्त्यैकीभावोपपत्तिः
एकीभावविरोध्यनुमानदूषणं च।

न चैवं घट-पटयोरभेदापत्तिः; घट-पटयोः, तद्भेदस्य चानौपाधिकत्वात्, यथा घटाकाश-महाकाशौ घटाकाश-महाकाशौ वा कदाचिद् भिन्नौ, कदा-चिदभिन्नौ। एतेन—जीवः, न कालान्तरे ब्रह्मणैक्यमापत्स्यते, प्रकृतितो भिन्नत्वादित्यनुमानमपि—परास्तम्; कालान्तरे महाकाशाद् भिन्ने घटा-काशे, कालान्तरे मठाकाशाद् भिन्ने च महाकाशे व्यभिचारात्, तत एवाप्रयोजकत्वात्, अनौपाधिभेदवत्त्वस्योपाधित्वाच्च। यत्र यत्र कालान्तरेऽभेदादयोर्घट-पटयोरनौपाधिकभेदवत्त्वं वर्तते, तत्र तत्र साध्यव्यापकत्वम्, घटाकाश-महाकाशयोः साधनाव्यापकत्वमित्युपाधिलक्ष-णयोगात्, पक्षे साधनाव्यापकत्वं त्वधिकम्। अयमेव नयः—जीव-

ब्रह्मभेदः, सतोर्भेदिनोर्न निवृत्तिमान्, भेदत्वात्; स्तम्भ-कुम्भवदिति-प्रयोगेऽपि। भेदिनोरेकतरस्मिन् सति निवृत्तिमत्त्वस्य घटाकाश-महाकाश-भेदे साध्याभाववति हेतोः सत्त्वेन व्यभिचारात्। घटाकाश-मठाकाशयोर्भेदस्तु भेदिनोर्घटाकाश-मठाकाशयोः सतोरपि घटनाशे नश्वरो दृश्यते, इति तत्रापि व्यभिचारः॥

अत्रोपाधिकत्वमेवोपाधिः। न चागमविरोधः; "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" "नात्र काचन भिदाऽस्ति"इत्यादिबहुश्रुतीनां भेदमिथ्यात्वप्रतिपादकानां सत्त्वात्। "यथोदकमिति" श्रुतिस्तु मुक्तावद्वैताभिमतैकीभावपरा, न तद्विरोधिनी॥

भेदमिथ्यात्वे विष्णुपुराणाविरोधः।

"परमात्मनोर्योगः परमार्थ इतीरितः।
मिथ्यैतदन्यद् द्रव्यं हि नैति तद् द्रव्यतां यतः॥"

इति विष्णुपुराणमपि परमात्मात्मनोर्योगः = ऐक्यं परमार्थः, अन्यद् द्रव्यम्—जीव-तत्त्वरूपपरमात्मतां नैतीति यत्; तन्मिथ्या, न युक्तमित्यर्थकम्; भेदमिथ्यात्वम्, अभेदसत्यतां चैव गोचरयति॥

भेदनिवृत्तेरेकीभावरूपत्वम्।

निष्कर्षस्तु—प्राक्तनौपाधिकभेदविलयो मुक्तावेकीभावः, इति न च्विप्रत्ययानुपपत्तिः; स्वरूपतोऽभिन्नयोरौपाधिकभेदाविरोधात्। अथवा भेदप्रतीतेः कल्पितत्वात् कल्पितभेदनिवृत्त्यैवैकीभावोऽत्र विवक्षितः। भेदबाधकाश्च बहवः श्रुतयस्तत्र तत्रोदाहृताः। अथवा—भेदनिवृत्तिमात्रमेकीभावपदार्थः; भेदबाधकानां बहूनां प्रमाणानां सत्त्वादिति सर्वमनवद्यम्॥

भेददृष्टिश्चेयं व्यावहारिकप्रमैव। व्यावहारिकाणां प्रतियोग्यनुयोगिनामिव प्रमितानामपि ततोऽधिसत्ताकाधिष्ठानसाक्षात्कारेण भेदस्य बाधो न दुष्यति। घटः, पटाद् भिद्यत इति प्रतीतिरपि बाध्यैव ब्रह्मसाक्षात्कारेण। तावतापि तु न प्रमितत्वविरोधः। एतेन—जीवः, न कदाचिद् ब्रह्माभिन्नतया प्रमाविषयः, ततोऽत्यन्तभिन्नतया प्रमितिविषयत्वात्, यदेवं, तदेवम्, यथा घटः पटादभिन्नतया न प्रतीतियोग्य इति प्रयोगोऽपि—परास्तः। औपाधिकतया, अत्यन्तभिन्नतया प्रमितिविषये घटाकाशभिन्ने महाकाश उपाधिनिवृत्तावभेदप्रतीतिविषये व्यभिचारात्, जीव-ब्रह्मणोर्भेददृष्टिर्भ्रमात्मिका, अभेदप्रतीतिः प्रमात्मिकेति हेत्वसिद्धिरपि॥

द्वैतिनां भोक्त्रापत्तिसूत्रव्याख्याऽसाधुत्वम् ।

सूत्रव्याख्या तु—द्वैतानुसारिणी तदभिमतरीत्या पूर्वोक्तविधयैव कर्तव्या, इति बहुतराध्याहारादिदूषणदूषिता न सूत्रकाराभिमता । "भोक्त्रापत्तेरि"तिसमासघटभोक्तृपदानन्तरमापत्तिपदतः पूर्वं तत्सम्बन्धिमुक्तचवस्थैकीभावपदानां बहुनां मध्यमपदानां लोपकल्पनम्, आपत्तेरित्यस्यानन्तरं मुक्तेरिति पदाध्याहार इति बहुतराध्याहारो हि निर्मूलः । अद्वैतमते तु भोक्त्रापत्तिपदस्य भोक्तृभावादित्यर्थस्वीकारात् भोग्यस्य भोक्तृभावविवक्षया तस्य तुल्यवितिवेद्यतया भोक्तुर्भोग्यभावपरतायाः ब्रह्मणो भोक्तृभावपरतायाश्चोपलक्षणाद् न सूत्रास्वारस्यम्, तस्यान्यथानयनं वा ॥

भोक्तृ-भोग्यसाङ्कर्यापत्तिपरिहारोऽद्वैतिनाम् ।

कार्य-कारणयोरभेदो हि कारणात्मनैव लोके दृश्यते, न तु परस्परं कार्यात्मनाऽपि कार्याणाम्, कार्य-कारणयोश्च, इति लोकवदिति समाधानमद्वैत एव स्वरसम् । वस्तुस्थितिमनुसृत्य जीवस्य ब्रह्मणा सकलजगत्कारणेनैक्यं नास्तीति कृत्वा द्वैतिनां विवरणं पूर्वं निरस्तम् । अभ्युपगम्यापि सकलजगत्कारणेनैक्यं कारणात्मनैव कार्यस्य कारणेनैक्यात्, कार्यात्मना कारणस्यानैक्याच्च न जीवस्य जीवत्वेन कारणत्वस्य प्रसरः, कारणात्मनैक्यात् कारणत्वं तु नानिष्टम् । अत एव "सद्भावेन ह्यजं सर्वम्" इति कार्याणां कारणात्मना कार्यत्वमेव निषिद्ध्यते, इति कथं वा भोक्तृ-भोग्यानां स्वतः, उपाधितश्च कार्याणामैक्यम् ? कुतश्च ब्रह्मणः कार्यात्मनैक्यं बाधितं स्यादितिशङ्काया उत्थितेः, परिहारस्य वाऽवसरः ? यथा चैकीभावो द्वैताभिमतोऽपि बाधितः, तथा पूर्वमेवोपपादितम् ॥

॥ इति भोक्त्रापत्त्यधिकरणम् ॥

———

❀ ओं ❀

# ❀ अथ तदनन्यत्वाधिकरणम् ❀

## ।। तदनन्यत्वमारम्भणशब्दादिभ्यः ।।

### तदनन्यत्वपदविभागः तेन निरस्यमतनिर्देशश्च ।

अत्र तदनन्यत्वाक्षेः पूर्वपक्षे, तदनन्यत्वसमर्थनं सिद्धान्ते। तदनन्यत्वपदं तत्पुरुषसमासेन भेदमात्रनिषेधपरम्, वैशेषिकानां केवलनिमित्तकारणत्वमात्रनिषेधाभिप्रायेण, उपादानत्वसमर्थनाशयेन च। उपादानत्वेऽपि परिणाम्युपादानत्वमेव, परं तु तत्र परिणाम्युपादाने कार्यस्य तत्समसत्ताकस्याभेदवद् भेदस्यापि सत्यत्वाद् न तदनन्यत्वाभाव इति बहुव्रीहिसमासोऽपि; तत्रापि ब्रह्मपरिणामित्वायोगेन निरासेन विवर्तोपादानत्वसमर्थनमेवात्र लक्ष्यम्, इति तदनन्यत्वपदं ब्रहुव्रीहिसमासाभिप्रायमपि। परमार्थतो विवर्तोपादानपरतया कार्यस्य तद्व्यतिरेकेण कार्याभावस्वरूपमनन्यत्वं तदन्यशून्यत्वपरम्। 'एकमेवाद्वितीयमि'ति वाक्यार्थसङ्ग्रहायेति विभागः न केवलं वैशेषिकाद्यभिमतभेदमात्रनिरासोऽस्याधिकरणस्य विषयः, किन्तु परिणामिकारणतानिरासोऽपि, इति प्रकृत्यधिकरणसिद्धस्यैवार्थस्य वैशेषिकाणाम्, भास्करस्य, तन्मूलाचार्योपवर्षाचार्यादीनां वा पक्षमनुसृत्य प्रवृत्ताक्षेपपरिहारद्वारा कारणवाक्यानां ब्रह्मण्यभिन्नविवर्तोपादानतासमन्वयार्थमिदमधिकरणम् ।।

### इदमधिकरणं द्वैतवादनिरासस्याप्युपलक्षणम् ।

तत्र वैशेषिकादिमतमित्युपलक्षणम्, केवलनिमित्तकारणतावादिद्वैतसिद्धान्तस्याप्यधिकरणसिद्धान्तनयेनात्र निरास इति तु वस्तुस्थितिः ।।

### इदमधिकरणं परिणामवादनिरासपरमपि ।

एतेन—"परिणामात्" "योनिश्च गीयते" इति सूत्रे अपि-व्याख्याते ।।

आरम्भवादः परिणामवादः विवर्तवादस्य च भूमिकेयम् ।।

इति वचनेन पूर्वाधिकरणप्रस्तुतपरिणामवादस्य विवर्तवादपर्यवसायिताभिप्रायेण तत्पदस्यात्र प्रयोग इति केचित् ।।

परे तु पूर्वाधिकरणमपि विवर्तोपादानाभिप्रायमेव, परन्तु सत्ता-

त्रैविध्यवादेन, इदं तु सत्त्वैक्यवादेनेति। अत एव भाष्यव्याख्यासु परिणामपदं विवर्तपरतया व्याख्यातम्। आरम्भणशब्दादिभ्य इति हेतुः "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"ति निर्दिष्टं दृष्टान्तम् वाचारम्भणं विकारो नामधेयमिति वाक्यं च स्मारयति। अत एवास्याधिकरणस्यैकसत्तावादेन विवर्तवादाभिप्रायत्वम्॥

वाचारम्भणवाक्यमूलकमिदं विवर्तवादपरमेव।

अत्र वाचारम्भणश्रुत्या विकारस्य वाचारम्भणत्वश्रवणात् स्वरूपेण प्रपञ्चाभावपक्षः समर्थितो भवति, इति सत्त्वैक्यवादे तस्यास्तात्पर्यं पर्यवस्यति। आदिपदेन—"ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा" "सर्वं खल्विदं ब्रह्म" "यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत्" इत्यादिवाक्यसंग्रहः॥

ब्रह्मनिमित्तकारणता परिणामिकारणताभ्यां पूर्वपक्षः।

आरम्भणादिभ्यः इति सूत्रयितव्ये शब्दपदस्याधिकस्य सूत्रे निवेशेन वाचारम्भणपद-नामधेयपदघटितवाक्यमपि तदनन्यत्वोपपादकतया विवक्षितमिति प्रतीयते। तथाच भेदवादिवैशेषिकाद्यभिमतमर्थमादाय पूर्वपक्षः, अभेदवादमादायोपादानतया सिद्धान्तः। तत्र भास्कराद्यभिमते परिणामवादेऽपि कार्यसमसत्ताकत्वात् कारणस्य, कारणसमसत्ताकत्वाद्वा कार्यस्य वैशेषिकादिमत इव भेदोऽपि सत्यो वर्तते, त्यन्यत्वनिषेधेन सिद्धान्त उपादानतापक्षेऽपि यद्यपि न सम्भवति; तथापि विवर्तोपादानतायां भेदस्यापि मिथ्यात्वादभेदमात्रपर्यवसायित्वात् तदनन्यत्वपदं भेदनिषेधपरं तन्मते नानुपपन्नम्। अतो निमित्तकारणतामात्रनिषेधपरम्, परिणाम्युपादानतानिरासपरं चेदमधिकरणमिति फलति, इति कार्य-कारणभेदमात्रपर-केवलनिमित्तकारणवादिवत्, कार्य-कारणभेदाविरोध्याभिन्ननिमित्तपरिणामोपादानवाद्यप्यत्र पूर्वपक्षी॥

विवर्तवादेन सिद्धान्तः।

एतेन—"यो ब्रह्मोपादानं जगतोऽभ्युपगम्यापि तदन्यतां मन्यते, सोऽप्यत्र पूर्वपक्षीकरणीय इति—व्याख्यातम्। उभयपूर्वपक्षितायामद्वैतसिद्धान्ताविरोधित्वात्। परिणाम्युपादानवादिमात्रपूर्वपक्षितायामेव विवादात्। अतश्च वैशेषिकमतम्, अन्यान्यच्च सर्वं पाशुपत-योग-तत्समानसिद्धा-

न्तद्वैतवादादयोऽत्र पूर्वपक्षीक्रियन्ते । सिद्धान्तस्त्वभिन्नविवर्तोपादानता कल्पेनैव ॥

अभेदस्य ना साधनम्, किन्तु भेदनिषेधमात्रम् ।

एतेन—वैशेषिकादिर्नात्र पूर्वपक्षीति वादः—परास्तः ; भेदवादनिषेध-सिद्धान्तताया उभयत्राविशेषात् । उपादानतापक्षे तु भेदाभेदयोर्यत्रोभयोरपि सत्यत्वम्, तत्र यद्युपादानत्वनिषेधे तात्पर्यम्, तर्ह्यभेदनिषेधः खलु साधनीयः, न तु भेदनिषेधः । निषिध्यमाने च भेद उपादानतानिर्वाहको भेद एव निषिध्यते, न तु निमित्तकारणतामात्रनिर्वाहको भेद इत्यत्र का वा विनिगमना ? प्राप्तिर्हि भेदस्यैकान्तिकी वैशेषिकादिमते, परिणाम्युपादानतापक्षे त्वानुषङ्गिकी, इति नैकान्तिकभेदनिषेध इवानुषङ्गिकभेद-निषेधेऽपि न तात्पर्यं युक्तम् ॥

यत्तु—अन्याथोपादानत्वमेव समर्थनीयम्, तदिदं प्रकृत्यधिकरण एव साधितम्, परं तु न तत्परिणाम्युपादानत्वम्; कार्यात्मनाऽपि भेदाभावात्, इति भेदमात्रनिषेध एव विवर्तोपादानत्वस्यारोपाधिष्ठानत्वरूपस्य सिसाधयिषामभिप्रेत्य भेदमात्रनिषेधः । तेन चाभेदः-सत्यः, इत्यर्थतो विवर्तोपादानत्वं पर्यवस्यति, भेदनिषेधोऽपि । अतो नात्र तदनन्यतायाः साधनम्, किन्तु तदन्यत्वनिषेधस्यैव ॥

प्रकृत्यधिकरणेनास्यागतार्थत्वम् ।

स च द्वैताद्वैत-शुद्धाद्वैताख्योभयविधपरिणामवादसाधारणः, इति तस्योभयस्यापि निषेधः । तत्फलं तु ब्रह्मविवर्तोपादानतासिद्धिः । प्रकृत्यधिकरणं तूपादानत्वं समर्थयत् "परिणामात्" इति सूत्रात् परिणामिकारणतामेव समर्थयतीति शङ्कावारणार्थमस्याधिकरणस्य प्रवृत्तिः, इति तेनास्य न गतार्थत्वम् ॥

भेद-भेद्युभयनिषेधेऽस्याधिकरणस्य तात्पर्यम् ।

विवर्तोपादानत्वं भेदाभेदोभयनिबन्धनम्, नाभेदसाधनमपेक्षते, किन्तु भेद-भेद्युभयनिषेधमेव । अतोऽत्रानन्यत्वस्योपादानतोपपादकभेद-भेद्युभयनिषेध एव तात्पर्यम् ; अद्वितीयपदवदत्र बहुव्रीहिसमासस्यैवाश्रयणात् । भेदाभावमात्रस्य, तदनन्यत्वरूपसद्रूपाभेदस्यैवात्र साधनाच्च ॥

तत्र यद्यपि भेदाभेदोभयापेक्षत्वात् तादात्म्यस्यैवोपादानतोपपादक-

त्वम् ; तथापि तस्य व्यवहारदशायामेव स्वीकारेण परमार्थत आरोपितभेद-तदभावोभयनिषेधेनाद्वितीय-निर्विशेष एव पर्यवसानबोधनार्थत्वादस्याधिकरणस्य न तादात्म्यमात्रं विषयः। व्यवहारदशा हि भेदघटिताभेदरूपतादात्म्येनैव कार्य-कारणयोः परिणामवादे, विवर्तवादे वा समाना। अत एवात्रोपक्रमे 'अभ्युपगम्य भेदं पूर्वं भोक्तृ-भोग्यव्यवस्थोपपादिता। परमार्थतस्तु "तदनन्यत्वमि"ति भाविबाधमादायैवानन्यत्वमत्रोच्यत इति भगवत्पादानां भाष्यम् ॥

तदनन्यत्वपदार्थनिष्कर्षः।

तथाच न केवलं परिणामवादे, किन्तु विवर्तवादेऽपि यावद्बाधं व्यवहारनिर्वाहो न विरुध्यते। अद्वैतवादे त्वधिष्ठानसाक्षात्कारदशामभिप्रेत्यैवैतदुक्तमधिकरणम्, इति परिणामवादवद् विवर्तवादे कारणात्मनाऽभेदोऽपि कार्यस्य नास्ति; कार्यस्यैवाभावात्, न वा भेदोऽपि कार्यात्मना; कार्य-कारणभावादिव्यपदेशस्य तदोपरमात्, इति व्यवहारदशामाश्रित्यैव कारणत्वमपि ब्रह्मणः। परमार्थतस्तु न तस्य कारणत्वमपि, किन्तु सत्य-ज्ञानादिरूपत्वमेव, इति जन्माद्यधिकरणे भृगुवल्लीतात्पर्यविषयत्वमखण्डस्यानन्दरूपस्य श्रौतस्य निर्विशेषस्यैवेति यदुपसंहृतम्, तस्यैवोपपादनमत्र क्रियते ॥

तथाच कारणवाक्यानां ब्रह्मणि समन्वयो व्यवहारदशायामेव, परमार्थतस्तु ब्रह्मणोऽद्वितीयत्वम्, तत्रैव वेदान्तानां महातात्पर्यमिति बोधनार्थमेवेदमधिकरणम्, न तु भेदनिषेधमात्रे, अभेदसमर्थने वा, तेन च भेदनिषेधोऽप्यर्थसिद्धः ॥

अभेदस्वरूपनिष्कर्षः।

अभेदो ह्यत्र भेद-भेद्युभयनिषेधोऽनावृतसंविन्मात्रमेवानन्दात्मनाऽप्यखण्डेन रूपेण, न तु प्रतियोगिसापेक्षभेदाभावमात्रम्। भेदाभावो ह्यत्र भेद-भेद्युभयबाधरूपोऽधिष्ठानव्यतिरेकेण सर्वात्यन्तिकाभाव एव शुक्तिव्यतिरेकेण रजताद्यभाववत्। तत्र यथा शुक्तिरेव सती बाधकज्ञानविषयः, रजतादि तु न स्वरूपतः सत्; उपादानेन सह नाशात्, एवमधिष्ठानसाक्षात्कारे ब्रह्मैव सदखण्डम्, भेद-भेदिनावुभावपि स्वरूपतोऽपि न सन्ताविति विवक्ष्यते ॥

सत्यपि तादात्म्ये व्यवहारदशायां भेदस्यैव भानम्।

व्यवहारदशायां कार्यं कार्यात्मनाऽधिष्ठानाद् भिन्नतया भासते; कार्य-कारणभावस्य भेदाभेदोभयनिर्वाह्यत्वेऽपि नाम-रूपाभ्यामेव कार्याणां व्यक्तं

ज्ञातत्वात्, "अस्ति भाति प्रियमि"ति कारणात्मना व्यवहारदशायामावृतब्रह्मात्मनाऽभेदेऽपि तदात्मना विशदं ज्ञानाभावाद् ब्रह्मव्यतिरिक्ततैव प्रतिभासते, न तदनन्यता। अत एव व्यवहारोऽपि। अखण्डाकारसाक्षात्कारे त्वावरणनिवृत्तौ ब्रह्मात्मता पर्यवस्यति; तदानीमविद्यायां निवृत्तायां तत्प्रयुक्तनाम-रूपात्मनोऽपि निवृत्तत्वाद् न जगतो नाम-रूपात्मकस्य स्वरूपतः सत्त्वम्, न वा भिन्नतया प्रतीतिः; निर्विशेषात्मताया एव तदानीं सत्त्वात्, इति न जगतो व्यवहारदशायामपि तदनन्यत्वम्, सत्यत्वात्, इति ब्रह्मव्यतिरिक्ततया जगत्सत्त्वनिषेध एव तात्पर्यम्, इति न सतो जगतोऽन्यत्वनिषेधः, किन्तु तदन्यत्वस्यैव जगतोऽपि निषेधः॥

परमार्थतस्तु कारणव्यतिरिक्तकार्याभाव एव तदनन्यत्वम्।

अत एव तदनन्यत्वमिति बहुव्रीहिसमास इत्युक्तम्; अन्यथा त्वन्यत्वमित्यत एवेष्टसिद्ध्या तदनन्यत्वमिति तत्पदनञ्पदयोर्वैयर्थ्यं विशदमेव॥

अत्र तदनन्यत्वप्रतिज्ञाऽद्वितीयपदविवरणार्था सजातीय-स्वगतादिराहित्यविषयोक्तश्रुतिमूला, तदर्थबहुतरतत्तच्छ्रुतिमूला च नाप्रामाणिकी॥

न केवलमद्वितीयादिश्रुतिः, किन्तु वाचारम्भणादिश्रुतिरपि मूलम्। तथाहि–वाचारम्भणश्रुतिः साक्षाद् व्यवहारदशामाश्रित्य मूलाविद्याविकार्यनन्यत्वं ब्रवीति, मूलाविद्याकार्याणामपि तत्त्वसाक्षात्कारेण नाशे तु ब्रह्मव्यतिरेकेणाभाव एव॥

रज्जुसर्पानुदाहरणे निमित्तम्।

अत एव नात्र रज्जुसर्पाद्युदाहरणम्, किन्तु "मृत्तिकेत्येव सत्यमि"ति मृत्तिकोपलक्षितमूलाविद्याविकारिमात्रसत्यत्वाम्नानम्। अत एव ब्रह्मणोऽनन्यताऽत्र सूत्रे प्रतिज्ञायते। अनन्यत्वं ह्यत्र जगतो न भेदाभावमात्रम्, किन्तु ब्रह्मणोऽद्वितीयत्वम्॥

एतेन–"यथा सोम्यैकेन मृत्पिण्डेने"ति दृष्टान्तोऽपि–व्याख्यातः। न चात्र जगतो जगदनन्यत्वम्, किन्तु विकार्यनन्यत्वमेव। तच्च पूर्वोक्तविधया न विकारिसत्तादशायाम्, किन्तु विकारिणोऽपि बाधे तटस्थलक्षणविधया प्रवृत्तकार्याभावाभिप्रायम्। कारणत्वावस्थामादाय विकार्यनन्यत्वबोधन एव साक्षात् तात्पर्यम्। न च तस्यां दशायां वाचारम्भणत्वं विकारस्य, किन्तु "मृत्तिकेत्येवे"ति मृत्तिकादिपरिणामिकारणतोऽविविक्ततदधिष्ठानसंविन्मात्रतैव। वाचारम्भणत्वं तु तदपेक्षया सर्वस्य विकारस्य। तत्र विकार-

शब्दार्थः परमार्थतो नश्वरत्वात् मूलाविद्याऽपि, इति सूचनात् समूलस्य प्रपञ्चस्य मिथ्यात्वे पर्यवसानम्, इत्यापाततो व्यवहारदशा, वस्तुतः परमार्थदशा वाऽस्तु ॥

. अत एव नित्यमित्यनाम्नाय सत्यमित्याम्नानम्। अतो नाऽत्र ब्रह्मणोऽविकारिणोऽपि विकारित्वापत्तिः; अविकारिविवर्तोपादानसत्यस्वरूपत्वादधिष्ठानस्य सतो ब्रह्मणः ॥

एतेन—

"जगतस्त्वविकारित्व उक्तन्यायेन साधिते
स्वतन्त्रकारणान्यत्वं तेन ह्यत्र निषिध्यते।"

इत्यनुव्याख्यानम्—व्याख्यातम्; अत्राविकारित्वं ब्रह्मणो विकारित्वाभाव एव, इति परिणामवादस्यैव द्वैतभाष्यकारेण निरासः, न तु विवर्तवादस्य। विवर्तवादनिरासस्त्वत्र टीकाकाराणामेव—ब्रह्मविकारवादस्योपलक्षणत्वं मत्वा। ब्रह्मविकारितावादो नाद्वैतस्यापि सम्मतः; जगदनिर्वचनीयताऽभिप्रायेणैव जगद्वाचारम्भणत्वात्, अधिष्ठानमात्रविवर्तोपादानसत्यताया एवात्र तन्मतरीत्या विवक्षणाच्च ॥

"सदेव सोम्येदमग्र आसीदि"ति कार्य-कारणभावदशायां जगतो ब्रह्मणाऽभेदम्, अद्वितीयमिति ब्रह्मणोऽनन्यत्वं चोपक्रम्य एकविज्ञानेन सर्वविज्ञानमुपपादितम् ॥

तत्र "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इति जगतो व्यवहारदशायां मायानन्यत्वं प्रतिपाद्यते। एतेन यावन्मायं विकारिविकारभावादिकम्, उभयतादात्म्यं च, तदद्वितीयत्वं तु मायापर्यन्तनाश एवाद्वितीयवाक्यात्रगतम्, इति वाचारम्भणवाक्यं न "यथा मृत्पिण्डेने"ति वाक्यशेषः, किन्तु स्वप्रधानं परमार्थदशाभिप्रायम्, इति "मृत्तिकेत्येव सत्यमि"ति मृत्तिकोपलक्षितचैतन्यमात्रसत्यत्वोपपादनाद् मृत्तिकापदलक्षितप्रकृत्यन्तोपाधेर्विकारत्वम् ॥

तत एव वाचारम्भणत्वमसत्कल्पत्वं च पूर्वोक्तरीत्या विवक्ष्यते, तत्र वाचारम्भणत्वं व्यवहारदशायां सत्त्वेन प्रतीतस्य प्रकृत्यन्तस्य परमार्थतादशायां बाध्यस्यासत्कल्पस्यानृतत्वमेव। अत एव वाचारम्भणमिति नामधेयम्—नाममात्रमिति च प्रतिज्ञा ॥

तत्र वस्तुतो ब्रह्मणोऽनन्यत्वबोधनेन; ब्रह्मणोऽधिष्ठानत्वम्, तत्सा-

क्षात्कारनिवर्त्यत्वं च, इति तद्व्यतिरेकेणाभावः सर्वस्य तत्रारोपनिबन्धन एवेति व्यवहारदशायां तादात्म्यमित्यादिसिद्धान्ता ज्ञायन्ते। तदनृतत्वमिति सूत्रणे तु तच्छब्देन प्रकृतस्य ब्रह्मणो ग्रहणापत्त्या ब्रह्मानृतत्वं प्रतिज्ञातं स्यात्। जगदनृतत्वमिति सूत्र्यते चेत्, वाचारम्भणश्रुतेरसत्ख्यातिवाद एव पक्षपातः, नानिर्वचनीयख्याताविति शङ्का स्यात्, सा मा भूदिति तदनन्यत्वमिति सूत्रितम्, नानृतमिति ॥

एतेन—कथं च तदनन्यत्वमित्याक्षेपोऽपि—परास्तः। ब्रह्मानन्यत्वं हि ब्रह्मणोऽद्वितीयत्वम्। तच्च ब्रह्ममात्रसत्यत्वम्, तदितरस्य तेन रूपेण भासमानस्य बाध्यमानत्वं च बोधयत् कथं न द्वितीयानृतत्वं बोधयति? अनन्यम्, अद्वितीयत्वं वा ब्रह्मणो द्वितीयाभावमेव ब्रह्मणि बोधयति, न तु ब्रह्मणोऽप्यभावम्, येनानन्यत्वसूत्रणे ब्रह्मणोऽप्यभाव आपद्येत। तदनन्यत्वं च तद्व्यतिरेकेणाभावः = तत्सत्तातिरिक्तसत्ताशून्यत्वम्, न तु तदात्मत्वम्। अतो नानन्यत्वेऽपि प्रपञ्चासत्यत्वाविरोधः, तत्सत्तयैव द्वितीयस्य सत्ता, नान्यथेत्युक्त्या हि ब्रह्मतादात्म्यमात्रेणाध्यस्तेन सत्त्वेन प्रतीतिः; तदपि ब्रह्मस्वरूपाज्ञानदशायामेव, तत्साक्षात्कारे तु न द्वितीयम्, द्वितीयस्य ब्रह्मतादात्म्येन सत्प्रतीतिविषयत्वं वेति सद्विवर्तत्वरूपं मिथ्यात्वमवधार्यते, इति ब्रह्मविवर्तताज्ञापनार्थत्वं तदनन्यत्वसूत्रस्य ॥

तच्चानन्यत्वं नारोपदशायाम्; तदा तदात्मनैव भावात्, किन्तु बाधदशायाम्। न च शुक्तिशकलेऽप्यनन्यत्वमारोपदशायाम्. बाधदशायां तु नात्र रजतम् इत्यरजतवदेव शुक्तिकाशकलं प्रतीयते। तच्चारजतत्वमेव ब्रह्मणोऽनन्यत्ववदिति। इयान् विशेषः—शुक्तिकाशकलं रजतमात्राधिष्ठानमित्यरजतत्वं तस्य तद्व्यतिरेकेण रजताभावमात्रम्। ब्रह्मणस्तु स्वव्यतिरिक्तद्वितीयसामान्याधिष्ठानत्वादनन्यत्वमिति ब्रह्मसत्तया द्वितीयस्य सत्ता ब्रह्मतादात्म्यमेव, न तु ब्रह्मवदेव जगदपि सद्रूपम्, येन ब्रह्मवत् जगदपि परमार्थसदेव स्यात्। कथं वा नानृतम्? बाधायां हि तत्तादात्म्यमपीति सद्विविक्तं जगदिति फलति ॥

न चान्यथाख्यातिवादापत्तिः; आरोप्यसन्निकर्षे सोपाधिकाध्यासे वाऽन्यथाख्यातिरेवाद्वैतमतेऽपीष्टा। अन्यथाख्यातावपि ज्ञानलक्षणप्रत्यासत्त्या सन्निकर्षमङ्गीकृत्यैव सन्निकर्षमात्रस्यारोपः। न चालौकिकः संनिकर्षो द्वैतमतेऽपि। अधिष्ठानं तु सर्वत्र सन्निकृष्टम्, इति न तस्यापि तत्राध्यासोऽपेक्ष्यते। असन्निकृष्टस्याकारस्य भ्रमे भानं ह्यनिर्वचनीयस्यारोप्यस्य स्वीकारं विना

नोपपद्यते, इत्यनिर्वचनीयख्यातिरेवाद्वैतसिद्धान्ते। शुक्तिरजतादिस्थलेऽप्य-निर्वचनीयख्यातौ रजतत्वविशिष्टरजतस्य, तत्संसर्गस्य च शुक्तावारोपः॥

अयमेव न्यायोऽत्रापि। आकाशत्वविशिष्टस्यैवाकाशस्य स्वरूपतः, तत्संसर्गस्य चाध्यासात्, इति न ब्रह्मण आकाशत्वादिप्रसङ्गः। अनिर्वच-नीयख्यातावपि यावद्बाधं व्यावहारिकं सत्त्वम्, अर्थक्रियाकारित्वं वा सर्व-मुपपन्नम्, इति यावज्जागरं यदि तादात्म्यं ब्रह्मणा सर्वेषां कार्याणाम्, तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नयेन भोक्तृ-भोग्ययोरपि परस्परं तादात्म्याद् भोग्य-भोक्तृभावव्यवस्थानुपपत्तिः॥

किं बहुना? ब्रह्मणोऽपि भोक्तृभावात् भोक्तुश्च ब्रह्मभावात् कार्य-कारणभावव्यवस्थाऽपि न स्यात्; व्यवहारदशायां सर्वसत्यतास्वीकारादिति शङ्कावारणार्थं भोक्त्राऽऽपत्तिसूत्रमिति पूर्वपक्षाशयः। सिद्धान्तेऽपि व्यव-हारदशायां सर्वसत्यतायामपि सर्वाभेदेऽपि॥

"कार्यात्मना तु नानात्वमभेदः कारणात्मना।
हेमात्मना यथा भेदः कुण्डलाद्यात्मना भिदो॥"

इति न भोक्तृ-भोग्यादिसाङ्कर्यप्रसङ्गः—इति। तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायः कारणात्मनाऽभेदपरः, अन्यथा कटक-कुण्डला-दीनामपि परस्परं तत्तद्रूपेणाभेदापत्त्या कटक-कुण्डलादीनां परस्पर-कार्यकारित्वापत्त्या लोकव्यवहार एवोच्छिद्येत। इदमेवाभिप्रेत्य समुद्र-वीचीतरङ्गदृष्टान्तः, परमार्थस्थितिमनुसृत्य त्विदं सूत्रमिति भगवत्पा-दभाष्यस्य न प्रतारकत्वापत्तिः; बाधाबाधदशाभेदेन तदन्यत्वतदन-न्यत्वयोरुपदेशात्॥

नेदं रजतमिति च भ्रान्ताभ्रान्तदशाभेदेन। भ्रान्तत्वव्यपदेशो हि वस्तुगत्या, न तु भ्रमदशायामेव भ्रान्तत्वमाश्रित्य। श्रुतिरपौरुषेयी दशाभेदं स्वयं विविच्य वस्तुतत्त्वं निवेदयति। साक्षात् पुण्डरीकाक्षावतारोऽपि भग-वान् तत्त्वविवेचनेन श्रुत्यर्थमात्रं विवेचयति, इति कथं प्रतारकत्वापत्तिः? अन्यथा स्थूलारुन्धतीन्यायेनान्यस्यान्यस्योपदेशद्वारेण मुख्यारुन्धत्युप-देष्टापि प्रतारकः स्यात्। साधनावस्थं देहात्मवादं पुरस्कृत्य वस्तुगत्या देहादीनामनात्मत्वोपदेशोऽपि श्रुतौ तदेकशरणतत्तदाचार्याणां कथं प्रतारण-मात्रम्?

अत एव व्यवहारदशायां प्रपञ्चसत्यत्वं लोकवदभ्युपगम्य लोकवदेव

तत्र भोग्य-भोक्तृव्यवस्थामभ्युपगम्यापि परमार्थतस्तत्प्रत्याख्यानेन सूत्रकारोऽनन्तरमेव तत् प्रत्याचष्टे—तदनन्यत्वमिति । अप्रत्याख्यायैव कार्यप्रपञ्चसत्यताप्रक्रियां पूर्वसूत्रम् , तत्प्रत्याख्यानार्थमेवेदं सूत्रमिति वस्तुस्थितिः । न चेदमपि सूत्रं पूर्वसूत्रवदप्रत्याख्यायैव प्रपञ्चसत्यत्वम्; अन्यथोक्ताधिकरणवैयर्थ्यात् । व्यवहारदशायां प्रपञ्चसत्यत्वाप्रत्याख्यानम्, परमार्थतस्तत्प्रत्याख्यानमिति तु विवेकः ॥

व्यवहारदशायां तदप्रत्याख्यानं हि कर्माधिकारे, सगुणोपासनाधिकारे, अन्यत्र च सर्वत्र तदविरोधमभिप्रेत्य । तत्र कर्माधिकारश्चित्तशुद्धिद्वारा, सगुणोपासनाधिकारोऽपि श्रवणादिवदुपासनस्यापि निर्विशेषसाक्षात्कारान्तरङ्गसाधनत्वात् प्रपञ्चसत्यत्वमाश्रित्यैवात्मानं लभमानौ परम्परया मोक्षोपयोगिनावपि, इति मोक्षशास्त्रे प्रपञ्चसत्यत्वमभ्युपगम्य देहात्मवादमप्याश्रित्यैव तदनात्मत्वोपदेशवत् तत्तदधिकारबोधनं न विरुध्यते, इति भेदविषयोऽपि सगुणोपासनविधिर्व्यावहारिकभेदमवलम्ब्य प्रवृत्तो न वास्तवाभेदविरोधी ॥

भोक्तृ-भोग्यव्यवस्था हि सत्यभेदाभेदावाश्रित्यैवात्मानं लभते यावदबाधम् , इति कैव कथा व्यावहारिक-पारमार्थिकदशाभेदेन भेदाभेदोपदेशे, इति न सगुणोपासनविषय-प्रयोजने निर्विशेषपरमोक्षशास्त्रविषयप्रयोजनाननुकूले, न वा तद्विरुद्धे । तत्रोपासनाफलं वैकुण्ठलोकनिवासः, इति यद्यपि न मोक्षः, तथापि जीवन्मुक्तानिव प्राप्तवैकुण्ठादिलोकानां सशरीराणामपि शरीरदुःखेनादुःखित्वाद् न प्राकृतसंसारित्वम् ॥

अत एवानन्दमीमांसायाम्—इन्द्रादीनाम् , अकामहतश्रोत्रियाणां च ब्रह्मपर्यन्तमानन्दसाम्याम्नानमुपपद्यते । इति मतान्तरवद् नोपासनाया अद्वैतमतेऽपि संसारफलत्वम् ; इन्द्रादीनां ब्रह्मान्तानामप्यन्यथा संसारित्वापत्तेः; श्रोत्रियसमानत्वात् ; अकामहतत्वेन विशेषस्तूभयत्र समानः, इत्यधिकारभेदमादाय सगुणोपासनादिविधीनां नाप्रमाणिकत्वापत्तिरपौरुषेय्याः श्रुत्याः । सर्वथा जगतो ब्रह्मविवर्तत्वाभावस्य कथमपि साधनासम्भवादुक्तसूत्रस्य ब्रह्माद्वितीयत्वपारमार्थिकतायामेव तात्पर्यम् ; आरम्भणशब्दादिभ्यो हेतुभ्य इति सिद्धम् । अत्रा''रम्भणशब्दादिभ्य''इत्यस्य वाचारम्भणश्रुत्यादिभ्य इत्यर्थ इति पूर्वमेव विवृतम् ॥

### ब्रह्मणः स्वतन्त्रकारणान्तरसापेक्षत्वानपेक्षत्वचर्चा ।

यत्तु—स्वतन्त्रबहुसाधनापेक्षासृष्टिर्लोके दृष्टा, नैवं ब्रह्मणः

स्वरूपसामर्थ्यादेव तस्या सृष्टिः "किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् कथा स्विदि"ति ह्याक्षेपः; अधिष्टानानुक्तेः । आदिशब्दात्, युक्तिभिश्च ॥

"परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।
साधनानां साधनत्वं यतः, किं तस्य साधनैः ॥"

इत्यादिभिः । अत्रानुव्याख्यानम्—

"स्वतन्त्रसाधनान्यत्वं तेन ह्यत्र निषिध्यते ॥"

इति ॥

द्वैतिनामारम्भणाधिकरणपूर्वपक्षः ।

अयमाशयः—कर्त्रनधीनसत्ता-शक्त्यादिमत्कारणान्तरसव्यपेक्षा खलु सृष्टिर्घटादौ दृष्टा । ततो महदादिसृष्टिरपि, कर्तृव्यतिरिक्तस्वतन्त्रकारणसापेक्षा, सृष्टित्वात्; घटसृष्टिवत्; महदादिकम्, कर्तृव्यतिरिक्तस्वतन्त्रकारणसापेक्षोत्पत्तिकम्, कार्यत्वात्; प्रकृत्यादिकम्, न स्वतन्त्रम्, कारणत्वात्; मृदादिवत्; ईश्वरो वा, स्वतन्त्रकारणान्तरसापेक्षः, कर्तृत्वात्; कुलालादिवदिति जन्मादिसूत्रसाधितं परस्यैव ब्रह्मणः स्वतन्त्रं कारणत्वं नोपपद्यते ॥

न च श्रुतिविरोधः; श्रुतीनां ब्रह्मणो जगत्कारणत्वमात्रपरत्वात् स्वतन्त्रकारणान्तरनिषेधे श्रुतेरभावात्, भावेऽप्यपौरुषेयतयाश्रुतिप्राबल्यवद् बाहुल्येन युक्तिप्राबल्यस्यापि सम्भवात् सप्रतिपत्तया श्रुत्याऽभिप्रेतावधारणानुपपत्तेरिति पूर्वपक्षः ॥

ब्रह्मणः स्वतन्त्रकारणान्तरानपेक्षत्वं तदनन्यत्वपदार्थः ।

सिद्धान्तस्तु—ब्रह्म, महदादिसृष्टौ स्वतन्त्रकारणान्तरशून्यम्, तदनन्यत्वमित्यत्र तत्पदं स्वतन्त्रकारणान्तपरम् । तस्यानन्यत्वघटकान्यपदेनान्वयः । तेन च स्वतन्त्रकारणान्तरशून्यत्वमित्यर्थः । स्वतन्त्रकारणान्तरभावस्यापि विवक्षायां ब्रह्मणोऽपि स्वातन्त्र्यं न स्यात् . अतस्तदनन्यत्वम् । तदेव स्वतन्त्रं कारणम्, यदनन्यदिति वा योजनमत्र ॥

तत्र च तत्पदेन ब्रह्मणो विवक्षा तस्यासाधारणत्वेन तदेकपरम् । स्वतन्त्रकारणपदाध्याहारः । अनन्यत्वमिति अन्यस्वतन्त्रकारणत्वनिरास इति सूत्रयोजना ॥

तदुपपादनं च "किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्विदि" ति श्रुत्यवष्टम्भेन। तेन चाधिष्ठानारम्भणाद्याक्षेपप्रतीत्या स्वतन्त्रकारणान्तरराहित्यमवसीयते ॥

अत्रारम्भणपदमारम्भणाक्षेपपरं लक्षितलक्षणया। तत्राधिष्ठानाक्षेपस्यैव प्राथम्येऽपि साधकतमकरणस्यैव प्राधान्यात् तन्निषेधस्य प्राधान्यमभिप्रेत्यारम्भणशब्दादिभ्य इति सूत्रितम्, पाठक्रमादर्थक्रमस्य बलीयस्त्वात् ॥

न चात्र कारणान्तराभाव एकान्ततः; प्रकृत्यादिकारणस्वीकारात्। परं तु तत् परतन्त्रं कारणम्, इति स्वतन्त्रकारणान्तरनिषेध एवात्र सूत्रार्थः। अत्र शुष्कयुक्त्यपेक्षया श्रुत्यनुगृहीतयुक्तीनां प्राबल्यात् प्रबलयुक्तिभिर्दुर्बलयुक्तीनां बाध इति प्रथमसूत्रानुसारी सिद्धान्तः ॥

स्वतन्त्रकारणान्तरानपेक्षत्वसिद्धान्तः।

तत्र सूत्रेषु बह्वध्याहारदोषः प्रधानं दूषणम्। द्वितीयं तु यो ब्रह्मोपादानतां जगतोऽभ्युपगम्यापि तदन्यतां मन्यते, सोऽत्र पूर्वपक्षीकरणीयः, न तु वैशेषिकादिरिति ह्युक्ताधिकरणमवातारि। तत्र यदि स एव पूर्वपक्षी निरसनीयः, तर्हि प्रकृते स्वतन्त्रकारणान्तरनिरासस्य पूर्वपक्षस्य चाम्रान् पृष्टः कोविदारानाचष्ट इति न्यायः ॥

न हि ब्रह्मपरिणामवादी भास्करः, तद्विवर्तवादी वा कुलालवत् तदधीनसत्ताकशक्तिमत्कारणान्तरमपेक्षते, येन तन्मतमनेन सूत्रेण निवारितं स्यात्। तत्र हि तत्सत्ताधीनसत्ताकशक्तिमदविद्यादेरेव कारणान्तरस्यापेक्षा, इति स्वतन्त्रकारणान्तरनिषेधेन विवादस्य किमायातम्? न हि लोकेऽपि स्वसत्ताधीनशक्तिमत्कारणमनपेक्ष्यैव सर्वस्य कर्तृत्वम्। न हि राजसत्ताधीनसत्ताकशक्तिमत्सेनानीनां न राज्ञो विजयराज्यप्राप्त्यादिकारित्वम्, स्वोत्पादितैरेवेष्टकादिभिः प्रासादादिनिर्मातारो हि बहवो दृश्यन्ते ॥

अस्तु वा लौकिकी कथा या काऽपि सिद्धान्ते। अलौकिकी खलु सृष्टिप्रक्रियाऽवलम्ब्यते द्वैतवादिभिरपि, इति स एव नयो विवर्तवादेऽपि। यथा जीवानां स्वाप्नादिसृष्टौ। तत्र हि तूलाविद्यां प्रमातृचैतन्याश्रितां तत्सत्ताऽनधीनसत्ताकशक्तिमतीं स्वतन्त्रं कारणमपेक्ष्यैव जीवः स्वाप्नान् पदार्थान् सृजतीति हि विवर्तवादः, यः सर्वलौकिकानुभवसिद्धः। सर्वथा लौकिक-

प्रक्रियाबाधनैवैश्वरी सृष्टिरुपपादनीया, इति केवलयुक्तिवादानुसारिपूर्वपक्षस्य निरासः सूत्रकाराणां प्रस्तुतपूर्वपक्षापेक्षयाऽतिरिक्त एव कश्चनात्र निराक्रियते द्वैतवादिभिः ॥

विवर्तवादपरतया सूत्रयोजनमेव साधु ।

विवर्तवादे तु नाध्याहारलेशः, न वाऽनपेक्षितमुपदिश्यते सूत्रकारेण, किन्त्वे"कमेवाद्वितीयमि"ति प्रस्तुतमुख्यतत्त्वोपदेश एवोपपाद्यते । "आरम्भणशब्दादिभ्यः" इत्यत्र निर्दिष्टारम्भणपदमपि तन्मात्रोपपादनपरम्–"वाचारम्भणं विकारो नामधेयमि"तिवाक्यमेव प्रथमं बुद्धिगतं करोति । "किं स्विदधिष्ठानमारम्भणं कतमत्स्विदि"त्यधिष्ठानारम्भणाक्षेपपरम्, तन्निषेधपरं वा द्वितीयाधिष्ठातृ-करणादिनिषेधादिपरमप्यद्वितीयत्वोपपादकत्वाद् विवर्तवादेऽप्यविरुद्धम् । सामान्यत आरम्भणाक्षेपपरस्यास्य स्वतन्त्रकारणाक्षेपपरत्वे कथं न लक्षणा ? अधिष्ठाननिषेधो हि यद्यधिष्ठात्रन्तरनिषेधपरः, तर्हि कुत्र वा लोके कुलालादौ स्वतन्त्रे स्वतन्त्राधिष्ठातृकत्वमेव दृष्टम् ? इति चेतनकारणवादे तदाक्षेपो वितथः । अधिकरणयोजनं त्वध्यासाधिष्ठानापरपर्यायस्याधिष्ठानस्य स्वयमनारोप्यत्वात् परस्पराध्यासेऽपि तत्र संसर्गमात्राध्यासात्, अधिष्ठानान्तरायोगादाक्षेपो युज्यते, इति "किंस्विदासीदधिष्ठानमि"तिवाक्यमप्यद्वितीयत्वोपपादन एव स्वरसम् ॥

न च निमित्तकारणतामात्रवादेऽधिष्ठात्रन्तरनिषेधः सप्रयोजनः, प्रत्युताप्रसक्तत्वादधिष्ठात्रन्तरस्य तदाक्षेपोऽप्रसक्तप्रतिषेधोऽपि । उभयोरप्याक्षेप्यत्वाविशेषे प्रथममधिष्ठानपदेन विरुद्धारम्भणस्योत्तरस्याक्षेपो न साम्प्रतम् । न चाधिष्ठानारम्भणयोरारम्भणं कारणम्, अधिष्ठानं तु कार्यम्–"येन अग्निहोत्रं जुहोति" "यवागूं पचती"त्यादाविव पाठक्रमादर्थक्रमो बलीयानिति न्यायावतारः, तदनुसारेणारम्भणनिषेधस्यार्थतः प्राथम्यं च स्यात् । कर्ताऽधिष्ठानम् । साधकतमं तु करणम् । न च करणापेक्षया कर्ताऽप्रधानः, प्रत्युत कर्तुरेव तत्प्रयोजकस्य ततः प्राधान्यम् ॥

ब्रह्मणः कारणान्तरानपक्षत्वानुपपत्तिः ।

"अकाशाद् वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी"त्यादिना ब्रह्मणोऽपि वाय्वादिसृष्टावाकाशाद्यपेक्षा वर्तते । वैषम्य-नैर्घृण्यपरिहारार्थं तत्तददृष्टापेक्षा च वर्तते, इति कथं न स्वतन्त्रकारणान्तरानपेक्षा । न हि स्वसृष्टकार्यस्यैव कार्यान्तरकरणत्वेन स्वतन्त्रकारणानपेक्षा । स्वोत्पादितेष्टका-

द्द्वारा प्रासादनिर्मातुरपि स्वतन्त्रकारणान्तरानपेक्षकर्तृत्वापत्त्या कुलालादिवैषम्यं ब्रह्मणो दुरुपपादम्। अदृष्टं तु जीवगतं जीवाधीनसत्ताकं न साक्षादीश्वराधीनसत्ताकम्; अन्यथा वैषम्य-नैर्घृण्यदोषो दुष्परिहारः, तदपि तत्तद्भोगोपकरणसृष्टावीश्वरस्य साधकतममेव, इति केवलनिमित्तकारणत्वं मुख्यं ब्रह्मणो द्वैताभिमतं दुरुपपादम्॥

द्वैतिनां विषयवाक्यमपि विवर्तवादस्यैवोपष्टम्भकम्।

एतेन—स्वतन्त्रकारणान्यत्वमेवात्र निषिध्यत इति—परास्तम्, तथा सति हि "किंस्विदासीदधिष्ठानमि"ति प्रकृतविषयवाक्येन ब्रह्मणोऽपि कर्तृत्वनिषेधापत्तिः; अधिष्ठानस्यापि निषेधात्। न च ब्रह्मातिरिक्तस्यैव निषेधोऽत्रेति वक्तुं शक्यम्; अशाब्दत्वात्। न च स्वतन्त्राधिष्ठानान्तरपरमधिष्ठानपदम्, स्वतन्त्रसाधनान्तरपरं वाऽऽरम्भणपदम्। अद्वैतमते तु परमार्थदशायामज्ञाननिवृत्त्या नाधिष्ठानम्, न वा साधनमन्यद्वा तदा किमपि, इति यथाश्रुतमिदं द्वैतिनामपि विषयवाक्यं नास्वरसम्। यथाश्रुतं हीदं वाक्यं स्वतन्त्र-परतन्त्रसर्वाधिष्ठानसाधननिषेधपरं कार्यकारणभावातीतावस्थम् अद्वितीयत्वमभिप्रेत्यैव, इति तदेकवाक्यता विवर्तवाद एव तदनन्यत्वपदेनापि समर्थ्यते। तदनन्यत्वपदे ह्येवं सति न श्रुतहान्यश्रुतकल्पना॥

तदनन्यत्वपदस्वारस्यमद्वैतवाद एव।

अत्र तदनन्यत्वं परमार्थदशायां तदधिष्ठानव्यतिरेकेणाभावः। व्यवहारदशायां तु प्रलये, घटादीनां नाशे च कारणरूपेणैव घटादीनां सत्त्वम्, न तु स्वरूपेण। इयान् विशेषः—प्रलये कारणभावमापन्नानां सृष्ट्यादौ कार्यात्मना सत्त्वम्, अधिष्ठानसाक्षात्कारे तु घटाद्युपादानकारणस्याप्यज्ञानस्य नाशाद् न पुनर्घटादीनां नाशरूपाणां स्वरूपेण सत्त्वं कदाचिदिति, इति तदनन्यत्वोपपादनमत्र ब्रह्मव्यतिरेकेणाभावव्युत्पादनायैव॥

अद्वैतवादेऽनन्यत्वनिरुक्त्यनुपपत्तिः।

यत्तु—तदनन्यत्वमिति सूत्रे कार्यस्य किं ब्रह्मणा निमित्तकारणेनानन्यत्वम्, उतोपादानेन तेनाभिन्नत्वम्। आद्यं बाधितम्; कार्यस्य निमित्तकारणानन्यत्वाभावात्। ब्रह्मण उपादानत्वं तु पूर्वोक्तरीत्या न सम्भवति, इति न तदनन्यत्वोक्तेरत्रोपयोगलेशोऽपि। किं बहुना? उपादानेन सह कार्यस्य न भेदः,

नाप्यभेदः सुनिरूपः। तयोर्भेदाभेदौ हि कारणात्मना, कार्यात्मना वा। आद्ये न भेदः, द्वितीये नाभेद इति वक्तव्यम् ॥

तत्र प्रलये कार्याणां स्वरूपेण सत्त्वाभावाद् न भेदः; घटादेस्तदानीमभावात्, अन्यथा प्रलयेऽपि घटादिकं स्वरूपेण सदिति स्यात् ॥

भेदप्रतीतिरिवाभेदप्रतीतिरपि प्रतियोग्यनुयोगिसापेक्षा, इत्यन्यतराभावे भेदप्रतीतिरिव कथमभेदप्रतीतिरपि स्यात्? भेदाभावरूपत्वादभेदस्य। अत्यन्ताभेदस्यैक्यरूपत्वेन तदनपेक्षायां तु मृदिव तदत्यन्ताभिन्नत्वात् प्रागुत्पत्तेर्घटोऽपि सन् स्यात्; मृदादेः सत्त्वात्, अन्यथाऽखण्डाकारसाक्षात्कारानन्तरं जीवस्यापि नात्यन्ताभेदायोगः ॥

अतो भिन्नाभिन्ने कार्य-कारणे। तत्र च यदि घटादिकमुत्पत्तेः प्राक् सत्, असच्च, तर्हि सत्कार्यवादानुपपत्तिः। अतो रूपभेदेन सत्त्वासत्त्वे कार्य-कारणयोरिति वक्तव्यम्। तत्र च पटस्तन्त्वात्मना सन्, तन्तुस्तत्कारणात्मना सन्निति क्रमेण मूलकारणात्मना सत्त्वे मूलकारणस्यानादित्वेनोत्पत्त्यभावाद् घटादीनामुत्पत्तिरनुपपन्ना स्यात्। तत्र च परममूलकारणं यदि ब्रह्मैवोपादानम्, तर्हि प्रपञ्चोपादानमूलाविद्याया इव सर्वस्य तत्कार्यस्य प्रपञ्चस्य विनाशोऽपि न स्यात्, इति घटादय उत्पत्तिविनाशवन्तः, आत्मा नोत्पत्तिविनाशवानिति व्यवस्था न स्यात्। अतो नोपादानत्वं ब्रह्मणः सम्भवति। ब्रह्मात्मना प्रपञ्चस्य सत्त्वासत्त्वयोरसम्भवात्—इति ॥

विवर्तवादे न तदनन्यत्वानुपपत्तिः।

तदिदं ब्रह्मणोऽपि परिणामिकारणत्वे स्यादेव दूषणम्, विवर्तवादे तु न किमप्युक्तविधं दूषणम्। तत्र प्रपञ्चस्य कारणात्मना सत्त्वं सद्रूपकारणतादात्म्यमात्रम्, न तु सत्त्वम्। तच्च ब्रह्मणोऽभिव्यक्तौ प्रपञ्चस्यापि सत्त्वे सम्भवति, प्रपञ्चासत्त्वे तु न सम्भवति। उपादानत्वं ह्यत्राधिष्ठानत्वरूपमज्ञानविषयतायां सह्यम्, इति यावदज्ञानं घटादीनां तत्राध्यस्तानां तदाकारवृत्तिप्रतिफलिततावस्थायां तदवच्छिन्न चैतन्यभास्यत्वेनोपलब्धिः,

अन्यथा तु नोपलब्धिः। तत्तदुपादानमृदाद्यवस्थाऽज्ञानपरिणामत्वे तु न विरुध्यते ॥

उत्पत्तेः प्राक् मृदात्मना सन्नपि घटस्तदा मृदाद्याकारान्तःकरणवृत्ते-रुत्पत्त्या मृदादिरूपेणैव भासते, न तु घटादिरूपेण; घटादिरूपेण मृत्तिका-यास्तदा परिणामाभावात्। कारणात्मना सत्त्वे कारणात्मना प्रतीतिः, कार्यस्यापि वर्तत एव, कार्यात्मना तु कारणस्यासत्त्वाद् न कार्यात्मनाऽपि सर्वदोत्पत्तेः प्राक्, प्रलयावस्थायां वा कारणस्य प्रतीत्यापत्तिरिति पिष्टपे-षणमिदम्—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना।"

इति ॥

विवर्तवादे भेदाभेदोभयोपपत्तिकारणम्।

स्थितिदशायां कार्यं कारणात्मनाऽपि प्रतीयते, कार्यात्मनाऽपि—मृद् घट इत्यादिदिशा; तदा रूपद्वयस्याप्यभिव्यक्तत्वात्, मृद्-घटोभयाकार-वृत्त्युदयसम्भवाच्च। सुषुप्तौ, प्रलयेऽपि कारणात्मनाऽपि न प्रत्यक्षः, मूला-विद्यारूपस्य तस्यान्तःकरणादेरपि लीनत्वेन सदात्मना प्रत्यक्षत्वायोगात् ॥

सद्रूपं हि ब्रह्म तदवच्छेदकाकारान्तःकरणवृत्त्यभिव्यक्तं तत्तत्प्रत्यक्षं भवति, अनवच्छिन्नं निर्विशेषमात्रं तु यावदखण्डाकारवृत्ति, विनाऽवरणनि-वृत्तिं स्वयम्प्रकाशमपि न विशदमपरोक्षम्, इत्यविद्योपहिताधिष्ठानेन सतो-रपि भेदाभेदयो रूपभेदेन सामानाधिकरण्यप्रतीतिर्भेदाभेदोभयनिबन्धना, अन्यदा तु न सतोरपि भेदाभेदयोस्तत्प्रतीतिः; सर्वस्य प्रपञ्चस्य ब्रह्मणि तादात्म्येनाऽऽरोपात्। अधिष्ठानारोप्यरूपभेदेन भेदाभेदौ सर्वदा वर्तेते। तत्र व्यावहारिकाणामुत्पन्नप्रतिभासत्वम्, प्रातिभासिकानां प्रतिभासोत्पत्त्यो-रेककालिकत्वम्; साक्षिभास्यानामिव प्रातिभासिकानां सुखादेरिव साक्षिण्ये-वाध्यासात्। सर्वथा तु सत्त्वासत्त्वे प्रातिभासिकव्यतिरिक्तेषु न नियता-भिव्यक्तिके ॥

अद्वैतवादे नारम्भवादः, न सत्कार्यवादः, स किन्तु सद्विवर्तवादः।

ततश्चोत्पत्तिः साक्षात्, परम्परया वाऽविद्यापरिणामः, तदात्मना प्रत्य-क्षतया, परोक्षतया वा भानप्रयोजकोऽवस्थाभेद एवाविद्यायाः। सा चावस्था नित्या, अनित्या, सती, असतीत्यादि विकल्पस्तु केनापि रूपेण

निर्वक्तुमशक्यत्वात् कार्य-कारणयोः परिणामि-परिणामयोरनिर्वचनीयत्व एव पर्यवस्यति ॥

कार्यत्वं प्रपञ्चस्य नारम्भवादेन; न वा सत्कार्यवादेन, किन्तु सद्विवर्तवादेनैव, इत्यद्वैतब्रह्मसिद्धौ विस्तरेण निरधारि, इति तदनन्यत्वमत्रोपपाद्यमानं फलतः पूर्वोक्तविधया व्यावहारिकसत्त्वोपपादनद्वारा परमार्थदशायां निर्विशेषवाद एव पर्यवस्यति—"सदेव सोम्येदमि"ति प्रस्तुतकारणाभेदस्य "एकमेवाद्वितीयमि"त्यध्यारोपापवादद्वाराऽद्वितीयत्वोपदेशपर्यवसानेन ॥

निबन्धस्यास्याद्वैतसिद्धान्ताक्षेपदूषणोद्धारमात्रं लक्ष्यम् , न तु परमतदूषणम् , इति न लक्ष्यादन्यत्र व्याप्रियते; साक्षात् , परम्परया वा स्थूलदृष्ट्या, सूक्ष्मदृष्ट्या वाऽद्वैतदूषणोद्धारमात्रस्य लक्ष्यत्वात् , सूत्रस्वारस्यास्वारस्यचर्चायित्तैः परैरद्वैतमतमधिकृत्य यत्र प्रस्तूयते, तत्रैव लेखनी व्याप्रियते। अत्राधिकरणे तु सूत्राक्षराणामार्जवानार्जवादिचिन्ता शिष्यैरेव क्रियतामिति तत्र यदि परेऽप्युदासीनाः, तर्हि वयमपि तत्रोदासीना एव ॥

इति तदन्यत्वाधिकरणम् ॥

## अथेतरव्यपदेशाधिकरणम् ॥

### इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥

अधिकं तु भेदनिर्देशात् २ ॥
अश्मादिवच्च तदनुपपत्तिः ३ ॥
उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ४ ॥
देवादिवदपि लोके ५ ॥
कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ६ ॥

मतद्वयाभिप्रेताधिकरणविभागः।

इति षट्सूत्रात्मकमधिकरणं द्वैतमते। अद्वैतमते चतुर्थपञ्चमसूत्रात्मकम् , षष्ठादिसूत्रात्मकं चाधिकरणान्तरम्। तत्र सूत्रार्थः—जीवकर्तृकत्वे तस्य हितकरणम् , अहितकरणं च न स्यात्। अतस्तस्य न स्वयं कर्तृत्वम् , किन्त्वीश्वराधीनं कर्तृत्वम् ॥

सर्वसूत्रविवक्षिताधिकरणार्थसंग्रहः ।

( २ ) ब्रह्मणः सर्वशक्तित्वात् सर्वकारयितृत्वमुपपद्यते; अन्तार्यामित्वात् ॥

( ३ ) न च चेतनमात्रस्वातन्त्र्यम् ; पराधीनानामपि चेतनानां दर्शनात् , किन्त्वश्मादिवद् जीवस्येश्वरपारतन्त्र्यमेव । तदुक्तम्—

"यथा दारुमयीं योषां नरः स्थिरसमाहितः ।
इङ्गयत्यङ्गमङ्गानि तथा राजन् इमाः प्रजाः ॥"

इति ॥

( ४ ) न च जीवेन कार्योपसंहारदर्शनात् तस्य कर्तृत्वं शङ्कनीयम्; गोपु क्षीराद्युद्भवो हि न ततोऽऽन्यस्मात् तृणादेरेव दृश्यते, अतोऽन्याधीनमेव जीवस्य कार्योपसंहर्तृकम् ॥

( ५ ) स च कारयिता परमेश्वरः । न चादृश्यमानेनेश्वरेण कारयितृत्वायोगः; दैवादाविवादृश्यत्वेऽपि कार्यनिर्वाहकत्वोपपत्तेः । पिशाचादीनामदृश्यमानानामपि तत्तज्जीवोपसंहर्तृत्वे का वा कथेश्वरकारितत्वेन जीवस्य कर्तृत्वे ॥

( ६ ) स हि न कात्स्न्येंन कार्यं किमपि करोति; अनुभवविरोधात् । न च तस्य सावयवत्वम् ; निरवयत्वात् – इति ॥

जीवस्य स्वतस्तत्तत्कर्तृत्वपूर्वपक्षः ।

अत्र युक्त्या केवलया जीवस्य स्वतन्त्रं कर्तृत्वं निरस्यते, ईश्वराधीनं तु तत् साध्यते – द्वितीयतृतीये "कर्ता शास्त्रार्थवत्त्वादित्य"त्र तु शास्त्रतः साध्यत इति विवेक इति द्वैतमतम् ॥

अत्र सिद्धान्ते नाद्वैतिनामपि विप्रतिपत्तिः, परं तु "तदनन्यत्व" मिति जीव-ब्रह्मैक्ये साधिते जीवस्य ब्रह्माभिन्नस्य कारणत्वापत्त्या हिताहितकारित्वानुपपत्तिरिति शङ्कापरं प्रथमं सूत्रम् "अधिकं तु" इति तुशब्दघटितं सूत्रं सिद्धान्तः ॥

द्वैतवाद एतदधिकरणवैयर्थ्यम् ।

तदाशयस्तु– ब्रह्मैक्यं न विशिष्टस्य जीवस्य, किन्तु ततोऽधिकस्य संविन्मात्रस्य । तत्र भेदस्तु तस्याप्यकारणत्वात् , इति न जीवस्याप्यधिकस्य कारणत्वापादकत्वम्–इति । अनेनावगम्यते–तदनन्यत्वमित्यतीतकारणावस्थं

निर्विशेषमेव स्वरूपमभिप्रेत्य, तत्र कारणत्वकथायां न तात्पर्यमिति । सर्वथा त्वस्मिन्नधिकरणेऽद्वैतसिद्धान्तं न द्वैतिनो निरस्यन्ति । तदीयसिद्धान्तस्तु कर्त्रधिकरणसाधयिष्यमाणोऽद्वैतिनामपि न विरुद्धः । अत्र युक्तिमूलकोऽधिकरणसिद्धान्तः, तत्र तु शास्त्रमूलक स इति विवेचयन् द्वैतवादी उक्ताधिकरणवैयर्थ्यापत्तिं हृदयेन सूचयति ॥

सूत्राक्षरयोजनास्वारस्यमद्वैत एव ।

अत्र सौषुप्तान्तजीवस्वरूपस्याहमर्थस्य परस्परमन्यैर्जीवैः, परमात्मनश्च भेदे नाद्वैतिनोऽपि विसंवदन्ते, तदतीतस्य मुक्तात्मनस्तु न परस्परं जीवैः, परमात्मना च भेदप्रसक्तिः, इति तद्बहुत्व-भेदयोरत्र साधनमुत्सूत्रमपि नाद्वैतविरुद्धम् । जीवस्य, संविन्मात्रस्य वा सांशत्वव्यवस्था तत्र निरवयत्वश्रुतिविरुद्धा ॥

अतः कृत्स्नप्रसक्तिसूत्रं प्रधानवादमादाय ब्रह्मोपादानतावादायोगपरतया, "श्रुतेस्तु शब्दमूलत्वादि"ति तु शब्दघटितं सूत्रं सिद्धान्तपरतया च योजनीयमित्यद्वैतिनां विवरणम् । अपरेष्वपि द्वितीयप्रथमपादेऽधिकरणेषुनाद्वैतसिद्धान्तविरुद्धं किमपि प्रतिपाद्यते, न वा केनापि प्रसङ्गेनाद्वैतवादो निरस्यते च ॥

ब्रह्ममीमांसाया द्वितीयोध्यायद्वितीय-
पादान्तस्य निर्विशेष एव तात्पर्यम् ।

"अथातो ब्रह्मजिज्ञासे"त्याद्यानन्दमयाधिकरणान्तं प्रक्रमणम्, "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति तस्यैव प्रथमाध्यायप्रथमपाद उपसंहारः, एवमन्यत्रापि प्रथमाध्यायद्वितीयादिपादेषु प्राधान्येनोपक्रमादिषु निर्विशेषवादस्यैवोपबृंहणम्, द्वितीयप्रथमे तदनन्यत्वाधिकरणेन निर्विशेष एव शास्त्राणां पर्यवसानव्यवस्था, विशिष्य परसमयनिरसनार्थतया सर्वानुमते द्वितीयद्वितीयपादे चार्वाकादिमतानाम्. वैदिकेष्वपि पाशुपत-शाक्तमतयोश्च निरसनवदद्वैतवादस्य केनाप्यधिकरणेनानिरासश्चाद्वैतवादस्यासौत्रत्वं वारयति । प्रथमाध्याये तु सगुणपराण्यधिकरणानि नाद्वैतवादं विरुन्धते । ब्रह्ममीमांसायाः समन्वयाध्यायवत् प्रत्यध्यायम् प्रतिपादं चाधिकरणानि, सूत्राणि व्यष्टिशः, समष्टिशश्चोपक्रम-परामर्शोपसंहारैरद्वैतसिद्धान्तमेवोपबृंहयन्तीति व्यक्तं प्रतिपादं प्रत्यध्यायं चान्ते भाष्यप्रदीपे, इति तत एवाधिकमवगन्तव्यम् ॥

इतरव्यपदेशाधिकरणवैयर्थ्यं द्वैतमते ।

आस्तामियं प्रासङ्गिकी कथा । प्रकृते त्विदमत्रानुयुज्यते—"इतरव्यपदे-

शादि"ति सूत्रम्, तदधिकरणं वा कथं ब्रह्मणि समन्वयस्य प्रथमाध्यायविषयस्य विरोधीति ? न ह्यत्र जीवस्य जगत्कर्तृत्वं युक्त्या कोऽपि वादी वदति, वक्तुं शक्नोति वा। जीवानां बहूनामपि तत्तद्घटाद्येकैकमात्रकारणत्वस्य प्रत्यक्षादिसिद्धत्वेऽपि एकस्य वा, बहूनां वा सकलजगत्कारणत्वस्यासिद्धत्वादिति न पूर्वपक्षस्योत्थितिः। न हि कुलालादिवदसाधारणकारणमीश्वरो द्वैतमते, किन्तु साधारणकारणमेव, अद्वैतमते तु ब्रह्म तत्तत्कार्यात्मना विवर्तमानत्वात् "सन् घटः" इति सद्रूपेण कार्यसामान्येऽनुवर्तमानत्वाच्चासाधारणकारणं ब्रह्म। न ह्यसाधारणकारणेन साधारणकारणस्यान्यथासिद्धिः; अन्यथा कालादृष्टादीनामपि कारणत्वाभावप्रसङ्गात्, इति जीवेनैव कारणेन निर्वाहः, इत्यलमीश्वरेणेति शङ्का नोत्तिष्ठति ॥

न च साधारणकारणमेवासाधारणकारणमपि, इति जीवकारणत्वस्येश्वरकारणत्वस्य च विरोधाद् जीवकर्तृकत्वमादाय पूर्वपक्षासम्भवः; युक्त्या तत्तज्जीवानामीश्वरवद् साधारणकारणत्वाभावात्। न च तादृशी काचन युक्तिर्जीवकर्तृतावादिभिः प्रदर्शयितुं शक्यते, इति नानन्तरसङ्गतिरस्याधिकरणस्य ॥

तदनन्यत्वादिसूत्राणामपि न द्वैतमते सङ्गतिः।

तथाच—"तदनन्यत्वमारम्भणशब्दादिभ्यः"इति सूत्रं निमित्तकारणब्रह्मसिद्धान्ततापरं न भवति। यथा "किं स्विदासीदधिष्ठानमि"त्यस्या अपि श्रुतेरद्वैतवादमात्रानुसारित्वम्, तथा पूर्वमेवोक्तम् ॥

"कृत्स्नप्रसक्तिरि"ति सूत्रस्य तु नात्र जीवकर्तृतानिरासे कोऽप्युपयोगः। तत्र कृत्स्नशब्देन समष्टिजीवविवक्षायां स एवेश्वरो नामेति तस्य कर्तृत्वं दुरपह्नवम्। व्यष्टिजीवकारणत्वे तु न स्वतः सांशत्वं जीवस्य; अन्यथा ह्यङ्गुल्यादेरपि कर्तृत्वापत्तिः। स्वाप्नकर्तृत्वं तु स्वाश्रिततूलाविद्यावशाद् जीवस्य निरंशस्यापि वर्तते ॥

परिणामिकारणत्वं खलु सांशस्य बाधितम्, न तु निमित्तकारणत्वम्। न हि कुलालो जीवोऽपि सांशः, ईश्वरो वा, येन सांशत्वं तत्र प्रयोजकं स्यात्, इति निरवयवत्वशब्दकोपो न जीवनिरंशतायामपि; तस्य तदप्रयोजकत्वात्। अत एवाविद्योपहितब्रह्मकारणवादे जीवाश्रयाज्ञानापरपर्यायाज्ञानोपहितं चैतन्यं निरंशमप्युपादानमित्यद्वैतराद्धान्तः। स ह्यहमर्थाद् विशिष्टाद् जीवादन्य इति त्वन्यदेतत् ॥

कृत्स्नप्रसक्त्यधिकरणादीनामप्यद्वैत एव संभवः ।

इदमेवाभिप्रेत्य—"कृत्स्नप्रसक्तिरि"ति ब्रह्मकारणताक्षेपपरतया, अविद्योपहितचैतन्यकारणताक्षेपपरतया वाऽद्वैतमते स्वीक्रियते । तत्र व्यवहारदशायां ब्रह्मणोऽवान्तरतात्पर्यविषयस्य कारणत्वस्याक्षेपः, "श्रुतेस्तु शब्दमूलत्वादि"ति तु परमार्थदशामाश्रित्य तदनन्यत्वोपपादनम् । सर्वत्र व्यावहारिक-पारमार्थिकदशयोः, विशिष्टोपहितादिजीवानां चाभेदं मत्वाऽपरेषामाक्रमणम्, न तु वस्तुस्थितिमादाय ॥

कर्तृत्वं हि जीवस्यौपाधिकम्, न तु पारमार्थिकम्; संविन्मात्रस्य प्रत्यगात्मनोऽकर्तृत्वात् । विशिष्टस्य तु जीवस्य कर्तृत्वमुपाधिगतधर्माध्यासमात्रेण । न च तत्रेश्वरेच्छाया लेशतोऽपि व्यापारः । ईश्वरस्य कारयितृत्वं हि जीवोपाधिकारणतामात्रेण, न तु तादात्म्याध्यासोऽपीश्वरेच्छाधीनः; अनादित्वादीश्वरस्येव जीवस्यापि ॥

जीवो हि स्वोपाध्यधिष्ठानसत्ताधीनसत्ताकः, नेश्वरसत्ताधीनसत्ताकः, विहारोपदेशोऽपि विशिष्टस्यैव, न तु शुद्धस्य । ईश्वरस्यापि मायाविशिष्टस्यैव मायापरिणामकृत्याश्रयत्वेन कर्तृत्वम्, न त्वनुपहितस्य शुद्धस्य तत्पदलक्ष्यार्थस्य, इति विशिष्टजीवेश्वरकर्तृत्वं विशिष्टेश्वरप्रयोजकत्वं वा नाद्वैतवादविरुद्धम् ॥

कृत्स्नप्रसक्तिरित्यापादनं पूर्वपक्षमेवात्र सूचयति, न तु सिद्धान्तम् । अतः तुशब्दघटितोत्तरसूत्रस्यैवोक्तसूत्राक्षेपनिरासपरतया योजनं युक्तम् । कृत्स्नप्रसक्तिसूत्रस्य प्रसङ्गमात्रपरस्येश्वराधीनकर्तृत्वसाधनपर्यन्ततात्पर्यं तु "अधिकं तु भेदनिर्देशादि"त्यनेनैवेश्वरशक्तेरेव हिताकरणादिदोषप्रसक्तिवारणार्थतया प्रयोजकत्वस्य व्यवस्थापनाद् न प्रसङ्गान्तरस्य, परिहारान्तरस्य वाऽपेक्षा, अतो "हिताकरणादिदोषप्रसक्तिः" इत्यादिपदेनैवोक्तापत्तेरपि सङ्ग्रहसम्भवात्, विशिष्योक्तप्रसङ्गस्यापि विवक्षणीयत्वेऽप्य"धिकं तु भेदनिर्देशादि"ति सूत्रात् प्रागेवास्यापि सूत्रस्य निर्देशस्य युक्तत्वाच्चाधिकरणान्तरपरतया कृत्स्नप्रसक्तिसूत्रयोजनमेव युक्तम् ॥

जीवेश्वरयोरंशांशिभावोऽद्वैतवाद एवाभेदेन ।

ईश्वरांशत्वं तु जीवस्येश्वरोपाधिमायाऽवस्थाविशेषोपाधिकत्वेनाऽऽविद्यकमद्वैतमतेऽपीष्टम् । स्वरूपत ईश्वरोऽपि निरंशः, जीवोऽपि । अत एव—"अंशो नानाव्यपदेशादि"—त्यत्रांशपदमंश इवांश इति भगवत्पादानां

भाष्यम् । व्यक्तीकरिष्यते चेदमुपरिष्टात् । अंशत्वेऽपि न जीवानामीश्वरादात्यन्तिकभेदः, न वाऽभेदः । भेदाभेदौ तु विरुद्धौ । विशेषवशात् तत्परिहारोऽविद्यावशादेव । अविद्या तु क्लृप्ता शुक्तिरूप्यादिकारणतया । "अजामेकामि"त्यादिश्रुत्या तु मूलाऽविद्याऽपि सिद्धा । सा त्वेकाऽघटितघटनापटीयसीश्वरशक्तिरिव सर्वं निर्वक्ष्यति । विशेषास्त्वनन्ताः अप्रामाणिकाः कल्पनीयाः न श्रौताः, न वा दर्शनान्तरसिद्धाः ॥

सत्यपि विशेषाधीनत्वेन भेदाभेदयोरविरोधे, तत्र जीवेश्वरभेदज्ञानेन यदि मोक्षः, तर्हि किमजागलस्तनेनाभेदेन ? यद्यभेदज्ञानेन, तर्हि किं वा प्रयोजनं विशेषवशाद् भेदाङ्गीकारस्य । भेदाभेदोभयज्ञानस्य मोक्षसाधनत्वे भेदमात्रज्ञानमोक्षसाधनतावादस्य का गतिः ?

तत्रेश्वरस्वरूपांशत्वं यदि तत्प्रतिविम्बत्वेन, तर्हि किमुपाधिकं प्रतिबिम्बत्वं जीवस्य ? न हि स्वरूपमेव बिम्बमप्युपाधिरपि, कथं चोपाध्यैक्ये प्रतिबिम्बानां भेदः ? अदृष्टवशात्तु प्रतिबिम्बानां सुख-दुःखभेदव्यवस्था स्यात्, न तु प्रतिबिंबस्वरूपभेदेन ॥

न च नित्यः प्रतिबिम्बोपाधिः कुत्रापि दृष्टः, न वा प्रतिबिम्बो वा नित्यः, इति जीवानित्यत्वमपि दोषो द्वैतवादे । अधिकं तृतीयपादे व्यक्तीकरिष्यते, इति इतरव्यपदेशाधिकरणम्, कृत्स्नप्रसक्तिसूत्रम्, तदधिकरणं वाऽद्वैतवाद एव स्वरसम् ॥

जीवाणुत्ववादस्य द्वैतवादेऽनिर्वाहः ।

तत्र स्वरूपप्रतिबिम्बतावादे जीवाणुत्वमुत्क्रान्ति-गत्यादिसूत्रसिद्धं कथमुपपद्यते ? "नित्यः सर्वगतः स्थाणुः" "अविनाशि तु तद् विद्धि येन सर्वमिदं ततम्" इति सर्वगतत्वनिर्देशो जीवस्य वा कथमुपपद्यते ? यदि बिम्बस्वरूपेण, तर्हि बिम्ब-प्रतिबिम्बयोर्भेदः स्वरूपातिरिक्तोपाध्यभावे कथम् ? अभेदे च कथमीश्वरोऽपि न जीवदुःखेन दुःखी, न वा तत्सुखेन सुखी ? न वा जीवोऽपीश्वरवद् न कर्ता ? विशेषकृतं भेदमादाय दोषपरिहारे सर्वगतत्वमपि तत एव भेदवशात् कथं जीवस्य न वार्यते ॥

एतेन—"नित्यः सर्वगतः स्थाणुरि"त्यत्र पाठभेदमादाय केषाञ्चन "सर्वगतस्थश्चासावणुश्चे"ति व्याख्यानमपि—परास्तम्; स्वभाष्यविरुद्धत्वात् तथा पाठकल्पनायाः, तथा विवृतेश्च, न वा विशेषकृतं भेदमादायोपपत्तिः ॥

भगवतो विशेषस्य वा भेदाद्यनिर्वाहकत्वम् ।

एतेन—भगवानेव स्वरूपस्वभावविशेषाणां नियामकश्चैतन्यमवच्छे-

दकं विधाय विशेषं निमित्तीकृत्य विरुद्धेऽप्यभेदवहुत्वे निरवयवत्वशब्दकोपमपास्य, कृत्वा प्रसक्तिम्, न्यक्कृत्य कार्यानुरूपं सामर्थ्यविशेषं योजयन् जीवेन कारयतीति—परास्तम्। यदि भगवत एव सर्वनियामकत्वं तदीयस्वभावविशेषेण, तर्हि किमनेनान्तर्गडुना विशेषेण निमित्तविशेषेण? अन्यथा सर्वस्यास्य निर्वाहो जीवगतेन स्वभावेन, विशेषनिमित्तेन वा न कथम्?

यत्तु—उक्तशङ्कानिराकरणपरतयाऽधिकरणान्तरम्—"श्रुतेस्तु शब्दमूलत्वात्" इत्यादिना, तदनुसारिणा—

"तस्य त्वशेषशक्तित्वाद् युज्यते सर्वमेव हि।
विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते॥"

इत्यनुव्याख्यानेन च। तत्रापीदमेव पुनरप्यनुयुज्यते—यद्यशेषशक्तित्वेन भगवतैव सर्वनिर्वाहः, तर्हि किमनेनान्तर्गडुना विशेषेण? कुतो वा जीवोऽपि स्वभावेन, विशेषं निमित्तीकृत्य सर्वं स्वविषयं न निर्वहयतीति व्यर्थमत्राधिकरणद्वयमपि। अद्वैतसिद्धान्ते सूत्राणां विभागः, अधिकरणानामाधिक्यं च विषयभेदमादायोपपद्यते। तत्र तु न द्वैतिनां विशिष्टमाक्रमणम्, इति न तत्र प्रयत्नोऽपि॥

॥ इतीतरव्यपदेशाधिकरणम्॥

## ❀ द्वितीयाध्यायस्य प्रथमः पादः ❀

—:❀:—

❀ ओं ❀

# ❀ अथ द्वितीयाध्यायस्य द्वितीयः पादः ❀

## रचनानुपपत्त्यधिकरणम्

### रचनानुपपत्तेश्च नानुमानम्

द्वैतवादाभिमतनास्तिकषड्दर्शनी, अधिकरणविभागश्च।

तत्र द्वैतमते द्वादशाधिकरणानि—(१) अचेतनप्रधानकर्तृत्वस्य निरीश्वरसाङ्ख्याभिमतस्य (२) सेश्वरसाङ्ख्यस्यापीश्वरस्यानुग्राहकत्वमात्रम्, कर्तृत्वं तु प्रधानस्यैवेति मतस्य (३) चेतनकर्तृत्वमपि चेतनस्य शरीरस्यैव, न तु तदतिरिक्तस्य जीवस्य, ईश्वरस्य वेति चार्वाकमतस्य (४) तत्राचेतनस्य प्रधानस्य चेतनसन्निधानमात्रेण कर्तृत्वमिति सेश्वरसाङ्ख्यमतस्य (५) प्रकृत्युपसर्जनपुरुषकर्तृकत्ववादस्य, स्वतन्त्रेश्वरकारणत्वस्य च मतपञ्चकस्य निरासार्थानि पञ्चाधिकरणानि। षष्ठं त्वधिकरणं काणादमतनिरासपरम्, इति नास्तिकषड्दर्शनीनिरासप्राधान्यं पूर्वार्धस्येति द्वैतमर्यादा॥

अद्वैतसिद्धान्ते तूक्तस्याधिकरणपञ्चकस्य स्थानेऽचेतनप्रधानकारणवादनिरासपरमेकमेवाधिकरणम्। तत एवाधिकरणसिद्धान्तन्यायेन साङ्ख्यावान्तरविभागानां सर्वेषामपि निरासोऽर्थसिद्धः—इति। चार्वाकमतनिरासस्तु तस्य विकल्पासहत्वात्, "एक आत्मनः शरीरे भावादि"ति तन्निरासस्य करिष्यमाणत्वाच्च नात्रोपयुज्यते॥

किं बहुना? श्रुतिप्रामाण्यम्, युक्तिप्रामाण्यं वा तत्र नास्ति, इति ब्रह्मणि समन्वयस्य युक्तिविरोधाविरोधिचिन्तायां नास्याश्चिन्तायाः सङ्गतिः। शास्त्रयोनित्वादिन्यायविरुद्धोऽपि चार्वाकसमयः, शब्दप्रामाण्यानङ्गीकारश्च तन्मते॥

अद्वैताभिप्रेतनास्तिकषड्दर्शनी।

काणादमतनिरासस्त्वद्वैतस्यापि सम्मत एव। प्रथमाध्यायान्ते "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" इति तस्य शिष्टापरिग्रहस्य भगवत्पादैर्वर्णनात् काणाददर्शनमपि नास्तिकदर्शनमेवेति भगवत्पादीयानामाशयः।

अत्रापि "अपरिग्राहाच्चात्यन्तमनपेक्षा" इति काणादमतनिरासस्यैव सूत्रकारेणापि शिष्टाग्राह्यत्ववर्णनाच्च काणाददर्शनम् , साङ्ख्यस्य निरीश्वर-सेश्वरभेदेन द्वेधा विभक्तस्य वेदप्रामाण्याङ्गीकारेऽपीश्वरकारणत्वास्वीकारांशेऽशतोऽवैदिककल्पत्वाद् द्विविधं साङ्ख्यदर्शनम् , द्विविधं सौगतदर्शनं आर्हतदर्शनं च षट् नास्तिकदर्शनानि, आस्तिकदर्शनानि तु—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।"

इति वचननिर्दिष्टार्धास्तिकदर्शनेषु पाशुपत-पाञ्चरात्रे, तदतिरिक्तं शुद्धं वैदिकदर्शनमिति त्रीण्येव; साङ्ख्य-योगयोरप्यर्धास्तिकत्वात् ॥

तत्र साङ्ख्य-योगपदनिर्दिष्टत्रिविधिसाङ्ख्यस्य, पाशुपत-पाञ्चरात्रयोः, तदतिरिक्तस्याद्वैतदर्शनस्य च शुद्धवैदिकदर्शनस्य संकलनेन षडास्तिकदर्शनानि—काणाददर्शनम्, चतुर्विधसौगतदर्शनम् , आर्हतदर्शनं च संकलय्य षड् नास्तिकदर्शनानीति विभागः ॥

तत्र पाशुपत-पाञ्चरात्राणामपि वेदमूलत्वेनैव प्रामाण्यमिति सिद्धान्ते तु तान्यपि पूर्णवैदिकदर्शनान्येवाद्वैतदर्शनवदिति वा विभागः ॥

तत्र वैशेषिकाणामपि वेदाप्रामाण्येऽपि सेश्वरवादस्यैव तत्र स्वीकारात् तदप्यास्तिकदर्शनमेव । तत्र "एतेन शिष्टा अपरिग्रहा;" इति सूत्रपाठात् वैशेषिकातिरिक्ताप्रामाण्य एव सूत्रतात्पर्यमिति द्वैतिनो वदन्ति, परं त्वत्र काणादमतनिरासपरतया विप्रतिपन्नेऽधिकरणे "अपरिग्रहाच्चात्यन्तमनपेक्षेति" सूत्रानुगुण्यं न द्वैताभिमतप्रथमाध्यायान्तिमसूत्रपाठे । शब्दप्रमाणस्याप्यनुमानेऽन्तर्भाव इति वैशेषिकसिद्धान्ते शब्दस्याप्रामाण्यवादस्य द्वैतिभिरपि तदीयेषु प्रमाणपद्धत्यादिषु निरासाद् न वेदप्रामाण्यं लेशतोऽपि काणाददर्शने, इति न तस्य वैदिककोटिषु प्रवेशो युक्तः । अद्वैतिनामाशयस्तु न्यायदर्शनं पाशुपतादिनयेनैव गतार्थम्, इति तस्यास्तिकदर्शनत्वे न विप्रतिपत्तिः ॥

इदं त्वत्र विशेषतोऽनुसन्धेयम्–यत् परसमयनिरासपरे द्वितीयाध्यायद्वितीयपादेऽद्वैतमतापेक्षयाप्यधिकानामधिकरणानां सूत्राणां केषाञ्चिद् द्वैतदृष्ट्या गुणसूत्राणामपि पृथगधिकरणपरतया योजनेन, द्वादशानामधिकरणानां विभाजनेन च प्रथमेऽधिकरणषट्के हैतुकमतनिरासपर ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादिचतुर्विधमतस्याधिकरणचतुष्केन, देहकर्तृत्ववादिद्विविधचार्वाकमतस्याधिकरणद्विकेन च निरासम्, अवैदिकत्रिविधबौद्धमतस्य,

जैनमतस्य, तथाऽवैदिकपाषण्डिपाशुपत-शाक्तमतनिरासं च विस्तरेणोपपादयन्तो द्वैतिनः केनापि सूत्रेण निरस्यसमयेष्वेकतमं नाद्वैतसिद्धान्तं व्यवस्थापयन्ति ? न वा सूत्रकारस्याद्वैतमतनिरसने साक्षात्, परम्परया वा तात्पर्यं केनापि सूत्रेणावगम्यते, इत्यद्वैतमतनिरसनं द्वैतभाष्यकाराणाम् तद्व्याख्यातॄणां चोत्सूत्रमेव। तत्र तत्र "पृथगुपदेशादि"त्यादिना जीव-ब्रह्मभेद-साधनं न द्वैतभाष्यकारानुमतमपि। "स आत्माऽतत्त्वमसी"ति-पदच्छेदस्तु वा तदनुगुणो न सूत्रभाष्याशयानुसारी ॥

अन्त्रान्तिमाधिकरणमात्रे विप्रतिपत्तिः।

पूर्वं सामान्यतो द्वितीयाध्यायद्वितीयपादार्थः प्रसङ्गेन सङ्कलितः। तत्र द्वैताद्वैतभाष्ययोः परसमयनिरसनं पादार्थः। तत्रापि प्रथमपादे परमाणुकारणवाद-सौगतार्हतसमयपाशुपतसमयनिरासे कञ्चनावान्तरविभागं वर्जयित्वा साम्यमेव। तत्रान्तिमाधिकरणं पाञ्चरात्राप्रामाण्यनिरूपणपरमित्यद्वैतम्, शाक्तमतनिरासमिति द्वैतम् ॥

—:❀:—

## ❀ अथ पाञ्चरात्राधिकरणम् ❀
## शाक्ताधिकरणं वा
## ❀ उत्पत्त्यसंभवात् ❀

द्वैतवादाभिमतरीत्या सूत्राणां योजना, पूर्वोत्तरपक्षसंग्रहश्च ।

अत्र द्वैतिनोऽन्तिमेऽधिकरणेऽद्वैतिनां पाञ्चरात्राप्रामाण्यपरतया योजनं न साधु मन्यन्ते । श्रीभाष्यं त्वत्र पाञ्चरात्रप्रामाण्यं समर्थयति । द्वैतिनस्तु "उत्पत्त्यसम्भवात्" "न च कर्तुः करणम्" "विज्ञानादिभावे वा तदप्रतिषेधः" "विप्रतिषेधाच्च" इति चतुस्सूत्रीं शाक्तमतनिराकरणपरतया योजयन्ति ।—पाञ्चरात्रा हि वासुदेवात् सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात् प्रद्युम्ननामकं मनो जायते प्रद्युम्नादनिरुद्धसंज्ञकोऽहङ्कारो जायत इति प्रक्रियामाहुः ॥

तत्र "उत्पत्त्यसम्भवादि"ति सूत्रं वासुदेवादिभ्यः सङ्कर्षणाख्यजीवोत्पत्त्यसम्भवात् तत्परं पाञ्चरात्रमप्रमाणं तदंश इति प्रतिपादयति । न च जीवस्य नित्यस्योत्पत्त्यादिः सम्भवति; अन्यथा तस्य ब्रह्मणैक्यम्, भगवत्प्राप्तिर्वा मोक्षो न स्यात्, "न जायते म्रियते वे"ति श्रुति-स्मृतिविरोधश्च स्यात् । एवं जीवात् सङ्कर्षणात् प्रद्युम्नसंज्ञस्य मनस उत्पत्तिवर्णनमपि न युक्तम् । न हि कर्तुस्सकाशात् करणस्योत्पत्तिर्लोके दृष्टा । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे"ति हि परमात्मन एव मनआदीनां सृष्टिं श्रावयति ॥

वस्तुतस्तु—पाञ्चरात्रमते साङ्कर्षणादयो ह्यैश्वर्यैर्धर्मैरन्विता ईश्वरा एवाभिप्रेयन्ते, इति स्थिते तस्य जीवत्वाभ्युपगमो विप्रतिषिद्ध इति शङ्कायां सूत्रम्—"विज्ञानादिभावे वा तदप्रतिषेधः"—इति ॥

वेदविरुद्धस्य पाञ्चरात्रस्य न प्रामाण्यम् ।

यदि सङ्कर्षणादयः पूर्वोक्तविधया परमात्मान एव विज्ञानादिषाड्गुण्यसद्भावेन, तदापि तेषामुत्पत्त्यनुपपत्तिदोषस्तदवस्थ एव सत्येव तस्य जीवत्वाभ्युपगमप्रयुक्ते विरोधे ॥

वस्तुतस्तु—तेषां परमात्मत्ववादो न युक्तः; परस्परं भिन्नत्वात्। न हि परमात्मनो बहुत्वं प्रामाणिकम् ; "एकमेवाद्वितीयमि'ति श्रुतेः, अनेकेश्वरकल्पनायां गौरवाच्च। अभेदे तु तेषां स्वत एव स्वस्योत्पत्तिविरोधतादवस्थ्यम् ॥

सङ्कर्षणादीनां भगवद्व्यूहत्वायोगः।

भगवद्व्यूहत्वाभिप्रायस्तु व्यूहानामसङ्ख्यत्वात् चतुर्ष्वेव विश्रान्तिरनुपपन्ना। अतः पाञ्चरात्रं न प्रमाणम्। क्वचिद् ज्ञानैश्वर्य-बल-वीर्य-शक्ति-तेजांसि भगवतो गुणा इति वर्ण्यते। क्वचित्त–"आत्मान एवैते भगवतो वासुदेवस्ये"ति भगवतः स्वरूपमेतदित्युच्यते। वेदविप्रतिषेधस्त्वपरोऽप्रामाण्यकारणमस्य; "भगवान् शाण्डिल्यः षडङ्गं वेदमधीत्य तस्मिन् महत्याम्नाये निष्ठामनधिगच्छन् यः सर्वपरो धर्मो यस्मान्न भूयोऽस्ति कथं तद्विद्यामिति बलवद्विवेकमातिष्ठमानो बभूव, तत्र भगवते शाण्डिल्याय भगवता सङ्कर्षणेन व्यक्तेन शब्दवच्छास्त्रं प्रोक्तमि'ति निन्दाश्रवणात् ॥

एतेन—

"पाञ्चरात्रस्य सर्वस्य कर्ता नारायणः स्वयम्"

इति भारतम्, तस्य वेदतुल्यत्वम्, तत्समानयोगक्षेमत्वं वा "वेदारण्यकमेव चे"ति वेदेन सह समाहारपाठादिति—परास्तम्। तथा चान्यत्र—

"अधीता भगवन् वेदाः साङ्गोपाङ्गाः सविस्तराः।
श्रुतानि च मयाऽङ्गानि वाकोवाक्ययुतानि च॥
न चैतेषु समस्तेषु संशयेन विना क्वचित्।
श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति॥"

इति वेदनिन्दा श्रूयते, इति वेदविरुद्धमिदं पाञ्चरात्रम्।

अत एव—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा॥
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥"

इति साङ्ख्य-योग-पाशुपतेभ्य इव पाञ्चरात्रादपि पृथक्त्वेन वेदानामुल्लेखः। अत एकवचननिर्दिष्टानां साङ्ख्य-योग-पाशुपतानामिव पौरुषेयत्वाविशेषात्, प्रायापाठाच्च पाञ्चरात्रस्याप्यप्रामाण्यमेव युक्तमित्युक्तचतुस्सूत्र्यात्मकं पाञ्चरात्राप्रामाण्यनिरूपणपरमिदमधिकरणमित्यभिप्रयन्त्यद्वैतिनः॥

अद्वैतिनां पाञ्चरात्राप्रामाण्यवादनिरासः।

एतेन—

पाञ्चरात्रनिषेधार्थमेतान्याचक्षते यदि ॥
सूत्राण्यतिविरुद्धं तद् यत आह स भारते ॥
पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते।
पाञ्चरात्रविदो ये तु यथाक्रमपरा नृप॥
एकान्तभावोपगता वासुदेवं विशन्ति ते।
इति गीता च तच्छास्त्रसंक्षेप इति हेरितम्॥
वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन चैव हि।
दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि॥
इति वाराहवचनं श्लोका इति वचः श्रुतौ
वेदैश्च पाञ्चरात्रैश्च ध्येयो नारायणः परः॥
पाञ्चरात्रं च वेदाश्च विद्यैकैव विधीयते।
इत्यादिवेदवचनैः पाञ्चरात्रमपोद्यते॥
कथमेवात्र दोषः क उत्पत्तिर्ज्ञोऽत इत्यपि।
इहैवोक्ता न चाभूतभावस्तत्रापि कथ्यते॥
अनादिकर्मणा बद्धो जीवः संसारमण्डले।
वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः॥
न हि संसारसादित्वं पाञ्चरात्रोदितं क्वचित्।
जीवाभिमानिदेवस्य नाम्ना सङ्कर्षणस्य तु॥
वासुदेवाज्जनिः प्रोक्ता प्रद्युम्नस्य ततस्तथा।
मनोऽभिमानिनः कामस्यैवं साक्षाद्धरेः क्वचित्॥
सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तितः।
व्यूहयुक्तोऽन्यथाऽनूद्य कथं दुष्टत्वमुच्यते।
यदि विद्याच्चतुर्वेदानिति यद् वेदपूरणम्॥
पाञ्चरात्रादिति कुतो द्वेषः शाण्डिल्यवर्तने।
अतः परमशास्त्रोरुद्वेषादुदितमासुरैः॥
दूषणं पाञ्चरात्रस्य वीक्षायामपि न क्षमम्।
अतोऽशेषजगद्धाता निर्दोषोरुगुणार्णवः॥
नारायणः श्रुतिगणतात्पर्यादवसीयते।

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥
ततो भूय इवाऽऽयान्ति एतस्या नैव निन्दकाः ।
ततो विद्यामविद्यां च यो जानात्युभयं सह ॥
दोषज्ञानादतीत्यैतां विद्ययाऽमृतमश्नुते ।

इत्यनुव्याख्यानम्—व्याख्यातम् ॥

अयमाशयः—

"साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम् ॥"

इति धर्मपुत्रस्य प्रश्ने भीष्मवचनमानुशासनिके पर्वणि—

"साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥"

इति । अत्र "ज्ञानान्येतानी"त्यत्र ज्ञानपदं शास्त्रपरम् । तत्र शास्त्रत्वेऽपि सर्वेषां "साङ्ख्यस्य वक्ता कपिलः" इत्यादिना साङ्ख्यादीनामनाप्तकपिलादिकर्तृकत्वमभिधाय, वेदारण्यकपदोपलक्षितस्य पाञ्चरात्रस्याऽऽप्ततमेन नारायणेन प्रणीतत्वेन प्रामाण्यं प्रतिपाद्यते ॥

### गीतोक्तत्वात् पाञ्चरात्रप्रामाण्यम् ।

तत्र वेदानामपौरुषेयत्वेन स्वत एव प्रामाण्यं सिद्धमेव, इति न तदुक्तमत्र । फलवत्प्रवृत्तिजनकत्वादपि पाञ्चरात्रस्य प्रामाण्यं पाञ्चरात्रपदेनैवोच्यते । गीताऽपि हि पाञ्चरात्रस्यैव संक्षेपः;

"ब्रह्म-रुद्रेन्द्र-सूर्याणां यद् दत्तं विष्णुना पुरा ।
पाञ्चरात्रात्मकं ज्ञानं व्यासोऽदात् पाण्डवेषु तत् ॥
तेषामेवावतारेषु सेनामध्येऽर्जुनाय च ।
प्रादाद् गीतेति विज्ञानं संक्षेपेण युयुत्सवे ॥"

इति पुराणवचनात् । सति चैवं स्वयं गीताद्वारा पाञ्चरात्रमुपदिष्टवतो बादरायणस्य कथं स्वयं ब्रह्ममीमांसायां तद्विरुद्धं तदप्रामाण्यवचनं न व्याहन्येत ॥

### पाञ्चरात्रप्रामाण्यं श्रुतिमूलमपि ।

न केवलं गीतामूलकत्वेन पाञ्चरात्रस्य प्रामाण्यम्, किन्तु "अस्य

महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः सूत्राण्यनुव्याख्यानानि व्याख्यानानि श्लोकाः" इत्यत्र श्लोकशब्देन पाञ्चरात्रस्य सङ्ग्रहात् श्रुतिरपि पाञ्चरात्रप्रामाण्यमभ्यनुजानाति ॥

"पाञ्चरात्रविदोमुख्या" इति पाञ्चरात्रं प्रकृत्य—
"ऋषीनुवाच तान् सर्वानदृश्यः पुरुषोत्तमः ॥"
कृतं सहस्रं श्लोकानां लोकानां हितमुत्तमम् ॥"

इति पाञ्चरात्रमधिकृत्यैव हि तत्र श्लोकशब्दः । छन्दोगश्रुतौ—"ऋग्वेदो यजुर्वेदः"इत्यारभ्य एकायनशब्देनापि पाञ्चरात्रं निर्दिश्यते, इति श्रुतिसिद्धप्रामाण्यकं पाञ्चरात्रं कथमप्रमाणम् ?

न चांशतः प्रामाण्यं पाञ्चरात्रस्य—

"पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।"
इत्यत्र कृत्स्नपदस्य –

"ऋगाद्या भारतं चैव पाञ्चरात्रमथाखिलम् ।"
इत्यखिलपदस्य च वैयर्थ्यापत्त्योपपद्यते ॥

### जीवोत्पत्तिवादस्य नाप्रामाण्यकारणत्वम् ।

यस्तु तत्र जीवोत्पत्तिवादः, स तु नाप्रामाण्यप्रयोजकः । तत्र सा ह्यभूत्वा तद्भावो वाऽप्रामाण्यप्रयोजकः, उतोत्पत्तिमात्रं वा । तत्रान्त्ये—"सर्व एवात्मनो व्युच्चरन्ति" इति श्रुतेरप्रामाण्यापत्तिः, औपाधिकोत्पत्त्यभिप्रायत्वं तु पाञ्चरात्रेऽपि समानम् । एतेन—प्रथमकल्पोऽपि—व्याख्यातः; अनादिकर्मसम्बन्धाभिधानमुभयत्र समानम् ॥

### न च कर्तुः करणमिति सूत्राविरोधः ।

"न च कर्तुः करणमि"ति सूत्रमप्यत एव व्याख्यातम्, "अन्नमशितं त्रेधा भवती"त्यत्र मनसोऽप्युत्पत्तिश्रवणात् । तत्र द्वैतमते "सर्व आत्मानो व्युच्चरन्ती"त्यत्रात्मनां व्युच्चरणमनादीनामपि कर्माधीनशरीरसम्बन्धरूपोत्पत्तिरङ्गीक्रियते; पराधीनविशेषावाप्तेरेव तत्रोत्पत्तिशब्दार्थत्वात्, न त्वाकाशादेरिव स्वरूपोत्पत्तिः ॥

अद्वैतमते तु न साऽप्युत्पत्तिः; तथापि द्वैतमते परमात्मनस्सङ्कर्षणाख्यस्य जीवस्य नैकविधाऽप्युत्पत्तिः स्वीक्रियते। अत एव "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति जीवनित्यत्वम्। तदुत्पत्तिव्यवहारस्तु "चराचरव्यपाश्रयस्तु स्यात् व्यपदेशो भाक्तस्तद्भावभावित्वादि"त्युपाध्युत्पत्त्यैवेति तदीयः सिद्धान्तः॥

तत्र यदुक्तम्—जीवस्योत्पत्तिर्नाम प्रादुर्भावमात्रम्, न त्वभूत्वा भवनम्, तत्र जीवस्य शरीरोत्पत्तौ प्रादुर्भावः प्रसिद्धः। अत्र तु प्रादुर्भावमात्रम्, अथवा शेषादयो भगवदंशत्वाद्धरित्वेनोच्यन्ते, न तु साक्षात्। अतः साक्षाद् हरेरेव सङ्कर्षणादिविभागमात्रमत्र व्यूहशब्दार्थः। स विभाग एवात्र जनिः। जीवत्वं तु मुख्यं भगवत एव प्राणधारयितृत्वेन, न तु प्रसिद्धानां जीवानाम्, इति न जीवस्य, न वा परमात्मनः, सङ्कर्षणादीनां वोत्पत्त्यसम्भवात् पाञ्चरात्राप्रामाण्यवर्णनं न युक्तम्—इति॥

द्वैतिनां पाञ्चरात्रप्रामाण्यसमर्थनानुपपत्तिः।

तदिदं स्वरूपव्यक्रियैव पराक्रियेति न्यायेन जीवानामुत्पत्तिविलक्षणोत्पत्तेर्जायते पदार्थस्य, अन्यत्राप्रसिद्धविभागस्यैवोत्पत्तिपदार्थस्य च कल्प्यतया, जीव-मनश्शब्दानामप्यर्थान्तरकल्पनया, स्वत एव स्वस्य सृष्टिकल्पनया, एतासां कल्पनानामश्रौतीनामप्यचिन्त्यपरमात्मशक्तिनिबन्धनानां कल्पनया च न विकल्पसहम्। तेन च जीवोत्पत्तिसाम्यमेव संकर्षणाद्युत्पत्तेति स्वीयवादः स्वयमेवापोदितः॥

द्वैतवादस्य पाञ्चरात्रविरुद्धत्वम्।

तत्रादिकाले भगवान्नारायणो निजमुक्तिप्रदानाद्यर्थं वासुदेवादिचतुर्व्यूहो बभूव। ततः कालान्तरे दश-द्वादशादिव्यूहाः। एवं तदा तदाऽन्यान्यरूपेणानन्तव्यूहाः। सेयं शुद्धा सृष्टिरिति पाञ्चरात्रिकसिद्धान्तोद्घोषणम्, न श्रौतम्। तत्र चतुर्धा, बहुधा वा विभागो यदि सृष्टिः, तर्हि तत्र निमित्तकारणमुपादानकारणानपेक्षं न किमपि सृजतीति नियमविरोधः। विभागे संयुक्तानां संयोगनाशोऽविनाभूतो दृष्टः, इति बहुरूपसंश्लेषः, बहुरूपात्मनाऽवस्थानमपृथक्सिद्धम्, पश्चात्तु विभागमात्रमिति-

कल्पनायां सर्वप्रपञ्चसृष्टावप्येवमभिन्ननिमित्तोपादानतया सृष्टिरिति वाद एव पर्यवस्यति ॥

तत्र शरीर-शारीरिभावस्तु द्वैतिभिः स्वयं निरस्यते, एवं ब्रह्मपरिणामवादोऽपि, इति विवर्तवाद एव पर्यवसानम्। "वहु स्यां प्रजायेये"ति वहुभवनमेव भगवतो जन्मापीति ज्ञायते, इति जीवसृष्टितो न विशेषः सङ्कर्षणादिसृष्टेः, इति स्वरूपाविघातेनोत्पत्तिरौपाधिक्येव ॥

न च तावताऽपि श्रीकृष्णाद्यवतारस्य जीवत्वम्। तत्र मनुष्यत्ववुद्धिस्तु पामराणां तत्परतत्त्वस्वरूपाज्ञानेन। तदुक्तम्—

"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥"

इति, इति सङ्कर्षणादिपदैः परस्वरूपस्य जीवत्वम्, तद्रूपेणोत्पत्तिश्च गौणं वक्तुमुचितम् ॥

"वहूनि मे व्यतीतानि जन्मानि तव चार्जुन।"

इति तु जन्मश्रवणं तस्य दिव्यत्वश्रवणम्, परमात्मनो जीवत्वम्, तद्रूपेण जन्म वा निषेधति। अतः सङ्कर्षणस्य जीवत्वम्, प्रद्युम्नस्य मनस्त्वम्, अनिरुद्धस्याहङ्कारत्वम्, तेषामुत्पत्तिश्च पाञ्चरात्रावगतानि, इति श्रुतिविरोधादप्रामाण्यं तस्य साधयति ॥

द्वैतिनामस्याधिकरणस्य शाक्तमतनिरासपरता।

तत्र द्वैतभाष्यम्—"उत्पत्त्यसम्भवादि"ति सूत्रं शाक्तमतनिराकरणपरं व्याचष्टे। तदर्थस्तु—न हि पुरुषाननुगृहीताभ्यः स्त्रीभ्य उत्पत्तिर्दृश्यते—इति ॥

अत्रानुव्याख्यानम्—

"तस्याः सदाशिवाद्याश्च जायन्ते देव-मानवाः।
दृष्टा पुंभ्यः सदा सृष्टिः स्त्रीपुम्भ्यो वा विशेषतः ॥
केवलाभ्यो न हि स्त्रीभ्यस्तत उत्पत्त्यसम्भवात्।"

इति। इदमेवात्र पृच्छ्यते—कुत्र वा केवलात् पुरुषात् सृष्टिरधिगतेति। न हि द्रोणादीनामुत्पत्तिरत्रोदाहरणतामर्हति; सदाशिवादीनां चिच्छक्तिरूपत्रिपुरासङ्कल्पविशेषादेरेवोत्पत्तिसम्भवात्। न ह्यप्राकृते सदाशिवादौ, द्रोणादीनामिव पुरुषसत्त्वाद्यपेक्षं जन्म; अन्यथा पाञ्चरात्रप्रामाण्यवादि-

नामपि पौरुषसत्त्वमेधाद्यपेक्षं प्राकृतं जन्मैव सङ्कर्षणादेरपि स्यात्; इति प्राकृतजीवेभ्यो वैलक्षण्यम्, "अंशो नानाव्यपदेशादि"ति स्वरूपांशत्वसिद्धान्तश्चानुपपन्नः स्यात् ॥

संकर्षणादीनामुत्पत्त्यसंभवः ।

अत्र यदि सङ्कर्षणादीनां विना मातरमुत्पत्तिः, तर्हि सदाशिवादीनामपि पुरुषानपेक्षं जन्मेति समानम्। सङ्कल्पादेव स्वरूपस्यैवाविर्भावविशेषोऽपि यदि जन्म, तत एव शाक्तमतासाधुत्वम् तर्हि तेनैवाधिकरणसिद्धान्तनयेन सङ्कर्षणाद्युत्पत्तिस्वीकारेण पाञ्चरात्राप्रामाण्यमपि सिद्धमेव; उत्पत्त्यसम्भवस्य समानत्वात् ॥

प्रद्युम्नादे रुक्मणीपुत्रत्वस्य पुराणेषु प्रसिद्ध्या स्त्र्यपेक्षमेव नारायणस्यापि प्रद्युम्नादिस्रष्टृत्वमित्यवगम्यते, इति को वा विशेषः सङ्कर्षणादेः प्राकृतजीवेभ्यः, यदि तेऽपि जीवादिरूपेण जायन्ते ॥

न च प्राकृतानां जीवानामिवौपाधिकी सङ्कर्षणादेरुत्पत्तिः, किन्तु स्वरूपस्यैवोत्पत्तिः, आविर्भावो वा। जीवस्यैव शरीरान्तरग्रहणमेव जीवोत्पत्तिर्नाम, इति न सङ्कर्षणादेरुक्तविधं जन्म। मनस्तु न जीवोऽपि, किन्तु तदुपाधिरेव। तस्य तु तत्संज्ञकस्य प्रद्युम्नव्यूहस्योत्पत्तिः सर्वात्मना बाधिता ॥

श्रुतप्रकाशिका तु पाञ्चरात्रे सङ्कर्षणादेर्जीवस्योत्पत्तिरेव न श्रूयत इति वर्णयति, पाञ्चरात्रस्याभिन्ननिमित्तोपादाननारायणपरतयैव प्रामाण्यमिति च, इति तस्य केवलनिमित्तकारणपरमात्मपरतायां द्वैताभिमतायां न पाञ्चरात्रप्रामाण्यम्? इति पाञ्चरात्रप्रामाण्यसमर्थनपरमेवेदमधिकरणमिति सिद्धान्तविरुद्धमपि, यदि द्वैतिनां सिद्धान्त एव पाञ्चरात्रसिद्धान्तः ॥

श्रुत्यविरोधे पाञ्चरात्रप्रामाण्यम् ।

न चाद्वैतसिद्धान्ते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः, परमात्मा, स आत्मनाऽत्मानमनेकधा व्यूह्य व्यवस्थितः तमित्थम्भूतं षाड्गुण्यविग्रहं भगवन्तमभिगमनोत्थानेज्या-स्वाध्याय-योगैः पञ्चभिरनेककालमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते" इत्यादिश्रुत्यविरुद्धांशेऽप्रामाण्यम्। तद्विरुद्धांशे त्वप्रामाण्यमेव। इदमभिप्रेत्यैव—

"ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै।"

इति साङ्ख्य-योगादीनामिव पाञ्चरात्रस्यापि शास्त्रत्वम्। तत्र "विद्धि

नानामतानि वै" इति सर्वेषां नानामतत्ववर्णनात् श्रुत्यविरुद्धांश एव प्रामाण्यमिति ज्ञायते । अयमेव न्यायः साङ्ख्य-योग-पाशुपतेष्वपि । अत एव "विप्रतिषेधाच्चासमञ्जसम्" "पत्युरसामञ्जस्यादि"त्यादावसामञ्जस्य-मात्रं सूत्रितम्, न तु "अपरिग्रहाच्चात्यन्तमनपेक्षे"त्यत्रेवाप्रामाण्यम् ॥

नारायणकर्तृकत्वेऽपि पौरुषेयत्वात् पाशुपतादिभ्यो न विशेषः ।

यत्तु—"पाञ्चरात्रस्य कृत्स्नस्य कर्ता नारायणः स्वयम् ॥"

इति कृत्स्नवक्तृत्वं नारायणस्य, तदिदं साङ्ख्य-योग-पाशुपतानामपि विषये कृत्स्नैककर्तृत्वमेव तत्तद्विज्ञानस्य । तत्र कपिलर्षभ-सदाशिवा अपि परमात्मव्यूहविशेषाः, अन्ये वा परमात्मस्वरूपमेव, इति नारायणकर्तृ-त्वाद् न न्यूनं कपिलादिकर्तृकत्वम् ॥

किं बहुना ? बुद्धोऽपि भगवतोऽवतारविशेष एव, इति पौरुषेयत्वेऽपि तदागमोऽपि कथं न प्रमाणं पाञ्चरात्रमिव । साक्षाद् नारायणाकर्तृकत्वं तु भगवद्गीताया अपि समानम् पुरुषगौरव-लाघवप्रयुक्ते न प्रामाण्या-प्रमाण्ये । न च सदाशिवाद्यपेक्षया पूज्यत्वं नारायणस्य पाशुपतादीनां संप्रतिपन्नम् । स्वयं कर्तृत्वोल्लेखस्तु वेदानपेक्षत्वं बौद्धाद्यागमानामिव ज्ञापयति । अलौकिकार्थप्रामाण्ये विरोधाधिकरणमेव गतिः, इति वेदविरोधो नारायणकर्तृकस्यापि प्रामाण्यं विहन्ति । किं बहुना ? पाञ्चरात्रतन्त्राणि प्रायेणाद्वैतवादमेव समर्थयन्ति । व्यक्तीकरिष्यते चेदमुपसंहारे ॥

वेदपूरकत्वं न पाञ्चरात्रस्य ।

वेदस्तु नापूर्णः, इति न स्वपूरणार्थमन्यदपेक्षते, किन्तु तदुपबृंहण-मेव पुराणादिकृत्यम् । तदुक्तम्—

"इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् ॥"

इति । उपबृंहणमेव यदि पूरणम्, तर्हि तत् तद्विरुद्धांशे न पाञ्चरात्रे-णापि, किन्तु तेन तस्य तद्धननमेव । तत्र तत्पूरणं तन्मूलकत्वेन वा, न तदनपेक्षं स्वतन्त्रतया प्रामाण्येन वा । आद्ये श्रुतिविरोधो बाधकः । द्वितीये तु शाक्याद्यागमादिकमपि वेदस्य पूरणं स्यात्, इति प्रमाणाप्रमाणव्यवस्थै-वास्तमियात् ॥

केवल-पाञ्चरात्राद्वैदिकानधिकारः ।

पाञ्चरात्रस्य वेदपूरणत्वं तु वैदिकधर्माधिकारात् सर्वथाच्युतानां

वर्णाश्रमवयो-वस्थाद्यधिकारविरुद्धं स्वेच्छाचारेण वैदिकधर्मविमुखानाम्, पश्चात्तप्तानाम्, कृतप्रायश्चित्तानामपि महापातकिनामन्येषां च प्रायश्चित्तमहिम्ना विनष्टनरकोत्पादकशक्तिमात्राणाम्, अवकीर्णिनाम्, आरूढपतितानामन्येषां चानुग्रहार्यं तद्योग्यवैदिकधर्मविशेषमात्रं तपोमहिम्ना, स्वासाधारणशक्तिविशेषेण वा तत्तदधिकारानुगुणमिह जन्मनि, परत्र वाऽत्युत्कटपुण्यविशेषेणोत्तमलोकावाप्तिमभिलषतां धर्माभिमुखीकरणेनोत्तमलोकावाप्तिसाधनोपदेशेन, क्रमेण वैदिकस्वस्वोत्तमधर्माधिकारेण मोक्षपर्यन्तपुरुषार्थमात्रस्य वेदे विशदमनवगतस्य प्रवर्तनात् । यत्तु समानं पाशुपतादेरपि । इमानेवाधिकृत्य भगवद्गीता—

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
योजयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ।"
"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।
इदं ते नातपस्काय नास्तिकाय कदाचन ॥
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ।
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयम् ।"

इति । इदमनेनावगम्यते—च्युतकर्माधिकाराणामपि भक्तिमार्गेऽस्त्यधिकार इति ॥

एतेन—

"एकान्तभावोपगता वासुदेवं विशन्ति ये ।
इति गीता च तच्छास्त्रसंक्षेप इति हीरितम् ॥"

इत्यनुव्याख्यानमपि—व्याख्यातम्, अत एव-
"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्।"

इत्यनेनैकवाक्यताऽपीति केचन। इदं तु कर्मयोग-भक्तियोगातिरिक्तमुख्यमोक्षसाधनाभिप्रायं यद्यप्यद्वैतविरुद्धम्, तथाप्येवं रीत्या पाञ्चरात्र-प्रामाण्यवादेऽधिकारविशेषमात्राश्रित्य नाद्वैतिनो विप्रतिपद्यन्ते॥

शिवार्कमणिदीपिकादि हि वेदानधिकारिणां तदुचितधर्मोपदेशार्थमेवावैदिकपाशुपतस्य पाञ्चरात्रादीनीति "अथ पतितास्समवाय धर्मांश्चरेयुरितरेतरयाजका इतरेतराध्यापका मिथो विवहमाना:" इति बोधायनधर्मसूत्राद्यवलम्बिनेन सिद्धान्तयति। अत एव द्वैतिन:, विशिष्टाद्वैतिनश्च न केवलं पाञ्चरात्रमेव स्वसिद्धान्तस्थापनाय प्रमाणीकुर्वन्ति, किन्तु वेदानपि "साङ्ख्यं योगम्" इति वचननिर्दिष्टान्। इदमेवाभिप्रेत्य कूर्मपुराणे पाञ्चरात्रस्य पिष्टपशुयागादिविषये वैदिकावैदिकाधिकारभेदव्यवस्था॥

पाशुपतपाञ्चरात्रयोर्वेदानुगृहीत साङ्ख्ययोगाभ्यां विशेष:।

अतो "वेदारण्यकमि"त्यत्र वेदस्यापि पृथक्प्रामाण्यमारण्यकपदसङ्गृहीतं पाञ्चरात्रवदिति व्यवस्था। तत्र—

"साङ्ख्यं योग: पाञ्चरात्रं वेदा: पाशुपतं तथा॥"

इत्यत्र पाञ्चरात्र-पाशुपतयोर्मध्ये वेदा इति निर्देशेन वेदानुग्रहो महान् पाञ्चरात्र-पाशुपतयो:, न तु साङ्ख्ययोगयोरिव तदननुग्रह इति ज्ञाप्यते। तत्र "अनादिमायया सुप्त:" "न कर्माविभागादिति चेन्नानादित्वादि"ति जीव:, तस्य कर्मसम्बन्धश्चानादिरिति श्रुति-सूत्रे उपपादयत:, इति पाञ्चरात्रे जीवोत्पत्तिवर्णनं तद्विरुद्धमेव। वक्तव्यं चात्र बहु पूर्वमेवोक्तम्॥

उत्पत्तिर्हि यदि प्रादुर्भावमात्रम्, तर्हि न तदनित्यत्वप्रयोजकम्, इति "जातस्य हि ध्रुवो मृत्युरि"ति विरुध्यते। यदि कर्मनिबन्धनो जनिरेव प्रादुर्भावलक्षण:, तर्हि सङ्कर्षणे कर्मानधीने जीवत्वम्, जनिश्च बाध्येत, इति सङ्कर्षणो जीवो जायत इति पाञ्चरात्रमप्रमाणमेव॥

द्वैतसिद्धान्त: पाञ्चरात्रविरुद्ध इति तु श्रीभाष्यानुयायिन:।

ब्रह्ममीमांसायां वेदविरोधेनाप्रामाण्यं साङ्ख्य-योगयो:, पाशुपतस्य, पाञ्चरात्रस्य वा तत्त्वमस्यादिमहावाक्यविरोधेनैव। न च द्वैतिन: पाञ्चरात्रस्याप्यभिन्ननिमित्तोपादानतापरत्वं स्वीकुर्वन्ति, इति तस्मिन्नंशे तदप्रामाण्यं

दुरपह्नवम् । केवलनिमित्तकारणता ब्रह्मणो न पाञ्चरात्रसिद्धान्त इति तु विशिष्टाद्वैतिनः, इति तद्दृष्ट्या पाञ्चरात्रविरुद्धमपि द्वैतमतम् ।।

पाञ्चरात्रस्य कृत्स्नस्य न श्रौतत्वम् ।

न च पाञ्चरात्रमपि वेदैकदेशः, किन्तु स्वतन्त्रं शास्त्रं साङ्ख्यादिकमिव । न च पाञ्चरात्रमपि वेदवत् स्वतन्त्रं किमपि प्रमाणम् । व्याख्यानुव्याख्यानानि, पुराणेतिहासादयश्च वेदैकदेशा पौरुषेयभ्योऽन्यएव पुराकल्परूपार्थवादत्वात् । तत्र वेदेनैव हृदयादिशब्दनिर्वचनरूपेण प्रवर्तितानि व्याख्यानान्येव निश्वसितश्रुतिघटकानि व्याख्यानानि, न तु वेदवाह्याः, वेदमूलकाः पुराणेतिहासादयः, तत्तद्वेदभाष्याणि, निरुक्तादीनि वा तत्तदाचार्याणाम् अन्यथा सर्वाणि भाष्याणि तुल्यप्रमाणानि स्युः ।

अयमेव न्यायः श्लोकशब्देऽपि । सोऽपि "तदप्येष श्लोक भवती"तिप्रवृत्तान् श्लोकानेवाभिप्रैति, न तु पाञ्चरात्रम्; अन्यथा पाशुपतादीनामपि श्लोकत्वाविशेषात् तस्यापि श्रौतमेव प्रामाण्यं दुर्वारम् ।।

एकायनशब्द शब्देन पाञ्चरात्रस्य ग्रहणमविप्रतिपन्नम् ।

एतेन – एकायनशब्दोऽपि—व्याख्यातः । को वा विप्रतिपद्यते पाञ्चरात्रप्रामाण्ये ? वेदाविरुद्धांशे तत्प्रामाण्यस्याद्वैतिभिरपि स्वीकारात् । न हि वेदवाक्यमपि परस्परविरुद्धं विना सामान्य-विशेषन्यायादिनाऽविरोधं प्रमाणम् । न्यायानुसारिणी खलु प्रामाण्याप्रामाण्यव्यवस्था । न च पाञ्चरात्रसिद्धान्तस्य प्रामाण्यव्यवस्थापनपरः, तदंशे, वेदप्रामाण्यपरो वा न्यायः कोऽपि ब्रह्ममीमांसायां वर्तते ।।

किं बहुना ? पाञ्चरात्रपदमेव ब्रह्ममीमांसायां नास्ति । सत्यप्येवं तदप्रामाण्यमात्रविचारस्तु साङ्ख्य-योग-पाशुपतप्रायपाठानुग्रहवशेन तदुपस्थित्या, तद्वत् परसमयत्वाविशेषेण च । परसमयत्वं हि वेदविप्रतिषेधेन, वेदमुख्यतात्पर्यविषयविरोधेन वा ।।

शाण्डिल्यवर्तनं पाञ्चरात्राप्रामाण्य एव हेतुः ।

तत्र पूर्वोक्तविधया शाण्डिल्यवर्तनेन यदि वेदपूरकत्वं पाञ्चरात्रस्य वेदानधिकारिहितोपदेशेन, तर्हि तावता वेदाविद्वेषस्तस्याद्वैतिभिरपि प्रतिक्रियते; वैदिककर्मसु भक्तियोगादौ वा शक्त्यशक्तियोग्यताद्यनुसारेण व्यवस्थानिष्कर्षाभिप्रायत्वात् शाण्डिल्यवर्तनस्य, यथा—पराशरस्मृतेरशक्त-

विषये प्रायश्चित्तादिसङ्कोचेन कलियुगधर्मव्यवस्थापकत्वम्, पुराणेतिहासादीनां च मुख्यगौणापद्धर्मस्वरूपनिर्णायकतया वेदोपबृंहकत्वम्॥

"यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः।
न चेत् पुराणं संविद्याद् नैव स स्याद् विचक्षणः।"

इति यथा पुराणस्य प्रशंसा, एवं पाञ्चरात्रस्यापि प्रशंसापरमेव शाण्डिल्यवर्तनम्। तच्च कृतप्रायश्चित्तानामपि गतिप्रदर्शकत्वेनैव पूर्वोक्तविधया। तत्र वेदविप्रतिषेधस्तु वैदिकमुख्यधर्मविरुद्धार्थकत्वेन प्रतीयमानेन, उत्तमाधिकार्यविषयत्वेन ब्रह्मविद्यांशे विरोधेन च पाञ्चरात्राधिकारो भक्तियोगपर्यन्तमेव, न तु परमतात्पर्यविधया व्यभिचारिभक्तियोगसाध्यज्ञानयोगपर्यन्तमपि, इति पाञ्चरात्रस्य भक्तियोगपर्यन्तमात्रविषयस्य ज्ञानयोगनिषेधपरत्वं 'न हि निन्दान्यायेन' प्रतीयमानेन वस्तुतः, इति वेदान्तेन न विप्रतिषेधः॥

व्यवस्थितविषयत्वे तु पाञ्चरात्रवेदान्तयोर्न विरोधलेशोऽपि। इदमेवाभिप्रेत्य पाञ्चरात्रस्यांशतः प्रामाण्यमद्वैतिनामपि संमतम्। अयं तु न्यायः

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।"

इति वचने मध्यमणिन्यायेन निर्दिष्टवेदाविरुद्धांशे पाशुपतप्रामाण्येऽप्यनुसन्धेयः, इति यदि पाञ्चरात्रं प्रमाणम्, तर्हि पाशुपतमपि प्रमाणमविरुद्धांशमादाय, अंशतो विरोधेन पाशुपताप्रामाण्यं पाञ्चरात्रेऽपि समानम्। किं बहुना? कर्मोपासनापराणामुपासनांशे, तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारान्तरङ्गोपायतया तावन्मात्रे प्रामाण्येऽप्युपास्यसविशेषरूपे, तद्विविशेषांशे च महावाक्यविरोधित्वात् तदंशे न निर्विशेषब्रह्मणीव प्रामाण्यम्॥ "अनेनैव न्यायेन पाञ्चरात्रांशेऽप्रामाण्यवादः, वेदविप्रतिषेधो वा इदं च

यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः॥
न चेत् पुराणं संविद्यात् नैव स स्याद्विचक्षणः।

इति वचनप्रशंसितपुराणेऽपि सर्वत्र। वेदपूरकत्वं तु तत्तदधिकारानुगुणमुक्तिसोपानमार्गप्रदर्शनेन॥

"वेदार्थपूरकं ज्ञेयं पाञ्चरात्रमिति स्मृतम्।
इत्यप्येवमाशयमेव। अत्र—
अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते य उ विद्यायां रताः॥

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥"

इति मन्त्रौ परमतनिराकरणम्, स्वपक्षसाधनमुभयं तत्त्वज्ञानस्य साधनम्, इति परपक्षनिराकरण-स्वपक्षसाधनोभयावश्यकतापरौ व्याख्यायेते ।

स्वपक्षसमर्थन-परमतनिराकरणस्य न मन्त्रार्थत्वम् ।

तदिदं यदि भाष्यकृत्यनिरूपणपरम्, तर्हि "आक्षिप्य भाषणाद् भाष्यमि"ति भाष्यलक्षणसिद्धत्वादस्यन्यार्थमन्त्रारूढतयाऽप्युपपादनमप्रयोजनम्, अनवसरं च ।

ब्रह्ममीमांसाऽपि विषय-विशय-पूर्वोत्तरपक्षविधया तत्तद्वाक्यार्थनिर्णयपरा परपक्षनिराकरण-स्वपक्षसाधनपुरस्कारेणैव मीमांसते, इति न सूत्र-भाष्यकारकर्तव्यमुद्बोधयितुमुक्तविधं विवरणमुक्तमन्त्रद्वयस्यात्र सावसरम् ॥

कर्मयोग-भक्तियोगोभयसापेक्षैव मुक्तिसाधनतत्त्वसाक्षात्कारावाप्तिः, मुक्त्यवाप्तिर्वेति खलूक्तमन्त्रद्वयार्थः ॥

यदि परसमयनिरासे पाञ्चरात्रागमाप्रामाण्यानौचित्यम्,
तर्हि शाक्तमतनिरासस्याप्यनौचित्यम् ॥

यत्तु—द्वैतिनः श्रीभाष्यकाराणामत्र पाञ्चरात्रप्रामाण्यसमर्थनम्, परसमयनिरासपरप्रकरणविरुद्धत्वाद् न साम्प्रतम्, प्रकरणविरुद्धत्वादिति— वदन्ति तदिदं 'साङ्ख्यं योगः" इति वचनानिर्दिष्टस्य शाक्तमतस्यात्र निरासस्याप्यप्राप्तकालत्वाद् द्वैतिनां विवरणमपि प्रकृतप्रकरणाननुगुणमिति स्वस्यैव व्याघातकम् ॥

ततश्च यदि परसमयनिरास एवात्र युक्तः, तर्हि "साङ्ख्यं योगः' इति वचनावशोषितपाञ्चरात्रनिरासपरमधिकरणं योज्यताम्, न तु शाक्तमतनिराकरणतया । परसमयाः सर्वेऽप्यत्रैव निरसनीया इत्यभिप्राये तु द्वैतिनां दृष्ट्याऽद्वैतसमयोऽपि परसमयः, इति कुतो वा तन्निरासपरतया किमप्यधिकरणं द्वैतिभिरपि न योजितम् ॥

पाञ्चरात्रागमानामद्वैतसिद्धान्तोपबृंहणत्वम् ।

वस्तुतस्तु—पाञ्चरात्रमप्यद्वैतसिद्धान्तमेवोपबृंहयति । तद्यथा—

पांचरात्रस्याद्वैतपरत्वे पाद्मसंहितावचनानि—

पाञ्चरात्रे पाद्मसंहितायां षष्ठाध्याये ब्रह्मस्वरूपनिरूपणे—

"यथा पुष्करपर्णेषु स्वच्छमम्भः प्रतिष्ठितम् ।
अन्तर्बहिरभिव्याप्य तिष्ठत्येको महार्णवे ॥
निमग्नस्येव कुम्भस्य वहिरन्तरपां स्थितिः ।
पर-क्षेत्रज्ञयोरैक्यं आत्मनश्श्रुतिचोदितम् ॥
क्षेत्रज्ञस्यास्य बाहुल्यं देहभेदात् प्रतीयते ।
एकस्यैव हि विम्बस्य दर्पणेषु यथा भिदा ।
भूतपञ्चकसंघातं क्षेत्रं तत्र व्यवस्थितः ॥"
"यथा घटस्थमाकाशं नीयमाने घटे मतिः ।
यातीति वस्तुतो नैव भेदोऽस्ति पर-जीवयोः ॥"
"मुक्तात्मनश्च भवतो भेदः कः पुरुषोत्तम ।
एतदाचक्ष्व भगवन्नातिगुह्यं यदि प्रभो ॥"

तत्रैवाष्टमाध्याये ब्रह्मनारायणसंवादे भगवान्—

"भेदेन चाप्यभेदेन मिश्रेण च चतुर्मुख ।
त्रिधैव मुक्तिरुदिता भेदे कैङ्कर्यलक्षणा ॥
मुक्तिर्यथेह लोकेषु परिचर्यापरा नराः ।
देवस्य तद्वद्देवैते वैकुण्ठे परमात्मनः ॥
लोके तस्य समीपस्था मुक्तात्मानस्समाहिताः ।
वसन्ति किङ्करास्सन्तः तत्प्रसादपरास्सदा ॥
अभेदे मुक्तिरत्यन्तमैक्यं स्यात् पर-जीवयोः ।
आत्मनो भावना चैक्यं सोऽहमित्येवमात्मिका ॥
सिद्धान्ते मिश्ररूपे तु भेदे स्थित्वाऽर्चनादिभिः ।
तोषयित्वा परं देवं ततो मुक्तस्समाहितः ॥
विज्ञानेनैकतानेन परमात्मनि चिद्घने ।
ऐक्यं प्राप्नोति सा मुक्तिरुक्ता सायुज्यलक्षणा ।
ऐश्वर्यमणिमाद्यष्टगुणावाप्तिः सुदुर्लभा ॥
मुक्तिर्वा परमानन्दप्राप्तिरूपा यदीप्सितम् ।
मुक्तिर्वास्त्येकतापत्तिर्जीवात्म-परमात्मनोः ।"

इति ॥

जयाख्यसंहितावचनान्यद्वैतपराणि ।

तथा जयाख्यसंहितायां तृतीये पृष्ठे—

"अनादि तदनन्तं च न सत्तन्नासदुच्यते ।

निर्गुणो गुणभोक्ता च सर्वस्यान्तर्बहिस्स्थितः ॥
सर्वगन्धरसैर्हीनं सर्वगन्धरसान्वितम् ।
एवं वेत्ति परं ब्रह्म ज्ञानेन परमेण च ।
यदा न जायते भूयः संसारेऽस्मिंस्तदा पुमान् ॥

अस्मिन् मायामये विश्वे व्यापी सर्वेश्वरः प्रभुः ।
सर्वदा विद्धयसक्तश्च यथाऽम्भः पुष्करच्छदे ॥
सर्वभृद्वैश्वरूप्याद्याप्यमोघत्वाच्च निर्गुणः ।
घटसंस्थं यथाकाशं नीयमानं विभाव्यते ॥
नाकाशं कुत्रचिद् याति नयनात्तु घटस्य च ।
ज्ञानं तदेव ज्ञेयं च वह्नेर्ज्वाला यथैव हि ॥
प्रमाणैरपरिच्छेद्यं यतस्संविन्मयं महत् ।
विभाति हृदयाकाशे येषां मायाविवर्जितम् ॥
एष नारायणो देवस्सर्वोपाधिविवर्जितः ।
भवातीतं परं ब्रह्म स्फटिकामलसन्निभम् ॥
सरित्संगाद्यथा तोयं संप्रविष्टं महोदधौ ।
अलक्ष्यश्चोदके भेदः परस्मिन् योगिनां तथा ।
ब्रह्माभिन्नात्ततो ज्ञानात् ब्रह्म संयुज्यते परम् ॥

अनादिवासनायुक्तो यो जीव इति कथ्यते ।
तस्य ब्रह्मसमापत्तिर्याऽपुनर्भाविता च सा ॥
यदिदं पश्यसि ब्रह्मन् मायया निर्मितं जगत् ।
कालादिबहुभिर्भेदैः भिन्नं नानास्वरूपकम् ॥"

इति ॥

अद्वैतपराण्यहिर्बुध्न्यीवचनानि ।

तथाऽहिर्बुध्न्यसंहितायां २२, २३, २४पृष्ठेषु—
"अनाद्यन्तं परं ब्रह्म यत्तदक्षरमव्ययम् ।
अनामरूपसंवेद्यम् अवाङ्मनसगोचरम् ॥
तस्य स्यामिति सङ्कल्पे भावतोऽभावतोऽपि वा ।
स्वातन्त्र्यानुयोज्येन रूपेण परिवर्तते ॥
सर्वं सुदर्शनायत्तं सुदर्शनमयं जगत् ।"
"सर्वद्वन्द्वविनिर्मुक्तं सर्वोपाधिविवर्जितम् ॥

तत्परं सर्वगं ब्रह्म सर्वकारणकारणम् ।
पूर्णं नित्योदितं व्यापि हेयोपादेयतोज्झितम् ॥
इदमीदृगियत्ताभिरपरिच्छेद्यमञ्जसा ॥"

इति ॥

नारदसंहितावचनान्यद्वैतपराणि ।

नारदसंहितायां २०७, २०६, २२० पृष्ठे वचनानि
"परमं परमानन्दं मायाबन्धनिकृन्तनम् ।
निर्लिप्तं निर्गुणं सारं वेदानां गोपनीयकम् ॥
एक एवेश्वरश्शश्वद्विश्वेषु निखिलेषु च ।
सर्वे तत्कर्मसिद्धाश्च मोहितास्तस्य मायया ॥
जीवः सत्प्रतिबिम्बश्च भोक्ता च सुख-दुःखयोः ।
प्रतीयते पुनस्तत्र प्रतिबिम्बा यथा रवेः ॥
यथैव शातकुम्भेषु निर्मलेषु जलेषु च ।
प्रत्येकं प्रतिबिम्बश्च दृश्य एव हि जीविनाम् ॥
पुनः प्रतीयते सूर्ये गतेषु च घटेषु च ।
एवं चन्द्रस्य बोद्धव्यं दर्पणे जीवने यथा ॥
तस्मान्नित्यं परं ब्रह्म स जीवो नित्य एव सः ।

इति ॥

अद्वैतपराणि ब्रह्मसंहितावचनानि ।

तथा ब्रह्मसंहितायां द्वाविंशे पृष्ठे वचनानि—
"द्वैतं नास्तीति बोधेन मनसो द्वैतनाशनम् ।
एतदन्तो हि संसारः ब्रह्मन्नेवं विचारय ॥
सगुणोपासनं तावत्साधनं निर्गुणस्य तु ।
ब्रह्मविद्भवति ब्रह्म इत्येषा च परा श्रुतिः ॥"

इति ॥

अद्वैतपराणि विष्णुसंहितावचनानि ।

इति विष्णुसंहितायां द्वाविंशे पृष्ठे वचनानि—
"दर्पणानां बहुत्वे तु दृश्यन्ते नैकधा यथा ।
तद्वद्बहुत्वं मन्यन्ते विष्णोस्तस्याल्पचेतसः ॥
यथाम्भसीन्दुबिम्बानि प्रतिशब्दाश्च नैकधा ।

तद्वद्बहुत्वं मन्यन्ते विष्णोस्तस्याल्पचेतसः ॥"
"एकोऽप्यात्मा बहुष्वेवमित्याहुस्तत्त्वदर्शिनः ।
स ह्याऽत्मान्तरात्मा च परमात्मा च स स्मृतः ॥
आत्मानमन्तराऽऽत्मानं परमात्मानमित्यपि ।
तस्य तुर्यं परं रूपं यः पश्यति स एव सः ॥"

इति ॥

न केवलमिदम्, किन्तु मन्वादिस्मृति-धर्मसूत्र-भगवद्गीता-व्याकरण-न्याय-मीमांसाऽध्यात्मरामायणानन्दरामायण-रामचरितमानस-महाभारत-शिवरहस्य-श्रीमद्भागवत-विष्णुपुराण-देवीभागवतेतरवैष्णवपुराण-शिवपुराण-वैखानस-शिवागम-शाक्ततन्त्र-विष्णु-शिव-ललितादिसहस्रनामालङ्कारशास्त्र-ब्रह्मसूत्र-माण्डूक्यादिबहुतरोपनिषदश्चाद्वैतमेव परमतत्त्वमिति प्रतिपादयन्तीति तत्तत्पण्डितप्रवराणामद्वैताक्षरमालिकायां निपुणतरं परीक्ष्य निर्णीतमप्यत्रानुसन्धानमर्हतीत्यलमियतैव साम्प्रतम् ॥

॥ इति पाञ्चरात्राधिकरणम् ॥

## ॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥

—: ❀ :—

ॐ

## ॥ अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

### ॥ पृथगुपदेशाधिकरणम् ॥

#### ॥ पृथगुपदेशात् ॥

तत्र द्वितीयाध्यायतृतीयपादे "न वियदश्रुतेरि"त्यादिनात्मा "श्रुतेर्नित्यत्वाच्च ताभ्य" इत्यन्तमुत्पत्तिपरवाक्यानि कार्य-कारणभावानुबन्धीन्यविरुद्धानि व्याख्याय "ज्ञोऽत एवे"त्यादिना—"सूची-कटाहन्यायेनाल्पमधिभूतविचारं समाप्य तत आपादसमाप्तिं बहुलो जीवविचारः क्रियत इति हि द्वैतिनां मर्यादा ॥

अतत्त्वमसीति वाक्यार्थायोगः।

अत्र "अतत्त्वमसी"ति जीवे ब्रह्मभेदः किमनेन साध्यते, उत ब्रह्मणि जीवभेदः। तत्र त्वम्पदार्थस्योद्देश्यत्वात् प्रथम एव कल्पः श्रुत्या तात्पर्येणोपदिश्यत इति वक्तव्यम्। स तु भेदप्रत्यक्षेऽधिकरणप्रत्यक्षस्यैव कारणत्वाद् लोकसिद्धः, इति तस्य तत्रासन्देहात् यथाश्रुतवाक्ययोजनं स्वरसं परित्यज्य क्लिष्टकल्पनयोपदेशो निष्प्रयोजनः। अज्ञाते हि शास्त्रमर्थवत्। द्वितीयं कल्पं तत्रासिः खण्डयति ॥

मतद्वयाभिप्रेतपादार्थविवेकः।

अत्र द्वितीयाध्यायतृतीयपादे वियदाद्युत्पत्त्यनुत्पत्तिश्रुत्योः, जीवोत्पत्त्यनुत्पत्ति-तदणुत्व-विभुत्व-तत्कर्तृत्वाकर्तृत्वश्रुतीनाम्, तस्य स्वतःकर्तृत्व-परापेक्षकर्तृत्वश्रुत्योः, तज्ज्ञानरूपत्व-ज्ञातृत्वश्रुत्योः तस्य परमात्मभेदाभेदश्रुत्योश्चाविरोधश्चिन्त्यते, इत्यधिभूतम्, अध्यात्मं च श्रुतीनामविरोधोऽद्वैतमतेऽपि मीमांस्यते, द्वैतमतेऽपीति प्रायेणैक्यमेव। विशेषस्तु तत्राधिदैवपरमात्मविषयोत्पत्तिविरोधोऽपि चिन्त्यते। तत्र परमात्मोत्पत्तौ यद्यपि न श्रुतिविरोधः; तथापि प्रसङ्गतस्तदनुत्पत्त्युपसंहारमात्रमुभयत्र समानम् ॥

विशेषस्तु—अंशत्वं जीवानामिवावताराणामप्येकरूपम्, अथवा विलक्षणमिति चिन्ता द्वैतसिद्धान्तेऽधिका। तत्राकाश-वायु-प्रकृति-कालानां

नित्यानामनित्यानां च स्वीकारो द्वैतमते, व्याकृताव्याकृताकाश-वाय्वादीनां सर्वेषामुत्पत्तिः स्वीक्रियतेऽद्वैतमते। तत्र व्याकृतानामेवोत्पत्तिर्द्वैतमते, प्रकृति-कालयोरनादित्वे न विप्रतिपत्तिः; तथाप्यनाद्योरपि तयोर्बाधितत्वेन मिथ्यात्वादद्वितीयत्वं ब्रह्मणोऽद्वैतमते, द्वैतमते तु तैः परमात्मनः सदा सद्वितीयत्वम् ॥

उत्पत्तिस्तूभयत्र नाभूत्वा भवनम्, किन्तु प्रकृतिपरिणामत्वात्—सतामेव कार्याणामभिव्यक्तिमात्रं तत्तदवस्थाविशेषेणेति समानम्। तत्राद्वैतमते सर्वस्य केवलब्रह्मविवर्तत्वम्। सदस्य, सा द्वैलक्षण्यात्। तत्र योत्पत्ति सर्वस्य ब्रह्मेतर नाभूत्वा भवनम्, न वा सत एवाभिव्यक्तिः, किन्तु ब्रह्मणोऽधिष्ठानस्यतत्तदारोप्यात्मना भानमात्रम्। तत्र वायुशब्दस्य मुख्यप्राणपरत्वादिरूपेण विवरणम्, तेजोऽबन्नादीनामपि परमात्मकार्यत्वम्, न त्वाकाशादिकार्यत्वमिति तु विशेषो द्वैतमते, अद्वैतसिद्धान्ते तु वाय्वादीनामाकाशकार्यत्वमप्याकाशोपहितब्रह्मकार्यत्वेनैवेत्युभयकार्यत्वस्वीकारः ॥

द्वैताद्वैतविप्रतिपन्ना विषयाः।

अत्र सूत्रभाष्यानुव्याख्यानव्याख्यानमिषेण न्यायसुधाऽद्वैतवादं विशेषतो निरस्यति—"पृथगुपदेशादि"त्यत्र। यत्र जीव-ब्रह्मभेदस्यैवौपनिषदत्वम्, न तु तदभेदस्य। तयोरभेदस्तु ज्ञानानन्दादिगुणसाम्याद् गौणत्वेन, इति भेदनिवृत्त्युपलक्षितस्वरूपमात्रे वेदान्तानां तात्पर्यमिति द्वैतसिद्धान्तसमर्थनप्रसङ्गेन विज्ञापनीयेषु विषयेषु प्रकृतपादसम्बद्धेषु विप्रतिपन्नेषु सुधासमालोचितेषु प्रथमो विषयः "पृथगुपदेशात्" इति सूत्रभाष्यानुव्याख्यानव्याख्यानानां विमर्शनम् ॥

पृथगुपदेशसूत्रार्थो द्वैताभिमतः।

तत्रेदं भाष्यम्—

"तत्त्वमसि" "द्वा सुपर्णा" "नित्यो नित्याना"मिति भेदाभेदश्रुत्योर्विरोधपरिहारार्थं सूत्रम्—"पृथगुपदेशात्" इति। तत्र भेदो मुख्यः। "भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परो जीवसंघो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्" इति श्रुतेः। अभेदश्रुतयस्तु-तद्गुणसारत्वाद् गौणतया व्यपदेशात् सार्थकाः, ज्ञानानन्दादिब्रह्मगुणानां सदृशानां मुक्तजीवसाधारणत्वेन सादृश्यादुपपद्यत इति यावत्—इति ॥

जीव-ब्रह्मभेदस्यैवोपनिषदत्वमिति द्वैतवादः ।

अत्रानुव्याख्यानम्—

एवं स्थितेऽपि जीवैक्यं केचिदाहुः परात्मना ।
न तद् युक्तं यतो विष्णुः पृथगेवाभिधीयते ॥
प्रज्ञानेत्रोऽलोक इति मुक्तौ भेदोऽभिधीयते ।
एतमानन्दमित्यन्या परमं साम्यमित्यपि ॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥
उपसंपद्यते ज्योतिः स्वरूपेणाभिपद्यते ।

इत्यादिना मुक्तौ जीव-ब्रह्मणोर्भेदं साधयत् भाष्यार्थं सम्यगुपपादयति ॥

जीव-ब्रह्मभेदाभेदश्च तयोर्विषयभेदेनाविरोध इत्यद्वैतम् ।

तत्र संसारिणो विशिष्टस्य जीवस्य परमात्मना भेदे न विप्रतिपत्तिः, किन्तु मुक्तात्मनो ब्रह्मणाभेद एव। तत्र यद्यपि मुक्तात्माऽप्यहमर्थोऽहंरूपेणैव यदि मुक्तावस्ति, प्रकाशते च, यदि च ब्रह्मापि सविशेषमेव वेदान्तमुख्यतात्पर्यविषयः, तर्हि तयोरात्यन्तिकभेदे नाद्वैतिनामपि विसंवादः। अद्वैताभिमतमुख्यजीवेश्वररूपं तु न जीवत्वेश्वरत्वविशिष्टं स्वरूपम्, किन्तु जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रम्। न च तयोर्भेदे किमपि प्रमाणमस्ति। इदं जीवात्म-परमात्मनां स्वरूपमभिप्रेत्यैव—"तत्त्वमसि" "अहं ब्रह्मास्मि" "प्रज्ञानं ब्रह्मे"त्यादीनि वाक्यानि, येषु तत्तदुपाधिपरित्यागेन तत्तदुपलक्षितस्वरूपैक्यमेवोपक्रमादितात्पर्यग्राहकप्रमाणैरवधार्यते ॥

अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम्।
ईदृग् मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥

इत्यादयोऽप्यत एव व्याख्याताः ॥

न चासां श्रुतीनाम्, स्मृतीनां वा गौणार्थता युक्ता; अन्यथा ह्युपक्रमादितात्पर्यग्राहकप्रमाणविरोध आपद्येत। न च ततोऽपि बलवत् किमपि प्रमाणमस्ति, येन तस्य बाधेनाभेदवाक्यानां गौणार्थतैव युज्येत। तथाच प्रयोगः—भेदः, मिथ्या, भेदत्वात्, चन्द्रभेदवत्—इति। न च परममुक्तौ भेदे किमपि प्रमाणम्, प्रत्युत—"यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं

पश्येत्" इति तदा परमात्मातिरिक्तं चेतनम्, अचेतनस्वरूपं वा किमपि नास्तीति बोधयन्ती परममुक्तौ भेदवादं व्यक्तमेव वारयति। अत्र—

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति"॥
"आविमुक्तेस्तु भेदः स्याद् जीवस्य च परस्य च।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः॥"

इति श्रुत्यादीन्यप्यनुसन्धेयानि। अतो जीव-ब्रह्मैक्यमेव वेदान्तार्थ इत्यद्वैतसिद्धान्तः। अत्रेयं न्यायसुधा—

न जीवस्य परमात्मनैक्यं युक्तम्, किन्तु पृथगेव जीवः परमात्मना; "भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परो जीव संघो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धाद् मोक्षं तत एवाभिवाञ्छेत्" इति कौशिकश्रुतेः। न चास्या श्रुतेरविद्याकल्पितभेदपरत्वम्, "प्रज्ञानेत्रोऽलोकः" इति मुक्तौ भेदोऽभिधीयते।

एतमानन्दमित्यन्या परमं साम्यमित्यपि॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
उपसंपद्यते ज्योतिः स्वरूपेणाभिपद्यते॥
तत्र पर्येति जक्षँश्च क्रीडन्नपि सदा सुखी।
शाखां शाखां महानद्यः संयान्ति परितस्रवाः॥
धानापूपा मांसकामाः सदापायसकर्दमाः।
यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः॥
ईजिरे क्रतुभिः श्रेष्ठैस्तदक्षरमुपासते।
प्रविशन्ति परं मोक्षं मुक्तास्तेनैव भोगिनः॥
निर्गच्छन्ति यथा कामं परेशेनैव चोदिताः।
भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा॥
कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम्।
स संगत्य पुनः काले कालेनेश्वरमूर्तिना॥
जाते गुणव्यतिकरे यथापूर्वं प्रजायते।
ऋचां त्वः पोषमास्ते च परेण प्रेरितः पुनः॥
यत्कामस्तत् सृजत्यद्वैतात्मना तत् सृजत्यपि।
सहैव ब्रह्मणा कामान् भुङ्क्ते निस्तीर्णतद्गुणः॥
दुःखादींश्च परित्यज्य जगद्व्यापारवर्जितः।

भुङ्क्ते भोगान् सदैवोच्चानित्याद्यागममानतः ।"

इति श्रुति-स्मृतिभिर्मुक्तावस्थायामपि जीवानां परमात्मना भेदस्यावगमेन तस्य पारमार्थिकत्वावगमात् ॥

तत्र प्रज्ञानेत्रपदे प्रज्ञापदस्य ब्रह्मपरत्वाद् नेत्रपदस्य नेतव्यपरत्वात् मुक्तात्म-परमात्मनोर्नियम्य-नियामकभावः प्रतिपाद्यते । "तत्र प्रज्ञानेत्रोऽलोकः" इत्यत्रालोक इत्येव पदच्छेदः, न तु लोक इति, येन भुवनदेहरूपस्य लोकस्य प्रागेव ब्रह्मनेतृकत्वेन पुनरुक्तिः स्यात् । न च नेतृ-नेतव्ययोरभेदः संभवति ॥

गीतावचनादीनामवान्तरमुक्तिपरत्वायोगः ।

न चावान्तरमुक्तिविषयाणि गीतादिवचनानि; तत्र लोकातीतत्वायोगात् । देहेन्द्रियादिवैकल्यं खल्वलोकत्वम् । परममुक्तौ त्वनुवर्तमानो भेदो नाविद्याकल्पितो भवितुमर्हति; अतिप्रसङ्गात् । भेदश्रुतीनां बहुत्वादपि नान्यथा नयनं युक्तम् । एताश्चानुव्याख्यानसंगृहीता बहवः । इदञ्चोपलक्षणमपरासामपि भेदपराणामसंख्येयानाम् ॥

तत्रैतमानन्दमयमिति मुक्तौ परमात्मसामीप्यमभिधीयते । न चेयमप्यवान्तरमुक्तिः; "अस्माल्लोकात् प्रेत्ये"ति विदेहत्ववर्णनात् । "निरञ्जनः परमं साम्यमुपैती"त्यपि पुण्य-पापे विधूय परमसाम्याम्नानात् परममुक्तिपरा । तच्च साम्यमेवाभिधत्ते, न त्वभेदम् । परममिति तत्र स्वरूपकथनम्, इति गीतायां "मम साधर्म्यमागता," इति परमविशेषितत्त्वं साधर्म्यस्याकिञ्चित्करम् । साम्यञ्च तत्र भोगमात्रसाम्यादिरूपं जगद्व्यापारवर्जम्, इति बहूनि प्रमाणानि ब्रह्ममीमांसातुरीयाध्यायतुरीयपादसूत्रनिर्णीतानि गमयन्ति । न च सूत्राणामपि गौणमुक्तिनिर्णायकत्वम्; तस्या अनिर्णेयत्वात्, अप्रयोजनत्वाच्च तस्य, अन्यथाऽपवर्गादिपुरुषार्थविचारोऽपि न कथं तत्र ॥

"शाखां शाखामि"ति महाभारतवाक्यमविहाय भेदावभासं मुक्तिं प्रतिपादयति, यत्र मध्ये मध्ये भोगविशेषाः प्रतिपाद्यन्ते । न चात्यन्ताभेद इदमुपपद्यते । इदन्तु परब्रह्मोपासनस्यैव फलम्, इति सूचयितुमेवात्रेजिरे पदम् । अतो नास्यावान्तरमुक्तिपरत्वम् ॥

तत्र भेदस्य न प्रतीतिमात्रम्, किन्तु सत्यत्वमेव । अत एव सत्ये विष्णुलोके तेषां सर्वमुक्ताधिपतित्ववचनमुपपद्यते ॥

अत्र—

ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्करीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां विममीत उ त्वः ॥

इति ब्रह्मपदेन मुक्तात्मानं गृहीत्वा मुक्तानां परमात्माराधनमैक्यमत्येन होत्रादिद्वारा समुच्चित्य प्रतिपादयति। इदञ्च न मुक्तानां परस्परैक्ये, परमात्मनैक्ये चोपपद्यते। अत्र ब्रह्मपदस्य प्रतिपाद्यं सम्बन्ध आवश्यकः; अन्यथा तुरीयपादे त्वपदवैयर्थ्यम्। अतो मुक्तानां भेदोऽप्यत्र विशदः ॥

"सोऽश्नुते सर्वान् कामान् सहे"ति विशदं ब्रह्मणा सह सर्वकामभोक्तृत्वं प्रतिपादयत् मुक्तौ जीव-ब्रह्मभेदे ब्रह्मास्त्रमिवाकुण्ठितं प्रमाणम्। युगपद् ब्रह्मभावमापद्य सर्वकामानुभव इति तु न श्रौताक्षरानुगुणम्—इति विशदयति ॥

ब्रह्माद्वितीयत्वम्, जीव-ब्रह्मभेदस्य-
विशिष्टजीवेश्वरभेदाभिप्रायत्वं च ।

तत्र जीवेश्वरयोरभेदः, जीवस्य संसारितायाम्, किं बहुना? यावज्जीवन्मुक्तिदशम् यावद्धिरण्यगर्भभावादिकम्, यावज्जगद्व्यापारम्, यावद्भोगमात्रसाम्यम्, यावदीश्वरत्वं न श्रुतिसम्मतः, इति सद्विद्याया आद्यन्तं पर्यालोचनेनावधार्यते। जीवस्य जीवत्वमीश्वरस्येश्वरत्वं चौपाधिकं न स्वरूपप्रयुक्तमित्यद्वैतिनो मन्यन्ते, इति "तत्त्वमसी"त्यभेदोऽनुपहितजीवेश्वरस्वरूपाभेदपरः, न गौणः; मुख्याभेदे बाधकाभावात्। तत्रैव प्रकरणस्य स्वारस्याच्चेति तत्र तत्रात्रैव व्यक्तम् ॥

अत्र द्वैतिनां जीव-ब्रह्मभेदे प्रमाणतयोपन्यस्तानि बहूनि वचनानि नाद्वैताभिमतमुक्तात्मपरमात्मभेदनिरूपणपराणि, इति द्वैतिनोऽपि संमन्यन्ते। सर्वाणीमानि यावद् ब्रह्मणा सह मुक्तिः, तावत्पर्यन्तम्, प्राकृतप्रलयपर्यन्तं वा ब्रह्मलोके ब्रह्मसमानभोगानवान्तरमुक्तानामेव गोचरयन्ति । ब्रह्ममीमांसातुरीयाध्यायः "संकल्पादेव तु तच्छ्रुतेरि"त्यारभ्य—"अनावृत्तिः शब्दादि"त्यनावृत्तिसूत्रपर्यन्तं गौणमुक्तपरमिति

तत्र तत्र विशदम् , इति "पृथगुपदेशादि"ति पृथगधिकरणं मत्वा जीव-ब्रह्मभेद एवोक्तसूत्रस्य तात्पर्यमिति वादो न विकल्पसहः ॥

भाष्यानुव्याख्यानाभ्यां भेदमिथ्यात्वानुमाननिरासः ।

एतेन—

मिथ्यैव भेदो विमतो भेदत्वाच्चन्द्रभेदवत् ।
इति चेत् साध्यधर्मोऽयं सन्नसन् वा न वोभयम् ॥
यदि सन्नपसिद्धान्तः स एवासन्नितीरिते ।
नोभयं चेद् न सिद्धं तदिति मानस्य दूषणम् ॥
न च मानान्तरेणैतच्छक्यं साधयितुं क्वचित् ।
अनुमानेन चेत् सैव ह्यनवस्था भविष्यति ॥
न चागमस्तदर्थोऽस्ति नासदासीन्न तद् वदेत् ।
परिशेषादनिर्वाच्यं यदि सिद्ध्येत् परात्मनः ॥
अनिर्वाच्यत्वमेव स्यात् परिशिष्टो ह्यसौ तदा ।
न चान्य आगमस्तत्र सदसत्प्रतियोगिनि ॥

इतिव्याख्यातम् ॥

अयमाशयः—जीवब्रह्मभेदः, किं वहुना? सर्वोऽपि भेदः, मिथ्या, भेदत्वादित्यद्वैतिनामनुमानम् । तत्र जीव-ब्रह्मणोर्भेदस्यौपाधिक-सम्बन्धप्रयुक्तत्वादखण्डाकारसाक्षात्कारेणोपाधि-तत्सम्बन्धयोरपि नाशस्य सिद्धावनुमानपर्यवसानं तत्त्वमस्यादिवाक्यार्थ इति तदाशयः ॥

तत्र मिथ्यात्वं यदि सत् ब्रह्मस्वरूपं वा, तदा हि ब्रह्मणो भावरूपस्याभावरूपत्वमभावत्वधर्ममन्तरा न भवति, इति तस्य निर्विशेषत्वं भज्येत । न च मिथ्यात्वमसत् ; अपसिद्धान्तात् । उभयं तु विरोधादेव निरस्तम् , इति परिशेषात् सदसद्विलक्षणत्वमनिर्वचनीयत्वं मिथ्यात्वमिति वक्तव्यम् । न च तदपि साध्यतामर्हति; अत्यन्तमसिद्धत्वात् । मिथ्यात्वस्य सत्त्वेऽपसिद्धान्तः, अनिर्वचनीयत्वे साध्याप्रसिद्धिरिति तु निष्कर्षः ॥

एतेन—भेदत्वादिति हेतुरपि—व्याख्यातः । सोऽपि यदि सन् , तर्ह्यपसिद्धान्तः ; यद्यसन् , तदाऽपि स एव दोषः ; तस्याप्यनिर्वचनीयत्वं नैतावताऽपि सिद्धम् ॥

इदमुपलक्षणम्–जीवः, ब्रह्मणा न भिद्यते, आत्मत्वादित्यनुमानान्तरदूषणस्यापि; तत्राप्यैक्याविकल्पे साध्ये, हेतौ च कस्यापि कल्पस्य पूर्वोक्तरीत्या दुर्निरूपत्वात्। अयमेव न्यायः पक्षेऽपि भेदे ॥

तत्रानिर्वाच्यत्वस्यानुमानान्तरेण, आगमादिना वा साधनमपि न संभवति। तथाहि—तत्र साध्यप्रसिद्धिं शुक्तिरूप्यादावनुमानेन प्रसाध्य यदि साधकानुमानमभिप्रेयते, साध्यप्रसिद्धिस्तु—शुक्तिरूप्यम्, अनिवर्चनीयम्, साध्यत्वादिति, तर्हि अनवस्था, अन्योन्याश्रयादिकं वा दूषणमपरिहार्यम् ॥

भेदानिर्वचनीयत्वे "नासदासीदि"त्यादीनां प्रामाण्यम्।

अनिवर्चनीयत्वसाधक आगमस्तु न कोऽपि। "नासदासीद् नो सदासीदि"ति तु नानिर्वचनीयेऽर्थे प्रमाणम्। प्रलये सत्, असद्वा नास्तीति सदसतोरभाव एव तेन वाक्येन बोध्यते, न तु किमपि सदसद्विलक्षणं तत्रास्तीति, इति नानिवर्चनीयार्थसत्त्व इदं वाक्यं प्रमाणम् ॥

यद्यप्यत्र सदसदभावः प्रतिपाद्यते, तेन च तत्र यदासीत् तमो नाम=अज्ञानमिति यावत्, तस्यानिवर्चनीयत्वमर्थसिद्धम्, तत्कार्यत्वात्, तत्प्रयुक्तत्वाद्वा ब्रह्मभिन्नानामप्यनिर्वचनीयत्वमर्थात् लभ्यते, कस्याप्यभावे तु न पुनः सृष्ट्युपपत्तिः। अत एव वाक्यशेषः—"तदानीं तम आसीदि"ति इति नानिवर्चनीयेऽर्थे नागमोऽपि प्रमाणमिति वक्तुं शक्यम्; तथापि यदि परिशेषात् किमपि तदानीं वक्तव्यम्, तच्च जगदेवानिवर्चनीयमिति साध्यते, तर्हि परिशिष्यमाणत्वसामान्यात् ब्रह्माप्यनिवर्चनीयं श्रुतिवशादापद्येत ॥

वस्तुतस्तु–नात्र सदसच्छब्दौ प्रतीयमानार्थपरौ, किन्तु प्रत्यक्षाप्रत्यक्षमहाभूतमात्रपरौ ॥

"न सत् तन्नासदुच्यते" इति तत्रैव तयोः पदयोः प्रयोगात्, अन्यथा तत्र सतो मुख्यस्य ब्रह्मण एव तत्राभावबोधनात् ब्रह्मण एवानिर्वाच्यत्वमापद्येत, इति सदसत्प्रतिषेधसामर्थ्यात् प्रलयेऽवशेषितं ब्रह्मैवानिवर्चनीयं स्यात्, न तु जगदिति तु निष्कर्षः ॥

तत्र यद्यपि "तम आसीत्" इति वाक्यशेषात् तम एव बुद्धौ सन्निहितम्; तथापि "आनीदवातमि"ति ब्रह्मणोऽपि संनिधानात् तस्याप्यनिर्वचनीयत्वमापद्येत ॥

"सत्यं ज्ञानमि"ति वाक्येन ब्रह्मवत् "तम आसीदि"ति तमसोऽपि सत्त्वापत्त्या ब्रह्ममात्रसत्यता व्याहन्येत। सांव्यवहारिकसत्यत्वमादायोपपत्तिपरत्वे तु "तम आसीदि"ति वाक्यस्य, ब्रह्मणोऽपि तथात्वापत्तिः ॥

वस्तुतस्तु—"तम आसीदि"ति वाक्यशेषोपस्थापितस्य तमस एवानिर्वाच्यत्वविवक्षायां "तदानीं तम आसीदि"ति वाक्यशेषे तदानींपदं वितथम्; तमसः सदाऽनिर्वचनीयत्वस्य विवक्षणात्, तदानीमेव हि सत्त्वमनिर्वाच्यतां विहन्ति। असन्नासीदिति प्रलयेऽसन्निषेधस्त्वप्रसक्तप्रतिषेधः ॥

"न तं विदाथे"त्याद्यागमानां न भेदमिथ्यात्वपरत्वम्।

"न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" "त इमे सत्याः कामाः अनृतापिधानाः" इत्याद्यागमस्तु यद्यप्यनृतपदघटितः; तथापि न तत्रानृतपदं मिथ्यार्थपरम्, किन्त्वन्यपरमिति व्यक्तमन्यत्र। सर्वथा तु सदसद्विलक्षणत्वरूपानिवचनीयत्वे नोक्तागमोऽपि प्रमाणम्, इत्यनिर्वचनीयत्वं साध्यमप्रसिद्धम्, न वा प्रामाणिकम्—इति ॥

भेदमिथ्यात्वानुमानबाधनम्।

तत्र विमतो भेदः, मिथ्या, भेदत्वादित्यत्र भेदशब्देन जीव-ब्रह्मभेदः, घटादिब्रह्मभेदः भेदसामान्यं वा मिथ्यात्वेन सन्दिह्यमानं पक्षः, चन्द्रभेदस्तु दृष्टान्तः। तत्र दृष्टान्तः सदसद्विलक्षणः, इति दार्ष्टान्तिकेऽपि सदसद्वैलक्षण्यमेव साध्यम्, न तु सत्त्वमसत्त्वं वा, येनापसिद्धान्तः स्यात्। चन्द्र एकस्मिन् चन्द्रभेदोऽपि प्रत्यक्षो न सन्; बाध्यत्वात्, न वाऽसन्; सत्त्वेन प्रत्यक्षविषयत्वादिति सदसद्विलक्षणः। यथा च नासत्ख्यातिरुपपद्यते, प्रत्यक्षविरुद्धा च, तथा पूर्वमुपपादितम् ॥

"नासदासीदि"त्यस्य द्वैतमिथ्यात्वे तात्पर्यम्।

तत्र प्रमाणं तु "नासदासीत् नो सदासीत् तम आसीदि"ति श्रुतिः। तत्र

कार्यात्मनः सर्वप्रपञ्चस्य तमोरूपकारणात्मतैव प्रलयकाले, न तु स्वरूपतः सत्त्वम्, असत्त्वं वा, किन्तु सदसद्विलक्षणत्वं प्रतिपाद्यते। कार्यस्य सदसद्विलक्षणस्य कारणतमोरूपत्वं च परिणामि-परिणामयोः समसत्ताकत्वात् कारणस्यापि सदसद्वैलक्षण्यं ज्ञापयति, इति सोपादानस्य सर्वस्य कार्यस्य सदसद्विलक्षणत्व इदं श्रुतिः प्रमाणम्॥

अत्र यद्यपि प्रलये ब्रह्मापि वर्तते; तस्यापि तूपादानत्वम्; तथापि तदात्मत्वस्य तद्व्यतिरेकेणाभावरूपत्वात् मुक्ताविव प्रलये तद्भावः; अन्यथा पुनः सृष्ट्यनुपपत्तेः, इत्यविद्यात्मतैव तदा प्रपञ्चस्य। अत एवास्य प्राकृतप्रलय इति नाम, इति न ब्रह्मणोऽपि मिथ्यात्वापत्तिः॥

"अत्र—तदानीमासीदि"ति तमसः कालसम्बन्धमात्रं बोध्यते, न तु ब्रह्मण इवाबाध्यत्वं सत्त्वम्, इति तमसः सदसद्वैलक्षण्यानुपपत्तिः मुक्तावविद्याया इव तत्प्रयुक्तकालसम्बन्धादीनामपि बाधात् तमःशब्देन कारणस्य विवक्षणात् तदावृतं ब्रह्मापि यद्यपि तत्र वर्तते; तथापि न तस्य तदानीमेव सत्त्वम्, किन्तु कालत्रयेऽपि, इति सूचनार्थमेव "तदानीं तम आसीदि"ति तदानींपदमपि। अनिर्वचनीयस्य परमार्थतो बाध्यत्वेन कालत्रयेऽभावेऽपि यावद्ब्रह्मसाक्षात्कारमबाधात् व्यावहारिकं सत्त्वमस्तीति सूचनार्थमेव तदानींपदम्। न चैतावता सदसद्विलक्षणत्वव्याघातः॥

एतेन ब्रह्मणोऽपि मिथ्यात्वापत्तिरपि—परिहृतप्राया। अत्र यद्यपि तमःपदं तस्य सत्त्वम् तदानीमेव च प्रतिपादयति; तथापि कार्यस्य सदसद्विलक्षणत्वेन मिथ्यात्वम्, कारणस्य तदभिप्रेत्यैव। अत एव—

"त इमे सत्याः कामाः अनृतापिधानाः" "मृत्युनैवेदमावृतमासीदि"त्यादौ तमःशब्दोपात्तस्यैवानृतपदेन मृत्युपदेन चोल्लेखः। तेन चावरणस्य भावः, मिथ्यात्वम्, तस्यैवानर्थकारित्वं च ज्ञाप्यते, इति श्रुत्यन्तरैकवाक्यताऽपि। अनृतपदस्य यद्यपि कुत्रचन पुण्यकर्मणि, कुत्रचन कर्मसामान्ये, कुत्रचन सत्यार्थे च प्रयुज्यमानर्तशब्दघटितत्वं वर्तते, यथा—"ऋतं पिबन्तौ" "सत्यं चानृतञ्च समभवदि"त्यादौ; तथाप्यावरणस्वभावत्वाद् "अज्ञानेनावृतं ज्ञानम्" इत्यादावावरणशक्तेरविद्यायामेव स्मरणात्—

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः॥"

इति साक्षादज्ञाननाश्यत्वस्मरणानुपपत्त्या चाऽविद्यैवानृतपदार्थः॥

आनीदवातमिति श्रुते न ब्रह्ममिथ्यात्वेऽपि पर्यवसानम् ।

"आनीदवातमि"ति श्रुतिर्ब्रह्मणोऽपि सत्त्वप्रतिपादने प्रलयेऽनावृतस्य तस्य सत्तायां बहुतरश्रुतिविरोधात् पूर्वोक्तरीत्या तदानीं सत्त्वमात्रेणाविद्यासाम्याभावाच्च न ब्रह्मणोऽपि मिथ्यात्वपरा, इति नात्र काऽप्यनुपपत्तिः। अनृतत्वम्—सदसद्विलक्षणत्वं चेत्यनर्थान्तरमित्यपि—"नासदादि"ति श्रुत्याक्तवाक्यतयैवावगम्यते इति न किमपि छिन्नम् ॥

एतेन—शुक्तिरूप्यम्, न नाश्यम्, असत्त्वादिति प्रयोगः—परास्तः; असिद्धेः, अन्यथाऽसतो बाधायोगात् लौकिकप्रत्यक्षविरोधापत्तिः। बाधस्वरूपं तु कारणात्मनाऽप्यभावरूपमेव—यत्तु शुक्तिरजतादौ दृश्यते; ज्ञातस्यान्यथा सम्यग् ज्ञानलक्षणो बाधस्तु शुक्तावेव समन्वेति, न तु रजते। न च लौकिकानां शुक्तौ बाधव्यवहारो वर्तते। ज्ञान-विषयोभयबाध्यत्वानुपपत्ती रजतानिर्वचनीयत्व एवोपपद्यते। तत्र यद्यपि बाध्यत्वानुपपत्त्यैवासद्विलक्षणत्वमपि सिद्धम्; तथापि सत्त्वेन प्रत्यक्षत्वानुपपत्तिरभ्युच्चयमात्रम् ॥

अत एव सद्विलक्षणत्वमात्रमपि मिथ्येति प्रस्थानभेदोऽपि। तत्र यद्यपि वियदादौ शुक्तिरूप्यादाविव सत्त्वप्रतिक्षेपो न लौकिकप्रत्यक्षमूलार्थापत्त्या न भवति; तथापि श्रुतिमूलानुमानेन स साध्यते। आरोप्यं बाध्यते, नाधिष्ठानमिति व्याप्तेः शुक्तिरूप्यादौ दर्शनात्। "सदेवेदमि"तीदमात्मना ज्ञातस्य "एकमेवाद्वितीयमि"ति तद्विपरीतस्वरूपमात्रात्मना सम्यग् ज्ञानमत्रापि वर्तते, इति शुक्तिरजतादिस्थले शुक्तिमात्रसत्त्वबुद्धिवद् ब्रह्ममात्रसत्त्वबुद्धेरत्रापि श्रुत्याऽवगतत्वाद् बाधितत्त्वं सत्त्वेन प्रतीतस्यैव। अत एव सत्त्वेन प्रतीत्यर्हत्वेन, सत्तादात्म्येन वा लौकिकानां यावद्बाधं शुक्तिरूप्यादिवत् वियदादेरपि प्रतीतिः, इति शुक्तिरूप्यादिदृष्टान्तेन वियदादिमिथ्यात्वं सुस्थम्। न केवलं सद्विलक्षणत्वम्, किन्त्वसद्विलक्षणत्वमपि शुक्तिरूप्यादेः, वियदादेश्च; अन्यथा न सत्त्वेनापरोक्षप्रतीतिरुपपद्यते। न ह्यसत् सत्त्वेन प्रतीतिमर्हति; व्याघातात् ॥

अनिर्वचनीयाविद्यास्वीकारनियम-भेदमिथ्यात्वादि ।

ब्रह्म-जगतोर्लक्ष्य-लक्षणभावो लक्ष्य-लक्षणयोरत्यन्ताभेदे, अत्यन्तभेदे वा न सम्भवतीति, भेदनिर्वाहिकाऽविद्या श्रुतिसिद्धा स्वीकर्तव्या, अथवाऽप्रामाणिकस्वसम्प्रदायमात्रसिद्धः विशेषो वा स्वीकर्तव्यः। तत्राद्यः पक्ष

एव श्रेयान्; क्लृप्त्येनोपपत्तापूर्वस्य कल्पनायोगात्। न हीश्वरशक्तिं विहायाऽघटितघटनापटीयस्त्वमन्यत्रेश्वरशक्तेः स्वीकारो युक्तः। अद्वैतमते तु मायैवेश्वरशक्तिविशेष इति स्वीक्रियते, इति मायिकत्वमेव भेदस्य स्वीकर्तव्यम्। तच्च नैक्यविरोधि। जीवब्रह्मैक्यपराण्येव वाक्यानि तत्त्वावेदकानि "तत्त्वमसि" "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादीनि॥

तत्रैक्यं न द्वयोरभेदः, किन्तु भेदप्रयोजकोपाधिविरहमात्रम्। बन्धनिवृत्तिः, तदुपलक्षितसंविन्मात्रं वा। तत्र संविन्मात्रं यद्यपि स्वप्रकाशम्; तथाप्यनाद्यविद्यायोगात् तदुपहितमप्यनादिसिद्धम्, इति तदावरणनिवृत्त्यर्थं तद्विरोधिशास्त्रप्रमाणजन्यवृत्तिरपेक्ष्यते, इत्यावरणनिवृत्त्युपपत्त्यर्थमेव शास्त्रापेक्षा, न तु स्वरूपप्रकाशस्य सिद्ध्यर्थम्; अविद्यायां निवृत्तायां स्वस्वरूपस्यानावृतस्य स्वयं सिद्धत्वादित्यद्वैतसिद्ध्यादौ व्यक्तम्। भाष्यमपि—"अविद्यानिवृत्तिपरत्वात् शास्त्रस्य" तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः—इति॥

ऐक्यमभिन्नम्, भिन्नं वा, भिन्नाभिन्नं वेति विकल्पस्तु न विकल्पसहः; ऐक्यस्यानावृतसंविन्मात्रस्य तद्व्यतिरिक्तसर्वाभावेनेतरापेक्षभेदादिविकल्पनायोगात्॥

तत्राविद्योपहितं कारणम्, विद्योपहितं निर्विशेषम्; तदपि विद्ययाऽविद्यायाः, तत्प्रयुक्तानामन्येषामिव स्वस्या अपि निवृत्तेः, इति वृत्त्यनुपहितमशुद्धं वाऽऽवृतमेव प्रकाश्यते स्वप्रकाशमप्यविद्यानिरासद्वारा। तद्धि स्वयं स्वप्रकाशमपि तदविरोधिन्याऽविद्ययाऽप्रकाशमानमिव। प्रमाणजन्यज्ञानरूपविद्याऽविद्ययोरेव विरोधेन स्वप्रकाशसंविन्मात्राविद्ययोरविरोधात्। अत एवोक्तम्—

"अविद्या तच्चितोर्योगः षडस्माकमनादयः।"

इति, इति न शास्त्रवैयर्थ्यम्; तदावरणनिवर्तकज्ञानजनकत्वेन शास्त्रसार्थक्यात्, इति स्वप्रकाशचिद्रूपत्वम्, शास्त्रप्रतिपाद्यत्वं च न व्याहतम्॥

अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं हि स्वप्रकाशत्वम्। अत्रावेद्यत्वं फलाव्याप्यत्वरूपम्, न तु गौण-मुख्यसाधारणजन्यज्ञानाभिप्रायेण। निर्विशेषं हि ब्रह्माविद्यानिवृत्तिमात्रेणापरोक्षव्यवहारयोग्यं फलाव्याप्यत्वादवेद्यमपि, इति स्वप्रकाशत्वस्य, शास्त्रप्रतिपाद्यत्वस्य च कथं व्याघातः?

अविद्याया इव तत्प्रयुक्तभेदस्याप्यनिर्वचनीयत्वेन भेदभ्रमोपसंहारः ।

अनाद्यविद्याप्रयुक्तो हि भेदभ्रमः संविन्मात्रस्यावृतावस्थायामेव, नानावृतावस्थायाम्, इत्यैक्ये प्रकाशमाने न भेदभ्रमायोगः; आनन्दात्मनाऽप्रकाशमाने सच्चिदात्मना प्रकाशमाने च चैतन्य एव भेदभ्रमस्वीकारात्, इति भेदभ्रमनिराकरणेन शास्त्रसार्थक्यमखण्डाकारवृत्तिद्वारा न विरुध्यते । न च भेदभ्रमदशायामखण्डं तत्त्वं प्रकाशते, किन्त्वविद्याकल्पितसखण्डविशेषमात्रप्रकाशनेनाखण्डतत्त्वप्रतिपत्तिः; अबाधात् ॥

असतोऽपि प्रतीतिविषयत्वावश्यकतयाऽसत्ख्यात्युपपत्तिः ।

एतेन—

"प्रतीतिर्नासत इति वदन्नङ्गीकरोति ताम् ।
निषेधो ह्यप्रतीतस्य कथञ्चिद् नोपपद्यते ॥"

इति—व्याख्यातम् । अयं भावः—

असत् न प्रतीयत इति वदता हि निषेध्यासत्प्रतीतिरवश्यं स्वीकर्तव्या, अन्यथा हि निषेध एव नोपपद्यते । अतोऽसच्चेन्न प्रतीयतेत्यनेन न प्रतीतेर्निषेधः । न चानेन न प्रतीतेरसद्विषयकत्वनिषेधोऽपि; विना निषेध्यं निषेधप्रतीत्यनुपपत्तेः । तथा च—विमतः, असत्प्रतीतिमान् तत्सम्बन्धिनिषेधकर्तृत्वादित्यनुमानं सूचितं भवति, इति तत्प्रतीत्यनुपपत्तिरसद्विषयकत्वस्यैव प्रामाणिकत्वं स्थापयति—इति ॥

सत्त्वेन प्रतीत्यर्हस्यैव भ्रमे भानम्, नासतः ।

अयमत्राद्वैतसिद्धान्तः—"असच्चेन्न प्रतीयते"त्यत्र प्रतीयमानत्वं सत्त्वेन प्रतीतिविषयत्वमेव विवक्षितम् । तेन च सद्रूपत्व-सत्तादात्म्यान्यतरस्य सत्त्वेन प्रतीत्यर्हत्वव्याप्यत्वं विवक्ष्यते । असत्तु न सत्त्वेन प्रतीत्यर्हम्; व्याघातात्, इति न सद्रूपम्, न वा सत्तादात्म्यवत् । तत्र सद्रूपत्वं सत्यज्ञानादिस्वरूपमबाधितस्य, सर्वबाधकज्ञानाविषयस्य, सर्वाधिष्ठानस्य च ब्रह्मण एव । न चासत् तथा, इति न सद्रूपम्, इति सत्यनध्यस्तत्वात् न तत् सत्तादात्म्यवत्, इति यदि सत्त्वेन प्रतीत्यविषयत्वं शुक्तिरूप्यादेर्न स्यात्, तर्हि सत्तादात्म्यं तत्रोपपद्येत । न चैवमस्ति । अतो शुक्तिरूप्यमसद्विलक्षणम् ॥

इदमेवाभिप्रेत्य सदसद्विलक्षणत्वेऽसत्त्वं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपं विवक्ष्यते, न तु सत्त्वाभावोऽसत्त्वमिति व्यक्तीकृतं पूर्वम्। तथा च सत्त्वेन प्रतीतिरेव न प्रतीयेतेत्यनेनापाद्यते, न तु प्रतीतिमात्रमत्र-निषिध्यते, येन निषेधानुपपत्त्यैव प्रतीतिरपि साध्यते; अन्यथा व्याघातः स्यात्। असतोऽपि प्रतीतिर्विकल्पाख्या तु वर्तते एव। विपर्ययाख्यप्रतीतिस्तु तस्या न संभवति, इति सत्त्वेन प्रतीत्यनुपपत्त्या सत्तादात्म्यं विपर्यय-विषये स्वीकर्तव्यम्। तच्चासतो विपर्यये भाने नोपपद्यते। तथाच नात्रासतः प्रतीतिमात्रम्, प्रतीत्यविषयत्वं वा निषिध्यते, किन्तु सत्त्वेन न प्रतीयेते प्रतीतेः सत्तादात्म्यापन्नविषयकत्वस्य साधनेन विपर्ययस्य सद्विषयत्वं विकल्पाख्यप्रतीतित्वं वा शुक्तिरूप्यादिस्थले निषिध्यते, इति विपर्ययस्याप्यसद्विषयकत्वे तदतिरिक्तविकल्पाख्यप्रतीतेरपलापापत्तिः। शशशृङ्गमित्यादिनिरधिष्ठानज्ञानस्यापि भ्रमत्वमापद्येत, तद्विपर्ययस्याप्यधिष्ठानविषयकत्वापत्तिः, असत्त्वाविशेषात्। शुक्तिरूप्यमिव शशशृङ्गादिकमपि भासेत। रजतमात्रस्यासतः शशशृङ्गादेरिवाप्रसिद्धत्वात्, इदं रजतमित्येवं प्रतीतिनिर्वाहायोगश्च स्यात्॥

मिथ्यात्वं द्वैतिनः प्रति साध्यमसद्विलक्षणत्वमेव।

तेन च—जीवब्रह्मभेदः, मिथ्या, भेदत्वात्; चन्द्रभेदवदित्यनुमानं सुस्थम्; चन्द्रे चन्द्रभेदप्रत्ययस्य दोषसहकृताविद्याप्रयुक्तस्य विकल्पातिरिक्तस्यासद्विलक्षणभेदविषयकत्वात्। तत्र सद्विलक्षणात्वांशस्य प्रवृत्तिपर्यन्तत्वात् स्वरूपकथनार्थमनुवादमात्रम्, द्वैतिनां दृष्ट्या साध्यांशस्त्व-सद्विलक्षणत्वमेव॥

प्रत्यक्षविरुद्धैक्यप्रतीतिरप्रामाणम्।

एतेन—

"न चोपमा भवेत् तत्र प्रत्यक्षात् सत्त्वमेव तु।
शास्त्रगम्यपरेशानाद् भेदस्त्वात्मन ईयते॥"

इति-व्याख्यातम्। अयं भावः- वियदादौ, शुक्तिरूप्यादौ च प्रत्यक्षेणानुपलब्धत्वात् सत्त्वासत्त्वाभावाविरुद्धमनिर्वचनीयत्वं वक्तव्यम्। न चैतत् संभवति। तत्र सद् वियदित्यादिप्रत्ययेन वियदादौ सत्त्वस्यावगमाद् न सत्त्वप्रतिषेधः संभवति। शुक्तिर-

जतादौ तु तस्यासत्त्वं प्रतीयते । न चोभयत्रोभयाभावप्रतीतिर्लौकिकानाम् ॥

अतो न प्रत्यक्षग्राह्यमनिर्वचनीयत्वं दृष्टान्त-दार्ष्टान्तिकयोः, इति वियदादिमिथ्यात्वानुमानानि प्रत्यक्षबाधितार्थविषयकत्वात् कालात्ययापदेशदोषदूषितानि। इदमुपलक्षणम्—जीव-ब्रह्मभेदस्यापि । जीवो न ब्रह्मेति प्रत्यक्षबाधितत्वात् तत्रापि । तत्रेश्वरस्य परात्मनां चाप्रत्यक्षत्वेऽपि स्वात्मनः प्रत्यक्षत्वात् स्वात्मनि ब्रह्मभेदः प्रत्यक्ष एव । इदमेवाभिप्रेत्य—

"अनुभूतिविरोधेन कथमेकत्वमुच्यते ।
किञ्चित् कर्ता च दुःखीति सर्वैरेवानुभूयते ॥
सर्वज्ञो भगवान् विष्णुः सर्वशक्तिरिति श्रुतः ।
अनुभूतिर्हि भेदेन श्रुतिरेष वदत्यमुम् ॥"

इति ॥

भेदानुमानशास्त्राणामुपजीव्यतयैक्यश्रुतिबाधकत्वम् ।

अत्रानुभूतिरिति साक्षिणोऽप्युपलक्षणम् ; साक्षिसिद्ध-जीवानुयोगिकेश्वरप्रतियोगिकभेदस्यापि साक्षिप्रत्यक्षसिद्धेः । वस्तुतस्तु—न जीवेश्वरभेदमात्रे कालात्ययापदेशः, किन्तु ईश्वरे जीवभेदानुमानस्यापि । शास्त्रसिद्धं जीवेश्वरभेदमादायैव शास्त्रेण निषेध उपजीव्यतयाऽनुवादः, इति तस्यैव प्राबल्येन तदैक्यावगमायोगात् ॥

भेदप्रत्यक्षस्य पाश्चात्यागमबाध्यत्वम् ।

अद्वैतसिद्धान्तस्तु—प्रत्यक्षम्, श्रुतिर्वा प्राचीना पाश्चात्यबाधकज्ञानस्य प्रत्यक्षस्य, परोक्षस्य वा प्रामाण्यांशे नोपजीव्यम्, न वा बाधकम्; अन्यथा भ्रमज्ञानस्य पूर्वस्य पाश्चात्यबाधज्ञानबाधकत्वापत्तेः । अत एवापच्छेदन्यायः, प्रत्याम्नानार्थलोप-प्रतिषेधादिन्यायाश्च पाश्चात्यबाधकत्वमवगाहमाना उपपद्यन्ते ॥

उपजीवकस्यापि बाधकत्वाद् नोपजीव्यबाधकत्वमेकान्ततः ।

तत्र प्रत्याम्नानादिनयेषु "यो होता सोऽध्वर्युरि"ति वाक्येऽतिदेशोपजीवकस्यापि स्वोपजीव्यबाधकत्वमेव निरणायि, इति नोपजीव्यमित्येव सर्वं प्रबलम्। दृष्टं हि वृश्चिकोपजीवकस्य तच्छिशोः स्वोपजीव्यमातृहन्तृत्वम्, कदल्यङ्कुराणां च स्वोपजीव्यकदलीनाशकत्वम् ॥

वस्तुतस्तु—उपजीव्यमात्रस्य बाधकत्वे तदधीनात्मलाभ उपजीवकस्य कथमपि न भवेत्, इत्युपजीव्योपजीवकभावकथैवास्तमियात्, इत्युत्पत्तौ न बाध्य-बाधकभाव उपजीव्योपजीवकयोः, किन्तु प्रामाण्यं प्रत्येव। न च भ्रम-प्रमास्थले, अपच्छेदनयनिदर्शने, अनूद्य निषेधस्थले च तस्य तस्य प्रामाण्यं प्रति पूर्वपूर्वप्रामाण्यमुपजीव्यम्। तत्र भ्रम-प्रमास्थले तथाऽङ्गीकारे परतोऽप्रामाण्यकथा लुप्येत। अयमेव न्यायोऽतिदेशोपदेशविषये प्रत्याम्नानादिन्यायोदाहरणेषु, अन्यत्र च; अन्यथाऽपवादशास्त्रमप्रमाणं स्यात्, नक्तं श्राद्धं कुर्वीतेत्यनेन नक्तश्राद्धनिषेधाबाध्यत्वमित्यादिप्रतिलोमव्यवस्थैव शास्त्रीया स्यात्, किं बहुना? अभेदनिषेधपरत्वमेव भेदवाक्यानामिति सिद्धान्तेऽप्यभेदप्रतीतिमुपजीव्य प्रवृत्तत्वाद् भेदवाक्यानामेव कथं नाप्रामाण्यम्? अतः प्रत्यक्षविरुद्धत्वेन श्रुतिबाधो निरालम्बः॥

वस्तुतस्तु—जीवेश्वरभेदोऽयं श्रुतिसिद्धः, प्रत्यक्षसिद्धो वा विशिष्टजीवेश्वरप्रतियोगिकः, तदनुयोगिको वौपाधिको यावदुपाधिसत्त्वं नाद्वैतसिद्धान्तेऽपि द्वैतसिद्धान्त इवानिष्टः, किन्तु निरुपाधिकसंविन्मात्रैक्यमेवौपाधिकभेदनिवृत्तित्वोपलक्षितात्मनाऽद्वैतसिद्धान्ते स्वीक्रियते। न चैतस्यैक्यस्य बाध उक्तेन जीवेश्वरभेदप्रत्यक्षेण, श्रौतेन वा, इति नात्र प्रत्यक्षेण भेदमिथ्यात्वानुमानस्य बाधकथा; संविन्मात्रभेदमिथ्यात्वस्यैव सिसाधयिषितत्वात्॥

सत्त्वप्रत्यक्षस्यापि न मिथ्यत्वानुमानबाधकत्वम्।

अयमेव न्यायः—सत्त्वासत्त्वयोरपि। प्रत्यक्षं ह्यर्थक्रियाकारित्वम्, सत्ताजात्यादिकम्, सत्तादात्म्यं वा मिथ्यात्वाविरोध्येव सत्त्वमवगाहते, न तु भाविबाधाभावम्? तस्य विद्यमानोपलम्भनस्वभावत्वात्। असत्त्वं तु क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वलक्षणं सत्त्वेन प्रतीयमाने शुक्तिरूप्यादावपि न प्रत्यक्षग्राह्यम्। न चोभयत्र सत्त्वासत्त्वे उभे प्रत्यक्षे; व्याघातात्, इति सत्त्वासत्त्वोभयाभावानुमानं कथमपि न दुष्टम्; समयान्तरसिद्धमेकं सम्प्रतिपन्नमादाय तद्दृष्टान्तीकृत्य सिसाधयिषितस्य साधनमात्रं विवक्षितम्॥

तत्र द्वैतिनः सत्त्वाभावं स्वसाधितं सिद्धवत्कृत्यासत्त्वं भ्रमविषयं मन्यते, अद्वैतिनस्तु द्वैतिन इव सत्त्वं निरस्यन्त एव तदभिमतमसत्त्वमपि निरस्यन्ति। तेन च सद्वादिनामपि निरासः, असद्वादिनां च निरासः।

तत्र परमतं निरस्तं मत्वा यद्यसत्ख्यातिः, तर्हि सदसत्ख्यातिं शुक्तिरूप्यादौ सिद्धवत्कृत्य दृष्टान्तेन वियदादौ सत्त्वासत्त्वोभयभानं केचन साधयन्ति। शुक्तिरूप्यादिकमेव भ्रमस्य सर्वेषां निकषोपलः ॥

तत्रासत्ख्यातिवादेन द्वैतसिद्धान्तस्य किं वोपक्रियते, सत्ख्यातिस्तु प्रपञ्चसत्यत्वसाधने कथञ्चनोपकरोति, यदि सा सुस्था, तर्हि समस्य ज्ञानस्य प्रमात्वाद् विश्वसत्यताविरोधि प्रत्यक्षम्, अनुमानं वा प्रमाणमस्तीति ज्ञापनेनाद्वैतवादो निरस्तो मन्यते। असत्ख्यातिवादे शुक्तिरूप्यादीनामसत्त्वपदेन प्रपञ्चस्य किमायाति? सद्वैलक्षण्यमात्रं यदि साध्यते, तेन का वा हानिरद्वैतसिद्धान्तस्य?

तत्र द्वैतिनोऽसदपि सत्त्वेन प्रतीयत इति स्वीकुर्वन्तीति जिज्ञासाधिकरणे न्यायसुधा विवेचयति। तथाच यदि न सत्ख्यातिः, तर्हि कथं सत्त्वेन प्रतीतिः? तत्र सत्त्वासत्त्वयोर्यदि न विरोधः, तर्हि किं वा प्रयोजनं सत्ख्यातिनिरासस्य? अतो बाध्यत्वम्, सत्त्वं चोभयं सत्तादात्म्य-बाध्यत्वयोरविरोधेनैव वक्तव्यम्, इति सदसद्वैलक्षण्य एव पूर्वनिष्कृष्टे पर्यवसानम्; इत्यसत्ख्यातिरिति नामान्तरमेवानिर्वचनीयख्यातेरिति स्यात्। "असदेवेदं रजतमभात्" इति प्रत्यक्षं सत्त्वेन प्रतीतम्, सत्तादात्म्येन प्रतीतं वा बाध्यमित्येवं परमेव, इति प्रत्यक्षानुग्रह एव मिथ्यात्वानुमानस्य, न तेनानुमानस्य बाध इति सिद्धम् ॥

ब्रह्म सद्वितीयत्वाद्वितीयत्वयोरध्यारोपापवादनयेनाविरोधः।

अयमत्र निष्कर्षः—भेदाभेदविषये प्रत्यक्षागमयो विरोधो नास्ति, सत्यपि विरोधे नोपजीव्यभेदप्रत्यक्षस्य, भेदश्रुतेश्च न प्राबल्यम्, न वा तयोरुपजीव्योपजीवकभावः। न वोपजीव्यमेकान्ततो बाधकतानियामकम् ॥

उपजीव्यस्य नैकान्ततो बाधकत्वम्।

तत इदं विवेचनीयम्:—किमुपजीव्योपजीवकयोरुभयाप्रामाण्यम्, उतैकतरस्य। तत्रापि किमुपजीव्यस्यैवाप्रामाण्यम्, उतोपजीवकस्यैवेति। तत्र ज्ञानानां स्वतः प्रामाण्यात् परतोऽप्रामाण्याच्चोभयोरविरोध उभयोरपि प्रामाण्यम्, विरोधे त्वेकतरस्य प्रामाण्यम्, अपरस्य त्वप्रामाण्यमिति व्यवस्था स्वीकर्तव्या। एवं सत्येव भ्रान्ति-बाधव्यवस्था सर्वत्र।

तत्राविरोधो भेदाभेदयोर्न संप्रतिपन्नः, इति नैकान्तेन प्रामाण्यं संभवति। तत्रोपजीव्यस्य बाधकत्वम्, प्राबल्यं वा बहुधा—साध्यग्राहकतया, क्वचिद् ग्रहणोपकारकतया, स्वरूपग्रहणेन, प्रामाण्योपपादनेन, क्वचित् व्याख्याद्यङ्गग्राहकत्वेन च। सर्वत्रोपजीव्यविरुद्धमुपजीवकमप्रमाणम्; आश्रयादिहीनस्योत्थानानुपपत्तेः। अत एव वह्न्यौष्ण्यप्रत्यक्षादिना वह्न्यनौष्ण्यानुमानविरोधः। बाध्य-बाधकभावो ह्युपजीव्योपजीवकयोरुपजीव्यस्याप्रामाण्यग्राहकप्रमाणाभावे, तद्बाध्यत्वे चोपजीवकज्ञानस्य॥

अत एव "इदं रजतम्" इति ज्ञानेन "नेदं रजतम्" इति ज्ञानस्योपजीवकस्यापि न बाधः, प्रत्युत तत्र विपरीतमेव। अयमेव न्यायः प्रतियोगिसमर्पकस्योपजीवकेन बाधे। प्रत्याम्नानादिन्याया अप्यत एवोपपद्यन्ते। तेन च "सदेवेदमि"ति सद्वितीयं ब्रह्म प्रस्तुत्य तदुपजीव्यैव "एकमेवाद्वितीयमि"ति वाक्यस्य निषेधविधया प्रवृत्तत्वात्, "यस्मिन् पञ्च पञ्चजनाः" इति "सप्रपञ्चं ब्रह्मोपक्रम्य तदुपजीव्याध्यारोपापवादन्यायेनैव 'इदं रजतम्' 'नेदं रजतमिति'वत् प्रवृत्तत्वात् सर्वं सद्वितीयं वाक्यं निषेधप्रतियोगिसमर्पकं बाध्यम्, निषेधवाक्यमुपजीवकत्वेऽपि प्रमाणमित्येव स्वीकर्तव्यम्। अयमेव न्यायः 'यस्सर्वज्ञादि'वाक्यादावपि। तत्र यद्यपि "यत्तदद्रेश्यमि"ति निर्विशेषं ब्रह्माक्षरस्वरूपं परविद्याविषयमुपक्रम्य "अक्षरात् परतः परः" इति मुख्यं प्रकृतं निर्विशेषं कथं भूतयोनिरिति शङ्कावारणार्थमेव—"यः सर्वज्ञः सर्ववित्" इति वाक्यं प्रवृत्तम्। तथाऽप्येकमेवाद्वितीयमि"त्यादिवाक्यैकवाक्यतार्थं 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन तत्राध्यारोपापवादविधयैवाद्वितीयमेव सर्वज्ञत्वाद्युपलक्षितं स्वरूपं परविद्याविषय इति स्वीकर्तव्यम्। अतस्तत्रापि सर्वज्ञत्वादिनिषेध एव प्रकरणार्थ इति स्वीकर्तव्यम्। सर्वज्ञत्वम्, भूतयोनित्वं वा तस्याक्षरोपहितस्याक्षरस्य, मायोपहितस्यैव, इति न भूतयोनित्वम्, न वा सर्वज्ञत्वमीश्वरस्यापि स्वाभाविकम्, किन्त्वौपाधिकमेव॥

प्रत्यक्षादेः प्रकारांशेऽप्रामाण्याद् न मिथ्यात्वानुमानबाधः।

तत्र यथा 'इदं रजतमि'त्यत्रेदमंशे ज्ञानं प्रमा, रजत-तद्वैशिष्ट्यांशे त्वप्रमा, एवमेव ब्रह्मवाक्यानि ब्रह्मांश एव प्रमा, न तु प्रपञ्चांशे, तद्वैशिष्ट्यांशे वा। तत्र यथा 'इदं न रजतमि'ति बाधज्ञानम्, एवमत्रापि "सदेवेदम्" 'सदद्वितीयमि'ति पूर्वोत्तरयोर्ज्ञानयोर्बाध्यबाधकभाव एव। तथा चात्र स्वरूपांशे प्रमैव, वैशिष्ट्यांशे तु भ्रम एव, इति 'इदं

रजतमि'त्यादाविव यावद्बाधं प्रामाण्यमेव, इति, भेदपराणि सर्वाणि वाक्यान्यखण्डाकारसाक्षात्कारेण विषय-तत्संबन्ध-तत्प्रयुक्तभेदानां बाधाद् अप्रमाणान्येव, न तु प्रमाणानि, इति न भेदवाक्यानामुपजीव्यत्वेऽपीदं रजतमित्यादिज्ञानस्येव बाधकत्वम्, किन्तु बाधितार्थबोधकत्वात् परतोऽप्रमाणानि; सद्वितीयवाक्यानां निषेध्यसमर्पकाणामद्वितीयवाक्यं निषेधवाक्यशेषत्वेन ततो दौर्बल्यात् ॥

सर्वेषां कारणवाक्यानां द्वैतमिथ्यात्वसिद्धिपूर्वकाद्वैतसिद्धावुपयोगः ।

सर्वज्ञादिवाक्यमपि सद्वितीयवाक्यत्वात् परमार्थतः संविन्मात्रतापरमेव, न तु सर्वज्ञत्वविशिष्टपरम्; अद्वितीयवाक्यशेषत्वात् कारणवाक्यानां तदविरोधेनैव नेयत्वात्, गुणानां परार्थानां परानुसारेण नयनं हि न्यायसिद्धम्। अप्रमाण्यमिदं परमार्थदृष्ट्या, इति न व्यावहारिकस्य तस्य विघातः। जीव-परमात्माभेदो नाम तयोर्भेदकोपाधि-तत्सम्बन्ध-तत्प्रयुक्तभेदनिवृत्तिमात्रम्, न तु द्वयोर्जीव-परमात्मनोरभेदः ॥

निर्विशेषधर्मिग्राहकप्रमाणस्य नान्येन बाधः ।

परमात्मरूपधर्मिग्राहकस्य प्रमाणत्वं न सविशेषवाक्यानाम् किन्तु निर्विशेषवाक्यानामेवेति मुख्यपरमात्मस्वरूपग्राहकं प्रमाणं परमात्मनिर्विशेषताबोधनेनैव प्रमाणतामश्नुते, इति परमात्मरूपधर्मिग्राहकप्रमाणेन बाधः सविशेषताया एव, न तु विपरीतं निर्विशेषतायाः, इति सविशेषजीवेश्वरभेदस्य शास्त्रमुख्यतात्पर्याविषयस्य व्यावहारिकसत्यत्वेऽपि तथात्वम्, निर्विशेषं तु न प्रत्यक्षबाध्यम्, श्रुतिबाध्यं वा; अन्यथा 'इदं रजतमि'ति ज्ञानबाध्यं नेदं रजतमिति ज्ञानमिति स्यात्।

भ्रमेऽधिष्ठानसंसर्गमात्रस्याध्यासः न त्वधिष्ठानस्याप्यारोप्यस्येव सः ।

'इदं रजतमि'तीदमो रजतवैशिष्ट्यमिव रजत इदंतादात्म्यमपि विषयीकरोति, यथा इदमि धर्मिणि तादात्म्यं रजतं चाध्यस्यते, रजते त्विदंतादात्म्यमात्रमध्यस्यते, न त्विदमपि। अयमेव न्यायो ब्रह्मणि प्रपञ्चाध्यासेऽपि; परस्पराध्यासस्यैवंरूपस्यैव स्वीकारात्। अत एव 'इदं न रजतमि'ति रजत-तत्तादात्म्योभयनिषेधः; उभयस्य प्रातिभासिकत्वात्, रजतवदिदमोऽपि तत्राबाधात्। रजते बाधिते तत्रेदंतादात्म्यमपि बाधितप्रायमेव; परस्पराध्यास आरोप्येऽधिष्ठानसंसर्गाध्यासेऽप्य-

धिष्ठानविषयाज्ञानस्यैव प्रयोजकत्वात्, अधिष्ठानसाक्षात्कारेण तद्विषये तस्मिन् विनष्टे तत्प्रयुक्तत्वरजत इदंतादात्म्यस्यापि बाधेन तत्र बाधकान्तरानपेक्षणात्। अयमेव न्यायो ब्रह्मणि प्रपञ्चाध्यासे तद्बाधव्यवस्थायामपि॥

यावद्बाधं सद्वितीयत्वम्, ततस्त्वद्वितीयत्वम्।

तत्रेदं रजतमिति रजतविशिष्टतयैवेदंग्रहादिदं ज्ञानं यथा स्वरूपांशमात्र एव प्रमाणम्, न तु रजतवैशिष्ट्यांशे; पाश्चात्यबाधज्ञानात्, एवमत्रापि "सदेवेदम्" इति सद्वितीयतयैव स्वरूपज्ञानेऽपि "एकमेवाद्वितीयमि"ति पाश्चात्यबाधकज्ञानमहिम्ना न वैशिष्ट्यांशे प्रामाण्यम्, इति न लेशतोऽपि वैषम्यमिदंरजतज्ञान-सप्रपञ्चज्ञानयोः। यावद्बाधं प्रामाण्यं ह्युभयत्र समानम्। तत्र यथेदमंश उत्तरत्राप्यनुवर्तते, एवमेवात्राधिष्ठानरूपांशोऽनुवर्तते। अतो भेदनिषेधपरावनुमानागमौ भेदपरप्रत्यक्षागमबाधकावित्यपि समानम्। बाधकत्वं हि ज्ञानस्याधिष्ठानसाक्षात्कारत्वेन विरोधिसंनिपातेन। न च तस्मिन् सति 'इदं रजतमि'ति शुक्तौ भ्रमवद् ब्रह्मणि सप्रपञ्चता प्रत्येतुमलम्। तथाच श्रुतिः—"यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येदि"ति॥

धर्मिग्राहकप्रमाणविरुद्धमद्वितीयत्वम्।

एतेनः—

एकविज्ञानविज्ञस्याद्वयं मानं भविष्यति।
न चेदेकं प्रमाणं तद् द्वयमप्यत्र नो भवेत्॥
यत्स्वरूपग्रहे मानं तद्धर्मे न कथं भवेत्।
धर्मिग्रहविरोधस्तु तस्माद् मानस्य दूषणम्॥

इति—व्याख्यातम्॥

अयं भावः—"यः सर्वज्ञः" इत्यादिसप्रपञ्चब्रह्मविषयज्ञानमिदं रजतमित्यादिवत् धर्म्यंशे प्रमा, प्रकारांशे भ्रम इति यद्येकमेव ज्ञानमभिप्रेत्य, तर्हि तस्य स्वरूपे धर्मिणीव धर्मेऽपि कथं न प्रामाण्यम्। न हि सर्वज्ञवाक्यस्यैकस्यैव ज्ञानद्वयजनकत्वं युज्यते; प्रकारताविशेष्यतावगाहिज्ञानस्य ज्ञानद्वयत्वकल्पनाया अयोगात्, इति न सर्वज्ञादिवाक्यस्यांशतोऽप्रामाण्यं युक्तम्—इति॥

धर्म-धर्म्युभयविषयकस्य प्रकारांशे मिथ्यात्वेऽपि नैकज्ञानत्वविरोधः ।

तत्रेदं रजतमिति ज्ञानमिवैकमेव ज्ञानं सर्वज्ञादिवाक्यजन्यं ज्ञानम्; तथापि तस्य शुक्त्यंशे यथा प्रमात्वम्, रजतांशे भ्रमत्वम्, एवमेवात्रापि। तत्र भ्रमत्वं न स्वतः, किन्तु बाधकप्रमाणावसेयम्, इति यावद्बाधकं धर्मांशे तु व्यावहारिकं प्रामाण्यमेव तत्र। तावताऽपि निर्विशेषस्वरूपस्य तटस्थलक्षणविधया ज्ञाने तदुपयुज्यते; तत्त्वशुद्धिकाराणाम्, ब्रह्मसिद्धिकाराणाञ्च सन्मात्रावगाहित्वेनैव ज्ञानस्य प्रामाण्यम्, विकल्पांशेऽप्रामाण्यमिति सिद्धान्तोऽपि सप्रकारकज्ञानानां परमार्थतः प्रकारांशभ्रमत्वमभिप्रेत्यैव। न चात्र स्वरूपांशे ज्ञानं प्रमाणजन्यम्; स्वप्रकाशस्य तस्याधिष्ठानस्यावृतस्यापि सदात्मना चिदात्मना च प्रकाशमानस्यैवाधिष्ठानत्वात्, इति धर्मांशे धर्म्यंशे च नैकं प्रमाणजन्यं ज्ञानम्, किन्तु ज्ञानद्वयमेव ॥

ज्ञानभेदस्तु वृत्तिभेदमात्रेण, न चैतन्यभेदेन ।

ज्ञानभेदस्तु वृत्तिभेदमात्रेण न तु चैतन्यभेदेन। तच्च धर्म्यंशे प्रमाणाजन्यम्, प्रकारांशे व्यावहारिकम्; प्रमाणजन्यत्वात्। स्वरूपांशस्य त्वबाध्यत्वात् तदाकाराखण्डाकारवृत्तेरेव प्रमाणजन्यायाः प्रमात्वमिति व्यवस्था ॥

एतेन—धर्मांशेऽप्रामाण्ये धर्म्यंशेऽप्यप्रामाण्यं स्यादिति—परास्तम्; इदं रजतमित्यादिज्ञानानामपि धर्मांश इव स्वरूपांशेऽप्यप्रमाण्यापत्तेः, इति निषेधवाक्यापेक्षितनिषेध्यसमर्पकत्वेनैव सगुणवाक्यानां प्रामाण्यम्। तदपि व्यावहारिकमेवेति सुस्थम् ॥

ब्रह्मणो धर्मित्वमध्यारोपापेक्षिताधिष्ठानता-
मात्रेणाध्यारोपविधया, न स्वतः ।

तत्र ब्रह्मणो धर्मित्वं परमार्थतो निर्विशेषत्वं कल्पितेनैव धर्मेण, न तु तत्समसत्ताकेन धर्मेण। न हि धर्म-धर्मिभावः समसत्ताकयोरेवेति नियमः; अन्यथा भ्रमकथामात्रविलोपापत्तेः, परमाणवः सावयवा इत्यनुमानस्य तत्स्वरूपग्राहकप्रमाणेन निरवयवतयैव परमाणूनां सिद्धत्वात्, वह्न्यनौष्ण्यानुमानस्य वह्निस्वरूपग्राहिप्रत्यक्षेण तद्विरोध्यौष्ण्यज्ञानस्य सिद्धत्वाच्च प्रत्यक्षेण तत्र बाधो युज्यते न चैवं प्रकृतेः, स्वरूपस्याधिष्ठानस्य सद्रूपस्य स्वयं प्रकाशत्वेन प्रमाणनिरपेक्षसिद्धत्वेन प्रमाणद्वयविरोधस्यात्राभावात् ॥

अनूद्य निषेधो निर्विशेषवाक्ये, परमाणुनिरवयवत्वानुमाने तु
न तथेति वैषम्यम् , अतो विशेषाद् बाध्य-
बाधकभावव्यवस्था ।

एतेन—आरोपितेन निरवयवत्वेन व्यावृत्तानां परमाणूनां धर्मीकरणमिति—परास्तम् ; परमाणूनामनधिष्ठानतया पूर्वं स्वयमसिद्धेः, तत्रारोपितधर्मेण ज्ञानस्यात्रैव वस्तुमशक्यत्वात् । श्रुतिर्हि "यत्तदद्रेश्यमि"ति निर्विशेषं ब्रह्म प्रस्तुत्यैव सर्वज्ञत्वं तस्य श्रावयति, न तु सर्वज्ञत्वेनैव; "अक्षरात् परतः परः" इति प्रस्तुत्य तदनुषज्यैव "यः सर्वज्ञः" इति वाक्यस्य प्रवृत्तत्वात् । न च परमाणुं निर्विशेषं प्रस्तुत्य निरवयवत्वस्य प्रमाणेन बोधः, इति महदस्ति वैषम्यं ब्रह्मस्वरूपस्य स्वप्रकाशस्य परमाणुभ्यः । अतो भेदबाधत्वेनैव निर्विशेषवाक्यानामुपपत्तिर्वक्तव्या, इति निषेधापेक्षितनिषेध्यसमर्थकत्वेनोपजीव्यत्वं तेषां दौर्बल्यमेव प्रयोजयति, न तु तत्र प्राबल्यमिति सुस्थम् ॥

अभेदांशेऽनुवादः भेदांश एवोपदेश इति नात्र ।

न चाभेदे निषेधपरत्वं भेदवाक्यानाम् , येन निर्विशेषवाक्यापेक्षया सविशेषवाक्यस्य प्राबल्यं स्यात् । निर्विशेषस्वरूपं स्वप्रकाशमज्ञानोपहितमावृतमादाय सविशेषवाक्यानां प्रवृत्त्या निर्विशेषस्यानधिष्ठानत्वेनाज्ञानोपहितरूपेणेव शुद्धस्वरूपेणापि पूर्वमेव स्वप्रकाशतयासिद्धत्वेन च सविशेषवाक्यमपेक्ष्यासिद्धत्वाद् न निर्विशेषवाक्यस्यानुवादत्वम् , सविशेषवाक्यस्योपदेशत्वं च । न चैवं सविशेषवाक्ये; निर्विशेषे स्वतःसिद्धे स्वप्रकाशे चाज्ञाते विशेषाणामध्यारोपेणैव सविशेषवाक्यप्रवृत्त्या तत्राध्यारोपापवादन्यायेनाद्वितीयादिवाक्यैर्विशेषनिषेधस्य युक्तत्वात् । "न ह्यभेदोपादाना भेदकल्पना" इति वदन्ती भामती भेदाभावस्याभेदस्वरूपत्ववत् अभेदाभावस्य भेदस्वरूपत्वं वारयति । भेदनिवृत्त्युपलक्षितसंविन्मात्रं हि जीव ब्रह्मा-भेदो नाम ॥

तत्र यदि निर्भेदं स्वरूपमनूद्य भेदो विधीयेत, तर्हि तत्र तस्य समसत्ताकस्य व्याहतत्वाद् विषमसत्ताकत्वं निर्भेदस्वरूपस्याधिष्ठानत्वेनाधिकसत्ताकत्वेन भेदस्य च तत्रारोपेण ततो न्यूनसत्ताकत्वं चैव वक्तव्यम् । तथा च भेदस्यैवाभेदज्ञानबाध्यत्वं फलति. इति भेदबाध उपजीव्यविरोधोऽकिञ्चित्करः; अध्यारोपापवादनयेऽप्युपजीव्यमधिष्ठानज्ञानम्, आरोप्यस्तूपजीवकः । तत्राधि-

ष्ठानारोप्ययोरुपजीव्योपजीवकयोरपि, तयोरुभयोस्सहोपलम्भाद् यद्यपि न विरोधः, तथापि तदारोपोपादानाधिष्ठानज्ञानस्यैव बाधकत्वाद् अपवादत्वेन तद्विषयस्याधिष्ठानस्यैव परमार्थत्वम्, बाधितं त्वारोपितम्, इति भेदमिथ्यात्वमर्थसिद्धम् ॥

भेद-ब्रह्मणोर्नैकप्रमाणावसेयत्वम्,

न च ब्रह्मज्ञानं भेदबाधकं स्यात्।

एतेन—

"नोपजीव्यो ह्यभेदोऽत्र क्वचिद्भेदश्रुतेर्बलात्।
न च मानान्तरोपेयं ब्रह्म तद् भवति क्वचित्।
येन मानेन चोपेयं भेदस्तेनावगम्यते ॥
सर्वज्ञानुमयैवेशो यद्युपेयः कथञ्चन।
सर्वज्ञत्वादिगुणेनैव तया भेदोऽवगभ्यते ॥"

इति—परास्तम् ॥

ब्रह्मस्वरूपस्य स्वप्रकाशस्य मानाधीनसिद्धिकत्वात्, तत्र सार्वज्ञादीनामेवाध्यारोपविधया श्रुतिबोधितत्वाच्च। प्रमाणजन्यब्रह्मज्ञानं तु भेदस्य बाधकम्, न तु साधकम्। अविद्यानिवृत्तिपरत्वाद् शास्त्रस्य। तदधीनेन ज्ञानेनानाद्यविद्य-तत्प्रयुक्तसर्वभेदनिवृत्तिरपि प्रामाणिकी। यथा च न तावताऽपि नार्थक्रियाकारिताविरोधः, यावद् मिथ्यात्वनिर्णयः दुःखाद्यनुभवः, बाधे तु न दुःखाद्यनुभवः, तथाऽऽणिमाण्डव्यादिचरितेनावगम्यते। मिथ्यात्वनिर्णयो हि परीक्षकदृष्ट्या साम्प्रतम्, यथा वैकुण्ठलोकवासप्रयुक्तसपायसकर्दमादिसार्वदिकभोगादिकथा, न तु प्रतिपत्तृदृष्ट्या। तदुक्तम्—"परीक्षकाः खल्वेवं विवेचयन्ति, न प्रतिपत्तारः—इति ॥

श्रुतिबोधितत्वमात्रमकिञ्चित्करम्, किन्तु

तस्याः समन्वय एव कार्यकारी।

ततश्च श्रुतिरेवाध्यारोपापवादविधया निर्विशेषमारोपितैर्गुणैरनूद्याद्वितीयमिति तत् संशोध्य तत्त्वमुपदिशतीत्येव वक्तव्यम्। न हि श्रुतिबोधितत्वमात्रेण तथैव निषिद्धमपि समादरमर्हति; अन्यथा भूमविद्यादिषु नामादीनाम्, अन्नमयादीनां च मुख्यं ब्रह्मत्वमापद्येत। अत एव निर्विशेषं ब्रह्मैवाविद्या-तत्सम्बन्ध-तत्प्रयुक्तजीवेशत्वादिकं सर्वमनादीति सिद्धान्तः, इत्यनादिसिद्धाविद्याप्रयुक्तमनादिसप्रपञ्चत्वमनूद्य तत्संशोधनेन शुद्धमखण्डं

स्वरूपमुपदेष्टुमेव वेदान्तवाक्यानि, इति सद्वितीयब्रह्मणः सार्वज्ञादिगुणस्य श्रुत्याऽनुवादोऽकिञ्चित्करः। किं बहुना ? जीवोऽपि शरीरादिव्यतिरिक्तात्मश्रुत्यैवानूद्यते—ब्राह्मणत्वादिविशिष्टतया सशरीर इव, इति श्रुतिप्राप्तत्वमात्रेण शरीरमेव कथं नात्मा स्यात् ?

निर्विशेषवाक्याप्रामाण्यं न युक्तम्।

सर्वथा तु किंचिज्ज्ञत्व-सर्वज्ञत्वविशिष्टयोर्जीवेश्वरयोर्भेदे न विप्रतिपत्तिः। तत्र शास्त्रं विशिष्टमिव निर्विशेषमपि यदि बोधयति, यदि च सविशेषनिर्विशेषवाक्ययोरध्यारोपापवादविधया ऽविरोधः सम्भवति, तर्हि शास्त्रप्रामाण्याद् यथाश्रुतं निर्विशेषवाक्यप्रामाण्यं कुतो वा हेयम् ? अहं सुखीत्यहंरूपेणैव जीवं साक्षात्कुर्वतां तादात्विकसत्यत्वस्य स्वीकारात् साक्षात्कृतात्मतत्त्वानां दृष्ट्या तदतिरिक्तमेवात्मतत्त्वमिति गतिरेवात्र शरणम्॥

परीक्षितत्वेन प्रत्यक्षप्राबल्यम्, श्रुतिस्तु तद्विपरीतत्वाद् दुर्बला, इति न निर्विशेषवाक्यप्राबल्यम्।

एतेन—

"न हि बाधः क्वचिद् दृष्टो दुःखाद्यनुभवस्य तु।
यदि दुःखानुभूतिश्च भ्रान्तिरित्यवसीयते॥
अदुःखिताश्रुतिः केन न भ्रान्तिरवसीयते।
श्रुतिस्वरूपमर्थश्च मानेनैवासीयते॥
तच्चेद् मानं गृहीतं ते किं दुःखानुभवे भ्रमः।"

इति—व्याख्यातम्। 'अयं भाव—तत्र यद्यपि दुःखादिकमन्तःकरणगतम्; तथापि तदिव स्वरूपसदेव। एतेन—जीवकिञ्चिज्ज्ञत्वादिकमपि—व्याख्यातम्। निष्कर्षस्तु—तस्यापि स्वरूपसत्त्वमेव। "विमुक्तश्च विमुच्यते" इति श्रुतिस्तु न निश्चितप्रमाणभावा, येन तया बाधितत्वाद् अतात्त्विकत्वं दुःखादेः स्यात्, इति अहं दुःखीत्याद्यनुभवस्य न भ्रान्तित्वं युक्तम्। न चात्र प्रत्यक्षस्यैव बाध्यत्वम्; तस्य निरपेक्षस्य बाधकत्वात्, श्रुतेरेव बाध्यत्वाच्चेति पूर्वमुक्तम्॥

न चायं न्यायो नेदं रजतमिति ज्ञानेऽपि; साक्षिणा तत्प्रामाण्यस्य निश्चितत्वेन श्रुतेरिवानिश्चितप्रामाण्यकत्वाभावात्। परीक्षितप्रामाण्यकमपि नेदं रजतमिति ज्ञानम्, इत्यपरीक्षितप्रामाण्यस्यो-

पजीव्यस्य परीक्षितोपजीवकवाध्यत्वं न विरुध्यते। "विमुक्तश्च विमुच्यते" इति श्रुतिर्न परीक्षिता। विमुक्तस्याहम्भावोऽपि यदि निवर्तते, तर्हि को वा'अहं दुःख्यामी'ति प्रत्येष्यति ? दुःखानुभवस्तु परीक्षितस्तत्परिहारोपायगवेषणाय सर्वं प्रेरयति, इति न 'नेदं रजतमि'ति प्रतीताविवात्र व्यवस्था ॥

न च साक्षी श्रुतिप्रामाण्यमपि गृह्णाति; साक्षिणोऽमानस्य प्रामाण्याग्राहकत्वात्; अन्यथाऽहं दुःखीत्यनुभवोऽपि साक्ष्यनुभव एव, इति प्रामाण्याविशेषात् कथं तस्य भ्रान्तित्वावसायः—इति ॥

स्वतः प्रामाण्यं श्रुतेर्न परीक्षापेक्षम्,
इत्यपौरुषत्वेनैव तत्प्राबल्यम्।

अयमत्र विवेकः—अहं दुःखीत्यनुभवो यावदहंभावानुवृत्ति, सत्यम्, संप्रतिपन्नः। अहंभावनिवृत्तिः, तद्धर्मदुःखनिवृत्तिश्च मुक्तौ श्रुत्या प्रतिपाद्यते। न च श्रुतेरपौरुषेय्या अप्रामाण्यसंभवना, परापेक्षप्रामाण्यता वा। तदुक्तम्—'तत्प्रमाणं बादरायणस्यानपेक्षत्वात्"—इति, अन्यथा वैकुण्ठादौ दिव्यशरीरप्राप्त्या दुःखनिवृत्तेरप्यत्र परीक्षाया असंभवात्, किं बहुना ? शरीरान्तरेण स्वर्गादिभोगश्रुतेरप्यपरीक्षिताया देहात्मप्रत्यक्षेण परीक्षितेन बाधः स्यात् ॥

संभावितदोषत्वेन प्रत्यक्षबाधः।

शास्त्रैकगम्या हि मुक्तिर्न बद्धपरीक्षापरीक्षिताऽप्रामाणिकीति कल्पना संभवति, इति देहात्मप्रत्ययो यदि भ्रमः, स्वतः प्रमाणश्रुतिविरुद्धत्वात्, तर्हि कथं "विमुक्तश्च विमुच्यते" इति श्रुतिरेवाप्रमाणम् ? 'अहं दुःखमनुभवामि'ती ज्ञानमेव भ्रम इति न निर्णयः स्यात् ? अतः श्रुतिबाधितो लोकानामनुभवः सम्भाव्यमानदोषमूलको भ्रमः, इति तेन विरोधे श्रुतिरेव प्रमाणमिति सुस्थम् ॥

तत्र यद्यपि प्रामाण्यमप्रामाण्यमुभयं धर्मः साक्षिभास्यः; तथापि स्वतो ग्राह्यं प्रामाण्यम्, परतो ग्राह्यमप्रामाण्यम्, इति दोषासहकृतसाक्षिभास्यं प्रामाण्यमेव स्वाभाविकम्, इति प्रत्यक्षस्य श्रुत्यादिप्रबलप्रमाणबाधे संभावितदोषसहकृतसाक्षिभास्यस्याप्रामाण्यस्य स्वरससिद्धिः, दोषासहकृतसाक्षिभास्यं प्रामाण्यमेव श्रुतेः, इत्यपौरुषेयश्रुतिविरुद्धप्रत्यक्षाप्रामाण्य-

वाद एव युक्तः, इति न प्रत्यक्षबाधोऽनुमानस्य । तत्र यद्यपि साक्षिणो न याथार्थ्यं नियतम् ; भ्रान्तेरपि साक्षिणा ग्रहणात् , तथापि दोषासहकारे तद्याथार्थ्यनियमो न व्याहन्यते ॥

प्रत्यक्षविरोधस्याकिञ्चित्करत्वाद् भेदमिथ्यात्वाच्च
तत्त्वमस्यादौ न गौणं सामानाधिकरण्यम् ।

तत्र प्रत्ययानाम् , प्रामाण्यस्य वा साक्षिणा ग्रहणं दोषासहकाराधीनत्वाद् असंभावितदोषायां श्रुतौ तदप्रामाण्यग्रहणस्यासंभाव्यमानत्वात् श्रुतेर्याथार्थ्यं नियतमेव। श्रुत्यर्थस्तु प्रकरणादितात्पर्यग्राहकोपलक्षितो न यथाश्रुतः सर्वत्र। निराकाङ्क्षः श्रुत्यर्थ एव मुख्यः । अत एव "आदित्यो यूपः" इत्यादावपि न प्रतीयमानोऽप्यतात्पर्यविषयः प्रकृतानुपयुक्त इति कृत्वा स्तुत्यविनाभूतगुणग्रहणपरत्वमवगमयितुमेव तत्सिद्धिपेटिकान्यायः ॥

न्यायनिर्णीतप्रशंसारूपोऽर्थस्तु तत्रापि यथार्थ एव। न हि वाच्यार्थ एव श्रौतः, न तु लक्ष्यार्थः; अन्यथाऽर्थवादानां प्रशंसार्थोऽप्यश्रौतः स्यात् । अत एव न विधौ परः शब्दार्थः । अत्र विधिपदं तात्पर्यविषयपरम् । सर्वथा तु भ्रान्तिज्ञानस्य संप्रतिपन्नत्वात् , अनिर्वचनीयख्यातिरेव युक्ता, इति विमतो भेदः, मिथ्या, भेदत्वात् ; चन्द्रभेदवदित्यनुमानं सुस्थम् । सति चैवम् "तत्त्वमसीति" भेदनिवृत्त्युपलक्षितसंविन्मात्रबोधकत्वेनैव प्रमाणम् , न तु तत्र गौणं सामानाधिकरण्यम् ॥

गौणं सामानाधिकरण्यं हि साधर्म्यमादाय निर्वहणीयम् । न च मुक्तात्मपरमात्मनोरेव साधर्म्यम्, किन्तु संसारि-परमात्मनोरपि स्वरूपज्ञानत्वेनास्ति साधर्म्यम् । भोगसाम्यं तु वैकुण्ठलोकवासिनां नित्यमुक्तानामपि समानम् , इति परमात्मभोगसाम्यं मुक्तस्यैवेति न संभवति । वस्तुतस्तु मुक्तौ तारतम्यवादिनां तत्तद्भोगानां सातिशयानां भिन्नत्वात् परमात्मनो निरतिशयानन्दवत्त्वाच्च कथं मुक्तात्मनां सर्वेषां परमात्मना भोगसाम्यम् ? एतेन तद्गुणसारत्वन्यायोऽपि—व्याख्यातः ॥

"तत्त्वमसी"त्यत्र गौणमेव सामानाधिकरण्यम् ।

एतेन—

"पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात् ।
सादृश्याच्च प्रधानत्वात् स्थानत्वादपि चाभिदाम् ॥
आहुरीशेन जीवस्य न स्वरूपभिदा क्वचित् ।

स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यते ॥
सादृश्यं च विशेषेण जडानां द्वयमेव तु ।
भवेत् सादृश्यमत्यल्पं तृतीयं परमात्मना ॥"

इति—व्याख्यातम् । भावस्तु—"तत्त्वमसी"ति सामानाधिकमभेदेऽपि भवति, भेदेऽप्यात्यन्तिके सादृश्यादपि । आद्ये सर्वपदलाक्षणिकत्वम्, द्वितीये सर्वपदमुख्यार्थत्वम् । सामानाधिकरण्यमात्रं गौणम् । तत्र यद्यप्येकस्मिन् पदे सादृश्यलक्षणाऽपेक्ष्यते, तथापि न सर्वपदलक्षणा । अतो गौणाभेदविवक्षैव वरम्—इति ॥

एतेन—"नान्यदतोऽस्ति द्रष्टृ"इत्यादि—व्याख्यातम्; स्वतन्त्रद्रष्ट्रन्तर-निषेधपरत्वादस्य । इदमुपलक्षणम्—"तत्त्वमसी"त्यत्रापि तत्प्रधानकत्वम्, तत्पारतन्त्र्यं वा तत्त्वमसीति वाक्यार्थो मन्तव्यः । सर्वथा तु न स्वरूपात्यन्तिकाभेदे तात्पर्यम् ॥

अत्र "तत्त्वमसी"ति वाक्ये संसारिणमपि त्वंपदार्थं मत्वा तत्प्रधान-कत्वं जीवस्येति वर्णितम् । वस्तुतस्तु—मुक्तात्मन एवात्र परमात्मना सामानाधिकरण्यं विवक्ष्यते, तद्दृष्ट्या तु मुक्तात्म-परमात्मनोः स्थानैक्येन न सामानाधिकरण्यम्, तत्तु विशेषणमात्रैक्याभिप्रायेण । अत्र यद्यपि लाक्ष-णिकत्वम्, ऐकमत्याभिप्राये तु लक्षितलक्षणया लाक्षणिकमैक्यम् । "सर्वं खल्विदमि"ति सामानाधिकरण्यं तत्प्रधानकत्वेन तज्जत्वेन तल्लत्वेन च द्वयेनैव, न तु स्थानैक्येन, मत्यैक्येन, सादृश्येनैव वा । तत्रापि सादृश्यं सत्तादि-स्वल्पमेव । सर्वथा तु प्राज्ञवदिति दृष्टान्तः जडाभेदापेक्षया प्राज्ञा-भेदस्य विशेषं सूचयितुम् । अतत्त्वमसीति पदच्छेदस्तु यद्यपि भाष्यानु व्याख्यानाननुगृहीतः; तथापि संभवाभिप्रायेण तथापि योजनम्—इति ॥

प्रमितभेदविषयं गौणं सामानाधिकरण्यं नात्र संभवति ।

तत्र सादृश्येनाभेदो ययोर्भेदः प्रमितः, तद्विषयः । "तत्त्वमसी"त्यत्र संसारि-परमात्मनोर्भेदविवक्षा यद्यपि न नोपपद्यते । न चात्र तयोरभेद उप-दिश्यते, किन्तु मुक्तात्म-परमात्मनोरेव । न च तयोर्भेदः प्राप्तः प्रमा-णान्तरेण, येन सादृश्येनाभेदः स्यात् । विगलितोपाधिकयोर्मुक्तात्म-पर-मात्मनोर्भेदकधर्मस्य, साधारणधर्मस्य वाऽभावाद् न सादृश्येन सामाना-धिकरण्यं क्षोदक्षमम् ॥

स्थानैक्यादिना सामानाधिकरण्यायोगः ।

एतेन—प्राधान्य-पारतन्त्र्याभ्यामपि सामानाधिकरण्यनिर्वाहः—परास्तः; स्वरूपैक्ये तस्य बाधितत्वात् । उभयत्र तत्पदस्य लक्षणिकत्वं तु दोष एव, इति न मुख्यं सामानाधिकरण्यम् , इति भक्षितेऽपि लशुने न रोगशान्तिः । अद्वैतमते तु तात्पर्यनिर्वाहार्थं सर्वपदलक्षणायामप्यौपाधिक-भेदमात्रनिवृत्त्या स्वरूपैक्यस्याबाधाद् उपाधि-तत्सम्बन्ध-तत्प्रयुक्तभेद-निवृत्त्योपाधिशान्तिः, रोगशान्तिर्वाऽविकला । स्थानैक्ये, मतैक्ये वा विशेषणैक्यविवक्षया यद्यप्येकमेव, परन्तु तदपि गौणमेव । न हि क्षीरब्धौ भगवतो यत् स्थानम् , तदेव मुक्तस्यापि स्थानम् । मुक्तितारतम्य-वादिनां मते सुख-तारतम्य-तत्प्रयोजकतारतम्यस्य, स्थानतारतम्यस्य च स्वीकारात् कथं स्थानैक्यादि ? तत्रापि स्थानैक्यव्यपदेशोऽपि लाक्षणिक इति स्वयं सुधा वदति ॥

एतेन—"परेऽव्यये सर्व एकीभवन्ती"त्यत्रापि स्थानैक्यादेकीभाव-विवक्षाऽपि लाक्षणिकीति सूचनाद् न च्विप्रत्ययोपपत्तिः स्वरसा द्वैतमतेऽपि । तत्राद्वैतमते स्वरूपैक्यविवक्षा विनापि विशेष्यमात्रे तात्पर्य-विषये लक्षणां निर्वहतीति सम्प्रदायः । कथं लक्षणायां लाघवम् , येन स्वरू-पैक्यपक्षाद् विशेषणैक्यपक्षो वरः, अतत्त्वमसीति पदच्छेदस्तूद्भाष्यानु-व्याख्यानम् , अप्रामाणिकं चेत्यलम् ॥

॥ इति पृथगुपदेशाधिकरणम् ॥

—: ❀ :—

## ॥ अथांशाधिकरणम् ॥

### ॥ अंशो नानाव्यदेशादन्यथा चापि दाश-कितवादित्वमधीयत एके ॥

अद्वैताभिप्रेतसिद्धान्तसारः ।

अद्वैतसिद्धान्तः—जीवः परमात्मन औपाधिकं भेदमादाय तदंशः; विशेषणांशस्य विशिष्टस्य च ततो भेदात् , विशेष्यांशमात्रमादाय तु पर-मात्मनोऽभिन्नः; उपहितस्यापि जीवस्य स्वरूपेण परमात्मनैक्यात् । औपा-धिको हि तयोर्भेद उपाधिनिवृत्तौ स्वयं निवर्तते, इत्यभेद एव पर्यवसा-

नम् । अत एव जीवस्य कुत्रचन परमात्मना नानाव्यपदेशः, क्वचनाभेद-व्यपदेशः । इदं ब्रह्म जीवस्वरूपमादाय । मुक्तात्मनस्तु परमात्मनोऽभेद एव, न भेदलेशोऽपि; तत्प्रायोजकस्य भेदस्य बाधात् । सति चेवं "द्वा सुपर्णा सयुजा सखाया" इति "ब्रह्म दशा ब्रह्म कितवाः" "तत्त्वमसी"त्यादि-भेदाभेदव्यपदेशा उपपद्यन्ते ।।"

निष्कर्षस्तु जीव-ब्रह्मणोस्तादात्म्यमौपाधिकभेदमादाय तदुपाधिः । विशिष्टं च ततो भिन्नम् । अभिन्नं तु स्वरूपं विशेष्यमात्रम् । तत्र स्वरूपेण तयोरैक्येऽप्युपहितैकदेशस्यैव परमात्माभिन्नत्वाद् अंशपदमत्र । स्वरूपमात्रमुपहितावस्थमादाय तु न तत्रांशपदप्रयोगोऽपि युज्यते । अत एव भाष्यम्—अंशपदमत्रांश इवेति व्याचष्टे ।।

अत्रानुव्याख्यानम्—

"भेदस्य मुक्तौ वचनादपि तत्पक्षनिग्रहः ।
चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते ।।
अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित् ।
न केनचिदभेदोऽस्ति भेदाभेदोऽपि वा क्वचित् ।।
अभेदश्रुतयोंऽशत्वात् सादृश्यं चांशताऽस्य तु ।"

इति ।।

अयमाशयः—मुक्तावन्तःकरणाद्युपाधेरसत्त्वाद् मुक्तात्म-नोऽहमर्थस्यानौपाधिकत्वात् तदा जीव-ब्रह्मणोः स्वाभाविक एव भेदः, इति न तयोरभेदः संभवति । उदाहृताश्च बहवः श्रुतयो मुक्तौ जीव-परमात्मभेदे । अतो न जीवः परमात्मनोंऽशः । सति चैवं सूत्रेंऽशपदप्रयोगः सादृश्याभिप्रायः, तदधीनसत्ता-भिप्रायो वा । न ह्यन्यथा नानाव्यपदेशः, अभेद-व्यपदेशश्चोपपद्यते । तत्र भेदाभेदश्रुतीनां सार्थक्यं न केवलभेद-परत्वे युज्यते, न वा केवलाभेदपरत्वे । भेदाभेदोभयपरत्वं तु व्याहतम् । अतः सादृश्यमेवात्र सौत्रांशपदार्थः । अंशपदं हि—

"अंशस्तु द्विविधो ज्ञेयः स्वरूपांशोऽन्य एव च ।
विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्यमात्रयुक् ।।
अंशिनो यत्तु सामर्थ्यं यत् स्वरूपं यथा स्थितिः ।
स एव चेत् स्वरूपांशः प्रादुर्भावो हरेर्यथा ।।"

इत्यागमवचनात् सादृश्येऽपि प्रयुज्यते, स्वरूपेऽपि। अत्र त्वंश-पदं जीवपरं सादृश्यपरमेवोक्तवचनात् स्वीकर्तव्यम्। न ह्यन्यथा भेदाभेदोभयोपदेशो युज्यते। तत्र मत्स्यादिष्वभेदनिमित्तकोंऽशपदप्रयोगः—इति॥

इदमत्र तत्त्वम्–सूत्रोंऽशपदमुभयत्रांश इवांश इति सदृशपरतयैव व्याख्यायते। तत्र मुख्यांशे परमात्माधीनसत्ताकत्वं मुख्यांशत्वम्, जीवे तु तदधीनसत्ताकत्वे सति तत्सादृश्यमंशत्वम्। जीवप्रकरणात्तु गौणमेवांशत्वमत्र। इदं तु मुक्तात्मनां परस्परम्, परमात्मना च भेदाभेदव्यपदेशेऽपि भेदांशस्यैव प्राधान्यं मत्वांऽशसादृश्यमभिप्रेत्य द्वैतवादः, अद्वैतसिद्धान्तस्त्वमुख्यं भेदमादायाशत्वं मन्यते। तत्तु मुक्तौ भेदस्य सर्वात्मनाबाधाद् भेदव्यपदेशापेक्षांशव्यपदेशानुपपत्तिं मनसिकृत्य॥

यद्यंशपदं स्वरूपैक्येऽप्यमुख्यमुक्तागमानुसारेण मुक्तात्मानमधिकृत्यैव, तर्ह्यत्राद्वैतसिद्धान्त एवांशपदस्य स्वारस्यम्; सर्वात्मना स्वरूपैक्यात्। तत्र यदि स्वाधीनसत्ताकत्वं परमात्माधीनसत्ताकत्वं वा मत्स्यादीनाम्, तर्हि न स्वरूपैक्यम्? न च मत्स्यादीनामंशिना स्वरूपैक्यं तदधीनसत्ताकत्वेन, इति तेषामपि सादृश्यघटितमेवाशंत्वं जीवानामिवाङ्गीकर्तव्यम्॥

इदमेवात्रालोचनीयम्—यदि जीवानां परमात्मना सादृश्यमेवात्र तेषां परमात्मनाऽभेदस्यैव प्राधान्यमादाय विवद्यते, तर्हि तद्गुणसारत्वन्यायेनैव गतार्थत्वात्, किंप्रयोजनमिदमधिकरणमिति॥

वस्तुतस्तु—बद्धं जीवमभिप्रेत्यैवात्र भेदाभेदोभयव्यपदेशचर्चा, न तु मुक्तात्मनाम्। न हि मुक्तात्मनां परस्परम्, परमात्मना वा भेदव्यपदेशः श्रुतिषु कुत्रापि। भेदव्यपदेशश्रुतयस्त्वन्यत्रोदाहृता गौणमुक्ताभिप्रायाः न मुख्यमुक्ताभिप्राया इति तत्रैव विशदम्। बद्धात्मनोऽपि परमात्मना मत्स्यादीनामंशिनेव स्वरूपैक्ये, का वा कथा मुख्यमुक्तात्मसु? इति सूचनात् मुक्तात्मस्वरूपनिर्णयोऽप्यधिकरणसिद्धान्तनयेनैव चरितार्थः, इति नात्र त्वंपदार्थस्य ब्रह्माभेदयोग्यस्य निर्णयः॥

अयं हि पादः—आत्मन उत्पत्ति-नित्यत्वाणुत्व-विभुत्वः ज्ञानत्व-ज्ञातृत्व-कर्तृत्वाकर्तृत्वादिपरस्परविरुद्धश्रुतीनामविरोधसमर्थनार्थं प्रवृत्तोऽन्यत्रापि भेदाभेदश्रुत्योरप्यौपाधिकानौपाधिकरूपभेदेनोपपत्तिमेव समर्थयति। अतो

भेदाभेदश्रुत्यविरोधसमर्थनपरेऽत्र पाद औपाधिकभेदपरया स्वरूपमात्राभेदपरतया चांशत्वगौणत्वव्यवस्थैव युक्ता। अद्वैतिनोऽपि ह्यंशत्वं जीवस्य गौणमेव मन्यन्त इति सुधापरिमलो विशदयति। इयान् विशेषः—स्वरूपैक्यमादायांशत्वगौणत्वमद्वैतसिद्धान्ते, भिन्नांशत्वमादाय गौणत्वं द्वैतमते, मुख्यांशत्वं स्वरूपैक्यमादायापि क्वचिदिति तु निष्कर्षः ॥

॥ इत्यंशाधिकरणम् ॥

—:*:—

❀ ओं ❀

# ॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

## ॥ सन्ध्याधिकरणम् ॥

### ॥ सन्ध्ये सृष्टिराह हि ॥

अद्वैते सन्ध्याधिकरणार्थसंग्रहः ।

बृहदारण्यके श्रूयते—"न तत्र रथा रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते" इति । तत्र संशयः–किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः, आहोस्वित् शुक्तिरूप्यादिकमिव मायामात्रमिति । तत्र पूर्वपक्षः—पारमार्थिकी स्वप्नेऽपि सृष्टिः; "रथान् रथयोगान् पथः सृजते" "स एष सुप्तेषु जागर्ति कामं कामं निर्मिमाणः पुरुषः" इति प्राज्ञकर्तृक-सृष्टेरेवात्र वर्णनात्—इति ॥

सिद्धान्तस्तु—स्वप्ने न पारमार्थिकी सृष्टिः, किन्तु शुक्तिरूप्यादिवन्मा-यामात्रम् । इयान् विशेषः—शुक्तिरूप्यादौ तत्तत्पूर्वदृष्टानुभवजनितसंस्कार-सहकृता, तत्सदृशपुरोवर्त्यवच्छिन्नचैतन्याभिन्नप्रमातृचैतन्याश्रिता तूला-विद्या तत्तद्विषयाकारेण, तत्तदाकारवृत्त्याकारेण च परिणमते, साक्षिभा-स्यानां वृत्तिनिरपेक्षतामते तत्र विषयमात्राकारेण परिणमते, स्वप्ने तु सदृशपूर्वदृष्टानुभवजनितसंस्कारसहकृता प्रमातृचैतन्यमात्राश्रिता तूलाविद्या तत्तदात्मना जागर इव परिणमते ॥

तत्र सूत्रे मायामात्रमित्यत्र मायापदं तूलाविद्यापरम्; मात्रपदसमभि-व्याहारात् । तेन च जागरोपादानमायातो व्यावृत्तिर्लभ्यते । सा हि रथा-दीनां न साक्षादेवोपादानम्, किन्तु तत्तदवान्तरोपादानदारु-मृत्तन्तुभाव-ममनापन्ना स्वयमेव । अत एव जागरे शुक्तिरजतादीनामपि मायामात्र-त्वम् । अयमेव न्यायः—स्वाप्नेऽपि ॥

अत एव "न तत्र रथा न रथयोगाः न पन्थानः" इति सर्वस्य जागर इव तत्तदुपादानदार्वादीनां सर्वेषामभावं प्रतिपाद्यैव रथादीनां सर्वेषां सृष्टि-राम्नायते । "स एव सुप्तेषु जागर्ति" इत्यत्रापि पुरुषपदं प्रमातृचैतन्य-परम्, न प्राज्ञपरम् । अत एव न स्वाप्ना ईश्वरसृष्टाः । ईश्वरसृष्टत्वं हि

जागराणां तत्तत्कार्यावान्तरोपादानन्तरमपेक्ष्यैव, न तु तस्य विचित्रशक्तियोगेऽपि तत्तत्साक्षादुपादानदारु-मृदाद्यनपेक्ष्य। इदमेवाभिप्रेत्य सूत्रशेषः "कात्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति, इत्यद्वैतराद्धान्तः ॥

स्वाप्निकानां वासनापरिणामत्वम्, सत्यत्वं
चेपि द्वैतसिद्धान्तः।

द्वैतसिद्धान्तेऽपि यद्यपि"कात्स्न्येनानभिव्यक्तस्वरूपत्वात्" जागरवैलक्षण्यं स्वाप्निकानामद्वैतसिद्धान्तवदेवोरीक्रियते। पूर्वपूर्वसंस्कारमपेक्ष्य त्वीश्वरसृष्टत्वमेव। इयान् विशेषः—पूर्वपूर्ववासनाख्यसंस्कारस्यैव परिणामाः स्वाप्निकाः; तत्तद्रथादिवासनानां सत्यत्वात् स्वाप्निका अपि सत्या एव। एतन्मते शुक्तिरूप्यादितः स्वाप्नानां वैषम्यं तु शुक्तिरूप्यादिकं न वासनाया परिणामः, न वेश्वरसृष्टम्, स्वाप्निकास्तु वासनापरिणामाः, ईश्वरसृष्टाश्चेति। अत एव शुक्तिरूप्यादौ शुक्तिरिति सम्यग्ज्ञानेन रजतस्य बाधो जागराणामिव, स्वाप्नानां तु न तथा बाधः ॥

स्वाप्निकवासनापरिणामत्वायोगः।

इदमेवात्रानुयुज्यते—कुत्र वा वासनायाः संस्कारापरपर्यायाया विषयकारणता, तेन विषयेण ज्ञानस्य सविषयत्वं च दृष्टम्, विना प्रवृत्तिविज्ञानं सौगतानाम्? अतः सौगतानां सिद्धान्त एव स्वप्ने, जागरभ्रमस्तु तदेकदेशिनामेवासत्ख्यातिः, इति जागरभ्रमस्य ततो विशेषः इति वक्तव्यम्। तत्र च जागरभ्रम इव विनैवेश्वरसृष्टत्वं पारमार्थिकत्वं च विना निर्वाहात् किमितीश्वरसृष्टत्वं स्वाप्नानां स्वीकर्तव्यम्? यदि श्रुतिप्रामाण्यात्, तर्हि जागरवदेवेश्वरसृष्टानामेव स्मरणमात्रं स्वप्न इत्येतावन्मात्रमङ्गीक्रियताम्, किमिति वा वासनापरिणामत्वमपि स्वाप्नानाम्?

स्वाप्नानामीश्वरसृष्टत्वे न श्रुतिः प्रमाणम्।

कुत्र वा श्रुतावीश्वरस्य स्वप्ने स्रष्टृत्वमाम्नातम्? "अथ रथान् रथयोगान् पथः सृजते" तु स्वप्नेऽसतामेव सृष्टिमाम्नाति—"न तत्र रथा न रथयोगाः" इति। न च प्रागभावपरतया योजनमत्र। न हि द्वैते, अद्वैते वा कारणात्मताऽतिरिक्तः प्रागभावो नाम कश्चिदस्ति। अतः स्वप्नेऽप्यसत्ख्यातिरेव सौगतानामिवेति वक्तव्यम् ॥

ईश्वरस्रष्टृत्वं तु साधारणकारणविधयैव घटादिजागरेषु यद्यपि तत्तदुपादानाद्यपेक्षयैव सर्वत्र दृश्यते, न तु तत्तदसाधारणोपादाननिरपेक्षं

वासनामात्रपरिणामत्वमादाय । वासना चेयं मनःपरिणामरूपा स्मृतिमात्रं जनयितुमीष्टे, न सविषयं प्रत्यक्षम् । शुक्तिरूप्यादावपि न कथमन्यथा संस्कारापेक्षेऽप्यसत्ख्यातिः ? कुतो वा न वासनापरिणामत्वम् ?

कात्स्न्येंनानभिव्यक्तस्वरूपत्वं ह्युभयत्र सम्प्रतिपन्नम् । कात्स्न्येंनानभिव्यक्तस्वरूपत्वम्, ईश्वरस्रष्टृत्वं च व्याहतम् । वासनापरिणामो मनोरथादिस्थले विना विषयं जीवसृष्टेष्वेव दृश्यते । न चात्रेश्वरस्रष्टृत्वाम्नानमपि । "स एष सुप्तेषु जगति कामं कामं पुरुषो निर्मिमाणः" इत्यत्र पुरुषपदं न प्रमातृपरम्; सुप्तपदस्य सुषुप्तपरत्वेन स्वप्नपरत्वाभावात् । सुषुप्तौ सृष्ट्यभावाच्च, इति जीवात्मपरमेव तत्र पुरुषपदम्, यस्य मनोरथादौ वासनामयस्यापि स्रष्टृत्वं प्रसिद्धम् । तत्र सत्यमस्ति संकल्पोऽपि, यतो जागरवत् संकल्पाश्रयो मनो वर्तते । अत्र तु मनोऽपि न व्यक्तमस्ति । इदं तु परमतेन । अद्वैतसिद्धान्ते तु प्रमातृचैतन्याश्रिता तूलाविद्यैव शुक्तिरजतादाविव स्वाप्नभ्रमेऽप्युपादानम्, न तु वासनाः; तासां सविषयानुभवाहेतुत्वात् ॥

स्वाप्नानां वासनापरिणामत्वायोगः ।

वस्तुतस्तु—वासनाया अनादेरेव स्वाप्नोपादानत्वं यद्यावरणकारणत्वेन सत्यत्वं च, तर्हि जागराणामपि स्वप्नदृष्टान्तेन कुतो न तथात्वं भवति ? यदि श्रुतिप्रामाण्यात्, तर्हि विविच्यताम्—कुत्र वा श्रुतौ वासनोपादानत्वम्, ईश्वरस्रष्टृत्वं चाऽऽम्नायते ? श्रुतिर्हि "न तत्र रथा न रथयोगाः न पन्थानो भवन्ती"ति रथादीनां सृष्टेः पूर्वमसत्त्वमेव बोधयति ॥

असतस्तस्य सृष्टिस्त्वीश्वरेण न जागरादौ दृष्टा । प्रकृत्यतिरिक्तोपादानानपेक्षमीश्वरस्रष्टृत्वं सत्यस्य जगतः कुत्र ? वासना हि संस्कारात्मा स्मृतौ करणमपि नोपादानम् । अयमेव न्यायः प्रत्यभिज्ञास्थलेऽपि ॥

सति चैवमीश्वरस्रष्टृत्वे, कथं स्वाप्नानां प्रत्यभिज्ञानतो वैलक्षण्यम् ? विषयस्तत्र पूर्वदृष्ट एव, अत्र तु स्वप्न एव यदि दृश्यते, तर्हि संस्कारस्य ज्ञाननिमित्ततयाऽवगतस्य विषयोपादानत्वं कथम् ? "न तत्र रथाः" इति वाक्यवशाद् अपूर्वस्यैव विषयस्य तत्र यदि प्रतीतिः, तर्ह्यपूर्वमेव वस्तु तत्र शुक्तिरूप्यादिवद् तूलाविद्याकार्यमिति मत्वा सन्तुष्यताम् । तत्र "न तत्र रथाः" इति न रथादीनां प्रागभावाभिप्रायम्; कारणात्मतातिरिक्तप्रागभावानङ्गीकारात् ॥

वस्तुतस्तु—स्वाप्नानां वसनापरिणामत्वे तस्या मृदो घटादाविवानु-वेधापत्तिः, इति स्वप्ने तस्या अपि कार्यवत् प्रत्यक्षापत्तिः; तन्नाशकाभावात् जागरेऽपि कथं न स्वाप्नानां प्रतीतिश्च; वासनाया इव विषयाणामपीश्वरसृ-ष्टानां सत्यत्वात्, अद्वैतसिद्धान्ते तु तूलाविद्याया उपादानस्यैव विषयाका-रेण परिणामात्, तस्याः साक्षिणा भानात्, रजतादीनां नाम-रूपात्मनाऽ-नुवेधेनाविद्यानुविद्धतया प्रतीत्युपपत्तेर्न कोऽपि विरोधः ॥

स्वाप्नानां तत्तत्पुरुषमात्रानुभाव्यानां नेश्वरसृष्टत्वम् ।

परमार्थतस्तु—"स एष सुप्तेषु" इति वाक्यात् पुरुषस्य जीवस्यैव तदाश्रि-ततूलाविद्याद्वारा निमित्तकारणत्वम्, प्रमातृचैतन्याश्रितत्वेनोपादानता च स्वाप्नानामिति, तथापि वस्तुनस्तस्यैव परमात्मत्वात्, सर्वत्राभिन्ननि-मित्तोपादानता परमात्मनो न हीयते ॥

तत्र स्वप्ने साक्षिरूपेणोपादानत्वम्, जागरे तु तदेव विशिष्टरूपेणा-पि ज्ञायते, इति विशिष्टरूपेण तज्ज्ञानात् तदाश्रिततूलाविद्यानिवृत्त्या जागरे न स्वाप्नानामनुवृत्तिरद्वैतवादे । सर्वथा तु तत्तत्पुरुषमात्रानुभाव्यानां स्वाप्नानामीश्वरसृष्टत्वं न क्षोदक्षमम् ॥

ईश्वरसृष्टत्वस्य सत्यत्वाप्रयोजकत्वम् ।

तत्त्वतस्तु—ईश्वरसृष्टत्वं जागराणामपि नाबाध्यत्वरूपसत्यत्वप्रयोज-कम् । तत्रेश्वरत्वं हि परमात्मनोऽनाद्यज्ञानोपहितत्वप्रयुक्तम्, न तु संविन्मात्रत्वनिबन्धनम्, इत्यौपाधिकं मिथ्यात्वमेवेश्वरस्य, इति यावदु-पाधि यावत्परमेश्वरसत्त्वमेव च सृष्टिकथा, इति कथमीश्वरसृष्टत्वम्, सत्य-त्वं च न व्याहन्यते ? श्रुतिर्हि सर्वस्य प्रपञ्चस्येश्वरसृष्टत्वम्, तस्य चैतन्या-त्मनोपादानस्याद्वितीयत्वं च बोधयति, इति श्रुति प्रामाण्यादीश्वरसृष्टाना-मपि मिथ्यात्वमेव । तथाच श्रुतयः—"एकमेवाद्वितीयम्" नेह नानाऽ-स्ति किञ्चन" "उदरमन्तरं कुरुते अथ तस्य भयं भवती"त्यादयः । "सदे-वेदमि"ति सामानाधिकरण्यं तु बाधायामेव, न सादृश्यादिनेति व्यक्तमन्यत्र । व्यक्तीकृतं चेश्वरसृष्टस्यापि जगतो मिथ्यात्वं पूर्वत्र, इति तेन न्यायेन स्वाप्नानामपीश्वरसृष्टानां सत्यत्वसाधनं न विकल्पसहम् ॥

इदमेवाभिप्रेत्य सूत्रे "मायामात्रमि"ति मायामात्रपदम् । तत्रेश्वरसृष्टा मायामयाः, तदुपादेयमृदादिकरणकलापापेक्षाश्च, न तु स्वाप्ना इव माया-मात्राणि । अत एव ते कार्त्स्न्येनाभिव्यक्तस्वरूपाः, न तु स्वाप्ना इव कार्त्स्न्ये-

नानभिव्यक्तस्वरूपाः। अनिर्वाच्यत्वं तूभयत्र समानम्; अधिष्ठानसाक्षात्कारबाध्यत्वात् ॥

स्वाप्नमिथ्यात्वाक्षेपपरिहारः।

एतेन—

"नानिर्वाच्यमिह प्रोक्तं मायामात्रपदेन हि ॥
विलक्षणं सदसतोरिति हि व्याहतं स्वतः ॥"

इत्यपि–परास्तम्; सदसद्विलक्षणत्वादिरूपस्यानिर्वचनीयत्वस्य वस्तुतो निर्धर्मिके ब्रह्मण्यनाद्यविद्याकल्पितसदादिभेदवत्यधिष्ठानेऽविद्योपहित आरोपस्य तत्तत्त्वसाक्षात्कारेण निवृत्तेश्च सत्त्वासत्त्वयोः परस्परविरहत्वासंभवादिनोपपादितत्वेनेश्वरसृष्टस्य मायामयत्वस्य दुरपह्नवत्वात्, इति मायापेक्षमीश्वरसृष्टत्वं न सत्यत्वे तन्त्रम्, इति न दृष्टान्तेन स्वाप्नानामपि सत्यत्वसाधनं संभवति। यथा च मिथ्यात्वेऽपि वेदान्तानां ब्रह्मण्यबाधितं प्रामाण्यम्, सगुणवाक्यानां तु व्यावहारिकमेव तत्, तथा तत्र तत्र विशदीकृतम् ॥

स्वाप्नेषु जागरत्वभ्रममात्रमिति शङ्का।

यत्तु—

"स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचित्।
जाग्रत्त्वमात्रमत्रैकमन्यथा दृश्यते स्फुटम् ॥
अतो मिथ्या न च स्वप्नो जाग्रद्वा जाग्रदेव वा।
आत्मवत् क्वचिदात्मा च स्यादिव भ्रमगोचरः ॥
एतावता न मिथ्याऽसौ स्वप्ने जागरिते तथा।
यद्यात्मन्यन्यथा दृश्यं भ्रान्तमत्रापि तद् भवेत् ॥
अबाधितानुवृत्तेस्तु स्वप्नादेर्भ्रान्तिता कुतः।
न च काचित् प्रमा विश्वभ्रान्तत्वे सर्वमेव च ॥
अभ्रान्तत्वे प्रमाणं तु कथं तद्भ्रान्तता भवेत्।"

इत्यनुव्याख्यानम्।

तस्यायमाशयः—जागराणामिव स्वाप्नानामपि न क्वचित् काले बाधो दृश्यते। अतः स्वप्नोऽपि जागरवद् न मिथ्या। स्वाप्न-जागरामिथ्यात्वं चात्मदृष्ट्या। सत्यप्येवं स्वाप्न-जागरयोर्वैलक्षण्यं तु स्वाप्ने जागरत्वांशस्य भ्रान्तिः, जागरे तु तत्र प्रमा। न च भ्रमविषयत्वमात्रेण मिथ्यात्वम् ॥

स्वाप्नमिथ्यात्वानुमाने हेतु-साध्ययोर्दुष्टत्वम् ।

स्वाप्नगजादयः, मिथ्या, भ्रमविषयत्वात् ; शुक्तिरजतवदित्यनुमानम् । तत्र भ्रमविषयत्वं किमारोपिततया, उतारोपविषयतया वा । तथा मिथ्यात्वमपि किं निषेध्यतया, उत निषेधाधिकरणतया वा। तत्र शुक्तिकेव रजतमप्यारोपविषयः, इति शुक्तिकाया इव रजतस्यापि मिथ्यात्वानुपपत्त्या न प्रथम-द्वितीयौ कल्पौ । न च शुक्तिरपि तद्वद् मिथ्या; तस्या अप्यनेन नयेनात्मवद् भ्रमविषयत्वेऽपि मिथ्यात्वायोगात् , अन्यथा भ्रान्तिविषयत्वेनात्मनोऽपि मिथ्यात्वापत्तिः । आत्माऽपि हि क्षणिकोऽहमिति भ्रान्तिविषय एव । न च सोऽपि मिथ्या, नाहं क्षणिकः, किन्तु स्थिर इति बाधविषयश्च ॥

एतेन—स्वाप्न-जागरोभयपक्षकानुमानमपि—परास्तम् ; उक्तरीत्याऽऽत्मनि व्यभिचारात् । न च क्षणिकत्वभ्रमविषय आत्माऽपि मिथ्या; अपसिद्धान्तात् । आरोपिताकारमात्रस्य मिथ्यात्वे तु स्वाप्ने जागरत्वमात्रस्य मिथ्यात्वम् , भ्रान्तिविषयत्वं वा, न तु स्वाप्नगजादीनामपि, इति सिद्धसाधनम्—इति ॥

आरोप्यतया, निषेध्यतया वा भ्रान्तिबाधविषयत्वं त्वात्मनि क्षणिकत्वाद्याकारस्येव स्वाप्ने जागरत्वाद्याकारमात्रमिथ्यात्वेन, भ्रान्तिविषयत्वेन च निर्वहति । अत एव स्वाप्नगजादीनां जागरादावननुवृत्तिः, इति स्वाप्नगजादौ स्वरूपासिद्धिरुक्तहेतोः ॥

सत्यमत्र स्वाप्न-जागरयोरस्ति वैधर्म्यम् । अत एव तु सूत्रमपि "वैधर्म्याच्च न स्वप्नादिवत्" इति । वैधर्म्यं त्वनभिव्यक्तस्वरूपत्वेन, अभिव्यक्तस्वरूपत्वेन च । तत्रानभिव्यक्तस्वरूपत्वं जागरवत् स्पष्टतायाः, अर्थक्रियाकारितायाश्चाभावः, अभिव्यक्तत्वं च तद्विपरीतम् । तत्रास्पष्टत्वं जागरादीनामिव तत्तदसाधारणोपादानाद्यनपेक्षत्वेन मनःपरिणामवासनामात्रोपादानकत्वेन, मनोविकारत्वमात्रेण वा—इति ॥

इदमेवात्रालोचनीयम्—किं वासनाया अर्थाकारेण, ज्ञानाकारेण, उभयाकारेण वा परिणामः; अर्थाकारमात्रेण वा, ज्ञानाकारमात्रेण वा । तत्र न

द्वितीयः; अपसिद्धान्तात्, मनोरथादौ तु नार्थस्य संस्कारपरिणामत्वम्, किन्तु तदाकारज्ञानस्यैव। तृतीये त्वीश्वरसृष्टानामेव स्वप्ने रथ-गजादीनां भाने दोषवशेन प्रमुष्टतत्ताकं स्मरणमेव तत् स्यात्॥

अत एव 'इदमि'ति प्रतीतिः, न तु तदिति। न च स्वाप्न-जगरयोर्वैधर्म्यम्। स्मरणमप्यस्पष्टमेव, नियमेन नार्थक्रियाकारि, इति स्वाप्नानां मिथ्यात्वमेव शुक्तिरूप्यादिवदित्यङ्गीकर्तव्यम्। तत्र च जागराणामिव यद्यपि प्रवृत्ति-प्रयोजकत्वमात्रं वर्तते, परन्तु परीक्षितस्य तस्य संवादिप्रवृत्तिजनकत्वा-भावात् तस्य बाधः। जागराणामपि तु सत्यखण्डाकारबाधज्ञाने बाधो यद्यपि वर्तते; तथापि यावद्बाधं व्यावहारिकार्थक्रियाकारित्वेन व्यावहारि-कत्वम्, स्वाप्न-शुक्तिरूप्यादीनां तु व्यवहारकाल एव बाधात् प्रातिभासि-कत्वेन मिथ्यात्वं स्पष्टमिति विशेषः॥

तत्र द्वैतमते चिदचिन्मिश्रमनोधर्मो वासना, अद्वैतमतेऽपि तु चिद-चिद्ग्रन्थिरूपाहमर्थधर्मो वासना। विशेषस्त्वचिदंशो मनः, तत्परिणामस्तु मनोधर्मोऽपि वासना चिदचितोस्तादात्म्याध्यासात् चिदचिद्ग्रन्थिरूपा-हमर्थधर्मः। उभयत्र चिदंशमात्रमात्मस्वरूपं स्वप्रकाशत्वाद् भासते ततो विविक्तम्॥

इयान् विशेषः—व्यवहारदशायां संविन्मात्रं चिदचिन्मिश्रस्वरूपा-पेक्षया स्वतन्त्रम्, ततः पृथग् वा न प्रकाशते, द्वैतमते तु तत् पृथक् प्रकाश-मानं वर्तते, यदेवाहमर्थः प्रत्यगात्मा जीवो नाम। उभयत्र चिदचिन्मिश्रात् पृथक् प्रकाशमानस्यात्मनो न वासना धर्मः। अर्थक्रियाकारित्वं ह्यसतोऽप्य-विशिष्टम्; स्वाप्नानामपि चरमधातुविसर्गादीनां प्रसिद्धत्वात्। मनोरथादाव-पीयमेव नीतिः, इति वासनामयत्वं नास्पष्टतायाः, बाह्यार्थक्रियाकारितायाश्च विरोधि, इति चरमधातुविसर्गादौ स्वाप्ने व्यभिचाराद् अनभिव्यक्तस्वरू-पत्वं न मनोमयत्वे प्रयोजकम्॥

एतेन—चरमधातुविसर्गादीनामपि स्वाप्नानां मनोविकारत्वमात्रम्—प्रत्युक्तम्। न च स्वाप्नानां प्रातिभासिकत्वेऽप्यनभिव्यक्तस्वरूपत्वं न सम-न्वेति; शुक्तिरूप्यादौ वासनामयेऽप्यनभिव्यक्तस्वरूपत्वम्, अस्पष्टत्वेन बाह्यार्थक्रियाकारित्वाभावेन च समानम्। अतः शुक्तिरूप्यादिस्थलीया नीतिरेवात्रापि। यदि तत्र न वासनामयत्वम्, तर्हि स्वाप्नभाने कथम्?

स्वाप्न-शुक्तिरूप्यावैलक्षण्यमद्वैत एव ।

यथा चासत्ख्यातिर्न क्षोदक्षमा, तथा पूर्वं विशदम्, इति शुक्तिरूप्यादिकमिव स्वाप्ना अपि भ्रान्तिविषयत्वाद् मिथ्येत्येव पर्यवस्यति; तदभावाद्विशेष्यकज्ञानप्रकारत्वात् । तत्र तदभाववत्त्वं बाधदृष्टिमादाय तदन्यथानुपपत्तिनिर्णेयम्, न तु भ्रमकाल एव तदभाववत्त्वस्यापि प्रतीतिः; तदानीं तद्वत्त्वस्यैव प्रतीतेः । तत्र संसर्गमात्रारोपेणान्यथाख्यातिर्वा, विषयाणामप्यविद्याविलासानां तदानीमुत्पत्त्याऽनिर्वचनीयख्यातिर्वेति त्वन्यदेतत् ॥

तत्र श्रुतिः परमार्थदर्शिनी "न तत्र रथा न रथयोगाः" इति स्वप्न आत्मनि रथादीनामभावं प्रस्तुत्यैव "अथ रथान् रथयोगान् पथः सृजते" इति रथादीनामात्मन्यारोपमुपदिशति । न चात्र प्रागभावो विवक्ष्यते; मनोविकारवासनाया जागरे विषयानुपादानायाः विषयप्रागभावत्वाभावेन वासनायाः विषयप्रागभावावस्थारूपत्वासंभवात्, अन्यथा घटादिज्ञानानां जागराणामपि कथमीश्वरसृष्टानामपि न मनोविकारत्वम्? बाह्यार्थक्रियाकारित्वम्, स्पष्टत्वं च स्वाप्नकामिनीसंयोगादावपि समानम् । अतः शुक्तिरूप्यादिकस्येव स्वाप्नानामपि प्रातिभासिकत्वेन मिथ्यात्वमेव स्वीकर्तव्यम् । तथाच प्रयोगः–स्वप्नगजादयः, मिथ्या, भ्रमविषयत्वात्; बाधविषयत्वाद्वा; शुक्तिरूप्यवदिति । तत्र भ्रमविषयत्वं प्रकारतया भ्रमविषयत्वम्, इति सर्वस्य ज्ञानस्याधिष्ठानांशेऽबाधिते प्रमात्वाद् हेतोः समन्वयो दृष्टान्त-दार्ष्टान्तिकयोः । तत्र सन्मात्रे ज्ञानस्य प्रामाण्यम्, विकल्पांशे, प्रकारांशे वा सर्वं ज्ञानमप्रमेति ब्रह्मसिद्ध्यादिमते तु घटादीनां व्यावहारिकाणामपि दृष्टान्तत्वम्, इति प्रसङ्गादत्र जागरमिथ्यात्वनिरासोऽपि परास्तः ॥

स्वाप्नमिथ्यात्वस्यानुमानेन साधनम् ।

जागरमिथ्यात्वं तु पूर्वं बहुधा समर्थितम्, इति न शुक्त्यादौ, आत्मनि वा व्यभिचारः । आत्मा क्षणिक इति त्वौपाधिकक्षणिकत्वावगाहि ज्ञानं व्यावहारिकमेव देहात्मत्वज्ञानवत् । आत्मा स्थिर इति ज्ञानं तु परोक्षं नापरोक्षत्वे पूर्वस्य, भ्रमत्वे वा बाधकम्, पूर्वस्यापि परोक्षत्वे तु तत्रोपाधिधर्ममात्रस्याध्यासात् सन्निकृष्टे विषयेऽन्यथाख्यातेरेव स्वीकाराद् न क्षणिकत्वस्य प्रातिभासिकत्वप्रयुक्तं मिथ्यात्वम् ॥

वस्तुतस्तु—आत्मा क्षणिक इत्यत्रापि क्षणिकत्वस्यैव प्रकारतया भानं नात्मनः इति न तत्रात्मनो बाध्यत्वम्; अधिष्ठानतयैवात्र भानात् ॥

बाधविषयत्वादिति हेतोरन्वयः ।

एतेन--बाधविषयत्वादिति--व्याख्यातम्; शुक्तिरूप्य-स्वाप्नादीनामिव क्षणिकत्वस्यैव तत्र बाध्यत्वात् । स्वाप्ना अपि हि संविन्मात्रतया स्वप्रकाशात्मस्वरूपस्य सुषुप्तौ साक्षात्कारेणैव बाध्याः, यथाऽखण्डाकारवृत्त्या जागराः । तत्र बाधज्ञानं दोषनिवृत्त्यधीनं सुषुप्तौ, जागरे वा स्वाप्नानामबाधम् । इदमेवाभिप्रेत्य--

"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ॥"

इति । तत्र स्वाप्निकानामपि यद्यपि संविन्मात्रं साक्षिरूपमेवाधिष्ठानं जागराणामिवाऽविद्योपहितम्; तथापि जागराणां मायोपादानम्, दोषोऽपि चैतन्यावरणविधया हेतुः, स्वाप्नानां तु दोषविधयाऽऽगन्तुकी निद्रा कारणम् । उपादानं त्वन्तःकरणोपहितचैतन्याश्रयतूलाविद्येति निरूपितम् ॥

अनेन ज्ञाप्यत ईश्वराश्रिता माया, तद्द्वारेश्वरश्च न स्वाप्नानां कारणम्, किन्त्वहंकारोपहितचैतन्याश्रयतया तूलाविद्या, जीवश्चैवोपादानमिति । तत्रोभयोरपीश्वरसृष्टत्वे का वाऽपेक्षा निद्रायाः? कुतश्च जागरेऽपि वासनामात्रेण तदुपादानकस्य, तदुपलक्षितस्य चार्थस्य न भानम्? कुतो वेश्वरसृष्टत्वाविशेषे जागरात् स्वाप्नानां वैधर्म्यम्? पूर्ववासना हि जागरसृष्टावपि कारणमेव ॥

अत एव "धाता यथापूर्वमकल्पयत्" इति प्रतिकल्पं यथर्तुन्यायेनैव सर्वेषामीश्वरसृष्टत्वम्; अन्यथा कल्पभेदेऽपि पदार्थस्वभावैक्यं भज्येत, घुणाक्षरन्यायेन वा प्रपञ्चसृष्टिरिति च स्यात्, इति स्वभाववादेन सांकर्यमापद्येत । तत्त्वे चेश्वरसृष्टेषु केषांचन तत्तद्जीवमात्रानुभाव्यत्वमिति वैषम्यं निर्निमित्तं स्यात् ॥

वासना हि मनोविकारो मनोधर्मः, इति मनस एव स्वाप्नाश्रयत्वं स्यात् । जाग्रदाद्यवस्था तु जीवस्य, इति जीवस्य कथमवस्थात्रयभाक्त्वम्? अवस्थात्रयेऽपि मनोधर्मावस्थावत्त्वेनैव जीवत्वे तु साक्षात् जीवस्य विशिष्टस्य जाग्रदाद्यवस्थात्रयानुपपत्तिः । अतः स्वप्नावस्थाऽपि जीवस्याहमर्थस्यैव । तत्तदवस्थावत्त्वं तु संविदात्मनस्तस्य कल्पितमेव । परमार्थतस्तु संविन्मात्रतैव सिद्धान्तः, इति स्वप्नावस्थापरीक्षणमुखेन सद्वितीयत्वं ब्रह्मणोऽध्यारोपेण, अपवादेन तु निर्विशेषत्वमिति फलति ॥

स्वप्ने जागरत्वभ्रमत्वनिरासः, आत्मख्यात्यापत्तिश्च ।

एतेन—स्वप्ने जागरत्वमात्रस्य भ्रम इत्यपि—परास्तम्; तत्र जागरज्ञानमात्रस्य स्वाप्न आरोपितत्वं मन्यते, उत सार्थस्य । आद्ये किन्नाम जागरत्वं ज्ञानस्याबाधितविषयसम्बन्धं विहाय? सर्वस्य ज्ञानत्वाविशेषात् । सविषयस्यैव भ्रमत्वं तु विषयस्येश्वरसृष्टत्वे नोपपद्यते, विषयस्यापि बाधं विना वा, इति को नामाऽयं जागरत्वभ्रमो नाम? यदि बहिर्वदवभासमानत्वम्, तर्हि विषयस्यान्तरत्वं मुख्यम्, बहिर्वदवभासमानत्वं भ्रमः, बहिष्टत्वमात्रस्य स्वप्न आरोप इति पर्यवसन्नम्, इत्यात्मख्यातेरेव नामान्तरम् । विशेषस्तु-नेश्वरसृष्टत्वमात्मख्यातौ, द्वैतसिद्धान्ते त्वैश्वरत्वमधिकम् ॥

इदमेवात्र पृच्छ्यते,—किं वाऽत्रेश्वरस्य कृत्यम्? वासनापरिणामतामात्रेण तूलाविद्यापरिणामतामात्रेण वा निर्वाहात् । यदि न चेतनानधिष्ठिताया अचेतनाया नोपादानत्वम्, तर्हि वासनायाश्चिदचिद्ग्रन्थ्येदेशश्चिदंश एवाधिष्ठाता कामं मन्यताम् । तदाधिष्ठिता तु साऽविद्यैवेत्यद्वैत एव प्रभातम् ॥

मायापदेन वासनालक्षणाऽसंभवः ।

"मायामत्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति सूत्रे मायामात्रपदमीश्वरस्रष्टृत्वे न स्वरसम् । तत्र माया यदि निरुक्तवशाद् ज्ञानम्, तर्हि वासनोपादानतावादः, मनोविकारतावादो वा लुप्यते । प्रज्ञापदं मनउपादानकत्वसामान्याद् वासनाया लक्षकमिति तु—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ।"

इति लोकप्रसिद्धनयेन प्रज्ञायाः स्वोपादानमनोलक्षकत्वम्, सत्यम्, कथञ्चन भवति; कार्येण कारणलक्षणस्य बहुशो दर्शनात्, कार्येण कार्यान्तरलक्षणं त्वेकोपादानकत्वेन बाधितम्, लोकविरुद्धं च । न हि कटकशब्द एकस्वर्णोपादानकत्वेन कुण्डलस्य लक्षकः कदापि, विना वैयक्तिकसंकेतविशेषम्, इति मायापदेन वासनाया उपस्थापनं बाधितमित्येकं दूषणम् ॥

अस्तु वा कथञ्चनैकोपादानकत्वेन प्रज्ञापरेण मायापदेन वासनाया उपस्थापनम्; तथापि प्रज्ञा, वासना वा चिदचिद्मिश्रमनोधर्मः, अहमर्थजीवधर्मो वा कथं जीवकारणत्वकल्पं प्रथमोपस्थितं विहायेश्वरकारणतायां पर्यवसाययति? तत्र यदीश्वरस्यापि प्रज्ञा वर्तते, इति मायापदेनैश्वरी प्रज्ञा विवक्ष्यते, तर्हि तदीया प्रज्ञा साक्षिरूपा न मनोधर्मः, वासना वा, इति प्रज्ञापदेन कथमेकोपादानकत्वेन वासनाया विवक्षा? एकेन माया-

पदेन लक्ष्येण मुख्येश्वरप्रज्ञा, लाक्षणिकी वासना च विवक्ष्यत इति कल्पनायां तु न सूत्रस्वारस्यं स्वमते—इति ॥

मायामात्रपदार्थस्य द्वैताभिमतस्यानौचित्यम् ।

एतेन—मात्रपदमपि—व्याख्यातम् । तद्धि—

"अतः प्रज्ञाऽत्र मायोक्ता जैव्युपादानमेव सा ॥
निर्मितमैश्वरी मुख्या निर्मितं त्रातमेव च ॥
ताभ्यां सह पृथक् चैव मायामात्रमितीर्यते ।
उभाभ्यां मातमैश्वर्यात् त्रातं सह पृथक् ततः ॥
प्रज्ञात्मकं मनो येन मनोरूपाश्च वासनाः ॥"

इत्यनुव्याख्यानोक्तयैकस्यैव मिङ्धातोर्मात्रपदस्यापि व्युत्पत्तिभेदेन निर्मितत्व-त्रातत्वोभयपरत्वमिति वक्तव्यम् । अत्रापि योजने सूत्राणां वैरस्यं स्वयमेव द्वैतिनो हृदयेनानुभवन्ति ॥

इदमेवात्र पृच्छ्यते—कुतो वाऽयं स्वयं महान् क्लेशः ? कुतश्च सूत्राणामपि शिरसि महान् भारश्चाधीयते ? न हि कुत्रापि स्वाप्नानामीश्वरसृष्टत्वे किमपि प्रामाणमस्ति । 'स एष सुप्तेषु जागर्ति पुरुषः' इत्यत्र पुरुषपदमीश्वरपरमिति न संप्रतिपन्नम् । सुषुप्तम्, जागरणम्, स्वप्नश्च जीवस्यैव मुख्यम्, न त्वीश्वरस्य; अन्यथा परम्परया कुलालादिसृष्टानामपीश्वरसृष्टत्वाविशेषात् जीवसृष्टिकथैव लुप्येत ॥

स्वाप्नभ्रमत्वोपपादनम् ।

परमार्थतस्तु—वासना, तूलाविद्येति च नामभेदमात्रमित्यद्वैतिनां सिद्धान्तदृष्ट्या स्वाप्नपदार्थपरीक्षैव वरिष्ठा । अनादिर्हि वासनाऽनुभवजन्याऽपि बीजाङ्कुरन्यायेनापि मनोविकार एव । सा जैवीति वादस्तु मनोविकारत्वकल्पं व्याहन्ति, इति भ्रान्तित्वमेव स्वाप्नप्रत्ययस्य सविषयस्य । न चार्थक्रियाकारित्वाऽभावः; कामिनीसंयोगादौ तत्सत्त्वात् ॥

न च बाधाभावः; निद्रादोषे निवृत्ते प्रमातृचैतन्यस्य यथावद् ज्ञानेन तदाश्रितस्य तद्विषयस्य च तूलाज्ञानस्य, तत्परिणामानां स्वाप्नानां च बाधात् । यावद्बाधं प्रामाण्यम्, स्पष्टत्वं च सर्वत्र समानम् । "वैधर्म्याच्च न स्वप्नादिवदि"ति सूत्रं विश्ववैधर्म्येण सत्त्वं वारयतीति द्वैतसिद्धान्तः स्वप्नेऽऽसत्त्वं विषयाणां स्वीकरोति, इति कथं स्वप्नस्य न भ्रमत्वम् ?

असतोऽपि साधकत्वम् ।

मिथ्याभूतस्याप्यर्थक्रियाकारित्वात् , सत्त्वस्य कारणतानवच्छेदकत्वाच्च शुक्तिरूप्यादीनां स्वाप्नानामपि व्यावहारिकप्रपञ्चस्येवार्थक्रियाकारित्वम् । सत्यम् , मिथ्याभूतस्यार्थक्रियाकारित्वे परं प्रति नाद्वैतिभिः किमपि दृष्टान्तयितुंशक्यम् । इदमेवात्रानुयुज्यते-सत एव साधकत्वमिति द्वैतसिद्धान्तवादिभिरपि किं वाऽद्वैतिनं प्रत्युदाहरणं दातुमिष्यत इति ? सत्त्वासत्त्वौदासीन्येनैव हि पदार्थानां साधकत्वम् । इदमेवोपपादयितुं "सूचकश्च हि श्रुतेराचक्षते" इति सूत्रम् ॥

"सूचकश्चे"तिसूत्रवैयर्थ्यं द्वैतवादे ।

इदं हि सूत्रं साधनान्तराभावेऽपि भावाभावसूचकत्वमीश्वरो दर्शयतीति द्वैतिनो विवृण्वते । इदं तु स्वाप्नानामीश्वरसृष्टत्वस्थापनानन्तरं किमर्थं वा ? न हीशसृष्टेषु साधनान्तरान्वेषणा । साधनान्तरानपेक्षं हीश्वरस्य स्रष्टृत्वं सर्वत्रापि प्रतिपाद्यते, इति जागरादेरिव स्वाप्नस्यापि साधकत्वं सिद्धमेव, इति परमते व्यर्थमिदं सूत्रम् , अद्वैतमते तु न केवलं जागराणाम् , किन्तु स्वाप्नानामप्यर्थक्रियाकारित्वं तत्र तत्र स्वप्नाध्याये विवेचितम् , इति सत्त्वासत्त्वौदासीन्येनैवार्थक्रियाकारित्वमिति निरूपयितुमिदं सूत्रम् । छिद्रान्वेषणैकस्वभावमप्यनुव्याख्यानम् , सुधा चात्र जोषभावमेव साधु मन्यते ॥

पराभिध्यानसूत्रविषयभेदो मतद्वये ।

एतेन—"पराध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ" इति सूत्रमपि—व्याख्यातम् । इदं हि सूत्रं जीवाश्रिताविद्यापरिणामत्वम् , जीवसृष्टत्वं वा न युक्तम् ; जीवेश्वरयोरैक्यादीश्वरसृष्टत्वसंभवादिति शङ्कावारणार्थम् । तेन च तयोरौपाधिकभेदे सति सत्यैक्यायोगाद् न स्वाप्नानामीश्वरसृष्टत्वपक्षाविवेक इति ज्ञाप्यते, इति संध्याधिकरणस्य गुणसूत्रमेवेदं सूत्रमद्वैतसिद्धान्ते ॥

सृष्टि-तिरोधानादीनामीश्वरेच्छाधीनत्वमिति द्वैतवादः तदयोगश्च ।

द्वैतसिद्धान्ते त्विदं सूत्रमधिकरणान्तरम् । तेन हि बन्ध-मोक्षप्रदत्वादीश्वर एव कर्ता, तदिच्छयैव हि बन्ध-मोक्षौ, तथा तिरोधानमपि तदिच्छयैव । अतो वासनाभिः स्वाप्नं प्रपञ्चं सृष्ट्वा वासनामात्रतां च नीत्वा स्वाप्नमन्तर्धापयतीश्वर इति फलति । तथा च सृष्टिरिव तिरोधानमपि स्वाप्नस्येश्वरेच्छाधीनमिति निरूपणार्थं स्वतन्त्रमिदमधिकरणम् । यद्यनेन स्वाप्नानामीश्वरसृष्टानामपि स्वप्नान्त एव नाशोऽपि विवक्ष्यते, तर्हि ज्ञान-

नाशेऽपि स्वाप्न-गजादीनां जागरेऽप्यनुवृत्तिरिति वर्णनं सुधाया व्याहतम्, तथापि गौणमुक्तिं प्रपन्नानामीश्वरानुग्रहेण संकल्पमात्रेण स्रष्टृत्वमन्यत्र यद्यपि निर्णीतम्, तथापि बद्धानां स्रष्टृत्वं तत्संकल्पमात्रेण न भवति, इति तूलाविद्याद्वारैव जीवकार्यत्वं स्वाप्नानाम्, इति तेषां मिथ्यात्वमेव स्वीकर्तव्यम्, द्वैतमते तु जन्मादिसूत्र एव बन्ध-मोक्षकारणत्वस्यापि ब्रह्मलक्षणताया व्यवस्थापनात्, तत्सृष्टस्य तदिच्छया तिरोधानादिकमपि तत एव सिद्धम्, इति नात्रापि वक्तव्यम् ॥

वासनाकार्यत्वे स्वाप्नानामर्थक्रियाकारित्वानुपपत्तिः ।

वस्तुतस्तु—स्वाप्नानां वासनामयानामर्थक्रियाकारित्वाभावस्य द्वैतमते स्वीकारात्, स्वप्नस्यानीश्वरसृष्टत्वस्य तत एवार्थसिद्धत्वात् तेनैवावरणादिवर्णनं किमर्थम्? कात्स्न्येनानभिव्यक्तस्वरूपत्वमपीश्वरेच्छाधीनमेव मायामात्रसूत्र एवोक्तम्, इति किमिति वा तदिच्छयाऽऽवरणं पुनर्वक्तव्यम्? क्व वा तदुपयुज्यते? यदीश्वरेच्छयाऽसतोऽप्यर्थक्रियाकारित्वम्, तर्हि वृथा नासतः साधकत्वमिति कथा । स्वाप्नोऽपीश्वरसृष्टत्वेन यद्यर्थक्रियाकारीश्वरेच्छया, तर्हि कथं कात्स्न्येनानभिव्यक्तस्वरूपत्वेन तस्य मनोविकारतोपपादनम्?

"देहयोगाद्वे"ति सूत्रार्थविवेकः ।

"एतेन—देहयोगाद्वेति सूत्रमपि—व्याख्यातम्। इदं हि न केवलं स्वप्ने, किन्तु जागरेऽऽपि जीव-परस्पर-परमात्माभेदतिरोभावो वर्तते, न तु स्वप्न एव। स्वप्ने त्वीश्वरसंकल्पादपि तिरोभाव इति विशेष इति सूचनार्थमिति मतद्वयसम्प्रतिपन्नम्। इदं वस्तुस्थितिकथनार्थम्; अन्यथा कर्मकृतशरीरयोगोऽपि न मोक्षविरोधीति वितथं दिव्यशरीरग्रहणम्; ईश्वरेच्छयैव सर्वनिर्वाहादिति शङ्का नोच्छिद्येत ॥

परमते "देहयोगाद्वे"ति सूत्रवैतथ्यम् ।

इदं हि सूत्रं जीवस्य कर्माधीनशरीरस्य न स्वाश्रिताविद्याद्वारा कारणत्वमिति निरूपणार्थम्। स्वपतां तु शरीरमपि तत्तज्जीवसृष्टमेव वर्तते, न कर्मकृतम्, इति तेन जागरितस्वरूपस्यापि तिरोभावादिति सूचनार्थं हीदं सूत्रम्। परमते तु वासनामयं स्वाप्नशरीरमपीश्वरसृष्टमिति जागरितशरीरात् तस्य न विशेषः, इति पराभिध्यानसूत्रेण गतार्थत्वादिदं सूत्रं वितथम् ॥

"स एव च कर्मानुस्मृति-शब्द-विधिभ्य" इति सूत्रं तु स एव जीवो बोधावस्थायामुत्तिष्ठति, न त्वन्यो जीवः, ईश्वरो वा, येन संपरिष्वक्तः

सुषुप्तौ जीव आसीत् , इति "प्राज्ञेनाऽऽत्मना संपरिष्वक्तः" इति वाक्येनावगम्यते । सुषुप्तौ सर्वेषां तत्तत्कारणशरीराणां तत्तन्मूलाविद्याभावः, तेन च मूलाविद्योपहितपरमात्मस्वरूपेणाविनाभूता एव सर्वेऽपि जीवा वर्तन्ते, इति कस्य प्रबोध उत्थानमिति द्वैतमते शङ्का न संभवति, अद्वैतमत ईश्वरस्य स्वप्नादिस्रष्टुरन्यस्याप्रसिद्धत्वाद् नेश्वराभेदमादाय शङ्काया नोत्थितिः । आस्तामियमधिकरणरचनाप्रणालीचिन्ता । न चानेन द्वैतसिद्धान्तस्याद्वैतसिद्धान्तस्य वा कोऽपि प्रबलः फलभेदः ॥

इति सन्ध्याधिकरणम्

—*—

## उभयलिङ्गाधिकरणम्

द्वैताद्वैतसिद्धान्तनिकषोपल इदमधिकरणम "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"ति सूत्रमारभ्य प्रवृत्तम् । तत्राधिकरणभेदः, सूत्रस्वरूपभेदश्च बहुशो वर्तते । अयं तु निबन्धोऽद्वैतसिद्धान्तनिरासप्रकरणमेव सुधायाः परीक्षते । अस्मिन् सूत्रेऽद्वैतसिद्धान्तगत्याऽधिकरणरचनामादाय— "यदिदमपव्याख्यानम् , तदिदं सम्यग्व्याख्यानेनापहस्तितमित्येतावन्मात्रमुक्तम् । न चाद्वैतसिद्धान्तोऽत्र सयुक्तिनिर्देशं निरस्तः । द्वैतिनां सूत्रयोजनादिप्रकारनिरासस्तु नास्य निबन्धस्य लक्ष्यम् , इति नात्र लेखनी व्याप्रियते ॥

इत्युभयलिङ्गाधिकरणम्

—*—

## अत एव चोपमा सूर्यकादिवत्

भेदाभेदवादनिरासेन भेदवादसमर्थनार्थमिदं सूत्रमिति द्वैतवादः ।

"अत एव चोपमा सूर्यकादिवदि"तिसूत्रे तु जीवेश्वरयोर्भेदाभेदनिषेधेन भेदमात्रं समर्थ्यत इति द्वैतभाष्यादि । तत्र भेदाभेदवादो ब्रह्मणस्तदितरैः सर्वैः साकमिति सन्ति बहूनि प्रस्थानानि । तत्र द्वैतमतं ब्रह्मणा तदवताराणाम् , आनन्दादिगुणानां च केवलं परमात्मना भेदाभेदौ, जीवानां परस्परम् , ब्रह्मणा तदवताराणाम् , गुणैश्चाभेदेऽपि भेदव्यवहारस्य विशेषकृतत्वात् तत्र भेदाभेदवादः—इति ॥

भेदाभेदवादप्रस्थानानां सर्वेषां स्वरूपविवेकः ।

तत्र भास्करमते, अचिन्त्यभेदाभेदवादे, विशिष्टाद्वैतवादे, अद्वैतवादे

च, यत्राभिन्ननिमित्तोपादानत्वम्, तत्र भेदः कार्यात्मना, शरीर-शरीरिभावेन, भेदस्यारोपितत्वेन च यथायथं भेदाभेदवादः। तत्राप्यचिन्त्यभेदाभेदवादे तत्तद्गुणैः परस्परमत्यन्ताभेदो द्वैतवाद इव विशेषकृत एव, परं तु जड-जीवात्मकैः कार्यैः परमात्मनो भास्करमत इव कार्यात्मना नानात्वम्, अभेदः कारणात्मनेत्येव सिद्धान्तः। तत्र द्वैतिनां गौडीयवैष्णवैः सह परमात्मनोऽभिन्ननिमित्तोपादानत्वे नैकमत्यम्। परमात्मन उपादानत्वमपि त्वचिन्त्यभेदाभेदवादे तदीयचिच्छक्तिपरिणामत्वेन जीवेश्वराभेदः, तदीयमायाशक्तिकार्यत्वात्तु जडानां तदभेदः, परमात्मनः संविद्रूपस्य तु न विकार इति भास्करसिद्धान्तादविशेषोऽचिन्त्यभेदाभेदवादस्य। तत्रोभयत्रापि ब्रह्मशक्तेरेव परिणामित्वम्। सा च क्रियाशक्तिरेव प्रत्यभिज्ञानदर्शन इव॥

शैव-वैष्णवविशिष्टाद्वैतवादे तु परमात्मनः स्वेतरजडात्मकैः प्रपञ्चैः स्थूल-सूक्ष्मरूपैः शरीर-शरीरिभावेन भेदाभेदवादः, केवलाद्वैतवादे तु जीवेश्वरयोः स्वरूपाभेदांशे वादान्तरेष्विव साम्येऽपि भेदांशे तस्य कल्पितोपाधिनिबन्धनत्वेनाध्यारोपविधया सः, इति तत्र भेदाभेदवादोऽधिष्ठानारोप्यभावेनैव सर्वैश्चेतनैः, कार्यैरुपाधिभिश्च। सर्वात्मना द्वैतवादसाम्यं तु पाशुपतसिद्धान्तेन द्वैतवादस्य, परमात्मस्वरूपांशमात्रे तस्य सदाशिवरूपत्व-नारायणरूपत्व-पाशुपतप्रामाण्य-पाञ्चरात्रप्रामाण्याद्यंशेन तु वैषम्यमिति त्वन्यदेतत्॥

तत्र द्वैतिनाम्, अद्वैतिनां च विप्रतिपत्तिस्थानमौपाधिकत्वेऽपि जीवानाम्, जीव-परमात्मनोश्च भेदस्य नित्योपाधिकत्वाज्जीवस्य भेदोऽपि स्वरूपमिवाबाध्यः, इति जीवानाम्, जीवेश्वरयोश्चौपाधिकभेदोऽपि सत्य एवेति द्वैतवादः, अद्वैतवादे तूपाधीनां बाध्यत्वात् तत्प्रयुक्तो भेदो जीवानां परस्परम्, जीव-परमात्मनोश्च मिथ्येति॥

### द्वैतवादे जीवोपाधिविवेकायोगः।

तत्र जीवस्वरूपे परमात्मनः स्वरूपमेवाऽऽन्तर उपाधिः, बाह्योपाधिस्त्वन्तःकरणमिति स्वीक्रियते, अद्वैतसिद्धान्ते तु परमात्मन ईश्वरत्वप्रयोजकोपाधिरविद्या, जीवोपाधिरूपास्त्वविद्याऽवस्थाविशेषाः,अन्तःकरणादि वेति विशेषः। तत्र जीवपरस्परभेद-परमात्मस्वरूपभेदानामौपाधिकानां स्वीकारे परमात्मनः सावयवत्वापत्तिः। तत्र स्वरूपस्यैव भेदो यदि विशेषकृत एव, न तु वस्तुकृतः,

तर्हि कथं वा जीवानामप्यवतारादीनामिव न स्वरूपांशत्वम्? कुतो वा भिन्नांशत्वम्? अविशेषकृतत्वे तु जीवोपाधीनां स्वरूपाणां स्वाभाविकत्वेनैकस्यैव परमात्मनोंऽशाः सर्वे जीवा इत्यापतति। तत एव न परमात्मैकत्वम्। न ह्येकस्यैव परमात्मनोऽनेकानि स्वाभाविकानि स्वरूपाणि॥

द्वैतवादे जीवावतारोपाधिभेदायोगः।

तत्राप्यवतारोपाधिस्वरूपाणि विशेषमात्रप्रयुक्तभेदवन्ति, जीवोपाधिस्वरूपाणि तु स्वाभाविकभेदवन्त्येव स्वरूपाणीति कल्पनायां तत्तदुपाधीनामणुत्वं वा व्यापकत्वं वेति विचारोऽवसरप्राप्तः। आद्ये जीवानां सर्वदाऽणुत्वमेव, इति "नित्यः सर्वगतः स्थाणुरि" ति सर्वगतत्वोपदेशविरोधः, द्वितीये जीवानां सर्वेषां व्यापकैकस्वभावत्वे साङ्ख्यादिमत इव सर्वेषां सर्वज्ञत्वापत्तिरिति शङ्का दुष्परिहरा॥

पराभिमतस्वरूपोपाधिकत्वे जीवानेकत्वायोगः।

उपाधीनां परमात्मस्वरूपाणां शुद्धत्वात् तत्प्रतिबिम्बानां जीवानामपि स्वत इवोपाधितोऽपि न बद्धत्वापत्तिः, अन्तःकरणादिबाह्योपाधिसम्बन्धेन बद्धत्वे तु व्यापकानुपाधिकत्वादन्तःकरणस्योपाधेर्मध्यमपरिणामत्वाद् अद्वैतवाद इव मध्यमपरिणामत्वमेव जीवस्येत्यापतति। ततश्च स्वरूपोपाधिकत्वमात्रेण न जीवानामनेकत्वमवतारादीनामिव। अत इदमेवात्रानुयुज्यते—यद् जीवानामप्यवताराणामिव स्वरूपैक्येऽपि विशेषकृत एव भेदः, अविद्याकृतो वा, न स्वत इति कुतः,? येन जीवैक्यश्रुतिर्बाध्येत, तद्व्यापकतापरश्रुत्यादिश्च। तत्र तत्र क्रियादिभिर्गुणैश्च भेदव्यवहारो विशेषकृत इति परे, अविद्याकृत इति त्वद्वैतिनः, इत्यलमतिविस्तरेण। भेदाभेदश्रुतीनामुपपत्तिमाश्रित्य बहु पराक्रान्तं न्यायचन्द्रिकाऽद्वैतसिद्ध्यादौ॥

सत्यादिवाक्याखण्डार्थत्वम्।

एतेन—सत्यादिपदानामखण्डार्थत्वमपि—व्याख्यातम्। न चैतेषां लक्षणया संविन्मात्रपरत्वेऽपि पर्यायत्वम्, येन न सयोगः स्यात्। वाच्यार्थैक्यं हि पर्यायत्वं नाम; अन्यथा गङ्गा-तीरपदयोरपि पर्यायत्वापत्तिः। सत्यामपि वाच्यार्थविवक्षायामसत्यत्वाद्यपोहेन, असत्यव्यावर्तनेन वासर्वेषां पदानामखण्डार्थत्वेऽपि सार्थक्यमितिव्यक्तं तत्र तत्र। अस्ति ह्यसत्त्वापादकाद्यज्ञानप्रयुक्तेनावरणेन 'नास्ति' 'न भाति' 'नानन्दः' इति ब्रह्म-

ण्यसत्त्वादिबुद्धिरज्ञानिनाम्, इत्यसत्त्वाद्येकैकबुद्धिव्यावर्तनार्थानि सर्वाणि पदानि सार्थकानि ।

सत्यादिवाक्याखण्डार्थत्वाक्षेप-परिहारौ ।

तत्र लक्षणयाऽखण्डस्वरूपमात्रबोधेऽपि प्रमाणजन्ययाऽखण्डाकारवृत्त्याऽसत्त्वाद्यापादकाज्ञाने बाधिते तत्प्रयुक्तानादिसदादिभेदोऽपि बाधितो भवति, इत्यर्थादसत्यादिवृत्तिः, न शब्दमर्यादयेति नाखण्डार्थताहानिः ॥

एतेन—

"पृथक् पृथग् वारयितुं शब्दान्तरमितीष्यते ।
मायाविशेषराहित्ये विशेषणविशेषिता ॥
सत्यस्यापि भवेत् सा च तथा चेदनवस्थितिः ।
यदि सत्ये विशेषो न न तदुक्तिर्भवेत्तदा ॥
लक्ष्यते चेत् तेन लक्ष्यमित्यपि स्याद्विशेषिता ।
पुनःपुनर्लक्षणायामपि स्यादनवस्थितिः ॥
यद्यभावविशेषित्वं स्यादङ्गीकृतमेव ते ।
असार्वज्ञादिराहित्यमप्येवं ते भविष्यति ॥
तेन सार्वज्ञमेव स्याद् भावार्थत्वाद् नञोर्द्वयोः ।
यदि नैतादृशं ग्राह्यमसुखत्वानिवर्तनात् ॥
असत्वाज्ञानतादेश्च स्यादसत्त्वादिकं तथा ।
अनृतादिविरोधित्वं यद्यस्याभ्युपगम्यते ॥
अनैश्वर्यविरोधित्वमप्येवं किं निवार्यते ।
अखण्डखण्डनादेवं विशेषोऽखण्डवादिना ॥
खण्डितेनापि मनसा स्वीकार्यो नान्यथा गतिः ।"

इत्यनुव्याख्यानम्—परास्तम् । अखण्डाकारवृत्त्याऽसत्त्वाद्यापादकेऽज्ञाने निवृत्तेऽर्थसिद्धत्वात् सदादिभेदनिवृत्तेरसत्त्वादिव्यावृत्तिविशेषितार्थबोधस्याविवक्षितत्वात् । यथाच मिथ्यात्वमिथ्यात्वेऽपि न प्रतियोगिसत्यत्वम्, तथा व्यक्तं तत्र तत्र, इति नासत्यभेदे निवृत्तेऽप्यसत्यत्वापत्तिः, येनाखण्डार्थत्वमपि सविशेषतायामेव पर्यवस्येत् । वस्तुतस्तु—असत्यादिव्यावृत्तित्वोपलक्षितब्रह्मस्वरूपमात्रपरत्वात् सत्यादिपदानां नात्राभावनिषेधेन भावरूपतेत्यप्यस्ति प्रस्थानान्तरम्; मिथ्यात्वपारमार्थिकत्वपक्षस्याप्यद्वैतसिद्ध्यादौ व्यवस्थापनात् ॥

सत्यादिपदानामपर्यायताऽन्विताभिधान-
वादे, अभिहितान्वयवादे च ।

परमार्थतस्तु—"सत्यं ज्ञानमनन्तं ब्रह्म" "यः सर्वज्ञः सर्ववित्"इत्यादिवाक्यान्यन्विताभिधानवादे, अभिहितान्वयवादे वाऽन्वयपदस्य तात्पर्यविषयतामात्रपरत्वस्य पूर्वमुपपादितत्वादखण्डार्थत्वं न परिजहति। सत्यप्येवं सर्वपदानामपर्यायत्वम्, सार्थक्यं चोपपादितम्; अन्यथाऽन्विताभिधानवादेऽपि सर्वेषां पदानामितरान्वितार्थबोधकत्वात् कथं न पर्यायत्वम्, न वा वैयर्थ्यम्। अन्वयविशेषबोधनेनापर्यायत्वं त्वन्वयविशेषस्याप्यशक्यत्वात् पदान्तरवाच्यस्यैव लक्ष्यत्वस्य परैरङ्गीकारात् परेषां दुरुपपादम्, इति कथं वाऽन्विताभिधानवादे सविशेषपरता वेदान्तवाक्यानां केषामपि। अभिहितान्वयवादे तु नोक्तायाः शङ्काया उत्थितिः॥

केवललक्ष्यस्य ज्ञानिभिरज्ञानामुपदेशो न व्याहतः ।

सत्यप्युभयत्रान्वयपदे यथा नात्रान्वयपदं संसर्गमात्रम्, किन्तु तात्पर्यविषयमात्रपरम्, तथा व्यक्तं न्यायरत्नावल्यादौ, इति न निर्भरातिशयोऽभिहितान्वयवाद एवाद्वैतसिद्धान्तेऽपि। अत एव न्यायसुधानिरासमेव लक्ष्यं मन्वानाऽपि न्यायचन्द्रिकाऽन्विताभिधानमेवाद्वैतसिद्धान्तेऽप्यभिहितान्वयवादनिरसनेन राद्धान्तयति—परप्रक्रिययैव परमतं निरसनीयमिति, इति वितथोऽयमन्विताभिधानवादमवलम्ब्याखण्डार्थत्वनिरासार्थः प्रयत्नातिशयः॥

पदान्तरावाच्यस्यापि ब्रह्मणोऽन्वयविशेषस्येव लक्ष्यत्वम् ।

यत्तु—अन्विताभिधानवादेऽस्मिन् एकपदेन सामान्यतोऽन्विततया ज्ञातोऽप्यर्थः पदान्तरसंनिधानवशाद् विशेषतोऽन्वित एवाभिधीयते–इति, इदमेवात्रानुयुज्यते—कथं शाब्दबोधे विनाऽपि शक्तिम्, लक्षणां वाऽन्वयविशेषो बोध्यते ? अन्यथाऽन्वयसामान्यशक्तिं विना पदान्तरसमभिव्याहारमात्रेण सर्वत्रान्वयानुभवोपपत्तौ किमन्तर्गडुनाऽन्वयेऽपि शक्तिस्वीकारेण, इत्यन्विताभिधानवादकथा वाचारम्भणम्, नामधेयमात्रं वा स्यात्॥

अन्विताभिधानवादो नाखण्डार्थताविरोधी ।

सर्वथा नात्राभिहितान्वयवादान्विताभिधानकथया ग्रन्थविस्तरः सप्रयोजनः। अस्तु वा कथंचानान्विताभिधानवाद एव साधुरिति,

एवमपि पदान्तरसमभिव्याहारमात्रेण तात्पर्यवशात्—अन्वयविशेषस्येव संविन्मात्रस्य चैतन्यस्यापि कथं महावाक्येन नानुभवः? अतोऽन्विताभिधानवादे, अभिहितान्वयवादे वाऽशक्यस्याप्यन्वयविशेषस्य लक्ष्यत्ववत् निर्विशेषस्याप्यवाच्यस्य लक्ष्यत्वोपपत्तिः ॥

तत्र यथा विदुषामुपदेशेनाविदुषां लौकिकानन्दविलक्षणेऽलौकिके ब्रह्मानन्दे व्युत्पत्तिग्रहः, एवमेवाद्वैतमतेऽप्यसंज्ञातसमाधितो व्युत्थितानाम्, स्थितप्रज्ञानाम्, गुणातीतानां चोपदेशेन संकेतमात्रेणाविधिशेषेऽपि ब्रह्मणि व्युत्पत्तिग्रहो न विरुध्यते। अत एव पराशरेण विष्णुपुराणे तस्योपदेशः—

"प्रत्यस्तमितभेदं तद् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मसंज्ञितम्॥"

इति निर्विशेषब्रह्मणोऽखण्डस्यापि नानौपनिषदत्वम्॥

॥ इत्यत एव चोपमा सूर्यकादिवदिति सूत्रार्थः ॥

॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥

—:❀:—

❁ ओं ❁

# ॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥

अत्र न्यायसुधा मुक्तिस्वरूपनिरूपणप्रसंगेन सौगताद्यभिमतमुक्तिस्वरूपमिवाद्वैतसिद्धान्तमपि तत्र निरस्यति, विशिष्य च तत्र जीवन्मुक्तिकल्पम्। तत्र न्यायचन्द्रिकाऽपि प्रायेण मतान्तरनिरसनप्रकारणे न्यायसुधामेवानुकुर्वाणाऽप्यद्वैतप्रक्रियाणां समालोचने ततः क्वचन संवदते: क्वचित् विसंवदते। विस्तरस्त्वत्र न्यायचन्द्रिकातोऽवगन्तव्यः। जीवन्मुक्तिपक्षे नेष्टसिद्धिकारादीनां निर्भर इति तु प्रस्थानान्तरमप्यस्त्यद्वैतिनामिति त्वन्यदेतत्॥

मुक्तिस्वरूप-तत्साधनयोरद्वैतदृष्ट्याऽनुवादः।

जीवन्मुक्तिनिरसनप्रसंगे न्यायसुधासंग्रहमनूद्याद्वैतसिद्धान्तमात्रं तदीयाक्षेपपरिहारमुखेनात्र प्रस्तूयते। तद्यथा—तत्राद्वैतिनो वदन्ति:-द्विविधो मोक्षः परापरभेदात्। तत्रापरो वैकुण्ठादिलोकावाप्तिः, परस्त्वविद्यास्तमये सत्याद्वैतब्रह्मभावरूपः। तत्रापरस्मिन् मोक्षे तत्तदुपासनानि साधनानि, इति साधनवैचित्र्यादनेकरूपः सः। परस्तु मोक्ष आत्मैकत्वज्ञानमात्राधीन एकरूप एव, यत्र नानन्दतारतम्यकथा। तत्रापरमोक्षसाधनं तूपासनमर्चिराद्युपासनम्, दहरोपासनदिकं वा, न तु प्रतीकोपासनानि, इति तेषामभ्युदयमात्रार्थानां नापरमोक्षोपयोगः। तत्र सहस्रशीर्षत्वादिविशिष्टसविशेषब्रह्मोपासनस्यैवापरमोक्षसाधनत्वमिति तु संप्रतिपन्नम्, इति तत्रोपासनभेदेन फलतारतम्यमकिञ्चित्करम्; ऐक्यज्ञानस्यैव मुख्यमोक्षसाधनत्वात्—इति॥

अद्वैतिनां मोक्षसाधननिरासः।

अत्रेयं न्यायसुधा—ऐक्यज्ञानं न मोक्षसाधनम्; तद्गुणसारत्वादिति सूत्रे पृथगुपदेशादिसूत्रेण—"तद्यो यो देवानां प्रत्यबुद्ध्यत"-त्यादिषु विस्तरेण भेदज्ञानस्यैव मोक्षसाधनत्वावगमेनैक्यज्ञानस्यैवाऽन्यथा ज्ञानत्वेन तस्यानर्थसाधनस्य मोक्षसाधनत्वायोगात्। अयं भावः—अद्वैतज्ञानं हि न यागादिवद् राजसेवादिवद्वा मोक्ष-

साधनम् , किन्त्वविद्याविरोधित्वेन विरोधिनाऽद्वैतसाक्षात्कारेणाविद्यायां निवृत्तायां तदुपादानको बन्धः स्वयमेव निवर्तते । तया चाद्वितीयब्रह्मसाक्षात्कारोत्तरक्षण एव देहादिद्वैतदर्शनाभावः प्राप्यते। अङ्गीक्रियते च तैरत्र जीवन्मुक्तिः । सा हि ज्ञानेनाविद्यायां निवृत्तायामपि संस्कारात्मना द्वैतदर्शनानुवृत्त्येति तदाशयः ॥

संस्कारानुवृत्तिदुरुपपादत्वेन जीवन्मुक्तिनिरासः ।

इदमेवात्रालोचनीयम्—कथमविद्याकार्यत्वे संस्कारस्य, निवृत्तेऽपि तदुपादानेऽज्ञाने तस्यानुवृत्तिः ? येन प्राप्तेऽपि साक्षात्कारे देहाद्यनुवृत्तिरुपपद्येत ? कथं चाज्ञाननाशद्वारा न संस्कारस्य साक्षात्, परम्परया वाऽज्ञानविरोधिना तत्त्वसाक्षात्कारेण न निवृत्तिः ? इति ज्ञानानिवर्त्यत्वाद् ब्रह्मवत् संस्कारस्यापि सत्यत्वात् नाद्वैतभावलक्षणा मुक्तिः सूपपादा । न हि संस्कारस्य तदाऽऽश्रयोऽसङ्ग आत्मा भवितुमर्हति । न च निराश्रयः संस्कार आत्मानं लभते ॥

दग्धपटन्यायेनाऽऽत्मानमेवाश्रित्य संस्कारानुवृत्तिवादस्तु तस्याऽऽत्यन्तिकनिवृत्तिकारणस्यापरस्य दुर्वचत्वेन द्वैतदर्शनानुपरमप्रसङ्गाद् नोत्तिष्ठति ॥

अविद्यालेशानुवृत्तिनिरासः ।

अविद्यालेशानुवृत्तिस्तु लेशस्वरूपस्य दुर्वचत्वाद् न प्रसरमपि लभते । स किं पटस्य तन्तुरिवावयवः, प्रदेशविशेषो वा, धर्मो वा । नाद्यः; अकार्यत्वादविद्यायाः सावयवत्वासंभवात् । अत एव न द्वितीयः; अप्रदेशत्वादविद्यायाः । धर्म्यपगमे धर्मावस्थानायोगाद् न तस्याविद्याधर्मत्वपक्षोऽपि युज्यते ॥

अविद्याया अनेकाकारावस्थाविशेषस्याप्रामाणिकत्वम् ।

संसारमूलस्यैकस्या एवाविद्याया अनेकाकाराया बन्ध-विभ्रमहेतुः, अर्थक्रियासामर्थ्योपपादकः, अपरोक्षप्रतिभासविषयाकारकल्पको वाऽऽकारविशेषोऽविद्यालेशः । तत्र प्रथमे द्वैतस्य न सत्यत्वाध्यवसायः । प्रपञ्चस्यार्थक्रियाकारित्वोपपादिका मायाशक्तिस्तु तत्त्वसाक्षात्कारेण निवर्तते । अपरोक्षप्रतिभासयोग्यार्था-

भासजनकाकारो मायालेशस्तु जीवन्मुक्तस्य निवृत्तसमाध्यवस्थायां तिरोहितोऽन्यदा देहाद्याभासहेतुतयाऽनुवर्तते, प्रारब्धभोगावसाने तु निवर्तत इति हि तदीया प्रक्रियाकल्पना, याऽप्रामाणिकी; मायाया अनेकाकारताया अनौपनिषदत्वात् ॥

"इन्द्रो मायाभिरि"तिश्रुतेरीश्वरशक्तिविशेषेष्वेव प्रामाण्यम् ।

"इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतिस्तु परमेश्वरशक्तिभेदमेवोपपादयति, न तु मायाया आकारविशेषानुक्तविधान् । न ह्यत्र ज्ञानबाध्या मायाकारविशेषाः प्रतीयन्ते । "तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरि"त्यत्रापि विश्वबन्धकपरमेश्वरशक्तिनिबन्धनजीवगतावरणनिवृत्तिरेव ज्ञानेन बोध्यते, न त्वावरण-विक्षेपादिशक्तिमती मायाऽपरपर्यायाऽविद्या ज्ञानबाध्याऽद्वैताभिमता । तन्निवृत्तिस्तु कर्मक्षयान्त इति हि वस्तुस्थितिः ॥

न चैतेषामाकाराणामन्यतमस्यैकस्यापि तत्त्वज्ञानं निवर्तकम् , अन्यथा कथं मायया साकं तदाकारो न निवृत्तः ? ज्ञानेनानिवृत्तौ तु तस्य सत्यत्वमेवेति घट्टकुट्यां प्रभातम् । प्रारब्धकर्म त्वज्ञानकार्यत्वात् न तन्निवृत्तौ हेतुतामर्हति । प्रारब्धकर्मणः प्रतिबन्धकत्वात् तदसहकृतमेव तत्त्वज्ञानं निवर्तकमिति वादस्तु निरुपादानकर्मानुवृत्त्यनुपपत्त्या नोत्तिष्ठति । अविद्यालेशस्यैव कर्मोपादानत्ववादस्तु परस्पराश्रयदोषग्रस्तः—कर्मावस्थानेऽविद्यालेशानुवृत्तिः, अविद्यालेशानुवृत्तौ कर्मावस्थानमिति ॥

न चाविद्यालेशसत्त्वे किमपि प्रमाणमस्ति । जीवन्मुक्तिस्तु परमपुरुषानुग्रहेणैव मोक्ष इत्यस्य सकलश्रुति-स्मृति-पुराणेतिहासस्यासिद्धार्थस्याङ्गीकारेणोपपन्नत्वाद् नात्मानं लभते ॥

भगवत एव बन्धनिवर्तत्वम् , न तु तत्त्वज्ञानस्य ।

अतः—निष्काम-भगवदर्थ-श्रुत्यादिसिद्धकर्मानुष्ठानेन शुद्धान्तःकरणस्य रागद्वेषादिदोषक्षये जाते, भगवद्भक्तेः श्रवण-मनन-निदिध्यासनाभ्यासवतः परमभागवतस्य भगवत्साक्षात्कारे प्रसन्नो भगवान् प्रारब्धानि कर्माणि विनाश्य भागवतधर्मप्रवृत्तये ज्ञानिनं कञ्चित्कालं व्यवस्थापयन् प्रारब्धानि तदीयानि कर्माण्यशेष-

तत्फलभोगे सति विनाश्यप्रकृतिबन्धाद् मोचयतीत्येव युक्तम्—इति ॥

इदमत्राद्वैतिनां हृदयम्—सहस्रशीर्षत्वादिविशिष्ट-गुणपूर्ण-परमात्म-स्वरूपसाक्षात्कारे कर्म-भक्तियोगसाधिते प्रसन्नो भगवान् प्रारब्ध-कर्माण्यपि विनाश्य मोक्षं प्रददातीत्येतावताऽभिमतवैकुण्ठलोका-वाप्तिरेव मोक्षो यदि मन्यते, यदि च जगद्व्यापारवर्जं भोगमात्रसाम्यं तरतमभावापन्नम्, तर्हि तस्याद्वैतसिद्धान्ताऽपरमुक्तित्वाद् न प्रायेणास्ति विप्रतिपत्तिः; तस्याद्वैतवादेऽपि स्वीकारात्। विप्रतिपत्तिस्तु तत्रापि, नात्र प्रारब्धभोगोऽपि भगवदधीनः स्वीकर्तव्य इत्यत्र। वैकुण्ठलोकावाप्ते-रप्युपासनाफलत्वात्, उपासनस्यापि पुरुषतन्त्रक्रियारूपस्य पुरुषोत्तमारा-धनरूपत्वात्, तत्फलत्वेन यावद्सविशेषब्रह्ममुक्ति तत्त्वज्ञानाधिकारित्वात्, प्राप्तवैकुण्ठलोकानामपि तेषामनुवर्तमानमपि कर्म कुण्ठितशक्तित्वात्, पुनरा-वृत्त्यभावेनोपभोक्ष्यमाणकर्मशेषानुभवस्याप्राप्तकालत्वाच्चाकिञ्चित्करमेव ॥

न हि लोकान्तरे लोकान्तरभोग्यफलानां कर्मणां फलोन्मुखानां स्व-रूपतोऽनुवृत्तिमात्रमनर्थाय भवति। अतो "भोगेन त्वितरे क्षपयित्वा ततः सम्पद्यते" इति सूत्रमिहैव प्रारब्धकर्मणां सर्वात्मना निवृत्तिमेवाभिप्रैति, येन "अत्र ब्रह्म समश्नुते" "न तस्य प्राणा उत्क्रामन्ति" इत्यादिवचनसिद्धब्रह्म-भावलक्षणो मोक्षः प्रारब्धकर्मणोऽपि विनाशं विना न निर्वहति। सति चैवमिहैव प्रारब्धकर्मवर्जं सर्वेषां कर्मणां निवृत्तिः, येषां फलोप-भोगो नापेक्षितः; नष्टत्वात्, यावत्तन्नाशं च तत्त्वसाक्षात्कारेऽनुवर्तमाने दग्धपटन्यायेन प्रारब्धकर्मणां सफलानामनुवृत्तावपि न बन्धकत्वमित्य-भिप्रायेणैवाद्वैतिनां मुक्तिकथा ॥

तत्रापरमुक्तिरिहैवैका, प्राप्तवैकुण्ठादेस्त्वपरा। तत्रैहिक्यपरमुक्तिः जीवन्मुक्तिः। तत्रोभयविधानामपि जगद्व्यापारवर्जसविशेषब्रह्मभावो-भोगमात्रसाम्येन सांसारिक-बन्धनिवृत्तिः, स्वरूपानन्दानुभवश्च समानः, तत्रापरमुक्तौ पारलौकिक्यामानन्दतारतम्यमद्वैतिनामपि न विप्रतिपन्नम्। अत एव तैत्तिरीयोपनिषद्यानन्दमीमांसायाम्—मनुष्यगन्धर्व-गन्धर्व-कर्म-देवाऽऽजानजदेवेन्द्र-बृहस्पति-प्रजापति-ब्रह्मणां प्रत्येकमानन्दतारतम्येनैव व्यवहरतां सर्वेषामानन्दातिशयः—"श्रोत्रियस्य चाकामहतस्ये"ति जीवन्मुक्त-स्याप्याम्नायते ॥

अत्राकामहतशब्देन विरक्तत्वम्, श्रोत्रियपदेनौपनिषदात्मतत्त्वसाक्षात्कारश्च विवक्ष्यते, इति जीवन्मुक्तस्य ब्रह्मलोकान्तानन्दमिहैवानुभवतो वितथोमुत्क्रम्य लोकान्तरावाप्तिर्ब्रह्मान्तानन्दनुभवायेति ज्ञाप्यते, इति ब्रह्मलोकान्तानन्दविरक्त एवेहैव मुक्तः, इति जीवन्मुक्तिश्रुत्याऽम्नायत इति वक्तव्यम्। न चेयमिहैवोपासनाफलमिति वक्तुं शक्यते, इति तत्त्वज्ञानफलमेव जीवन्मुक्तिरिहैवासंप्रज्ञातसमाध्यवस्थसप्तमभूमिका योगवासिष्ठसिद्धा भगवद्गीतायामपि स्थितप्रज्ञतया, गुणातीततया च गीयते। अनेन चेदमवगम्यते नोपासनासाध्यलोकान्तरावाप्तिरेव मुख्या मुक्तिः। सा हि ब्रह्मान्तस्यापि गौण्येव, न तु मुख्या मुक्तिरिति॥

छन्दोगानां सद्विद्या, आथर्वणानां परविद्या, अन्यान्याश्च विद्याः, "तत्त्वमसि" "ब्रह्मविद् ब्रह्मैव भवतीत्यादिवाक्यावगताद्वितीय-निर्विशेषसंविन्मात्रतैव मुक्तिः, प्रकृत्यन्तसर्वोपाधिनिवृत्त्येति बोधयन्ति। "तरति शोकमात्मवित्" "तरत्यविद्यां विततां हृदि तस्मिन् निवेशिते" "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" "भूयश्चान्ते विश्वमायानिवृत्तिरि"त्यादयो ह्यज्ञाननिवृत्तिमात्रं मोक्षाय कल्पत इति ज्ञापयन्ति॥

स्थितप्रज्ञ-गुणातीत-जीवन्मुक्तानामैक्यविचारः।

तत्र द्वैतिनामपि जीवन्मुक्त्यङ्गीकारपक्षः कश्चन स्थितप्रज्ञादिकमाश्रित्य वर्तते, यदि सप्तमभूमिकायामेव स तिष्ठति, न तु ततो व्युत्तिष्ठति। भूमिकान्तरस्थास्तु साधकावस्थाः। अन्तिम एव तु सिद्धावस्थ इति तु तदाशयः। स्थितप्रज्ञोऽप्यधिगतप्रत्यगात्ममात्रतत्त्वत्साक्षात्कारो न गुणातीतवद् जीवत्वेश्वरत्वोपलक्षितानावृतसंविन्मात्रसाक्षात्कारवान्। अत एव साधक एव, न सिद्ध इति केचन। प्रत्यगात्मतत्त्वमेव परमात्मतत्त्वमपीति कठवल्ल्यर्थविवक्षायां तु स एव सिद्धोऽपीति प्रस्थानभेदः। सर्वथा तु तत्त्वज्ञानेनाज्ञाने निवृत्त एव मुक्तिः, यदाऽज्ञाननिवृत्तौ तत्प्रयुक्तानां ब्रह्मातिरिक्तानां सर्वेषां बन्धानामपि निवृत्तिः॥

द्वैताद्वैतमोक्षसाधनविवेकः।

तत्राज्ञानानिर्वचनीयत्व-तद्ब्रह्माश्रयत्व-जीवाश्रयत्व-ज्ञाननिवर्त्यत्यादिविषये वक्तव्यं सर्वं पूर्वमेव विशदीकृतम्। एवं तत्त्वमसीत्यादौ न गौणं सामानाधिकरण्यम्, न वा भेदज्ञानमोक्षसाधनतावाद इत्यपि विवेचितमधस्तात्, इत्यद्वैतज्ञानमेवानर्थनाशनम्, न तु द्वैतज्ञानमिति निगदव्याख्यातम्॥

जीवन्मुक्तिस्वरूपनिष्कर्षः ।

अद्वैतज्ञानं हि, सत्यम्, न यागादिवत् पुरुषार्थसाधनम्, किन्त्वविद्यानिवृत्तिद्वारैव, इत्यद्वैतसाक्षात्कारेणाविद्यायां निवृत्तायां तदुपादानकः सर्वोऽपि बन्धः स्वयमेव निवर्तते । तत्र यद्यपि साक्षात्कृतात्मतत्त्वानां तत्क्षण एव बन्धनिवृत्तिर्भवितुमर्हति, यदि सोऽप्रामाण्यज्ञानानास्कन्दितः, पटुतमसंस्कारसहितः, भुज्यमानादृष्टाभावसहितश्च स्यात् । अत एव "आवृत्तिरसकृदुपदेशादि"ति तत्त्वसाक्षात्कारस्याप्यावृत्तिर्ब्रह्ममीमांसायां निरधारि । अत एवाप्रामाण्यज्ञानानास्कन्दित-पटुतमसंस्कारसहित-भुज्यमानादृष्टाभावसहितस्यैव साक्षात्कारस्याज्ञाननिवर्तकत्वम्, इति यावत्प्रतिबन्धकनिवृत्ति तत्त्वसाक्षात्कारो नैकान्तेनाज्ञानं निवर्तयति, किन्त्वविद्याया आवरणशक्तिमात्रं नाशयति, न विक्षेपशक्तिमपि, इति विक्षेपशक्तिमात्रस्यानुवृत्त्या साक्षात्कृतात्मतत्त्वा एव जीवन्मुक्ता नाम, यानधिकृत्यैव गीता—

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।"

इति । विक्षेपशक्तिरेवेयमविद्यासंस्कार इति, तल्लेश इति, प्रारब्धकर्मेति वा व्यपदिश्यते । जीवन्मुक्ता हि समाध्यवस्थायां लेशतोऽपि नाम-रूपे न पश्यन्ति । व्युत्थिताश्च पश्यन्तोऽपि न ते तदात्मना ते पश्यन्ति । ते हि कर्मण्यकर्म पश्यन्ति, अकर्मणि च कर्म, न च शरीरादि स्वात्मत्वेन पश्यन्ति ॥

संस्कारोऽयमज्ञानस्यैव विक्षेपशक्तिमात्रम्, न त्वविद्याया अवयवः, प्रदेशः, धर्मो वा । तेषु हि सत्स्वपि शरीरादिषु परमैकान्तिन इव नात्मत्वबुद्ध्या ते व्यवहरन्ति । व्यवहारोऽपि स्वाभाविको भौतिकशरीरादीनामेव, न तेनात्मनोऽपीति जीवन्मुक्ता हि पश्यन्ति ॥

अज्ञानसंस्कारस्वरूपविवेकः, तस्यापि साक्षात्कारेणैव निवृत्तिश्च ।

तत्राज्ञानस्यास्ति शक्तित्रयम्—असत्त्वापादकत्वम्, अभानापादकत्वम्, अनानन्दतापादकत्वं च । तत्र जीवन्मुक्तानां सर्वा अज्ञानस्य शक्तयो निवर्तन्ते । भर्जितानि बीजानीवाऽऽशरीरपातं केवलं परेषां दृष्ट्यार्थक्रियाकारिणीवाऽनुवर्तन्ते । कुण्ठितशक्तिकमज्ञानमेव संस्कारो नाम । यस्याप्याऽऽशरीरपातमभ्यस्यमानेन तत्त्वसाक्षात्कारेणैव निवृत्तिः । स्पष्टं चैतद् ब्रह्मसिद्ध्यादौ ॥

इदमनेन सिद्धम्—यदात्यन्तिकनिवृत्तिरप्यज्ञानस्य शरीरपातपर्यन्तमभ्यस्यमानेन तत्त्वज्ञानेनैव, इति न तस्य निवर्तकान्तराभावः तस्य

स्वत एव निवृत्तिवादस्य पुरुषतन्त्रक्रियाविशेषानपेक्षामभिप्रेत्य ॥

अविद्यावस्थाविशेषाः, सर्वेषां तत्त्वज्ञानैकनिवर्त्यत्वं च ।

सन्ति ह्यविद्याया अनेक आकाराः पूर्वोक्ताः । तथा च श्रुतिः-"इन्द्रो मायाभिः पुरुरूप ईयते" इति । इदं च मायाया बहुत्वमाकारभेदमात्रेण । अत एव—'मायां तु प्रकृतिं विद्यात्' इत्यादौ मायामित्येकवचनम् । न चेश्वरस्य शक्त्या बहुभावो द्वैतवादे, यत्र ब्रह्म नोपादानम्, किन्तु केवलं निमित्तकारणम्, अद्वैतमते त्वविद्यायाः शक्तिविशेषैः पूर्वोक्तैरावरणशक्तिविशेषेण ब्रह्मणः सदात्मना, चिदात्मना, आनन्दात्मना चानाद्यविद्यासिद्धेन सन् घटः, घटो भाति, घटः प्रिय इत्येवं प्रतीतिः सर्वानुभवसिद्धा । तथाचोक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति । अस्मिंश्चाज्ञाने 'तस्याभिध्यानाद् योजनात् तत्त्वभावाद्' भूयश्चान्ते विश्वमायानिवृत्तिरि"ति श्रुतिः श्रवणादिजनिताखण्डाकारवृत्त्या निवृत्ते संविन्मात्रस्यानावरणावस्थामेव वर्णयति; अविद्यानिवृत्तिपरत्वाच्छास्त्राणाम् । अधिकमद्वैतसिद्ध्यादौ व्यक्तम् । न चेश्वरशक्तेरपि स्वाभाविक्या अनिवृत्तिः । कर्मक्षयान्ते विश्वबन्धकमायानिवृत्तिरिति हि तद्व्याख्यानम् । कर्मक्षयेऽविद्यानिवृत्तिः, अविद्यानिवृत्तौ कर्मक्षये इति परस्पराश्रयोऽत्र । केन वा कर्मक्षयः, कदा वेत्यपि दुर्वचम् ॥

अज्ञानलेशोऽप्यज्ञानम्, परं तु न बन्धकम् ।

अज्ञानलेशोऽप्यज्ञानमेव कुण्ठितशक्तिकम्, इति ज्ञानस्यैव तत्र निवर्तकत्वम्, न तु निवर्तकान्तरापेक्षेति व्यक्तमधस्तात् । न च संस्कारोऽज्ञानकार्यम्, किन्त्वज्ञानमेव, इति यावच्छरीरपातमात्माश्रितं निरुपादानमेवाज्ञानवत् तद् वर्तते । आत्माज्ञानसम्बन्धोऽप्यनादिरप्यज्ञानेनैव कल्पितः, इति न तद्योगेनात्मनोऽसङ्गत्वभङ्गः । तदुक्तं भाष्येऽध्यासान्ते—"न चैवं सति तत्कृतेन दोषेण, गुणेन वाऽणुमात्रेणापि स न सम्बध्यते" इति ॥

प्रारब्धफलस्याप्यभ्यस्यमानसाक्षात्कारेणैव निवृत्तिः ।

एतेन—प्रारब्धकर्मानुवृत्तिरपि—व्याख्याताः; तदुपादानाज्ञानानुवृत्त्यैव तदनुवृत्तेरप्युपपत्तेः । अतः सिद्धम्—अप्रामाण्यज्ञानानास्कन्दित-पटुतम-संस्कारसहित—भ्रमव्याप्यभुज्यमानादृष्टाभावसहित—तत्त्वसाक्षात्कारेणैव

श्रवण--मनन--निदिध्यासनपाटवाहितपटुतमसंस्कारसहकृतेनाऽशरीरपातमभ्यस्यमानेन तत्त्वसाक्षात्कारेणाज्ञाने निवृत्ते सर्वोपाधिरहितसंविन्मात्रतैव मुक्तिः, न तु सगुणब्रह्मतावाप्तिः । कर्मयोग-भक्तियोगादीनां परम्परया तदुपयोगस्तु नाद्वैतवादेऽपि हीयत इत्यलम् ।।

## इति तृतीयाध्यायतृतीयपादः ।।

मुक्तावानन्दतारतम्यकथा तु—आनन्दमीमांसावगता गौणमुक्तिविषया, नाद्वैतिनां मुक्तिविषया, इति न तत्र विप्रतिपत्तिः। अन्ये च विचाराः उपोद्घातादावन्यत्र च प्रसङ्गानुप्रसङ्गेनैव चर्विताः, इति ग्रन्थविस्तरभयादत्रैव साम्प्रतमुपरम्यत इति शम् ।।

## इति तुरीयोऽध्यायः ।।

## इति महामहोपाध्याय-शतभूषणी-शास्त्ररत्नाकरादि-श्रीमदनन्तकृष्णशास्त्रिकृतिष्वद्वैततत्त्वसुधायां प्रथमो भागः

—: ❀ :—